श्लोकः ५०

पृथगेवातीतं जानाति तद्रूपेण वा । न तावदाद्य इत्याह– **न चेति** ॥ नापि द्वितीय इत्याह– **आसमिति** ॥ 'एकीभूतस्यैवेशस्याहं दुःख्यासं न कदाचिद् दुःख्यासमिति ज्ञानविरोधादित्यर्थः' इति प्राचीनटीकां निष्कृष्यानुवदति– **आसमित्यादि** । अत्र पक्षे आसमिति लङो नोपलक्षकत्वम् । प्रतीतार्थ एव सामञ्जस्यादिति ज्ञातव्यम् । अस्मिन् व्याख्याने अन्यदप्यनुकूलमित्याह– **अनेनेति** ॥ **'न चैकीभूतस्य'** इत्यादिभाष्येणेत्यर्थः ॥ **प्रदर्शित इति** ॥ प्रदर्शनप्रकारस्तु प्रागेवोक्तोऽस्माभिः ॥

**भावदीपिका (श्री.टि.)**– ॥ **अविनष्टेति** ॥ अधुनाऽपि प्रारब्धकर्मानाशादिति भावः ॥ ननु निरंशतयैकमेव गगनं घटाद्युपाधिभिन्नं सत् पृथग् ज्ञायते तद्दृष्टान्तेनैकमेव ब्रह्मोपाधिवशाद् भिन्नं सत् शुकादिभावेन ज्ञास्यत इति चेत्, तत्राऽह– **गगनादीति** ॥ उपाधेर्विद्यमानभेदज्ञापकत्वेनाविद्यमानभेदकारकत्वानङ्गीकरेण गगनादौ च स्वाभाविकप्रदेशाङ्गीकरेण विद्यमान एव प्रदेशभेद उपाधिभिर्ज्ञायत इत्यङ्गीकृतम् । नह्येवं ब्रह्मण्यङ्गीक्रियते । तस्य स्वतो निरंशत्वादिति भावः । ननु मायिनाऽविनष्टोपाधित्वाच्छुकादयो ब्रह्मणः पृथग् दृश्यन्त इति न शङ्कितुं शक्यते । तन्मते ज्ञानेन जगद्बाधाङ्गीकारात् । 'तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्येण नाऽसीदस्ति भविष्यति' इत्युक्तेः । तथाच शुकादीनामैक्यसाक्षात्कारेणोपाधेर्बाधितत्वेन प्रविलयात् कथमविनष्टोपाधित्वम्? भिक्षाटनादौ प्रवृत्तिश्चाविद्यासंस्कारादित्यङ्गीकृतम् । अतः कथमिदं दूषणं तन्मते? इत्यत आह– **सत्येति** ॥ **तदिति** ॥ जीवगतं दुःखमपि ब्रह्मैवानुसन्धत्त इत्यर्थः ॥ **हस्तपादादीति** ॥ वस्तुतः जीवेन एकीभूतस्य ब्रह्मण उपाधिभेदेन पृथग् ज्ञाने पृथगनुसन्धाने जीवगतदुःखानुसन्धानाभावे न मानं पश्यामः । स्वाभाविकैक्ये सति उपाधिभेदस्याननुसन्धानप्रयोजकत्वं नास्तीति यावत् । कुतः? हस्तपादाद्युपाधिभेदेऽपि भोक्तुरनुसन्धातुरैक्यदर्शनादित्याशयः ॥

नन्वत्र जीवगतदुःखेनाहं सदा दुःखी नाहं दुःखीत्येव वक्तव्यम् । नतु आसं नाऽसमिति भूतार्थकलङ्वचनम् । तेन पूर्वं दुःख्यासं पूर्वं दुःखी नाऽसमित्येव प्राप्त्या वर्तमानानागतकालीनतादृशज्ञानालाभादित्यत आह– **लङत्रेति** ॥ **सर्वकालेति** ॥ वर्तमानानागतकालेत्यर्थः । तथाचाऽसं दुःखी, नाऽसं दुःखी, दुःख्यस्मि, नास्मि दुःखी, भविष्यामि दुःखी, न भविष्यामीति सार्वकालीनज्ञानप्राप्त्या विरोध इति ध्येयम् । जीवरूपेणेत्यादि अनेन रूपेणेत्यस्यार्थ-

कथनम् । **स्वरूपेण** ब्रह्मरूपेण ॥ **भेदेतीति** ॥ जीवस्वरूपब्रह्मरूपयोर्भेदाभावादिति मूलार्थः । ननूपाधिभेदाद् भेदोऽस्त्वित्यत आह– **उपाधेरिति** ॥ **उक्तत्वादिति** ॥ नचैकीभूतस्य इत्यनेनेत्यर्थः। पृथक् स्मरतीति ब्रह्मभिन्नं स्मरतीत्यर्थः ॥ **अनेनेति** ॥ आसं दुःखीत्यनेनेत्यर्थः । यदि मुक्तो ब्रह्मणैकीभूतः पूर्वानुभूतं च दुःखादिकं स्मरति तर्हि मोक्षे सदा दुःखी न दुःखी चेत्यनुभवप्रसङ्ग इति दोषः प्रदर्शितो भवति । दोषं च भाष्यकारः स्फुटीकरिष्यतीत्युक्तमनेन प्रदर्शितं भवति । अत एव मोक्षे दोष इत्यस्याऽसं दुःखीत्यनेनैकार्थत्वात् पक्षत्रयं विकल्प्य तत्परिहारत्वेन भाष्यं नरहरितीर्थश्रीचरणैर्योजितमित्यभिप्रेत्य अपरे तु इत्यादिना तद्व्याख्यानं लिखितमित्यवगन्तव्यम् ॥

**भावप्रकाशः (कृ.टि.)– उपाधिनाऽपि पृथग्ज्ञाने इति** ॥ उपाधिकृतं पृथक्त्वं यत् तज्ज्ञान इत्यर्थः । ननु ब्रह्म उपाधिकृतभेदवत्, एकत्वात्, गगनवत्, इत्यनुमानसद्भावात् मानं न पश्याम इत्ययुक्तमित्यत आह– **गगनादीति** ॥ तथाऽपि स्वाभाविकप्रदेशाङ्गीकारेण भेदस्य तत्प्रतिनिधिविशेषस्येवोपाधिज्ञाप्यत्वेऽपि तत्कृतत्वाभावात् साध्यवैकल्यप्रसङ्गादिति भावः ।

ननु सत्योपाधिकृतसत्यभेदवादिनां मायावादिनाञ्च मतं साधारणदोषेण दूषयितुं न चैकीभूत इत्यादिभाष्यमवतार्य व्याख्यातम् । अन्यथा प्राङ्गतद्वयानुवादायोगात् । नच प्रकृतभाष्योक्तदूषणं साधारणम् । मायावादिनाऽङ्गुल्यवष्टम्भादिना चन्द्रभेदाध्यासाङ्गीकारेण चन्द्रदृष्टान्तेन ब्रह्मण्यप्युपाधिना भेदावभासानुगानसम्भवादित्यत आह– **सत्योपाधीति** ॥ चोऽवधारणे । सत्यं मिथ्यात्ववादिमते वस्तुत एकीभूतस्योपाधिवशाद् भेददर्शनमस्तीति । तथाऽपि सत्योपाधिकृतसत्यभेदवादिमते वस्तुत एकीभवे उपाधिकृतभेदस्य ज्ञानमस्तीत्यत्र न मानं पश्याम इत्युक्ते नोक्तदोष इति भावः । एवं यस्य ज्ञानमुत्पन्नं सब्रह्मणैकीभवतीत्यंशो दूषितः ।

अधुना ब्रह्मैकमेव तत्त्वं तदेवोपाधिभेदभिन्नं जीवभावं प्रतिपद्यत इति यदुक्तं तदपि दूषयितुमुत्तरमूलमिति भावेनाह– **किञ्चेति** ॥ ननु परोक्तस्य वास्तवैक्यस्य सदातनत्वात् तदङ्गीकारे विकल्पितमनुसन्धानमपि सदातनमेव । अतः कथमासमिति भूतार्थकलङ्प्रयोग इत्यत आह– **लङत्रेति** ॥ भूतवर्तमानभविष्यत्वरूपलकारार्थोपलक्षक इत्यर्थः । लकारार्थत्वेन स्वार्थस्याप्युपलक्ष्यत्वम् । अन्यथा युगपद्वृत्तिद्वयप्रसङ्गादिति भावेन सर्वेत्युक्तम् । सर्वकालार्थ इति पाठे तु छन्दसि लुङ्लङ्लिडित्यनुशासनात् सर्वकालवाचीत्यर्थः । **उक्तत्वादिति** ॥

नचैकीभूतस्येत्यनेनेति शेषः । **अपरेत्विति** ॥ नरहरितीर्थश्रीचरणा इत्यर्थः । द्वितीयव्याख्यायाम् आसमित्यत्र लङो नोपलक्षकत्वं प्रतीतार्थनैव सामञ्जस्यादिति बोध्यम् । **अनेनेति** ॥ नरहरितीर्थार्यरीत्या व्याख्यानेन चैकीभूतस्येत्यादि भाष्येणेत्यर्थः । अत एव स्वव्याख्यानान्तेऽतिदेशमकृत्वाऽत्रैतदुक्तमिति मन्तव्यम् ॥

## भाष्यम्

**नच प्रतिबिम्बस्य बिम्बैक्यं लोके पश्यामः । उपाधिनाशे मानं वा । 'मग्नस्य हि परेऽज्ञाने' इति दुःखात्मकत्वोक्तेश्च । 'यावदात्मभावित्वात्'** (ब्र.सू.२.३.३०) **इत्युपाधिनित्यताऽभिधानाच्च । अतोऽन्यवचनं प्रतीयमानमप्यौपचारिकम् ॥**

भावप्रदीपिका (प.टी.)– उपाधिनाशे जीवनाशाभावेऽपि नैक्यं बिम्बेनेत्यत आह– (नेत्याह–?) **न चेति** ॥ उपाधिनाशमभ्युपगम्यैतदुक्तम् । सोऽपि नास्तीत्याह– **उपाधीति** ॥ वाशब्दात् परं पश्यामः इत्यनुकर्षः । प्रकृतबिम्बप्रतिबिम्बयोरैक्ये बाधकं चास्तीत्याह– **मग्नस्येति** ॥ न केवलमुपाधिनाशे मानाभावः किन्त्वस्ति तदनाशे मानमित्याह– **यावदिति** ॥ बिम्बप्रतिबिम्बयोरैक्याभावे कथं 'नेक्षेत' इति वचनम् ? इत्यत आह– अत इति ॥

भावप्रकाशिका (न.टी.)– नन्वौपाधिकत्वात् स्वपरभेदस्योपाधिनाशे तज्ज्ञानाभावे नानिष्ट इत्यत आह– **न चेति** ॥ न च कस्यचित् प्रतिबिम्बस्योपाधिनाशेऽपि बिम्बैक्यं पश्यामः । जीवोपाधिनाशे प्रमाणं चेत्यर्थः । एवमपि स्वपरविषयज्ञानाभावश्चेत् दोषोऽपि तत्रोक्त इति भावेनाह– **मग्नस्येति** ॥ न केवलं जीवोपाधिनाशे मानाभावः । किन्तु नित्यत्वं च तस्योच्यत इत्याह– **यावदिति** ॥ यावत्परमाभावित्वात् जीवोपाधेः, न तद्विनाशोर्ध्वं जीवस्य बिम्बैक्यं पृथज्ज्ञानाभावो वा नाशङ्कनीय इत्यर्थः । ननु,

'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥'

इत्यत्रोयदादाविवोदकस्थेऽप्यादित्यादिशब्दोक्तेः सत्यप्युपाधौ बिम्बप्रतिबिम्बैक्यावगमात् न जीवोपाधिनित्यत्वेऽपि बिम्बैक्यविरोध इत्यत आह– **अत इति ॥** यतो यावदुपाधि प्रतिबिम्बस्य बिम्बत्वं न प्रतीयते तदूर्ध्वं च नश्यत्येवादित्यादिप्रतिबिम्बः । अतस्तस्य बिम्बत्वं प्रतीयमानमपि प्रतिमास्विवौपचारिकमित्यर्थः ।

प्रमेयदीपिका (ज.टी.)– ननु 'उपाधिनाशे नाशाच्च प्रतिबिम्बस्य' इति यदुक्तं तदसत् । भेदे हि बिम्बप्रतिबिम्बयोरेतत्स्यात् । नचैवम् । किन्तु बिम्बमेव प्रतिबिम्बम् । तदेवेदमिति प्रत्यभिज्ञानात् ॥ 'नेक्षेतोयन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥' इति स्मृतावुद्यदादाविव वारिस्थप्रतिबिम्बेऽप्यादित्यशब्दप्रयोगात्। भेदस्तु दर्पणाद्युपाधिकृतः । तथाचोपाधिनाशे भेद एव नश्यति । प्रतिबिम्बस्य कुतो नाशः? एवं जीवस्यापीत्याशङ्क्य प्रत्यभिज्ञानं तावदसिद्धमित्याह– **न चेति ॥** न पश्यामः न प्रत्यभिजानीमः । प्रत्युत प्रत्यक्पराग्भावादिना तयोर्भेदमेव पश्यामः इति चार्थः ॥

यच्चोक्तं जीवब्रह्मणोः बिम्बप्रतिबिम्बयोरौपाधिको भेद इति तन्नास्माकमनिष्टम् । किन्तु परस्यैव । जीवोपाधिनाशे प्रमाणाभावेन नित्यत्वात् । तन्निमित्तस्यापि भेदस्य मुक्तौ स्थितेरित्याशयवानाह– **उपाधीति ॥** 'न पश्यामः' इत्यनुवर्तते । न केवलमुपाधिनाशे प्रमाणाभावः । किन्तु तन्नाशाङ्गीकारे बाधकं चास्तीत्याह– **मग्नस्येति ॥** उपाध्यभावे स्मरणादिविलोपात् । न केवलमेतावत् । उपाधिनित्यत्वे प्रमाणं चास्तीत्याह– **यावदिति ॥**

अस्तु तर्ह्युदाहृतं स्मृतिवाक्यं बिम्बप्रतिबिम्बयोरैक्ये प्रमाणमित्यत आह– अत इति ॥ प्रत्यक्षेण भेदस्य प्रतीयमानत्वात् । 'प्रतीयमानमपि' इत्यनेन प्रत्यभिज्ञायामिव वचनस्वरूपे न विवादोऽस्तीत्याह । 'वारिस्थम्' इति वचनं न परस्य मुख्यं सम्भवति । अनौपचारिकैः सहपाठेऽपि बाधकवशादौपचारिकत्वं 'ब्रह्मज्ञानेन वा मुक्तिः' इत्यादौ दृष्टमिति ॥

भावबोधः (र.टि.)– मुक्तौ स्थित्युपपत्तेरिति ॥ जीवस्येश्वरप्रतिबिम्बत्वघटकोपाधेः स्वरूपत्वात्तन्निबन्धनभेदस्य स्वाभाविकत्वे पर्यवसानादिति भावः । **स्मरणादिविलोपादिति ॥**

श्लोकः ५०

कारणाभावादिति शेषः । स्वरूपोपाधेश्चानङ्गीकारादिति भावः । **न परस्य मुख्यमिति** ।। साक्षाद्बिम्बस्यैव वारिस्थत्वाभावाद्वारिस्थप्रतिबिम्बैक्येन बिम्बे तदौपचारिकं वक्तव्यमित्यर्थः । तथा च नास्मत्पक्ष एवादित्यशब्दस्य वारिस्थे औपचारिकत्वाङ्गीकाररूपो दोष इति भावः । **अनौपचारिकैरिति** ।। यथा साक्षान्मुक्तिजनकेन ब्रह्मज्ञानेन सहपठितानामपि प्रयागमरणादीनां मुक्तिजनकत्वोक्तेः प्रशस्तत्वादिब्रह्मज्ञानसादृश्येनौपचारिकत्वम्, एवमादित्यशब्दवाच्यैरुद्यदादि-भिस्सह पठितेऽपि वारिस्थे बिम्बसादृश्येन निमित्तेनादित्यशब्दस्यौपचारिकत्वमुपपन्नमित्यर्थः ।

**भावदीपः (रा.टि.)– स्मृतिवाक्यमिति** ।। 'नेक्षेत' इति स्मृतिवाक्यमित्यर्थः । 'अतः' शब्दार्थः– **प्रत्यक्षेणेत्यादि** ।। अपिपदं भिन्नक्रममुपेत्योक्तम्– **प्रतीयमानमपीति** ।। **न परस्य मुख्यमिति** ।। बिम्बभूतादित्यस्य साक्षाद्वारिस्थत्वाभावादित्यर्थः । वारिस्थस्यैव औपचारि-कत्वोक्त्या उद्यदादित्याद्यनौपचारिकादित्यस्येह सहपाठविरोध इत्यत आह– **अनौपचारिकै-रिति** ।। भेदप्रत्यक्षरूपबाधकवशादित्यर्थः ।। **इत्यादाविति** ।। 'प्रयागमरणेन वा । अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ' इत्यत्रेत्यर्थः । विवरिष्यते चैतदुत्तराध्याये ।।

**भावरत्नकोशः (सु.टि.)– एतत्** उपाधिनाशे प्रतिबिम्बनाश इत्येतत् । **तदेवेदमिति** ।। यल्लक्षणं ग्रीवास्थं मुखं तल्लक्षणमेव दर्पणस्थं प्रतिमुखमित्यभेदावगाहिप्रत्यभिज्ञानादित्यर्थः । प्रत्यक्षे विवदमानं प्रत्यागमं बिम्बप्रतिबिम्बयोरैक्ये प्रमाणयति– **नेक्षेतेति** ।। अतश्चशब्दाभावः । **उपरक्तं** स्वर्भानुग्रस्तम् । नभसो मध्यं गतमादित्यमित्यन्वयः । तर्हि बिम्बप्रतिबिम्बयो-र्विच्छेदप्रतीतिः कथमित्यत आह– **भेदस्त्विति** ।। नश्यति इत्यस्त्विति शेषः । प्रत्यभिज्ञायाः शङ्कितत्वादाह– **न प्रत्यभिजानीम इति** ।। 'पश्यामः' इत्यस्य यथाश्रुतार्थत्वमपीति भावेन आह– **प्रत्युतेति** ।। 'प्रत्यक्पराग्भावादिना' इत्यादिपदेन न्यूनाधिकपरिमाणत्वचलत्वा-चलत्वोपाधिसंयुक्तत्वासंयुक्तत्वत्वगादिग्राह्यत्वादिधर्मग्रहः । **जीवब्रह्मणोः** जीवब्रह्मरूपयोः । **जीवोपाधिनाशे** जीवघटोपाधिनाशे । **नित्यत्वात्** उपाधेः ।

**मुक्तौ स्थितेरिति** ।। स्वरूपस्यैव जीवोपाधितया तन्निमित्तस्य भेदस्य स्वाभाविकस्या-वस्थितेरित्यर्थः । सत्त्वादिति वाच्ये यत् 'स्थितेः' इत्याह तत् 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः' इति प्रमाणं सूचयितुम् । **स्मरणादीति** ।। देहेन्द्रियाद्यभावे पूर्वानुभूतस्मरणादौ कारणान्तरानिरूपणात् तदभावे 'किं न

दुःखतरं भवेत्' इति मानोक्तदुःखात्मकत्वमेव चेतनस्य स्यादिति भावः । **एतावत्** जीवोपाधिनाशे प्रमाणाभावमात्रम् । इत्यनन्तरं किन्त्विति पदाध्याहारः । **यावदितीति ॥** ज्ञस्येत्यनुवर्तते । ज्ञस्य जीवस्य तदुपाधेश्च यावत्परमात्मावस्थायित्वात् । सोऽनादिना पुण्येनाऽबद्ध इत्यनादिकर्मसम्बन्धबोधकश्रुत्यप्रामाण्यदोषो न । कुतः ? तद्दर्शनात् । 'नित्यः परो नित्यो जीवः' इति श्रुतेः । 'जीवो नित्यो धातुरस्य त्वनित्यः' इति स्मृतेश्च । 'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम्' इति वचनाच्च । अनाद्यनन्तत्वाज्ज्ञस्य न दोष इति वाच्ये यावदित्याद्युक्तिः बिम्बोपाधितत्सन्निधीनां त्रयाणामप्यन्तवत्त्वं नास्ति । येन ज्ञस्य तथात्वं स्यादिति सूचयितुमिति 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' इति सूत्रार्थः । अत्र जीवप्रतिबिम्बत्वघटकोपाधेर्नित्यत्वं व्यवस्थापितमिति भावः ।

**तर्हीति ॥** यदि प्रत्यभिज्ञानमुक्तरीत्या दूषितमित्यर्थः । **स्मृतिवाक्यं** 'नेक्षेतोद्यन्तमादित्यम्' इति स्मृतिवाक्यम् । अव्यवहितप्रकृतोपाधिनित्यत्वपरामर्शेऽनन्वयाद् व्यवहितस्य प्रत्युत भेदमेव पश्याम इत्यस्य परामर्श इति भावेन 'अतः' इति भाष्यार्थमाह– **प्रत्यक्षेण भेदस्य प्रतीयमानत्वादिति ॥** इमे चैत्रतच्छाये भिन्ने इतिवदिमे चैत्रतत्प्रतिबिम्बे भिन्ने इत्येव पार्श्वस्थेन ग्रहणात् स्वेनापि स्वकरतत्प्रतिबिम्बे भिन्ने इत्येव ग्रहणाच्चेत्यर्थः । अपिशब्दं संयोजयन् भाष्यस्वारस्यमाह– **प्रतीयमानमिति ॥** सम्मतमित्यर्थः । **मुख्यं सम्भवतीति ॥** वारिणि सूर्यान्तराभावाद् गगनस्थस्य च वारिस्थत्वायोगादिति भावः । अनेन औपचारिकत्ववर्णनं परस्यापि समानं नास्माकमेवेति भावितं भवति ॥

ननु वारिस्थप्रतिबिम्बस्य बिम्बभूतादित्याभेदाभावे मुख्यत आदित्यशब्दवाच्योद्यदादित्यादिभिस्सहपाठोऽनुपपन्नः स्यात् । संस्कारकर्मप्रायपाठाद्धि गोदोहनं संस्कारकर्मैवेत्युक्तं पूर्वतन्त्र इत्यत आह– **अनौपचारिकैरिति ॥** 'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा । अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ' इत्यत्र साक्षान्मुक्तिजनकब्रह्मज्ञानसहपाठेऽपि प्रयागमरणादेः प्रशस्तत्वेन ब्रह्मज्ञानसादृशात् 'प्रयागमरणेन वा' इत्यादेरौपचारिकत्वस्य वक्ष्यमाणत्वादौपचारिकत्वमेव । आदिशब्देन 'चित्रितः सिंहः' इति लोकव्यवहारे 'यथा दारुमयी योषा यथा चर्ममयो मृगः' इत्यादिस्मार्तव्यवहारे चेति गृह्यते । गोदोहनादौ तु नैवं बाधकमिति भावः । प्राचीनटीकायां तु 'नेक्षेत' इति स्मृतावुद्यदादाविवोदकस्थेऽप्यादित्यशब्दप्रयोगदर्शनेन सत्य-

प्युपाधौ विम्बप्रतिबिम्बैक्यावगमात्र जीवोपाधिनित्यत्वेऽपि बिम्बैक्यविरोध इत्यत आह–अत इति ॥ यतो यावदुपाधि प्रतिबिम्बस्य बिम्बत्वं प्रतीयते अत ऊर्ध्वं नश्यत्येव आदित्यादि-प्रतिविम्बम् । अतस्तस्य प्रतिबिम्बस्य स्मृत्या प्रतीयमानमपि बिम्बत्वं प्रतिमादाविवौपचारिकं व्याख्येयमिति 'अतः' इत्यादिभाष्यं व्याख्यातम् ।

**भावदीपिका (श्री.टि.)– एतत्** प्रतिविम्बत्वघटकोपाधिनाशेन प्रतिबिम्बनाश इत्येतत् ॥ **नचैवमिति** ॥ विम्बप्रतिबिम्बयोः स्वाभाविको भेदो नचेर्थः ॥ **तदेवेदमिति** ॥ यत् स्वलक्षणं मुखं ग्रीवायां प्रतिपन्नं तदेवाऽदर्शे प्रत्येमीति प्रत्यभिज्ञानादित्यर्थः ॥ **उद्यदादाविवेति** ॥ उदयं गच्छत्यादित्ये यथा तथेत्यर्थः । तर्हि विम्बप्रतिबिम्बयोर्विच्छेदप्रतीतिः कथमित्यत आह– **भेदस्त्विति** ॥ **एवमिति** ॥ जीवस्यापि ब्रह्मप्रतिबिम्बत्वात् तत्रानाशेन भेदस्यैव नाशाज्जीवस्य कुतो नाश इत्यर्थः ॥ **मुक्तौ स्थितेरिति** ॥ जीवस्येश्वरप्रतिबिम्बत्वघटकोपाधेः स्वरूपत्वात् तन्निबन्धनभेदस्य स्वाभाविकत्वपर्यवसानेन मुक्तौ स्थितिसम्भवादिति भावः ॥ **स्मरणादीति** ॥ मुक्तौ देहेन्द्रियाद्युपाध्यभावे कारणाभावेन पूर्वस्मरणादिकं न स्यात् । स्वरूपोपाधेश्चा-नङ्गीकारादिति भावः ॥

॥ **यावदिति** ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् इति । सूत्रार्थस्तु यावत् परमात्मा तिष्ठति अनाद्यनन्तत्वेन एवं जीवोऽपि 'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातव' इत्यादिभाष्यानुसारेण द्रष्टव्यः ॥ **न विवाद इति** ॥ प्रत्यभिज्ञानस्वरूपं यथा न सिद्धमेवं न वचनस्वरूपम् । किन्तु सर्वेषामपि सम्मतमित्यर्थः । न केवलमस्मन्मत एवौपचारिकत्वम् । किन्तु परमतेऽपीत्याह– **वारिस्थमितीति** ॥ गगनस्थस्य विम्बस्य वारिस्थत्वं न साक्षाद् युक्तम् । किन्तु प्रतिबिम्बस्य वारिस्थत्वात् तदैक्येन यद् विम्बेऽपि वारिस्थत्वकथनं तदौपचारिकमिति त्वया वक्तव्यमेवेत्यर्थः । ननु वारिस्थप्रतिबिम्बस्य बिम्बभूतादित्यभेदाभावे अनौपचारिकैः साक्षादादित्यशब्दवाच्यैरुद्यदादिभिः सहपाठो बाधितः स्यादित्यत आह– **अनौपचारिकैरिति** ॥ यथा 'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा । अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ' इति वाक्ये साक्षान्मुक्तिजनकत्वेन ब्रह्मज्ञानेन सहपठितानामपि प्रयागमरणादीनां मुक्तिजनक-त्वोक्तेः प्रशस्तत्वादिब्रह्मज्ञानसादृश्येनौपचारिकत्वमेवं साक्षादादित्यशब्दवाच्यैरुद्यदादिभिः सहपठितेऽपि वारिस्थे बिम्बसादृश्येन निमित्तेनाऽऽदित्यशब्दस्यौपचारिकत्ववचनमुपपन्नमित्यर्थः ।

भावप्रकाशः (कृ.टि.)– प्रत्यभिज्ञायाः प्राक् शङ्कितत्वात् तदनुसारेणाह– **न प्रत्यभिजानीम इति** ॥ **मुक्तौ स्थितेरिति** ॥ स्वरूपस्यैव जीवोपाधित्वेन तन्निमित्तस्य भेदस्य स्वाभाविकत्वादिति भावः । **स्मरणादिविलोपादिति** ॥ कारणाभावादिति भावः । अव्यवहित-प्रकृतोपाधिनित्यत्वपरामर्शोऽनन्वयाद्बुद्धिस्थपरामर्श इति भावेनाह– **प्रत्यक्षेण भेदस्य प्रतीयमानत्वादिति** ॥ औपचारिकत्वकथनं परस्यापि समानम् । अतो नास्माकमेवायं दोष इति भावेनाह– **वारिस्थमिति चेति** ॥ साक्षादादित्यस्य वारिस्थत्वाभावादिति भावः । ननु सहपाठविरोध इत्यत आह– **अनौपचारिकैरिति** ॥ साक्षान्मुक्तिजनकब्रह्मज्ञानसहपाठेऽपि प्रयागमरणादेः प्रशस्तत्वेन ब्रह्मज्ञानसादृश्यात् प्रयागमरणेन वेत्यादेरौपाचारिकत्वस्य वक्ष्यमाणत्वादिति भावः ।

## भाष्यम्

**दृष्टाश्च ते भगवतो भिन्ना नारदेन । प्रतिशाखं च 'स एकधा' इत्यादिषु भेदेन प्रतीयन्ते । विरोधे तु युक्तिमतामेव बलवत्त्वम् । युक्तयश्चात्रोक्ता 'मग्नस्य हि' इत्यादयः । अतो जले जलैकीभाववदेकीभावः ॥**

भावप्रदीपिका (प.टी.)– इतोऽपि न मुक्तानां भगवदैक्यमित्याह– **दृष्टाश्चेत्यादिना** ॥ ननु भेदश्रुतिवदभेदेऽपि 'ब्रह्म वेद' इत्यादिश्रुतिसत्त्वात् कथं निर्णयः? इत्यत आह– **विरोधे त्विति** ॥ युक्तिमत्त्वं च कुतः ? इत्यत आह– **युक्तयश्चेति** ॥ तर्ह्यद्वैतश्रुतेः का गतिः ? इत्यत आह– **अत इति** ॥

भावप्रकाशिका (न.टी.)– ननु यदि मुक्तावपि केनचिदुपहितास्तर्हि प्रागिव ते किमिति पृथङ् न दृश्यन्त इत्यत आह– **दृष्टाश्चेति** ॥

तथाहि मोक्षधर्मे श्रीभीष्मः

> 'प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
> ददर्श तानेव राजन् श्वेतांश्चन्द्रप्रभान् शुभान् ॥' इति ।

श्लोकः ५८

मुक्तान् दृष्ट्वा स्तुत्वा देवं तं च ददर्शेत्याह–

'एवं स्तुतः सन् भगवान् गुह्यैस्तस्योच्चनामभिः ।
तं मुनिं दर्शयामास नारदं विश्वरूपधृक् ॥
किञ्चिच्चन्द्राद्विशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान् ॥' इत्यादि ।

न केवलं पृथग्दृष्टास्ते, किन्तु श्रुता अपि प्रतिशाखं पृथगित्याह– **प्रतिशाखं चेति ॥** 'स एकधा भवति, त्रिधा भवति' इत्यादि भूमोपासकानां मुक्तावैश्वर्यम् । आदिशब्देन 'सर्वान् कामानाप्त्वाऽमृतः समभवत्', 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादि । ननु कथमेषां भेदसाधकत्वम् ? 'परेऽव्यये सर्व एकीभवन्ति' ब्रह्म वेद ब्रह्मैव भवति' इत्यादि-विरोधादित्यत आह– **विरोध इति ॥** युक्तिमन्ति च भेदवाक्यान्येवेत्याह– **युक्तयश्चेति ॥** जीवन्मुक्तानां पृथग्दर्शनात्, मुक्तानां जगद्व्यापाररहित्यम्, ब्रह्मसारूप्यम्, 'आसं दुःखी' इति ज्ञानान्यथानुपपत्तिश्च, लौकिकप्रतिबिम्बानामुपाधिनाशेऽपि ब्रह्मैक्यादर्शनं, स्वरूपनाशश्च, नित्योपाधिश्च जीवानाम् इत्याद्यभेदबाधका भेदसाधका आदिशब्दोक्ताः । न चैतावतैक्यश्रुतिर्निर्विषया, सारूप्यविषयत्वादित्याह– **अत इति ॥**

प्रमेयदीपिका (ज.टी.)– एवं 'शुकादीनाम्' इत्युक्तं प्रत्यक्षमुपपादितम् । अधुना आस्तां तावदुपपादनसापेक्षं प्रत्यक्षम् । तन्निरपेक्षं चास्तीत्याह– **दृष्टाश्चेति ॥** 'ते' निवृत्तसकलकर्माणो मुक्ताः । एतच्च मोक्षधर्मे स्पष्टमुक्तम् । प्राक् मुक्तेश्वरभेदे स्मृतिरुदाहृता । श्रुतिं चोदाहरति– **प्रतिशाखं चेति ॥**

ननु भेद इवाभेदेऽपि 'परेऽव्यये सर्व एकीभवन्ति' इत्यादिवाक्यानि सन्ति । तत्कथं निर्णयः? इत्यतः सामान्यन्यायं तावदाह– **विरोधे त्विति ॥** बलवद्विरोधेन दुर्बलं बाध्यत इति भावः । ततः किं प्रकृते? इत्यत आह– **युक्तयश्चेति ॥** अत्र भेदपक्षे । उपलक्षण मेतत्। प्रत्यक्षानुकूल्यं च भेदवाक्यानां प्राबल्याय ग्राह्यम् । तर्हि 'एकीभवन्ति' इत्यस्य का गतिः? इत्यत आह– **अत इति ॥** उभयत्र एकीभावशब्देन तद्वादिवाक्यं गृह्यते । स्थानैक्यविषयमैक्यवाक्यमित्यर्थः । इयं च रूढलक्षणेति न प्रयोजनमन्वेषणीयमिति दृष्टान्तोक्तिः ॥

**भावदीपः (रा.टि.)– उपपादनेति ॥ 'उपाधिनाशे नाशाच्च'** इत्यादिनोक्तरीत्येति भावः ॥ **स्मृतिरिति ॥ 'इदं ज्ञानम्'** (१४.२) इति स्मृतिरुदाहृतेत्यर्थः ॥ **उभयत्रेति ॥** दृष्टान्ते दार्ष्टान्तिके चेत्यर्थः ॥ **'एवं मुनेर्विजानत आत्मा भवति गौतम'** इति तादृगेवेति भाष्योक्तवाक्यस्य शेषः । **'यथा नद्यः'** इत्यस्य तु **'समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति । स समुद्र एव भवति'** इति शेषः ॥

**भावरत्नकोशः (सु.टि.)– उपपादनसापेक्षमिति ॥** 'उपाधिनाशः' इत्यादिना उपपादितत्वं व्याख्यानानुसारेण द्रष्टव्यमिति भावः । ननु नारददृष्टानां मुक्तत्वमेव कुतः ? येन त इति तेषां परामर्शो युक्तः स्यादित्याशङ्क्य मोक्षधर्मे तद्दृष्टेषु 'गतसर्वपापाः' इति विशेषणप्रयोगादिति भावेन त इत्यनूद्य तदर्थमाह– **ते निवृत्तेति ॥**

ननु नारदस्य मुक्तौ भेदप्रत्यक्षमस्तीत्येतत् कुतोऽवगन्तव्यमित्यत आह– **एतच्चेति ॥** तथा हि मोक्षधर्मे श्रीभीष्मः

'प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव नराञ्श्वेतांश्चन्द्रप्रभाञ्शुभान्'

इति मुक्तान् दृष्ट्वा स्तुत्वा देवं च ददर्शेत्याह ।

एवं स्तुतस्स भगवान् गुह्यैस्तस्योच्चनामभिः ।
तं मुनिं दर्शयामास नारदं विश्वरूपधृक्' इत्यादि ।

तथा तत्रैव

'अनिन्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनाः सुसुगन्धिनस्ते ।
श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणाम्',

'जिह्वाभिर्ये विश्वं वक्त्रं लेलिह्यन्ते सूर्यप्रख्यम् । भक्त्या देवम्' इति ॥

अत्र नारदः श्वेतद्वीपदर्शनानन्तरं तत्र परमात्मानं भक्तया श्रद्धादिभिः स्तुवतोऽनेकविशेषणयुक्तान्मुक्तांश्च ददर्शेत्युच्यते । तेन मुक्ता भगवद्भिन्नत्वेन नारदेन दृष्टा इति गम्यते । न हि भेदाभावे देवं भक्त्या लेलिह्यन्त इत्युक्तस्तुतिरुपपन्नेति भावः । **स्मृतिः** 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति स्मृतिः । 'स एकधा भवति स त्रिधा भवति' इत्यादिभूमोपासकस्य

श्लोकः ५०

मुक्तावैश्वर्यम् । आदिशब्देन 'सर्वान् कामानाप्त्वाऽमृतः समभवत् । कामान्नी कामरूप्यनु-सञ्चरन्' इत्यादिश्रुतिपरिग्रह इति प्राचीनटीका । **निर्णयः** मुक्तौ भगवतो भिन्ना मुक्ता इति निर्णयः । किं बलवत्त्वेनेत्यत आह– **बलवद्विरोधेनेति** ॥ बलवत्त्वादेः प्रकृतस्य परामर्शे प्रकृतानन्वयाद् बुद्धिस्थमुक्तभेदपरामर्श इत्याह– **अत्र भेदपक्ष इति** ॥ ननु 'युक्तिमताम्' इति बहुवचनाद् भेदश्रुतीनां बहुत्वेन प्राबल्यमभिप्रेतम् । तच्च न वाक्यबाहुल्येन । भेदश्रुतीनामपि बाहुल्येनाप्राबल्यनिर्णयायोगात् । किन्तु भेदग्राहिप्रमाणान्तरसाहित्येन । न च युक्तिसाहित्य-मात्रोक्तौ बहुत्वं सिद्ध्यतीत्यत आह– **उपलक्षणमेतदिति** ॥ युक्तिसाहित्यवर्णनमित्यर्थः । प्राबल्यं युक्तिसाहित्येनेव प्रत्यक्षसाहित्येनापि ज्ञातव्यमिति भावेनाह– **उपलक्षणमिति** इति वा । मुक्तानां जगद्व्यापाररााहित्यं ब्रह्मसारूप्यम् 'आसं दुःखी नाऽसम्' इतीश्वरज्ञानान्यथानुपपत्तिः प्रतिबिम्बानामुपाधिनाशेऽपि ब्रह्मैक्यादर्शनं स्वरूपानाशश्च उपाधिनित्यत्वमित्याद्या अभेद-बाधिका भेदसाधिकाश्च आदिशब्दोक्ता युक्तय इति प्राचीनटीका । **इत्यस्य** एकीभाव-प्रतिपादकवाक्यस्य । वाक्यगतिकथनप्रस्तावे अर्थयोस्साम्यकथनमसङ्गतमित्यत आह– **उभयत्रेति** ॥ भाष्ये 'जलैकीभाववदेकीभावः' इति दृष्टान्ते दार्ष्टान्तिके चेत्यर्थः । अनेन का गतिरुक्तेत्यत आह– **स्थानैक्येति** । यथा जलं जलेनैकीभूतमिति वाक्यम् एकस्थान-स्थितत्वनिमित्तकम् एवं 'परेऽव्यये सर्व एकीभवन्ति' इति मुक्तानां भगवदैक्यमपि क्षीराब्ध्यादि-रूपैकस्थानस्थितिनिबन्धनम् । 'सायं गोष्ठे गाव एकीभवन्ति' इत्यत्र स्थानैक्यस्य स्थानिषु प्रयोगदर्शनादिति भावः । लौकिकदृष्टान्तोक्तितात्पर्यमाह– **इयं चेति** ॥ गतिः गमनिका ।

**भावदीपिका (श्री.टि.)– प्रत्यक्षम्** अस्मदादीनाम् ॥ **तन्निरपेक्षमिति** ॥ शङ्का-नास्पदतया उपपादननिरपेक्षं नारदस्य प्रत्यक्षमपि मुक्तानां ब्रह्मणा भेदसाधकमस्तीत्याहेत्यर्थः ॥ **मूले स एकधेत्यादिष्विति** ॥ स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा पुन-श्चैकादशः स्मृतः । शतं च दश चैकं च सहस्राणि च विंशतिः इति छान्दोग्ये भूमज्ञानेन मुक्तानां भूम्नः सकाशादनेकरूपत्वोक्तेः । तथा स पञ्चधा सप्तधा दशधा भवति शतधा च सहस्रधा च स गच्छति स मुच्यते इति पारशार्यायणश्रुतौ । तथा अथैक एव सन् गन्धवद् व्यतिरिच्यते । अथैकीभवति । अथ बह्वीभवति । तं यथा इश्वरः कुरुते तथा तथा भवति । सोऽचिन्त्यः परमो गरीयान् इति शाण्डिल्यश्रुतौ चेति प्रतिशाखं मुक्तानां भगवदिच्छया अनेकरूपत्वोक्त्या भगवता भेदेन मुक्ताः प्रतीयन्त इत्यर्थः ।

बलवत्त्वेऽपि किमायातमित्यत आह– **बलवदिति** ॥ मुक्तेश्वरभेदवाक्यानां युक्तिमत्त्वेनैव न प्राबल्यम् । किं नामेत्यत आह– **प्रत्यक्षेति** ॥ नारदादिप्रत्यक्षेत्यर्थः । एकीभाववाक्यस्य का गतिरिरिति शङ्किते जले जलैकीभाववन्मुक्तेश्वरयोरेकीभाव इत्यनयोरैक्यकथनमयुक्तमित्यत आह– **उभयत्रेति** ॥ दृष्टान्ते दार्ष्टान्तिके चेत्यर्थः ॥ **तद्वादीति** तत्प्रतिपादकेत्यर्थः ॥ **स्थानैक्येति** ॥ तथा च यथा जलं जलेनैकीभूतमिति ऐक्यवचनं एकस्थानस्थितत्वनिमित्तमेवं मुक्तानामपि भगवदैक्यवचनं क्षीराब्ध्याद्येकस्थानस्थितत्वनिमित्तं स्थानगतमैक्यं स्थानिषूपचर्यत इत्याशयः ॥ **दृष्टान्तोक्तिरिति** ॥ यथा जलं जलेनैकीभूतमिति वचनं स्थानैक्यनिमित्तं लाक्षणिकं, सा च रूढलक्षणा, अतस्तत्र न प्रयोजनं मृग्यते । एवं प्रकृतेऽपीति दर्शयितुं दृष्टान्तोक्तिरित्यर्थः । **इयं गतिः** गतिर्गमनिका स्थानैक्यनिमित्तकं व्याख्यानमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ननु नारददृष्टानां मुक्तत्वमेव कुतो येन ते इति तेषां परामर्श इत्याशङ्क्य मोक्षधर्मे नारददृष्टेषु गतसर्वपापा इति विशेषणप्रयोगादिति भावेनोक्तम्– **निवृत्तेति** ॥ ननु नारदस्य भेदप्रत्यक्षसत्वे किं मानमित्यत आह– **एतच्चेति** ॥ 'ददर्श चात्यद्भुतमुक्तरूपं क्षीरोदधेर्योऽन्तरतो हि द्वीपः । श्वेतः स नाम्ना प्रथितो विशाल' इत्युक्त्वा 'अनिन्द्रियाश्चानशनाश्च तत्र निष्पन्दहीनाः सुसुगन्धयस्ते । श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणाम् । जिह्वाभिर्ये विश्ववक्त्रं लेलिह्यन्ते सूर्यप्रख्यम् । भक्त्यादेव'मिति मोक्षधर्म इत्यर्थः । तत्र नारदः श्वेतद्वीपं ददर्श । तत्र परमात्मानं भक्त्या जिह्वाभिः स्तुवतोऽनेकविशेषणयुक्तान् मुक्तांश्च ददर्शेत्युच्यते । तेन मुक्ता भगवद्भिन्नत्वेन नारदेन दृष्टा इति गम्यते । नहि भेदाभावे देवं भक्त्या लेलिह्यन्त इत्युक्तस्तुतिरुपपन्नेति भावः । **स्मृतिरुदाहृतेति** ॥ इदं ज्ञानमुपाश्रित्येत्यनेनेति शेषः । प्रकृतबलवत्वादेः परामर्शोऽनन्वयमाशङ्क्य बुद्धिस्थपरामर्शोऽयमिति भावेनाह– **अत्र भेदपक्ष इति** ॥ नन्वत्र भेदश्रुतेर्बहुत्वेन प्राबल्यमभिप्रेतम् । तच्च न वाक्यबाहुल्येन । तथा सत्यैक्यश्रुतीनामपि बाहुल्येनाप्राबल्यनिर्णयायोगात् । किन्तु भेदग्राहिप्रमाणान्तरसाहित्येन । न च युक्तिसाहित्यमात्रोक्तौ बाहुल्यं सिद्ध्यतीत्यत आह– **उपलक्षणमेतदिति** ॥ वाक्यगतिकथनावसरेऽर्थयोः साम्यवर्णनमयुक्तमित्यत आह– **उभयत्रेति** ॥

श्लोकः ५०

## भाष्यम्

**उक्तं च 'यथोदकं शुद्धे शुद्धम्'** (कठ.४.१५), **'यथा नद्यः'** (आथ.३.४.८) **इत्यादौ । तत्राप्यन्योन्यात्मकत्वे वृद्ध्यसम्भवः । अस्ति चेषत् समुद्रेऽपि द्वारि । महत्त्वाद् अन्यत्रादृष्टिः । 'ता एवापो ददौ तस्य स ऋषिः शंसितव्रतः' इति महाकौर्मे समर्थानां भेदज्ञानाच्च ॥**

भावप्रदीपिका (प.टी.)– श्रौती चेयं व्यवस्थेत्याह– उक्तं चेति ॥ जलेऽप्यभेद एवेत्यत आह– **तत्रापीति ॥** नास्त्येव वृद्धिरीशदृष्टान्ते समुद्र इत्यत आह– **अस्तीति ॥** न केवलं वृद्धिसम्भवाज्जलभेदः, किन्तु विभागाच्चेत्याह– **ता एवेति ॥** संश्लेपकाले भेदेन प्रतीतत्वान्न च जलैक्यमित्याह– **समर्थानामिति ॥**

भावप्रकाशिका (न.टी.)– न केवलं न्यायात्तेयं व्यवस्था, किन्तु श्रौताऽपीत्याह– **उक्तं चेति ॥** ननु उदकस्योदकान्तरेण तादात्म्यमेव न सारूप्यमित्यत आह– **तत्रापीति ॥** नन्वल्पोदक एव वृद्धिर्दृश्यते न तु ब्रह्मदृष्टान्ते समुद्र इत्यत आह– **अस्तीति ॥** यद्यपि महत्वेनान्यत्र समृद्धवृद्धिर्न दृश्यते स्थूलदृष्टिभिः, तथाऽपि द्वारदेशे दृश्यत एवेत्यर्थः । न केवलं वृद्ध्यन्यथानुपपत्त्या संश्लिष्टानामपां भेदानुमानम्, किन्तु पुनर्विश्लेषदर्शनाच्चेत्याह– **ता एवेति ॥** या इन्द्रकमण्डलुस्था आपः, स्वकमण्डलौ निक्षिप्तास्ता एव तस्य ददौ वसिष्ठ इत्यर्थः । महानद्योऽपि हि परस्परमेकीभूय पुनर्वियुज्य समुद्रं गच्छन्ति । न केवलं पुनर्विश्लेषात् पूर्वभेदानुमानम् । किन्तु तदाऽपि भेदं पश्यन्ति केचिदित्याह– **समर्थानामिति ॥** सममेतद्ब्रह्मसंयुक्तेष्वपि ।

प्रमेयदीपिका (ज.टी.)– न केवलमियं गतिर्न्यायप्राप्ता । किन्तु श्रौती चेत्याह– **उक्तं चेति ॥** उदकेऽप्यैक्यादसम्मतो दृष्टान्त इत्यत आह– **तत्रापीति ॥** नास्त्येव समुद्रे वृद्धिः । अनुपलम्भादित्यत आह– **अस्ति चेति ॥** समुद्रेऽपि 'वृद्धिः' इति शेषः । अनुपलम्भस्यासिद्धिमाह– **द्वारीति ॥** नदीनां द्वारि 'दृश्यते च' इति शेषः । अन्यत्र कुतो न दृश्यते? इत्यत आह– **महत्त्वादिति ॥** समुद्रोदकस्य महत्त्वात् ॥

**न केवलं वृद्धिलिङ्गकादनुमानादुदके भेदसिद्धिः । किं तर्हि? प्रत्यक्षादपीत्याह— ता एवेति ॥ 'या इन्द्रकमण्डलोरादाय स्वकमण्डलूदके क्षिप्ताः ता एवापस्तस्य इन्द्रस्य ददौ वसिष्ठः' इति महाकौर्मवचनात् समर्थानां वसिष्ठादीनां जले भेददर्शनाच्च । भेदादर्शने विभज्य कथं दद्यात्? इति ॥**

**भावरत्नकोशः (सु.टि.)–** 'तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' इति काठके । 'यथा नद्यः स्यन्दमानाः समुद्रायणास्समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय । तथा विद्वान्नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्' इत्यादावैक्यवाक्यस्यान्यार्थत्व-मेवेत्येतद् 'उक्तं च' इति भाष्यार्थः । **अनुपलम्भस्येति** ॥ 'नास्त्येव समुद्रे वृद्धिरनुपलम्भात्' इति पूर्ववाद्युक्तहेतोरित्यर्थः । 'कौर्मे च' इत्यनन्तरं शेषोक्तिः– **वचनादिति** ॥ जलभेद-दर्शनमसिद्धमित्याशङ्क्य आह– **भेदादर्शन इति** ॥ प्राचीनटीकायां तु 'महापोऽपि परस्पर-मेकीभूय पुनर्वियुज्य समुद्रं गच्छन्ति न केवलं पुनर्विश्लेषात् पूर्वं भेदानुमानम् । किन्तु तदाऽपि भेदं पश्यन्ति केचिदित्याह– **समर्थानामिति** ॥ इति वाक्यभेदेन व्याख्यातम् ।

**भावदीपिका (श्री.टि.)–** ॥ **न्यायेति** ॥ लौकिकदृष्टान्तोक्तिरेव न्याय इत्यर्थः ॥ **मूले यथोदकं शुद्धे शुद्धं यथा नद्य इत्यादाविति** ॥ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम इति काठकवाक्यस्य, यथा शुद्धे उदके शुद्धमुदक-मासिक्तं तादृगेव तेन सहैकस्थानस्थितमेव भवति । नतु तदेव । एवं विजानतां मुनीनामात्मा स्वामी हिरण्यगर्भोऽपि मुक्तः सन् तादृगेव भवति । किम्वन्ये मुक्ता इत्यर्थः । यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय । तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम् इत्याथर्वणवाक्यम् । यथा स्यन्दमानाः प्रस्रवन्त्यः नद्यः स्वकीये नामरूपेऽविहाय अपरित्यज्य समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति, मिश्रीभूयैकस्थान-स्थिता भवन्ति । तथा विद्वान् षोडशकलाभिमानिदेवतावर्गनामसहिताद् रूपाद् विमुक्तोऽमुक्त-स्तत्सहित एव परात् परं दिव्यं पुरुषमुपैतीत्यर्थः । आदिपदात् यथेमा स्यन्दमानाः समुद्रं प्राप्यास्तं गच्छन्ति । भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमा षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । भिद्येते चाऽसां नामरूपे । पुरुष इत्येवं प्रोच्यते इति षट्प्रश्नवाक्यसङ्ग्रहः ॥ **अनुपलम्भस्येति** ॥ समुद्रे वृद्ध्यभावसाधकस्येत्यर्थः ॥

श्लोकः ५०

**नदीनां द्वारीति ॥** गङ्गादिनदीनां समुद्रेण सङ्गमस्थले तु समुद्रप्रवेशायातितीव्रेणाऽगच्छमानानां नदीजलानामेव किञ्चिन्महत्त्वात् तत्र वृद्धिर्दृश्यत इत्यर्थः ॥ **वृद्धिलिङ्गकेति ॥** समुद्रोदकादि स्वप्रविष्टनद्युदकाद् भिन्नं, वृद्धिमत्त्वात् । पात्रादिस्थोदकवत् । इत्यनुमानादित्यर्थः । ननु दानमात्रेण कथं जलभेददर्शनसिद्धिरित्यत आह– **भेदादर्शन इति ॥**

भावप्रकाशः (कृ.टि.)– **भाष्ये उक्तश्चेति ॥** 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतमेति' काठके (४.१५)। यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपेऽविहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्यत्र चोक्तं चेत्यर्थः ॥

## भाष्यम्

**'नैव तत् प्राप्नुवन्त्येते ब्रह्मेशानादयः सुराः । यत् ते पदं हि कैवल्यम् ॥' इति निषेधाच्च नारदीये । सविचारश्च निर्णयः कृतो मोक्षधर्मेषु । बलवांश्च सविचारो निर्णयो वाक्यमात्रात्। अतो 'यत्र नान्यत् पश्यति'** (छां.उ.७. २४.१) **इत्याद्यपि तदधीनसत्तादिवाचि । अन्यथा कथमैश्वर्यादि स्यात्? न च तन्मायामयमित्युक्तम् । अन्यथा कथं तत्रैव 'स एकधा' इत्यादि ब्रूयात् ॥**

भावप्रदीपिका (प.टी.)– न केवलं मुक्तिभेदवचनादभेदवाचामन्यार्थता । किन्त्वभेद-निषेधाच्चेत्याह– **नैवेति ॥** इतश्चान्यार्थत्वमभेदवाचामित्याह– **सविचारश्चेति ॥** सविचार-निर्णयात् कुतोऽन्येषामन्यार्थता ? इत्यत आह– **बलवांश्चेति ॥** ननु मुक्तौ भेदसत्वे कथमद्वितीयत्वं भूमलक्षणमुच्यते ? इत्यत आह– **अत इति ॥** साक्षदद्वैतस्य बाधितत्वा-दित्यर्थः । साक्षादद्वैतार्थत्वे बाधकमाह– **अन्यथेति ॥** सर्वाभावे सर्वेशत्वादि न स्यादित्यर्थः । सर्वेशत्वादेर्मायिकत्वान्न विरोध इत्यत आह– **न चेति ॥** इतश्च नात्रा-द्वितीयतोच्यत इत्याह– **अन्यथेति ॥** द्वितीयाभावे कथं तदुपासकस्य भेदेन भोगं ब्रूयाच्छ्रुतिरित्यर्थः ।

भावप्रकाशिका (न.टी.)– ब्रह्मेशादिसुराणामपि मुक्तौ विष्णुत्वनिषेधादप्यैक्य-वाक्यानामियमेव गतिरित्याह– **नैवेति ॥** 'बहवः' इत्यादिविचारपूर्वं भेदस्यैव

निर्णीतत्वाच्च न स्वरूपैक्यमैक्यवाक्यार्थ इत्याह– **सविचारश्चेति** ॥ ननु 'बहवः' इत्यादिवाक्यमप्यैक्यवाक्येन बाधितं किं न स्यात् ? इत्यत आह– **बलवानिति** । यतः सर्वजगदुत्पत्त्यादिकारणस्वतन्त्रपुरुषैक्यं सविचारान्निर्णयादवसीयते अतस्तदनुसारेण स्वतन्त्रान्यनिषेध एवान्येनापि वाक्येन । न त्वन्यमात्रनिषेध इत्याह– **अत इति** ॥ तदन्यस्यैव निषेधे कथं सर्ववेदोक्तं सर्वैश्वर्यसर्वज्ञत्वादिकं स्यात् ? ईशितव्यज्ञेयाद्यभावादिति भावेनाह– **अन्यथेति** । नन्वन्योपाधिकत्वान्मायामयं तदित्याशङ्क्य, तन्निरस्तं पुरस्ता-दित्याह– **न चेति** ॥ इतोऽपि नित्यवशीकृताशेषचेतनाचेतनत्वमेव भूमलक्षणत्वेनोच्यते 'यत्र नान्यत् पश्यति' इत्यादिना । न तु तदन्यचेतनाचेतनाभावः । तथा सति तज्ज्ञानेन विमुक्तानां तत्प्रकरण एव 'स एकधा भवति त्रिधा भवति' इत्यादि पृथगैश्वर्यवचनानु-पपत्तेरित्याह– **अन्यथा कथं तत्रैवेति** ।

प्रमेयदीपिका (ज.टी.)– इतश्च मुक्तभेदवाक्यमेव प्रबलम् । अभेदनिषेधात्मकत्वा-दित्याह– **नैवेति** ॥ कैवल्यं सर्वोत्तमत्वम् । इतोऽपि भेदपक्षो बलवानिति वक्तुमाह– **सविचारश्चेति** ॥ पूर्वोत्तरपक्षबलाबलचिन्ता विचारः । निर्णयः जीवेशभेदावधारणम् । 'बहवः पुरुषा ब्रह्मन्' इत्यादिनेति शेषः । न हि भिन्नयोर्मुक्तावभेदः सम्भवतीति भावः । ततः किम्? इत्यत आह– **बलवांश्चेति** ॥ 'निर्णयश्च' इति सम्बन्धः । वाक्यमात्रात् 'एकीभवन्ति' इत्यादेः । कथं तर्हि 'यत्र' इत्यादि भूमलक्षणमुच्यते? इत्यत आह– **अत इति** ॥ सविचारनिर्णयविरोधादेव विद्यमानस्याप्यन्यस्य भगवदधीनसत्तादिवाचि ॥

इतश्चैवमित्याह– **अन्यथेति** ॥ यद्यन्यदेव न स्यात् तर्हि कथमीश्वरस्य सर्वेश्वरत्व-सार्वज्ञादिकं श्रुत्यादिसिद्धं स्यात् । मायामयमेव तत् श्रुत्यादावुच्यत इत्यत आह– **न चेति** ॥ बाधकान्तरमाह– **अन्यथेति** ॥ यदि भूमाऽद्वितीयः स्यात् तर्हि कथं तज्ज्ञाना-न्मुक्तस्य 'स एकधा' इत्यादि भेदेनावस्थानं श्रुतिर्ब्रूयात्? न तद् भूमज्ञानफलम् । किन्तु सगुणविद्योपासनफलमित्यत उक्तम्– **तत्रैवेति** ॥ भूमप्रकरण एव ॥

भावबोधः (र.टि.)– 'बहवः' इत्यस्य सविचारनिर्णयस्य संसार एव भेदसाधकत्वात् मुक्तौ किमायातमित्यत आह– न हि **भिन्नयोरिति** ॥

श्लोकः ५०

**भावदीपः (रा.टि.)– 'बहवः पुरुषाः'** इति सविचारनिर्णयेन संसारभेदसिद्धावपि मुक्तौ किमायातम्? इत्यत आह– **नहि भिन्नयोरिति ॥ 'यो वै भूमा तत् सुखम्'** इति पूर्वशेषे प्रकृतत्वादाह– **यत्रेत्यादि भूमलक्षणमिति ॥**

**भावरत्नकोशः (सु.टि.)–** इतश्च अपवादरूपत्वाच्च । निषेधस्य प्राप्त्यपेक्षया बलवत्त्वा-दिति भावः । लिङ्गशरीरादिविनिर्मुक्तत्वं प्रतीयमानं प्रकृतासङ्गतमित्यतस्तद् व्याचष्टे– **सर्वोत्तमत्वमिति ॥** अभेदे कैवल्यस्यापि प्राप्तव्यत्वेन 'नैव प्राप्नुवन्ति' इति निषेधायोग इति भावः । केचित्तु, 'मुक्तिः कैवल्यनिर्वाण' इत्यमरोक्तेः कैवल्यं मोक्षः । न च ब्रह्मादयो मोक्षं न प्राप्नुवन्तीति युक्तम् । तन्मोक्षस्य प्रमितत्वात् । न च 'ते पदम्' इति विशेषणादीश्वरस्वरूपभूतं मोक्षं न प्राप्नुवन्तीत्यर्थ इति वाच्यम् । न प्राप्नुवन्तीत्यत्र पदं हीत्यस्य हेतुत्वेन विशेषणत्वा-भावादित्यत आह– **सर्वोत्तमत्वमिति ॥** तथाऽपि कथमभेदनिषेधात्मकत्वलाभः । इत्थम् । अभेदो नाम तादात्म्यम् । तच्च प्रतियोगितावच्छेदको धर्म इति पदार्थविदः । तथा च ब्रह्मादय ईश्वरो नेति प्रतीयमाने भेदे सर्वोत्तमत्वरूपेश्वरत्वस्य प्रतियोगितावच्छेदकत्वात् तन्निषेधे अभेदनिषेध एव कृतो भवतीति व्याचक्षते ॥

**इतोऽपि** निरवकाशत्वादपि । विचारशब्दस्य जिज्ञासासूत्रादौ निर्णयार्थत्वाभ्युपगमात्, 'सनिर्णयो निर्णयः' इत्यनन्वितमित्यतो विचारनिर्णयशब्दार्थौ विवक्षितावाह– **पूर्वोक्तेरेति ॥** निर्णयोऽत्रावधारणमिति वक्तव्येऽपि प्रकृताभिप्रायेण जीवेशभेदेत्युक्तम् । मननापरनामक-युक्त्यनुसन्धानजनितार्थनिर्धारणमित्यर्थः । 'इत्यादिना' इत्यादिशब्देन–

'उताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ।

वैशम्पायन उवाच–

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ॥

तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्'

इति वचनं गृह्यते । तत्र हि 'बहवः पुरुषाः ब्रह्मन्नुताहो एक एव तु' । यदि बहवस्तर्हि 'को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति' इति जनमेजयप्रश्ने 'नैतदिच्छन्ति पुरुषमेकम्' इति पुरुषैक्यपक्षं प्रतिक्षिप्य बहुत्वपक्षमङ्गीकृत्य सकलपुरुषकारणस्य पूर्णस्य गुणाधिकस्य श्रेष्ठ-पुरुषस्य वैशम्पायनेन प्रतिज्ञपूर्वं भेदो निर्धारित इति भावः । ननु 'बहवः पुरुषाः' इत्यादेः संसार एव भेदप्रतिपादकत्वान्मुक्तौ किमायातमित्यत आह– **न हि भिन्नयोरिति ॥ किमिति ।** भेद इवाभेदेऽपि 'परेऽव्यये' इत्यादिवाक्यसत्त्वात् कथं निर्णय इति चोद्ये किमुत्तरमित्यर्थः । **इति सम्बन्ध इति ॥** 'सविचारो निर्णयश्च वाक्यमात्राद् बलवान्' इति भाष्यं योजनीयमित्यर्थः ।

यद्येवं भेदपक्षस्य बलवत्त्वान्मुक्तस्य ब्रह्मभेद इष्यते तर्हि 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा' इति छान्दोग्ये तुरीयावस्थायां स्वभिन्नस्याभावादेव खल्वन्यदर्शनश्रवणाद्यभाव आवेद्यते ब्रह्मभावमापन्नस्य मुक्तस्य । तदिदमद्वितीयत्वं यन्निर्गुण-ब्रह्मलक्षणं तत् कथमुपपन्नम् ? मुक्तजीवेन सद्वितीयत्वप्राप्त्याऽसम्भवप्रसङ्गादिति भावेन शङ्कते– **कथं तर्हीति ॥**

भाष्यगतातश्शब्दार्थमाह– **सविचारेति ॥** अन्यस्यैवाभावात् कस्य भगवदधीनसत्तादि स्यादित्यत उक्तं– **विद्यमानस्यापीति ॥** सविचारनिर्णयावसरे ब्रह्मभिन्नबहुजीवानां सद्भावा-वेदनेन 'यदधीनं विना नान्यत् किञ्चिदस्ति कथञ्चन । स भूमोक्तोऽभिपूर्णत्वात्' इति प्रमाणेनैवं श्रुतिर्व्याख्यातेति । यत्र यस्मिन् वस्तुनि ज्ञाते अन्यत् स्वातन्त्र्येण न पश्यति । किन्तु भगवदधीनमेव विद्यमानं चेतनजातमिति पश्यतीत्यादिरूपेण भगवदधीनसत्त्वादियोगित्वं 'यत्र नान्यत्' इति वाक्यं वक्तीत्येव व्याख्यानं युक्तमित्यर्थः । 'इतश्च' इति चशब्दः 'अतः' इति पूर्वहेतुसमुच्चयार्थः । एवं स्वतन्त्रमन्यन्नास्तीत्येतदर्थकमित्येवं वाक्यं व्याख्येयमिति योज्यम् । **अन्यदेव** ईशितव्यज्ञेयादिकमेव । **तर्हि कथमिति ॥** ईशितव्याभावे ईश्वरत्वस्य ज्ञेयाद्यभावे ज्ञातृत्वादेश्चायोगादिति भावः । **तत्** सर्वेश्वरत्वादि । 'इत्युक्तम्' इति भाष्ये 'न च माययैकम्' इत्यादाविति शेषः । अन्यथेत्येतद् विवृणोति– **यदीति ॥ स एकधेत्यादीति ॥** 'स एकधा भवति स त्रिधा भवति' इत्यादौ मुक्तस्य नानाभावेन भोग उच्यते । स च न ब्रह्माभेदेन निर्वाह्यः । भूमज्ञानी भूमैव संवृत्त इति श्रवणापातात् । नापि विशेषबलेन । निर्विशेष-ब्रह्मवादिमते विशेषेण तन्निर्वाह इत्यस्य व्याहतत्वात् । किन्तु ब्रह्मभेदमङ्गीकृत्य

श्लोकः ५०

ब्रह्मप्रसादायत्तविचित्रशक्तिशब्दितविशेषबलेन नानाभावेन भोगनिर्वाहः कर्तव्य इति भेदे-नावस्थानं श्रुतिस्तात्पर्यतः कथं ब्रूयादित्यर्थः । **तत्** भेदेनावस्थानम् । **भूमप्रकरण एवेति** ॥ 'यत्र नान्यत् पश्यति' इत्यादिखण्डद्वयेन भम्नो महिमानमुक्त्वा तज्ज्ञानिनः 'तस्य ह वा एतस्य एवंविदः' इति प्राणादिप्राप्तिरूपं फलमुक्त्वा तत्र 'तदेष श्लोकः' इति सम्मतिं चोक्त्वा पुनर्भूम-ज्ञानिन एव 'स एकधा' इत्यादिफलम् उच्यते । न ह्यत्र प्रकरणे सगुणवार्ताऽस्तीति भावः ।

**भावदीपिका (श्री.टि.)– अभेदनिषेधेति** ॥ भगवत्सर्वोत्तमत्वप्राप्तेरेव तदभेदरूपत्वादिति भावः । **वक्तुम्**– बलवांश्चेत्यत्र ॥ **बहवः पुरुषा ब्रह्मन्नित्यादिनेति** ॥ 'बहवः पुरुषा ब्रह्मन् उताहो एक एव तु' । यदि बहवस्तर्हि, 'को ह्यत्र पुरुषः श्रेष्ठः तं भवान् वक्तुमर्हति' इति जनमेजयप्रश्ने 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्भव' इति पुरुषैक्यपक्षं निषिध्य बहुत्वपक्ष-मङ्गीकृत्य तत्र श्रेष्ठपुरुषस्य 'बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं पुरुषं विश्व-माख्यास्यामि गुणाधिकम्' इति वैशम्पायनेन प्रतिज्ञायोक्तत्वादित्यर्थः ।

ननु बहव इत्यादिसविचारनिर्णयेन संसारे भेदसिद्धावपि न मुक्तौ भेदसिद्धिरित्यत आह– **नहीति** ॥ यथोक्तमनुव्याख्याने 'नहि भिन्नमभिन्नताम् । गच्छेद् दृष्टं कचित्' इति । 'यतो न दृष्टं यदभून्न पूर्वं पश्चात् तदासेति कुतश्च किञ्चित्' इति च ॥ **यत्रेत्यादीति** ॥ 'यत्र नान्यत् पश्यति नान्यच्छृणोति, नान्यद् विजानाति, स भूमा' इति छान्दोग्ये यत्र मुक्तिरूपतुरीया-वस्थायां यः स्वान्यन्न पश्यतीत्यादिस्वभिन्नस्याभावादेव स भूमा तन्निर्गुणं ब्रह्मेति भूमनाम्नो निर्गुणब्रह्मणोऽद्वितीयत्वलक्षणं कथ्यमानमनुपपन्नं स्यात् यदि मुक्ता ब्रह्मणो भिन्ना स्युरित्यर्थः । ननु भगवदन्यस्यैवाभावात्, कस्य तदधीनसत्तादिवाचि स्यादित्यत उक्तम्– **विद्यमानस्येति** ॥ सिद्धमित्यनन्तरमुपपन्नमिति शेषः । ततः सर्वेश्वरत्वादिभेदेनाभूम्नः सकाशात् ॥ **भूमप्रकरण एवेति** ॥ यत्र नान्यत् इत्यादिना खण्डद्वयेन भूम्नो महिमानमुक्त्वा तज्ज्ञानिनः 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्य' इत्यादिना प्राणाशादिप्राप्तिरूपं फलमुक्त्वा तत्र 'तदेष श्लोक' इति सम्मतिं चोक्त्वा पुनर्भूमज्ञानिन एव 'स एकधा' इत्यादि फलं कथ्यते । नह्यत्र प्रकरणे त्वदभिमतसगुणवार्ताऽप्यस्तीत्यर्थ. ।

**भावप्रकाशः (कृ.टि.)– इतश्चेति** ॥ अपवादरूपत्वाच्चेत्यर्थः । प्रागुक्तबहुत्वसमुच्चयार्थश्च शब्दः । नैव तत्प्राप्नुवन्तीति वाक्यं मुक्तावेव ब्रह्मादीनां सर्वोत्तमत्त्वप्राप्तिनिषेधकं तत्रैव

तत्प्रसक्तेः । ब्रह्मादीनां समष्टिजीवत्वेन परमते मुक्तत्वाचेति भावेनोक्तम् । **मुक्तभेदेति** ।। अत्र मुक्तपदप्रयोगान्नैवेति वाक्यं मुक्तभेदपरमिति सूचितम् । तेन तस्यापवादत्वसिद्धिः । परेऽव्यय इत्यस्य मुक्तावैक्यप्रतिपादकत्वेन तत्रैव भेदप्रतिपादकस्य नैवेति वाक्यस्य तदपवादत्वा-वश्यम्भावादिति । ननु नैवेति वाक्यस्य न प्रतिप्रसवविधित्वेनापवादत्वं निषेधकत्वेन विधायकत्वाभावादित्यत आह– **अभेदनिषेधात्मकत्वा-दिति** ।। नन्वभेदनिषेधात्मकत्वादभेद-वाक्यात् प्रबलमित्ययुक्तम् । अयं घट इत्याप्तवाक्यानन्तरभाविनि नायं घट इत्याप्तवाक्येऽ-नैकान्त्यादिति चेन्न । अपवादत्वेनात्र प्राबल्यसाधनात् । ननु 'मुक्तिः कैवल्यनिर्वाणे'त्यमरोक्तेः कैवल्यं मोक्षः । न च ब्रह्मादयो मोक्षं न प्राप्नुवन्तीत्येतद्युक्तम् । तन्मोक्षस्य प्रमितत्वात् । न च ते पदमिति विशेषणादीश्वरस्वरूपभूतं मोक्षं न प्राप्नुवन्तीत्यर्थ इति वाच्यम् । न प्राप्नुवन्तीत्यत्र ते पदं हीत्यस्य हेतुत्वेन विशेषणत्वाभावादित्यत आह– **कैवल्यं सर्वोत्तमत्वमिति** ।। तथाऽपि कथमभेदनिषेधात्मकत्वलाभः । इत्थम् । अभेदो नाम तादात्म्यम् । तच्च प्रतियोगितावच्छेदको धर्म इति पदार्थतत्त्वविदः । तथा च ब्रह्मादय ईश्वरो नेति प्रतीयमाने भेदे सर्वोत्तमत्वरूपेश्वर-त्वस्य प्रतियोगितावच्छेदकत्वात् तन्निषेधे अभेदनिषेध एव कृतो भवतीति व्याचक्षते ।। **इतोऽपीति** ।। निरवकाशत्वादपीत्यर्थः । ऐक्यनिषेधपूर्वकं भेदप्रतिपादकत्वेन बहव इत्यादि-वक्ष्यमाणवाक्यस्य निरवकाशत्वमेव । वृत्त्यन्तरेण वाऽनेकार्थत्वेन वा विषयान्तरपरत्वाभावस्यैव निरवकाशशब्दार्थत्वादिति भावः । ननु सविचारो निर्णयः कृत इत्यनेन विचारः कृत इत्युच्यते । विचारश्च युक्त्यनुसन्धानम् । न चात्र युक्तिरभिधीयत इत्यत आह– **पूर्वोत्तरेति** ।। यत्किञ्चि-न्निर्णयस्य प्रकृतानुपयोगादाह– **निर्णय इति** ।। बहवः पुरुषा इत्यादिनेति ।।

बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ।
वैशम्पायन उवाच । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्भव ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामिगुणाधिकमिति वाक्येनेत्यर्थः ।

ननु बहवः पुरुषा इत्यादेः संसार एव भेदप्रतिपादकत्वात् मुक्तौ किमायातमित्यत आह– **न हि भिन्नयोरिति** ।। **कथं तर्हीति** ।। यदि भेदपक्षस्य प्रबलत्वात् मुक्तस्य ब्रह्मभिन्नत्वं तर्हि

श्लोकः ५०

यत्रेत्यादिना भूम्नोऽद्वितीयत्वं यल्लक्षणमुक्तं तत्कथमुपपन्नं स्यात् । मुक्तजीवेन सह द्वितीयत्वप्राप्तेरसम्भवप्रसंङ्गादित्यर्थः । **भगवदधीनेति** ।। 'यदधीनं विना नान्यत् किञ्चिदस्ति कथञ्चन । स भूमोक्तोऽतिपूर्णत्वात्' इति प्रमाणेनैव श्रुतिव्याख्यानादिति भावः । **स एकधेत्यादीति** ।। स एकधा भवति त्रिधा भवतीत्यादौ तावन्मुक्तस्यानेकरूपत्वमुच्यते । तत्र विशेषबलेन त्वन्मते न निर्वोढुं शक्यं, निर्विशेषब्रह्मा । भिन्नत्वात् । नाप्यविद्याबलेन निवृत्तत्वात्तस्याः । किन्तु ब्रह्मभेदमङ्गीकृत्य विशेषबलेनैव तन्निर्वाह्यम् । तथा च भेदेनावस्थानं श्रुतिस्तात्पर्यतः कथं ब्रूयादित्यर्थः ।।

## भाष्यम्

**नच 'न ह वै सशरीरस्य' (छा.उ.८.१२.१) इत्यादिविरोधः ।। वैलक्षण्यात् तच्छरीराणाम् । अभौतिकानि हि तानि नित्योपाधिविनिर्मितानि ईश्वरशक्त्या । तथा चोक्तम् 'शरीरं जायते तेषां षोडश्या कलयैव तु' इत्यादि नारायणाष्टाक्षरकल्पे ।। वदन्ति च लौकिकाद्वैलक्षण्येऽभावशब्दम् 'अप्रहर्ष-मनानन्दम्' 'सुखदुःखबाह्यः' इत्यादिषु ।।**

भावप्रदीपिका (प.टी.)– ननु कथं नारदादिदृष्टाः सशरीरा मुक्ताः? 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतिविरोधापातादित्यत आह– **न चेति** ।। प्रियाद्यप्रापिकशरीरत्वात् न विरोध इत्यर्थः । किंतद्वैलक्षण्यमित्यतस्तदाह– **अभौतिकानीति** ।। ननु मुक्तानां शरीरित्वे कथं 'अशरीरं वाव सन्तम्' इति श्रुतिः? इत्यत आह– **वदन्ति चेति** ।।

भावप्रकाशिका (न.टी.)– ननु नारददृष्टा 'स एकधा' इत्यादि प्रतिशाखमुच्यमानाश्च सशरीराः । सशरीराणां च 'न ह वै सशरीरस्य' इत्यादिना प्रियाप्रियानपहत्युक्तेः संसारि-त्वम् । अतो न किञ्चिन्मुक्तभेदे प्रमाणमित्यत आह– **न चेति** ।। किं तद्वैलक्षण्यम् ? येनाप्रियायोगः सर्वथेत्यत आह– **अभौतिकानीति** ।। तत्र प्रमाणमाह– **तथा चेति** ।। चशब्दात् 'अन्यं नवतरं कल्याणतरं रूपं कुरुते' इति श्रुतावप्युक्तमिति सूचयति ।

तत्प्रसक्तेः । ब्रह्मादीनां समष्टिजीवत्वेन परमते मुक्तत्वाच्चेति भावेनोक्तम् । **मुक्तभेदेति** ।। अत्र मुक्तपदप्रयोगान्नैवेति वाक्यं मुक्तभेदपरमिति सूचितम् । तेन तस्यापवादत्वसिद्धिः । परेऽव्यय इत्यस्य मुक्तावैक्यप्रतिपादकत्वेन तत्रैव भेदप्रतिपादकस्य नैवेति वाक्यस्य तदपवादत्वा-वश्यम्भावादिति । ननु नैवेति वाक्यस्य न प्रतिप्रसवविधित्वेनापवादत्वं निषेधकत्वेन विधायकत्वाभावादित्यत आह– **अभेदनिषेधात्मकत्वा-दिति** ।। नन्वभेदनिषेधात्मकत्वादभेद-वाक्यात् प्रबलमित्ययुक्तम् । अयं घट इत्याप्तवाक्यानन्तरभाविनि नायं घट इत्याप्तवाक्येऽ-नैकान्त्यादिति चेन्न । अपवादत्वेनात्र प्राबल्यसाधनात् । ननु 'मुक्तिः कैवल्यनिर्वाणे'त्यमरोक्तेः कैवल्यं मोक्षः । न च ब्रह्मादयो मोक्षं न प्राप्नुवन्तीत्येतद्युक्तम् । तन्मोक्षस्य प्रमितत्वात् । न च ते पदमिति विशेषणादीश्वरस्वरूपभूतं मोक्षं न प्राप्नुवन्तीत्यर्थ इति वाच्यम् । न प्राप्नुवन्तीत्यत्र ते पदं हीत्यस्य हेतुत्वेन विशेषणत्वाभावादित्यत आह– **कैवल्यं सर्वोत्तमत्वमिति** ।। तथाऽपि कथमभेदनिषेधात्मकत्वलाभः । इत्थम् । अभेदो नाम तादात्म्यम् । तच्च प्रतियोगितावच्छेदको धर्म इति पदार्थतत्त्वविदः । तथा च ब्रह्मादय ईश्वरो नेति प्रतीयमाने भेदे सर्वोत्तमत्वरूपेश्वर-त्वस्य प्रतियोगितावच्छेदकत्वात् तन्निषेधे अभेदनिषेध एव कृतो भवतीति व्याचक्षते ।। **इतोऽपीति** ।। निरवकाशत्वादपीत्यर्थः । ऐक्यनिषेधपूर्वकं भेदप्रतिपादकत्वेन बहव इत्यादि-वक्ष्यमाणवाक्यस्य निरवकाशत्वमेव । वृत्त्यन्तरेण वाऽनेकार्थत्वेन वा विषयान्तरपरत्वाभावस्यैव निरवकाशशब्दार्थत्वादिति भावः । ननु सविचारो निर्णयः कृत इत्यनेन विचारः कृत इत्युच्यते । विचारश्च युक्त्यनुसन्धानम् । न चात्र युक्तिरभिधीयत इत्यत आह– **पूर्वोत्तरेति** ।। यत्किञ्चि-न्निर्णयस्य प्रकृतानुपयोगादाह– **निर्णय इति** ।। बहवः पुरुषा इत्यादिनेति ।।

बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ।
वैशम्पायन उवाच । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्भव ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामिगुणाधिकमिति वाक्येनेत्यर्थः ।

ननु बहवः पुरुषा इत्यादेः संसार एव भेदप्रतिपादकत्वात् मुक्तौ किमायातमित्यत आह– **न हि भिन्नयोरिति** ।। **कथं तर्हीति** ।। यदि भेदपक्षस्य प्रबलत्वात् मुक्तस्य ब्रह्मभिन्नत्वं तर्हि

श्लोकः ५०

यत्रेत्यादिना भूम्नोऽद्वितीयत्वं यल्लक्षणमुक्तं तत्कथमुपपन्नं स्यात् । मुक्तजीवेन सह द्वितीयत्वप्राप्तेरसम्भवप्रसंङ्गादित्यर्थः । **भगवदधीनेति** ।। 'यदधीनं विना नान्यत् किञ्चिदस्ति कथञ्चन । स भूमोक्तोऽतिपूर्णत्वात्' इति प्रमाणेनैव श्रुतिव्याख्यानादिति भावः । **स एकधेत्यादीति** ।। स एकधा भवति त्रिधा भवतीत्यादौ तावन्मुक्तस्यानेकरूपत्वमुच्यते । तत्र विशेषबलेन त्वन्मते न निर्वोढुं शक्यं, निर्विशेषब्रह्मा । भिन्नत्वात् । नाप्यविद्याबलेन निवृत्तत्वात्तस्याः । किन्तु ब्रह्मभेदमङ्गीकृत्य विशेषबलेनैव तन्निर्वाह्यम् । तथा च भेदेनावस्थानं श्रुतिस्तात्पर्यतः कथं ब्रूयादित्यर्थः ।।

## भाष्यम्

**नच 'न ह वै सशरीरस्य' (छा.उ.८.१२.१) इत्यादिविरोधः ।। वैलक्षण्यात् तच्छरीराणाम् । अभौतिकानि हि तानि नित्योपाधिविनिर्मितानि ईश्वरशक्त्या । तथा चोक्तम् 'शरीरं जायते तेषां षोडश्या कलयैव तु' इत्यादि नारायणाष्टाक्षरकल्पे ।। वदन्ति च लौकिकाद्वैलक्षण्येऽभावशब्दम् 'अप्रहर्ष-मनानन्दम्' 'सुखदुःखबाह्यः' इत्यादिषु ।।**

भावप्रदीपिका (प.टी.)– ननु कथं नारदादिदृष्टाः सशरीरा मुक्ताः? 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतिविरोधापातादित्यत आह– **न चेति** ।। प्रियाद्यप्रायिकशरीरत्वात् न विरोध इत्यर्थः । किंतद्वैलक्षण्यमित्यतस्तदाह– **अभौतिका-नीति** ।। ननु मुक्तानां शरीरित्वे कथं 'अशरीरं वाव सन्तम्' इति श्रुतिः? इत्यत आह– **वदन्ति चेति** ।।

भावप्रकाशिका (न.टी.)– ननु नारददृष्टा 'स एकधा' इत्यादि प्रतिशाखमुच्यमानाश्च सशरीराः । सशरीराणां च 'न ह वै सशरीरस्य' इत्यादिना प्रियाप्रियानपहत्युक्तेः संसारि-त्वम् । अतो न किञ्चिन्मुक्तभेदे प्रमाणमित्यत आह– **न चेति** ।। किं तद्वैलक्षण्यम् ? येनाप्रियायोगः सर्वथेत्यत आह– **अभौतिकानीति** ।। तत्र प्रमाणमाह– **तथा चेति** ।। चशब्दात् 'अन्यं नवतरं कल्याणतरं रूपं कुरुते' इति श्रुतावप्युक्तमिति सूचयति ।

अवश्यजीवरूपचिद्रूपोपाधिरेव षोडशी कलोच्यते । ननु मुक्तानामपि देहवत्त्वे 'अशरीरं वाव सन्तम्' इति कथं तदभावोक्तिः ? इत्यत आह– **वदन्ति चेति ॥**

**प्रमेयदीपिका** (ज.टी.)– ननु नारदेन ये श्वेतद्वीपे भगवतो भिन्ना दृष्टास्ते मुक्ता एव न भवन्ति । सशरीरत्वात् । सशरीराणामपि मुक्तत्वाङ्गीकारे– 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इत्यादि श्रुतिविरोध इत्यत आह– **नचेति ॥** कुतो न? इत्यत आह– **वैलक्षण्यादिति ॥** किं तदस्मदादिशरीरेभ्यस्तेषां वैलक्षण्यम्? इत्यत आह– **अभौतिकानीति ॥** अजडानीत्यर्थः । तर्हि किमात्मकानि? इत्यत आह– **नित्येति ॥** विकारित्वाद् विनाशस्स्यादित्यत उक्तम्– **ईश्वरशक्त्येति ॥** कुत एतत्? इत्यत आह– **तथा चेति ॥** नित्योपाधिरेव षोडशी कला ॥

एतदुक्तं भवति । यच्छ्रुतौ सशरीरस्य दुःखानपहतिवचनं तत् कर्माधीनजडशरीराभिप्रायम् । श्वेतद्वीपे नारदेन दृष्टानि तु शरीराणि चिन्मयानि । जडान्यपि न कर्माधीनानि। अतो न दुःखकारणानि । तथाच न तेषां सशरीराणामपि मुक्तत्वे श्रुतिविरोध इति। यदि मुक्ताः सशरीरास्तर्हि कथं तेषु 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः' (ब्र.सू.भा. ४.४.१०. उ.कौण्ठरव्यश्रुतिः) इति शरीराभाववचनमित्यत आह– **वदन्ति चेति ॥** लौकिकाद्वैलक्षण्ये सति । **'तद्वदत्रापि'** इति शेषः ॥

**भावदीपः** (रा.टि.)– **मुक्तत्वे श्रुतिविरोध इति ॥** 'न ह वै सशरीरस्य' इति श्रुतिविरोधो नेत्यर्थः ॥

**भावरत्नकोशः** (सु.टि.)– 'दृष्टाश्च ते भागवतो भिन्ना नारदेन' इत्युक्तमाक्षिपति– **नन्विति ॥ सशरीरत्वादिति ॥** अन्यथा दर्शनमेव न स्यादिति भावः । सशरीरत्वहेतोरप्रयोजकत्वमाशङ्क्याऽह– **सशरीराणामपीति ॥ श्रुतिविरोध इति ॥** प्रियाप्रियोपहतस्य च मुक्तत्वं व्याहतमित्यर्थः । भौतिकत्वाभावेऽपि प्राकृतत्वं किं न स्यादित्यत आह– **अजडानीति ॥ ईश्वरशक्त्योतीति ॥** नित्योपाधिविनिर्मितत्वेन विकारित्वेऽपि ईश्वराचिन्त्यशक्त्या विनाशाभाव इति भाष्याभिसन्धिरिति भावः । अत्रायमभियुक्तानां पन्थाः । प्राङ्मुक्तौ चाणुस्वरूपस्यापि जीवस्य मुक्तौ महत्त्वेन निर्मितत्वं 'नित्योपाधिविनिर्मितानि' इति भाष्येणोच्यते ।

श्लोकः ५०

तत्र च 'शरीरं जायते तेषाम्' इति वाक्यं प्रमाणम् । निराकारस्य जीवस्य शरीराकारेण निर्माणमत्रोच्यत इत्यस्तु । महत्त्वेन निर्मितत्वं तु कुत इति चेन्न । 'अकृत्रिमत्वात् तस्य देहस्यानपगमात्' इति न्यायविवरणरीत्या प्रागपि देहाकारस्यावश्यवक्तव्यत्वात् । 'अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोति भगवान् महत्' इति बृहद्भाष्यस्थस्पष्टप्रमाणसद्भावाच्च । अत्र च 'सुमहत्तेजः' इति तेजसा महत्त्वमुक्त्वा पुनर्महदित्युक्त्या परिमाणतोऽपि महत्त्वमवगम्यत इति ॥ ननु भाष्यप्रमाणयोर्विसंवादः । यतो मुक्तशरीरं भाष्ये नित्योपाधिना विनिर्मितमुच्यते । प्रमाणे तु षोडश्या कलया निर्मितमितीत्यत आह– **नित्योपाधिरेवेति** ॥ 'आत्मैवास्य षोडशी कला' इति बृहदारण्योक्तेर्जीवस्वरूपमेवेत्यर्थः । कथमनेन 'ननु नारदेन' इत्यादिना कृतचोद्यस्य परिहार इत्यतो भावमाह– **एतदुक्तं भवतीति** ॥ 'लौकिकवैलक्षण्ये' इति भाष्यं कर्मधारयभ्रमं वारयन् सोपस्करं व्याख्याति– **लौकिकादित्यादि** ॥

**भावदीपिका (श्री.टि.)– ॥ श्रुतिविरोध इति ॥** सशरीरत्वे प्रियाप्रियोपहतिर्नियता । 'नहवै सशरीरस्य' इत्यादिश्रुतेः । प्रियाप्रियोपहतिमतां च मुक्तत्वं विरुद्धमित्यर्थः । ननु माऽस्तु मुक्तशरीराणां भौतिकत्वम् । प्राकृतत्वं किं न स्यादित्यत आह– **अजडानीति** ॥ ननु षोडशकलात्मकलिंगशरीरस्य नष्टत्वान्मुक्तानां शरीरं षोडशकलया जायत इति कथमुक्तमित्यत आह– **नित्योपाधिरेवेति** ॥ स्वरूपोपाधिरित्यर्थः । भाष्ये तेषां स्वरूपं जायते व्यज्यत इत्यर्थः । संसारे लिंगशरीरावृतत्वाद् जीवस्वरूपमल्पतेजो ह्यल्पपरिमाणमवतिष्ठते । मुक्तौ तु तदपगमे ईश्वरः स्वशक्त्या विशेषबलात् तदेव महत् करोति कार्पासवत् । यथोक्तं बृहद्भाष्ये 'अल्पन्तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत् तेजः करोतीशो महत् तदा' इति । ततो नात्रानुपपत्तिरिति संप्रदायविदः । **दुःखानपहतिवचनं** दुःखवत्त्ववचनमित्यर्थः ।

ननु नारदेन दृष्टानि चिन्मयानीति कुतः? 'भावं जैमिनिर्विकल्पाम्नानात्' इति सूत्रे 'स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कथञ्चन' इति प्रमाणे च मुक्तानां चिच्छरीरव्यतिरिक्तजडशरीरग्रहणस्याप्युक्तेर्जडशरीराण्येव दृष्टानीति किं न स्यादित्यत आह– **जडान्यपीति** ॥ **न दुःखकारणानीति** ॥ 'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः । भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन । तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः' इत्यादिवचनादिति भावः ॥

**भावप्रकाशः (कृ.टि.)**– भौतिकत्वाभावेऽपि प्राकृतत्वं किं न स्यादित्यत आह– **अजडानीत्यर्थ इति ॥ ईश्वरशक्त्येतीति ॥** नित्योपाधिविनिर्मितत्वेन विकारित्वेऽपीश्वरशक्त्या विनाशाभाव इत्यर्थः । नच प्रागणोर्जीवस्य मुक्तावप्यणुत्वात् कथं जीवरूपस्य मुक्तौ विनिर्मितत्वोक्तिरिति वाच्यम् । अणुस्वरूपस्यापि जीवस्य मुक्तौ महत्वेन विनिर्मितत्व-सम्भवात्। न चात्र प्रमाणाभावः । शरीरं जायत इत्यस्यैव तथात्वात्। एवं तर्हि प्राङ्-निराकारस्य जीवस्य देहाकारेण निर्माणमत्रोच्यते इत्यस्तु, महत्वेन निर्मितत्वं कुत इति चेत्। अकृत्रिमत्वात् तस्य देहस्यानपगमादिति न्यायविवरणरीत्या प्रागपि देहाकारस्यावश्यवक्तव्य-त्वात्। 'अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोति भगवान् महत्' इति स्पष्टप्रमाणाच्च महत्वेन विनिर्मितत्वं गम्यते । अत्र सुमहत्तेज इति तेजसो महत्वमुक्त्वा पुनर्महदित्युक्त्या परिमाणतोऽपि महत्वावगमादिति । ननु नित्योपाधिनिर्मितत्वे कथमियं स्मृतिः प्रमाणम् । अत्र षोडशकलानिर्मितत्वोक्तेरित्यत आह– **नित्योपाधिरेवेति ॥** जीवस्वरूप-मेवेत्यर्थः । 'योऽयमेवंवित् पुरुषस्तस्य वित्तमेव पञ्चदशकलात्मैवास्य षोडशीकला' इति बृहदारण्यकोक्तरीत्या जीवस्वरूपदेहस्य षोडशकलात्वमवधातव्यम्। नच ध्रुववद्देह उच्यत इति तद्भाष्ये जडदेहस्य षोडशकलात्वोक्तिविरोध इति वाच्यम् । चन्द्रसम्बन्धिध्रुवकलासाम्योक्त्य-न्यथाऽनुपपत्त्या देहपदेन चिन्मयदेहस्यैव ग्राह्यत्वात्। जडदेहस्य विनाशित्वेन ध्रुवत्वायोगादिति दिक् । **चिन्मयानीति ॥** मोक्षधर्मे नारददृष्टमुक्तेषु अनिन्द्रियाश्चानशनाश्चेत्यादिना शरीराद्य-भावमुक्त्वा वज्रास्थिकाया इत्यनेन पुनस्तदन्यथानुपपत्तेरिति भावः ॥

## भाष्यम्

**निरुक्त्यभावाच्च न तानि शरीराणि । तथाहि श्रुतेः ॥ 'अशारीर्ती तच्छरीरमभवत्' इति । न हि तानि शीर्णानि भवन्ति । 'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च'** (१४.२) **इत्यादि वचनात् ॥ साम्यात् प्रयोगः । प्रयोगाच्च– 'अनिन्द्रिया अनाहारा अनिष्पन्दास्सुगन्धिनः'** (म.भा.१२.३३५.१३) **'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्'** (भाग.७.१.३४) **इत्यादि दृष्टदेहेष्वेव ॥**

'कर्मजं फलं त्यक्त्वा' इत्यस्य निष्कामकर्मकरणं नार्थः । किन्तु ईश्वरसमर्पणं तस्यार्थः । अतो न पौनरुक्त्यमिति भावः ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** क्रियापदाश्रवणात् अकामनायाः कर्तृत्वकरणत्वयोरभावेन तत्र कर्तृकरणयोस्तृतीयेति तृतीयाऽसम्भवात् कथमकामनयेति तृतीयेत्यतस्तत्सूत्रीयोपसङ्ख्यानात् तृतीयेत्याह– **प्रकृत्यादिभ्य उपसङ्ख्यानादिति** ॥ यद्यपि स्वभावेनैवायं चारुः कृतः नालङ्कारादिनेति करणान्तरव्यावृत्तिपरतया प्रयोगदशायां गम्यमानकरोतिक्रियापेक्षया तत्र करणत्वेन, तत्र करणे तृतीयावत् अत्राप्यकामनयैव कर्मफलत्यागः, नतु कर्माकरणेनेति करणान्तरव्यावृत्तिपरतयाप्रयोगाभिप्रायकत्वकल्पनया गम्यमानत्यागलक्षणक्रियापेक्षया करणत्वादेव कर्तृकरणयोरिति तृतीयासिद्धेर्व्यर्थमुपसङ्ख्यानाश्रयणम् । तथाऽपि श्रुतक्रियाकर्तृकरणयोरेव तृतीयाविधायकत्वं कर्तृकरणयोरिति सूत्रस्य अभ्युपगम्य तदाश्रयणमिति द्रष्टव्यम् ॥

**भावरत्नकोशः (सु.टि.)– पूर्वोक्तान्न विशिष्यत इति** ॥ 'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा' इत्यत्र, 'बुद्धियुक्तः' इत्यत्र च यदुक्तं तावत एवात्र कथनादिति भावः । 'पदं गच्छन्त्यनामयम्' इत्यधिकमत्रोच्यत इति चेन्न । पूर्वश्लोकेऽपि 'सुकृतदुष्कृते जहाति तस्मात्' इत्यत्राखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्तिहेतुत्वादित्यभिमतत्वेन अनामयपदप्राप्तेरप्युक्तत्वादिति ॥ तस्मिन् श्लोके पूर्वार्धेन ज्ञानसाधनोक्तेरुत्तरार्धेन ज्ञानफलोक्तेस्तदुभयानुगुणतया 'तदुपायम्' इति भाष्यं द्वेधा व्याचष्टे– **तस्य ज्ञानस्येत्यादिना** ॥ 'पूर्वोक्तान्न विशिष्यते' इति शङ्कां परिहरति– **विवृणोतीति** ॥ बुद्धियुक्ता इत्यस्य कर्मजं फलं त्यक्त्वा बुद्धियुक्ता इतीतिकर्तव्यताविशेषसमर्पणेन विवरणात्, सुकृतदुष्कृते जहातीत्यस्य 'जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्' इति विवरणाच्च न पूर्वोक्ताविशेषशङ्केति भावः । अकामनयेति कथं तृतीया ? त्यागे तस्याः करणात्वाद्ययोगेन 'कर्तृकरणयोस्तृतीया' इत्यादिशास्त्रानवतारादित्यत आह– **प्रकृत्यादिभ्य उपसङ्ख्यानादिति** ॥ 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति वार्तिकादित्यर्थः । प्रकृत्यादिराकृतिगण इति भावः । न चैवमनन्वयः । अकामनारूपत्यागकर्म कृत्वेत्यन्वयोपपत्तेः । तथा च कर्मजन्यफलत्यागोऽत्र फलकामनायाः प्राप्तत्वात् तत्त्याग एव गीताभिप्रेत इति भाष्यभाव इत्युक्तं भवति ॥

श्लोकः ५१

**भावदीपिका (श्री.टि.)– पूर्वार्धेन** ज्ञानसाधनोक्तेरुत्तरार्धेन ज्ञानफलोक्तेस्तदुपायमित्येतद् द्वेधा व्याचष्टे– **तस्येत्यादिना ॥ व्याचष्ट इति ॥** कामनात्याग एव फलत्याग इत्याशयेनेत्यर्थः । नन्वकामनायास्त्यागे कर्तृत्वकरणत्वयोरभावात् कथं कर्तृकरणयोस्तृतीया इति सूत्रेण तृतीया । नापीत्थम्भूतलक्षणतृतीयाऽत्रोपपद्यत इत्यत आह– **प्रकृत्यादिभ्य इति ॥** कर्तृकरणयोस्तृतीया इति सूत्रे वार्तिकं प्रकृत्यादिभ्य उपसङ्ख्यानम् इति । प्रकृत्या चारु, इत्याद्युदाहरणम् । एवञ्च प्रकृत्यादेराकृतिगणत्वादकामनाशब्दस्यापि तद्गणान्तपठितव्यत्वादनेन वार्तिकेन तृतीयोपपद्यत इत्यर्थः ॥ एतत् कामनात्यागरूपफलत्यागस्वरूपम् ॥ **प्रागुक्तमिति ॥** सङ्गं त्यक्त्वा इत्यादावित्यर्थः ॥

**भावप्रकाशः (कृ.टि.)– पूर्वोक्तान्न विशिष्यत इति ॥** सङ्गं त्यक्त्वेत्यत्र बुद्धियुक्त इत्यादौ च यदुक्तं तावत एवात्रोक्तत्वादिति भावः । कर्मजमिति श्लोके पूर्वार्धे ज्ञानसाधनोक्तेरुत्तरर्धे ज्ञानफलोक्तेस्तदुभयानुगुण्याय तदुपायमित्येतत् द्वेधा व्याचष्टे– **तस्य ज्ञानस्येत्यादिना ॥** पूर्वोक्ताविशेषं परिहरति– **विवृणोतीत्यर्थ इति ॥** न च कामनायास्त्यागे करणत्वाद्यभावात् कथं तृतीयेत्यत आह– **प्रकृत्यादिभ्य इति ॥** प्रकृत्यादेराकृतिगणत्वादिति भावः । न चानन्वयः । अकामनारूपत्यागं कृत्वेत्यकामनात्यागयोरभेदान्वयोपपत्तेः । यथोक्तं 'नाम्नोर्द्विधैव सम्बन्धः सर्ववाक्ये व्यवस्थितः । सामानाधिकरण्येन षष्ठ्या वाऽपि क्वचिद्भवेद्' इति । नामपदं च शब्दमात्रपरम् । अन्यथा सर्ववाक्ये व्यवस्थित इत्युक्त्ययोगात् । तेन प्रकृतसङ्गतिरिति बोध्यम् । **प्रागिति ॥** सङ्गं त्यक्त्वेत्यत्रेत्यर्थः ॥

## भाष्यम्

**बुद्धियुक्ताः सम्यज्ज्ञानिनो भूत्वा पदं गच्छन्ति । स योगः कर्मज्ञानसाधनम् । तन्मोक्षसाधनमिति भावः ॥ ५१ ॥**

प्रमेयदीपिका (ज.टी.)– 'बुद्धियुक्ताः' 'मनीषिणः' इति पौनरुक्त्यपरिहाराय आह– **बुद्धियुक्ता इति ॥ सम्यज्ज्ञानिनः** शास्त्रजनिततत्वज्ञानिनः । अनेन 'मनीषिणः' इत्यपरोक्षज्ञानिन इति सूचितम् । प्रशंसायां मत्वर्थीयस्य विधानात् ॥ नन्विदमेकं वाक्यम् । कथं वाक्यार्थद्वयस्य विवरणम्? मोक्षस्वरूपविवरणेऽपि योगो न सम्यग् विवृतः । अङ्गिनः

**कर्मण एवानभिधानात् । अङ्गानां च सङ्कल्पत्यागादीनामित्यत आह– स योगेति ॥ समस्ताङ्गसङ्ग्रहाय योगग्रहणम्। 'तत्' ज्ञानम् । यद्यपि योजनावशादिदमेकं वाक्यम् । तथाप्यर्थवशाद् द्वे वेदितव्ये । योगश्च 'कर्मजं फलं त्यक्त्वा' इत्यनेन समग्रो लक्षित इति भावः ॥ ५१ ॥**

**भावबोधः (र.टि.)– मत्त्वर्थीयस्येति ॥** इनेरित्यर्थः । 'भूमनिन्दाप्रशंसासु नित्य-योगेऽतिशायिनि । सम्बन्धोऽस्ति विवक्षयां भवन्ति मतुबादयः' इतिवचनादिति भावः । **द्वे वेदितव्ये इति ॥** कर्मजं फलं त्वक्त्वा सङ्कल्पपरित्यागादिपूर्वकं कर्म च कृत्वा बुद्धियुक्ता भूत्वा मनीषिणो भवन्तीत्येकं वाक्यम् । तथा मनीषया जन्मबन्धविनिर्मुक्ताः सन्तः पदं गच्छन्तीत्यपरं वाक्यमित्यर्थः ॥ ५१ ॥

**भावदीपः (रा.टि.)–** कथं मनीषिपदेनापरोक्षज्ञानिलाभः? इत्यतो 'भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः' इत्युक्तेः प्रशंसायां मतुबर्थक'इनि'प्रत्यये मनीषि इति रूपसिद्धेः, प्रशस्ता मनीषिणो अपरोक्षज्ञानिन एवेति भावेन आह– **प्रशंसायां मत्वर्थीयस्य विधानादिति ॥ योगग्रहणमिति ॥** सिद्ध्यसिद्ध्योः समत्वरूपयोगग्रहणम्, सङ्कल्पत्यागः, भगवदर्पणम्, भगवत्पूजात्वेनानुष्ठानम् इत्येवमादि समस्ताङ्गोपादानायेत्यर्थः । तथाच पूर्वार्धे भगवदर्पण-मात्रप्रतीतावपि समस्ताङ्गोपेतकर्मोपलक्षणम् । तथा चायमर्थः । कर्मजं फलं त्यक्त्वा सर्वाङ्गोपेत-कर्मानुष्ठानाय शुद्धान्तःकरणाः बुद्धियुक्ताः शास्त्रजन्यज्ञानवन्तो भवन्ति । ततश्च मनीषिणोऽ-परोक्षज्ञानिनो भूत्वा पदं गच्छन्तीति ॥ **'योगश्च' इति ॥** निवृत्तं कर्म चेत्यर्थः ॥ ५१ ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु मनीषाशब्दोक्तज्ञानसम्बन्धबोधकस्य मनीषिण इत्यस्य कथमपरोक्षमानित्वसूचकत्वमित्यतः अस्ति विवक्षायां विहितानां मतुबादीनां 'भूमनिन्दाप्रशंसासु नित्ययोगेति शयिने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय' इति भूमादिष्वर्थेष्वपि मतुबादीनां विधानाभ्युपगमात् रूपवानित्यनेन प्रशस्तरूपवत्वस्येव मनीषिण इति मत्वर्थीयेन इनिप्रत्ययेन प्रशस्तज्ञानवत्वलाभादपरोक्षज्ञानस्य च तदगृहीतरेखोपरेखादिविशिष्टाग्राहकत्वेन परोक्षज्ञानापेक्षया प्रशस्तत्वात् युक्तं मत्वर्थीयेनिप्रत्ययान्तस्य मनीषिण इत्यस्यापरोक्षज्ञानि-सूचकत्वमित्याशयेनाह– **प्रशंसायां मत्वर्थीयस्य विधानादिति ।**

श्लोकः ५१

**भावरत्नकोशः (सु.टि.)**– तत्र शङ्कते– **एतदिति** ॥ फले कामना त्यक्तव्येत्येतत् 'कर्मण्येव' इति श्लोके, तद्विवरणपरे 'योगस्थः' इति श्लोके चोक्तमित्यर्थः । **प्रकारान्तरेणेति** ॥ कर्मजं फलं त्यक्त्वेत्यस्य निष्कामकर्मकरणं नार्थः । किन्तु कर्मणामीश्वरे समर्पणम् । तथा च न पुनरुक्तिरिति भावः । बुद्धिमनीषाशब्दयोः पर्यायत्वादुक्तम्– **पौनरुक्त्येति** ॥ भाष्ये विवक्षितां सम्यक्तां दर्शयति– **शास्त्रजनितेति** ॥ अनेन चेतनमात्रस्य बुद्धियुक्तत्वं सिद्धमेवेति नेदं विशेषणमिति चोद्यं परिहृतम् । **अनेन** 'बुद्धियुक्ताः शास्त्रजनितज्ञानयुक्ताः' इति भाषणेन । बुद्धियुक्त इत्यादौ तु मनीषिण इति विशेषणानुपादानाद् बुद्धिशब्दः परोक्षज्ञानपरो व्याख्यात इति न तद्विसंवादभावः । कथमनेनापरोक्षज्ञानिलाभ इत्यत आह– **प्रशंसायामिति** ॥ 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति वार्तिकेन प्रशंसायां मतुबर्थकेनिप्रत्ययविधानात् प्रशस्ता मनीषा एषामस्तीति मनीषिणोऽपरोक्ष-ज्ञानिन इति युक्तं सूचनमिति भावः । यद्यपि 'अत इनिठनौ' इति इनिरकारान्तादनुशिष्टः । तथाऽपि 'व्रीह्यादिभ्यश्च' इति सूत्रे 'शिखादिभ्य इनिर्वक्तव्यः' इति वार्तिककारेण शिखादेरा-कृतिगणत्वाङ्गीकारादत्र मनीषाशब्दादिभिर्भवत्येव । इदं 'कर्मजं बुद्धि' इति पद्यम् । **वाक्यार्थ-द्वयस्य** 'सङ्गं त्यक्त्वा' इति वाक्यार्थस्य, 'बुद्धियुक्तः' इति वाक्यार्थस्येत्येवं वाक्यार्थद्वय-स्येत्यर्थः । यद्वा, बुद्धियुक्त इति वाक्यार्थस्य, सुकृतदुष्कृते जहातीति वाक्यार्थद्वयस्येत्यर्थः । **मोक्षस्वरूपेति** । सुकृतदुष्कृते जहातीत्युक्ताशेषानिष्टनिवृत्तिं 'जन्मबन्धविनिर्मुक्ताः' इत्यनूद्य 'पदं गच्छन्त्यनामयम्' इत्यधिकाभिधानान्मोक्षस्वरूपं विवृतमिति भावः ।

'समत्वं योग उच्यते' इति प्राग् विवृतत्वान्न सम्यगित्युक्तम् । तदेवासम्यक्तवं दर्शयति– **अङ्गिन इति** ॥ **कर्मणः** निवृत्तलक्षणस्य । सङ्कल्पत्यागादीनाम् अनभिधानादिति वर्तते । ननु योगो नाम निवृत्तकर्मैव । तस्यैव ज्ञानसाधनत्वात् । 'कर्मणा ज्ञानमातनोति' इत्यादेः । तत् कथं 'सयोगकर्म ज्ञानसाधनम्' इति भाषणमित्यत आह– **समस्ताङ्गेति** ॥ सङ्कल्पत्यागादि-लक्षणसकलाङ्गकलापोपेतं निवृत्तं कर्म योगशब्दितं ज्ञानसाधनमित्यर्थ इति भावः । नन्विदमेकं वाक्यमिति कृतचोद्यं परिहर्तुमुक्तमनुवदति– **यद्यपीत्यादि** ॥ **अर्थवशात्** प्रमेयभेदवशात् ॥ **द्वे वेदितव्य इति** ॥ कर्मजं फलं त्यक्त्वा बुद्धियुक्ता भूत्वा मनीषिणो भवन्तीत्येकं वाक्यम् । तथा च मनीषया जन्मबन्धादिदोषविनिर्मुक्तास्सन्तः अनामयं पदं गच्छन्तीत्यपरमिति द्वे वाक्ये

प्रमेयभेदाद् भेत्तव्ये इत्यर्थः । योगो न सम्यग् विवृत इति चोद्यं भाष्यभावोक्त्या परिहरति– **योगश्चेति** ॥ तथा च 'कर्मजं फलं त्यक्त्वा' इत्यस्य फलसङ्कल्पत्यागपूर्वकं भगवदाराधनात्मकं कर्म कृत्वेत्यर्थोऽवगन्तव्य इति भावः ॥

**गीताक्षरार्थस्तु– पूर्वोक्तो ज्ञानसाधनभूतो योगो ज्ञानफलं मोक्षश्च विव्रियते कर्मजमिति** ॥ कर्मजं फलं त्यक्त्वेत्यनेन कर्मजन्यफलानभिसन्धानेन कर्मस्वातन्त्र्याभिमानत्यागपूर्वकं भगवदर्पणबुद्ध्या भगवदाराधनात्मकं कर्मानुष्ठायेति लभ्यते । बुद्धियुक्ताः शास्त्रजनितसम्यग्ज्ञानसम्पन्नाः मनीषिणः प्रशंसायां मत्वर्थीयेनिविधानादपरोक्षज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः संसारबन्धादतितरां मुक्ताः अनामयं दोषरहितं पदं मोक्षं गच्छन्तीत्यखिलक्लेशनिवृत्तिविशिष्टपरमानन्दानुभवरूपो मोक्ष इति ज्ञानफलं मोक्षस्वरूपं च विवृतं भवति । फलानभिसन्धानकर्मकर्तृकत्वस्वातन्त्र्याभिमानत्यागपूर्वकभगवदाराधनात्मकं कर्मोभयविधज्ञानसाधनम् । ज्ञानं च मोक्षसाधनमिति भाव इति ॥ ५१ ॥

**भावदीपिका (श्री.टि.)– अनेनेति** ॥ बुद्धियुक्ता इत्यस्य परोक्षज्ञानिवाचकत्वकथनेनेर्थः ॥ **सूचितमिति** ॥ अन्यथा पुनरुक्तिप्रसङ्गादिति भावः । ननु मनीषिण इत्येतदेव परोक्षज्ञानिपरतया कुतो न व्याख्यातं भाष्यकारेणेत्यत आह– **प्रशंसायामिति** ॥ मनीषाऽस्यास्तीति मत्वर्थे इनिप्रत्ययस्य विहितत्वात्, मत्वर्थीयस्येनेः प्रशंसायामपि विधानमस्ति ।

> भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
> संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

इत्युक्तत्वादत्रापरोक्षज्ञानित्वरूपप्रशंसाया अभिप्रेतत्वात् तत्रार्थे मत्वार्थीयेनिप्रत्यये मनीषिपदमेवापरोक्षज्ञानिपरमिति भावः ॥ **वाक्यार्थद्वयस्येति** ॥ तस्य ज्ञानस्योपायमाह ज्ञानमुपायो यस्य मोक्षस्य तमाहेत्युक्तवाक्यार्थद्वयस्येत्यर्थः ॥ **मोक्षस्वरूपेति** ॥ जन्मबन्धेत्युत्तरार्धेनेत्यर्थः । एवं च कथं वाक्यार्थद्वयस्य विवरणमित्याक्षेपः, एकसत्त्वे द्वयमिह नास्तीति प्रतीत्यनुसारेणेति ज्ञातव्यम् ॥ **अङ्गिन इति** ॥ फलत्यागाख्याङ्गस्यैवाभिधानादित्यर्थः । अङ्गाभिधानेऽपि न्यूनताऽस्तीत्याह– **अङ्गानां चेति** ॥ **सङ्कल्पत्यागः** एतदर्थमिदं करिष्य इति सङ्कल्पः । तत्त्याग इत्यर्थः । एतत्सङ्कल्पत्यागे हेतुत्वेन फलकामनात्याग समायातीति तयोर्भेद

श्लोकः ५१

इति ज्ञेयम्। अनभिधानादिति वर्तते ॥ द्वे वेदितव्य इति ॥ कर्मजं फलं त्यक्त्वा सङ्कल्पत्यागादिपूर्वकं कर्म च कृत्वा बुद्धियुक्ता भूत्वा मनीषिणो भवन्तीत्येकं वाक्यम्। तथाच मनीषया जन्मबन्धविनिर्मुक्ता सन्तोऽनामयं पदं गच्छन्तीत्यपरं वाक्यमित्यर्थः। ननु भाष्ये योगशब्देन समस्ताङ्गग्रहणेऽपि गीतायां कर्मजं फलं त्यक्त्वा इति फलकामनात्याग-रूपस्यैवाङ्गस्याभिधानेन सङ्कल्पत्यागादी-नामङ्गानामनभिधानान्न्यूनता स्यादेवेत्यत आह– **योगश्चेति** ॥ सङ्कल्पत्यागाद्यङ्गसमुदाय इत्यर्थः। लक्षितः गीतायामिति शेषः ॥ ५१ ॥

**भावप्रकाशः (कृ.टि.)– प्रशंसायामिति** ॥ यद्यपि तदस्यास्तीत्यस्मिन्नस्तीति वाऽर्थे मतुबादयो विधीयन्ते। तथैवानुवृत्तेः। तथाऽपि 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' इति वार्तिके अस्तिविवक्षायां ये विहितास्ते भूमादिषु विषयेषु भवन्तीत्युक्तेरेवमुक्तम्। तथा च प्रकृते मत्वर्थीयस्येनिप्रत्ययस्य प्रशंसायां विधानात् प्रशस्ता मनीषाऽस्तीति लभ्यते। अपरोक्षज्ञानमेव च तथा। अतो युक्तमुक्तमिति बोध्यम्। **वाक्यार्थद्वयस्येति** ॥ सङ्गं त्यक्त्वेति वाक्यस्यार्थ एकः बुद्धियुक्त इत्यादिवाक्यार्थश्च द्वितीय इत्येवं वाक्यार्थद्वयस्येत्यर्थः। **मोक्षस्वरूपविवरणेपीति** ॥ बुद्धियुक्तो जहातीत्याद्युक्ता-शेषानिष्टनिवृत्तिजन्मबन्धविनिर्मुक्ता इत्यनूद्यानामयं पदं गच्छन्तीत्यधिकस्योक्तेरिति भावः। अत्रानामयशब्देन ब्रह्मग्रहणात् ज्ञानिनो ब्रह्मप्राप्तिरुक्तेति टीकावाक्यं स्थित्वास्यामन्तकाले-पीत्येतदवतारिकागतं सङ्गच्छत इत्यवधेयम्। **द्वे वेदितव्ये इति** ॥ कर्मजं फलं त्यक्त्वा बुद्धियुक्ता भूत्वा मनीषिणो भवन्तीत्येकम्। तया च मनीषया जन्मबन्धविनिर्मुक्ताः सन्तः पदं गच्छन्तीत्यपरमित्येवं द्वे वाक्ये वेदितव्य इत्यर्थः। **योगश्चेति** ॥ तथा च कर्मजं फलं त्यक्त्वेत्यस्य सङ्कल्पत्यागादिपूर्वकं कर्म कृत्वेत्यर्थोऽवगन्तव्य इति भावः ॥ ५१ ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

## भाष्यम्

**कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्याह– यदेति ॥**

**भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतार्य व्याचष्टे– कियदिति ॥**

**भावप्रकाशिका (न.टी.)– कियत्पर्यन्तमवश्यकर्तव्यानि कर्माण्युक्तलक्षणानि मुमुक्षुणा ? अन्यथा मुक्त्यभावः। कस्मादुपरितनकर्माभावेऽपि नामुक्तिः ? किन्तु तत्रानन्दवृद्ध्या एव शुभकर्माणीत्यभिप्रायाकाङ्क्षोत्तरत्वेनोत्तरश्लोकमवतारयति–कियदिति ॥**

**प्रमेयदीपिका (ज.टी.)– 'यदा ते' इति श्लोके योगसम्बन्धि न किमप्युच्यते? इत्यतस्तत्सङ्गतिमाह– कियदिति ॥ एवं फलकामनादिवर्जितानीश्वराराधनरूपाणि । इत्याकाङ्क्षायाम् आहेत्यर्थः ॥ नन्वियमाकाङ्क्षैवानुपपन्ना । योगो हि ज्ञानसाधनतयोपदिष्टः । साधनं च साध्यप्राप्तिपर्यन्तमनुष्ठेयमिति प्रसिद्धमेव । नियतपूर्वक्षणवृत्ति कारणमिति हि तल्लक्षणम् । उच्यते । योगो हि न साक्षाद् ज्ञानसाधनम् । किन्तु श्रवणादिकमेव । प्रमितेः प्रमाणफलत्वात् । योगस्त्वदृष्टद्वारा सत्वशुद्धिमुत्पाद्य श्रवणादीनामुपकरोति । उपकारस्य च द्वयी गतिर्दृष्टा । अतो युक्तैवेयमाकाङ्क्षेति । तथाऽपि 'जिज्ञासुना' इति वक्तव्यम् । सत्यम् । मोक्षसाधनज्ञानार्थिनेत्येतावतोऽर्थस्य ग्रहणाय 'मुमुक्षुणा' इत्युक्तम् ॥**

**भावबोधः (र.टि.)– द्वयी गतिरिति ॥** अवहननादिवत् स्वरूपोपकारित्वं, प्रयाजादिवत् फलोपकारित्वमित्येवंरूपेत्यर्थः ॥

**भावदीपः (रा.टि.)**– 'एवम्' इत्यनुवादः,'फल' इत्यादिव्याख्या ॥ **योगो हीति** ॥ निवृत्तं कर्मेत्यर्थः ॥ **उपदिष्ट इति** ॥ 'बुद्धिर्योगे त्विमां शृणु' (२.३९) इत्यादिग्रन्थेनेति भावः। कार्यप्राप्त्युत्तरकालमपि कुतो नानुष्ठेयं कारणम्? इत्यतः कारणव्याघातादिति भावेनाऽह– **नियतपूर्वेति ॥ द्वयी गतिरिति ॥** पूर्वमनुष्ठानं पश्चादनुष्ठानं चेति द्वयी गतिरित्यर्थः । ज्योतिष्टोमादिप्रधानयागोपकारकाणां मध्ये केषाञ्चित् पूर्वमनुष्ठानस्य केषाञ्चित् पश्चाद् अनुष्ठानस्य दृष्टेरिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– भाष्ये 'एवम्' इत्यस्य एवंविधानीत्यर्थ इति भावेन व्याचष्टे– **एवं फलकामनेत्यादि** ॥ 'इति' इत्यनूद्योत्तरशङ्कोत्थापनाय तत्र शेषमाह– **इत्याकाङ्क्षायामिति** ॥ आकाङ्क्षानुपपत्तिमुपपादयति– **योगो हीति** ॥ **तल्लक्षणं** साधनलक्षणम् । **योगः** साङ्गं कर्म । श्रवणादिकमेव साक्षाज्ज्ञानसाधनमिति वर्तते । योगस्यासाधनत्वं श्रवणादेस्साधनत्वं

चोपपादयति– **प्रमितेरिति** ।। तर्हि योगविधानं व्यर्थमित्यत आह– **योगस्त्विति** ।। **सत्त्वशुद्धिम्** अन्तःकरणनैर्मल्यम् । 'श्रवणादीनाम्' इत्यत्र श्रवणमागमः, मननं युक्त्यनुसन्धानरूपानुमानम्, निदिध्यासनं प्रत्यक्षमिति त्रयाणां प्रमाणानामित्यर्थः । **द्वयी गतिरिति** ।। ज्योतिष्टोमादिप्रधानयागोपकारककलापमध्ये कस्यचित् पूर्वमनुष्ठेयत्वं कस्यचित् पश्चादनुष्ठेयत्वमित्येवंरूपा द्वयी गतिर्दृश्यते । योगश्च श्रवणाद्युपकारकः, कां गतिमवलम्बतामिति विचाराभियुक्तस्य युक्तैव कियत्पर्यन्तमित्याकाङ्क्षेत्यर्थः । ननु योगो ज्ञानकामुकेन ज्ञानसाधनोपकारकतयाऽनुष्ठेयश्चेज्जिज्ञासुनेति भाषणीयमिति शङ्कते– **तथाऽपीति** ।। उक्ताकाङ्क्षायाः कियदिति भाष्यतात्पर्योक्त्या समर्थनेऽपीत्यर्थः ।

**भावदीपिका (श्री.टि.)**– कुत इत्यत आह– **नियतेति** ।। **तल्लक्षणम्** साधनलक्षणम् । साध्यप्राप्तिपर्यन्तं साधनस्यानुष्ठेयत्वे, तदव्यवहितपूर्वक्षणवृत्ति कारणत्वं युक्तं स्यात् । तदभावे च साधनत्वमेव न स्यादिति भावः । **योगः** साङ्गकर्म । तर्हि ज्ञानसाधनं किमिति पृच्छति– **किन्त्विति** ।। **उत्तरयति– श्रवणादिकमेवेति** ।। कुतः श्रवणादिकमेव ज्ञानसाधनमित्यत आह– **प्रमितेरिति** ।। अपरोक्षज्ञानरूपायाः प्रमितेः श्रवणादिरूपप्रमाणफलत्वमेव न्याय्यम् । नतु योगफलत्वम् । निवृत्तकर्मादिरूपस्य योगस्य प्रमाणत्वाभावादिति भावः । तत्र श्रवणमागमः, मननमनुमानं, निदिध्यासनं प्रत्यक्षमिति विवेकः । तर्हि योगो व्यर्थ इत्यत आह– **योगस्त्विति** ।। **सत्त्वशुद्धिम्** अन्तःकरणशुद्धिम् । **श्रवणादीनाम्** श्रवणमनननिदिध्यासनसाक्षात्कारसम्प्रज्ञातसमाध्यसम्प्रज्ञातसमाधीनामित्यर्थः । ननु तथाऽपीयमाकाङ्क्षा कथमनुपपन्ना जातेत्यत आह– **उपकारस्य चेति** ।। **द्वयीगतिः** सकृदनुष्ठेयत्वमसकृदनुष्ठेयत्वञ्चेति द्वयी गतिः । अङ्गभूतमुपकारकं द्विविधम्– स्वरूपोकारं फलोपकारकञ्चेति । 'व्रीहीनवहन्यात्' इत्यादाववहननादीनां यागस्वरूपनिष्पादकत्वेनाङ्गत्वम् । प्रधानयागेन फले जननीये, समिधो यजति, इडो यजति, बर्हिर्यजति, तनूनपातं यजति, स्वाहाकारं यजति, इत्युक्तानां पञ्चप्रयाजानां पञ्चापूर्वजननद्वारा फलोपकारकत्वेनाङ्गत्वम् । एवं प्रकृते योगस्यावहननादिवदसकृदनुष्ठेयस्य श्रवणादिस्वरूपोपकारकाङ्गत्वम्, उत सकृदनुष्ठितप्रयाजादेरिव फलोपकारकाङ्गत्वञ्चेति शङ्काभिप्रायः । योगस्य श्रवणादिस्वरूपोपकारकत्वेनासकृदनुष्ठेयत्वमिति उत्तरं भवति । 'मोहकलिलम्' इति वचनादिति ज्ञेयम् ।। **जिज्ञासुनेति** ।। ज्ञानेच्छुना

क्रियमाणयोगस्य श्रवणादिजन्यज्ञानस्वरूपोपकारकाङ्गत्वं वा फलोपकारकाङ्गत्वं वेत्याशयेन जिज्ञासुनेति वक्तव्यं न मुमुक्षुणेत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– सत्त्वशुद्धिमिति ॥** अन्तःकरणशुद्धिमित्यर्थः । **द्वयी गतिरिति ॥** अवघातादिवदसकृदनुष्ठेयत्वं प्रोक्षणादिवत् सकृदनुष्ठेयत्वं चेत्येवं रूपेत्यर्थः ॥

## भाष्यम्

**निर्वेदं नितरां लाभम् । प्रयोगात्– 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'** (बृ.उ.५.५.१) **इत्यादि । न हि तत्र वैराग्यमुपपद्यते । तथा सति 'पाण्डित्यात्' इति स्यात् ॥**

भावप्रदीपिका (प.टी.)– 'निर्वेद'शब्दस्य वैराग्ये रूढत्वेऽप्यत्र लाभार्थता प्रयोगबलादित्याह– **निर्वेदमिति ॥**

भावप्रकाशिका (न.टी.)– निर्वेदशब्दश्च छान्दसत्त्वान्नुमागमाभावेऽपि लाभमाचष्टे प्रयोगबलादिति भावेनाह– **निर्वेदमिति ॥** भगवदापरोक्ष्यमेव नितरां लाभ इत्युत्तरश्लोके स्पष्टयिष्यति । 'निर्विद्य' इत्यत्रापि वैराग्यार्थता किं न स्यात् ? इत्यत आह– **न हीति ॥**

प्रमेयदीपिका (ज.टी.)– 'निर्वेदं वैराग्यम्' इत्यन्यथाप्रतीतिनिरासायाऽह– **निर्वेदमिति ॥** ननु निष्पूर्वो विदेर्वैराग्ये रूढः । तत्कुतो लाभार्थता? इत्यत आह– **प्रयोगादिति ॥** अस्यामपि श्रुतौ वैराग्यार्थता किं न स्यात्? इत्यत आह– **नहीति ॥** कुतो नोपपद्यते? इत्यत आह– **तथा सतीति ॥** 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति कात्यायनवचनात् पाण्डित्यस्य विरामार्थधातुयोगेन अपादानत्वप्राप्तावपादाने च पञ्चमी स्यान्न द्वितीयेत्यर्थः ॥ इदमत्राभिप्रेतम् । निरुपसर्गः सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थं व्यवस्थापयति । निर्विद्यत इति कर्तरि प्रयोगदर्शनात् । लाभार्थस्य विदेरर्थं तु विशिनष्ट्येव केवलम् । निर्विन्दति निर्विन्दते इति वैराग्ये तत्प्रयोगदर्शनादिति । अथवाऽस्तु सर्वत्र निरो धात्वर्थबाधकत्वम् । विशेषकत्वमपि क्वचित् किं न स्यात्? 'व्याददाति' इत्यादावुभयदर्शनादिति ॥

श्लोकः ५२

**भावबोधः (र.टि.)– निर्विद्यत इति** ॥ सत्तार्थकस्यैव विदेः श्यन्विकरणत्वादिति भावः । **कर्तरीति** ॥ विरक्तिकर्तरीत्यर्थः । लाभार्थकस्य विदेः भावे तादृशरूपसम्भवेऽपि कर्तरि तादृशरूपासम्भवादिति भावः । **निर्विन्दति निर्विन्दते इति** ॥ लाभार्थकस्य विदेः शब्-विकरणत्वम्, शेमुचादीनामिति नुमागमश्चेति भावः । **प्रयोगादर्शनादिति** ॥ विरक्तिकर्तरीत्यर्थः ॥

**भावदीपः (रा.टि.)– कात्यायनेति** ॥ वार्त्तिककारवचनादित्यर्थः । प्रथमस्यान्त्यपादे 'ध्रुवमपायेऽपादानम्' (पा.सू.१.४.२४) इत्यत्र वार्त्तिकमेतत् । पापाज्जुगुप्सते । पापाद् विरमते । धर्मात् प्रमाद्यति इत्यादाविव पञ्चमी स्यान्न द्वितीयाविभक्तिरित्यर्थः ॥ लाभार्थस्य कर्मणि प्रयोग इति भ्रमनिरासायाऽह– इति **कर्तरि प्रयोगदर्शनादिति** ॥ लाभार्थस्योभयपदित्वादाह– **निर्विन्दत इति** ॥ निर्विन्दते निर्विदन्ति इति इत्यादावुभयेति दानार्थबाधेन मुखविदारणार्थ-कत्वविशेषेण आदानार्थत्वस्य च दर्शनादित्यर्थः ॥

**वाक्यार्थप्रदीपः (पां.टि.)– जुगुप्सेति** ॥ 'जुगुप्सा' निन्दा, 'विरामो' विरतिः, 'प्रमादो'ऽनवधानता– एतदर्थानां धातूनां योगेऽवधिभूतमपादानसंज्ञं भवतीत्यर्थः ॥ **कात्यायनवचनादिति** ॥ ध्रुवमपायेऽपादानमिति (पा.१.४.२४) सूत्र इति शेषः । न चोप-सङ्ख्यानमनर्थकमिति वाच्यम् । असति तस्मिन् न धर्माज्जिगुप्सत इत्यादौ पञ्चम्यनुपपत्ति-प्रसङ्गेनार्थवत्वात् । न चापादनत्वादेव तत्र पञ्चमी स्यादिति वाच्यम् । ध्रुवमपायेऽपादानमिति अपायावधेरेवापादानत्वविधानात् संश्लेषपूर्वकविभागरूपविश्लेषस्यैवापायत्वरूपतया प्रकृते च तदभावेनाधर्मादीनामपायावधित्वाभावेनापादानत्वासम्भवेन तत्र पञ्चम्यसम्भवात् । नच बुद्धि-परिकल्पितस्यापायावधित्वस्यात्रापि सम्भवाद्युक्तमपादानत्वमिति वाच्यम् । तस्य गौणत्वेन मुख्यासम्भव एवाश्रयणीयत्वेन मुख्यसम्भवे तदाश्रयणस्यान्याय्यत्वात् । अत एव भीत्रार्था-नामित्यादेरारम्भ इति सार्थकमेतदुपसङ्ख्यानम् ॥

यद्यपि भाष्यकृता साधकतममिति तमग्रहणात् कारकप्रकरणे गौणमुख्यविवक्षायाः स्थित-त्वात् 'अधर्मात् जुगुप्सत' इत्यादौ जुगुप्सापूर्विकायां निवृत्तौ जुगुप्सादीनां वृत्तिरिति स्थिते 'य एव मनुष्यः प्रेक्षापूर्वकारी भवति स एवं पश्यति दुःखहेतुरधर्मो नैनं करिष्यामीति स्वबुद्ध्या न प्राप्नोति प्राप्य च ततो निवर्तते । य एष नास्तिकपुरुषः स पश्यति नानेन धर्मेण किञ्चिदाप्यते

नैनं करिष्यामीति स तं बुद्ध्या न प्राप्नोति प्राप्य च ततो निवर्तत इत्यस्त्यपायः । तथा च ध्रुवमपायेऽपादानमित्यनेनैवापादानत्वसिद्धेर्नानेन वार्तिकेन प्रयोजनमिति प्रत्याख्यानम् । सम्मतं चैतत् प्रत्याख्यानं ग्रन्थकारस्य । बाह्यावयवगौरवादित्येतद्व्याख्यानरूपसुधायां तथैवोक्तत्वात् । तथाऽपि अभ्युपगम्य वार्तिकारम्भं गौणापायत्वमनाश्रित्यास्योपन्यासः कृतः । सम्मतश्चायमर्थो ग्रन्थकारस्यापि । अत एव कात्यायनवचनादित्युक्तम् । अन्यथोपसङ्ख्यानादित्येवावक्ष्यदिति द्रष्टव्यम् ।

तर्हि ब्राह्मणो निर्वेदमायादित्यादौ वैराग्ये प्रयोगो न स्यादित्यतस्तमुपपादयितु-मभिप्रायमाह– **इदमत्रेति** ।। अत्रैवोपष्टम्भकमाह– **निर्विद्यत इतीति** ।। निरुपसृष्टात् विद् सत्तायामित्यस्मात् लडात्मनेपदलकारे सति तस्य 'टित आत्मने पदानामि'ति टेरेत्वे 'दिवादिभ्यः श्यनिति' श्यनि निर्विद्यत इति रूपसिद्धिः । **कर्तरीति** ।। विरक्तिकर्तरीत्यर्थः । लाभार्थकस्य विदेः भावकर्मणोरिति भावकर्मविवक्षयां लडात्मनेपदि सार्वधातुके यगिति यकि भावे कर्मणि च तादृशरूपसम्भवेऽपि कर्तरि तादृशरूपासम्भवादिति भावः ।। **प्रयोगदर्शना-दिति** ।। **निर्विन्दति निर्विन्दत इतीति** ।। लाभार्थस्यैव विदेः शब्विकरणत्वम् । शे मुचादीनामिति (७.१.५९) नुमागमश्चेति भावः । **प्रयोगादर्शनादिति** । विरक्तिकर्तरीत्यर्थः । **व्याददातीत्यादाविति** । आदिपदेन आदत्त इत्यस्य परिग्रहः । मुखं व्याददातीत्यादावाङः मुखविकासार्थत्वेन धात्वर्थनिरोधकत्वेऽपि तस्यैव आदत्त इत्यादौ धात्वर्थविशेषकत्वस्यापि दृष्टत्वादित्यर्थः ।।

**भावरत्नकोशः** (सु.टि.)– 'निर्वेदं वैराग्यम्' इति शङ्करभाष्यमनुवदति **निर्वेदमिति** ।। 'निष्पूर्वः' इत्यत्र 'इगुपधस्य चाप्रत्ययस्य' इति षत्वम् । 'निःपूर्व' इत्यपि क्वचित् पाठः । 'ब्राह्मणो निर्वेदमायात्', 'निर्वेदाद् गहनं वनम्' इत्यादिप्रयोगप्राचुर्यादुक्तम्– **रूढ इति** ।। कात्यायनवचने विरामो विरतिर्वैराग्यमित्यर्थः ।।

ननु प्रचुरप्रयोगः पूर्वपक्षिहेतुः 'प्रयोगात्' इति भाष्योक्तहेतुना कथं दूषणीय इत्यतस्तदभि-प्रायमाह– **इदमत्रेति** ।। विद सत्तायामिति धातुं पक्षीकृत्य तस्योक्तहेतुना वैराग्यार्थत्वं सिषाधयिषितम्, 'विद्लृ लाभ' इति लाभार्थकं वेति विकल्प्य, नाद्यः, सिद्धसाधनादित्याह– **सत्तार्थस्येति** ।। **कर्तरि** निर्वेदकर्तरि । कर्मणि यगन्तत्वभ्रमनिरासायेदं स्वरूपकथनम् ।

श्लोकः ५२

द्वितीयपक्षे हेतोरसिद्धिमाह– **तत्प्रयोगादर्शनादिति** ।। **निरुपसृष्टस्य** विन्दतेर्वैराग्ये न प्रयोगो दृश्यते । प्रत्युत विशिष्टलाभे प्रयोगाः अनेके दृश्यन्त इति भावेन स्वरितेत्त्वादुभयपदी विन्दतिरुदाहृतः । सर्वत्र निर्वहति निश्चलति निर्णयति निश्चिनोतीत्यादौ प्रायेण धात्वर्थबाधकत्वं निरुपसर्गस्यास्त्वित्यर्थः । बाधकत्वे विशेषकत्वे चोदाहरणमाह– **व्याददातीति** ।। 'आङो दोऽनास्यविहरणे' इति सूत्रे विद्यामादत्ते । आस्यविदारणे तु आस्यं व्याददातीत्युदाहृतम् । तत्राङुपसर्गो ददातिधात्वर्थस्य दानस्य बाधको दृष्टः । आदत्ते गृह्णातीत्यर्थावभासात् । स एव व्याददातीत्यत्र विशब्देन ददात्यर्थे आस्यविदारणे बोधिते तत्र विशेषको दृष्टः । मुखविदारणं सम्यक् करोतीत्यर्थप्रतीतेः । निर्वेदमित्यत्र निरो धात्वर्थविशेषकत्वे युक्तं 'नितरां लाभम्' इति भाषणमिति भावः । 'इत्यादौ' इत्यादिशब्देन निर्मिमीते निर्मयत इत्याद्युदाहरणं ग्राह्यम् । तत्र माङ्मान इति धात्वर्थस्य मानस्य बाधको निरुपसर्गः तं करणार्थं व्यवस्थापयति । सोऽयं निरेव मेङ् प्रणिदान इति धात्वर्थस्य प्रणिदानशब्दितविनिमयस्य विशेषकः । निर्मिमीत इति करणस्येव निर्मयत इति प्रणिदानस्यैव विशेषप्रतीतेरिति । गीतायां निर्वेदशब्दस्य **प्रयोगात्** 'पाण्डित्यं निर्विद्य' इति श्रौतप्रयोगात् । **अनेन** 'ज्ञानिनाम्' इति निर्वेदगन्तॄणां ज्ञानित्व-भाषणेन । **आदिपदेन** भगवन्महिमादीत्यादिपदेन । **तदुपयुक्तं** भगवन्महिमश्रवणोपयुक्तं भागवतमहिमश्रवणानुग्रहादिकं गृह्यत इत्यर्थः । **न भवति** विरक्तिः ।

**भावदीपिका (श्री.टि.)**– ननु पाण्डित्यादिति स्यादिति कथं पञ्चम्यापादनम् । 'अपादाने पञ्चमी' इति अपादाने पञ्चमीविधानात् । 'ध्रुवमपायेऽपादानम्' अपाये विश्लेषे सति यद् ध्रुवं तदपादानसञ्ज्ञं भवति । शृङ्गाच्छरो जायत इति दर्शनात् । नह्येतादृशमपादानत्वं पाण्डित्ये सम्भवतीत्यत आह– **जुगुप्सेत्यादि** ।। विरामो वैराग्यम् । जुगुप्साद्यर्थानां धातूनां योगेऽस्य शब्दस्य तत्राप्यपादानत्वमुपसङ्ख्येयमित्यर्थः । पापाज्जुगुप्सते । दुःखाद् विरमति । अधीतात् प्रमाद्यति । इत्याद्युदाहरणम् । **पाण्डित्यस्य** पाण्डित्यशब्दस्य ।। **विरामार्थकधातुयोगेनेति** ।। वैराग्यार्थविदेः । गीतायां विदधातोर्वैराग्यार्थत्वं कस्मान्न स्यात्? बाधकाभावादित्यत आह– **इदमत्राभिप्रेतमिति** ।। **निरुपसर्गः** निर् इत्ययमुपसर्गः । तं विदिधातुम् । कुत इत्यत आह– **निर्विद्यत इति** ।। **कर्तरीति** ।। विरक्तिकर्तरीत्यर्थः । इदमुपलक्षणम् । प्रत्युत सत्ताकर्तरि विद्यमाने वस्तुनि निर्विद्यत इति प्रयोगादर्शनादित्यपि ग्राह्यम् । विद्यते विद सत्तायामिति

ह्युक्तम् । विद सत्तायामस्मात् लट्प्रत्यये आत्मनेपदिनि लस्य तकारे सत्तार्थकविदेः श्यन्विकरणत्वेन यकारं विना शकारनकारयोर्लोपे 'टित आत्मनेपदानां टेरेः', लट्लिट्लोट्लृट् एते टितः । एतदात्मनेपदानां सम्बन्धिन टेरेत्त्वं स्यादिति टिभूतस्य तकारस्थस्याकारस्य एत्त्वे विद्यत इति विरक्तिकर्तरि प्रयोगो भवति । 'धात्वर्थं बाधते कश्चित्' इत्युक्तेरित्याशयः ॥ **लाभार्थस्येति** ॥ विदेरित्यर्थः । **विशिनष्टि** निरुपसर्ग इति वर्तते । 'कश्चित् तमनुवर्तते' इति वचनादिति भावः । **वैराग्ये** वैराग्यवति विरक्तिकर्तरीति यावत् ॥ **तत्प्रयोगेति** ॥ निःपूर्वक-विदधातुप्रयोगेत्यर्थः ।

इदमुपलक्षणम् । प्रत्युत लाभार्थ एव 'राज्ञो निर्विन्दति द्रव्यम्' इत्यादौ प्रयोगदर्शनादिति च ग्राह्यम् । विद् लाभेऽस्माल्लटि परस्मैपदिनि तस्य तिबादेशे लाभार्थस्य विदेरनुपसर्गात्, 'लिम्पविन्द' इत्यादिना शब्विकरणत्वात् शकारलोपे, अकारे उर्वरिते सति विदति इति जाते 'शे मुचादीनाम्' मुचलुपविदसिचकृतखिदेत्यादीनां शे परे नुमागमः स्यात् । मुञ्चति । लुम्पति । विन्दति । सिञ्चति । कृन्तति । खिन्दति । तथाचात्र शे परे विदो नुमागमे विन्द् अति विन्दतीति लटः परस्मैपदिनि रूपम् । आत्मनेपदिनि तु विन्द अस्माल्लटि तस्य तादेशे शब्विकरणत्वान्नुमागमे टेरेत्वे विन्दते इति भवति । तस्यैव धात्वर्थस्य विशेषकनिरुपसर्गसम्बन्धे सति निर्विन्दति निर्विन्दत इति भवति । नितरां लब्धो भवतीत्यर्थः । 'लाभे विन्दति विन्दते' इति ह्युक्तम् ।

अत्रैकस्यैव निरो धात्वर्थबाधकत्वं तद्विशेषकत्वं च नियामकाभावेनायुक्तमित्यालोच्याऽह– **अथ वाऽस्तु वेति** ॥ **सर्वत्रेति** ॥ तथाच निरुपसर्ग सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थं व्यवस्थापयतीति नियमो माऽस्त्वित्यर्थः ॥ **क्वचिदिति** ॥ प्रयोगविशेष इत्यर्थः । तथाच श्रुतौ गीतायां च धात्वर्थविशेषकत्वमेवास्त्वित्याशयः । नन्वेकस्यैवोपसर्गस्य धात्वर्थबाधकत्वं तद्विशेषकत्वं चादर्शनाद्युक्तमित्यत आह– **व्याददातीत्यादाविति** ॥ 'काले प्राप्तायातिथये व्याददाति धनं प्रभुः' इति प्रयोगे वि– आङ् इत्युपसर्गयोर्दानरूपधात्वर्थविशेषकत्वं दृष्टम्, विशेषेण सम्यग् ददातीत्यर्थात् । 'व्याददाति मुखं कृष्णो मात्रे लोकान् प्रदर्शितुम्' इति प्रयोगे विआङ् इत्युपसर्गयोर्दानरूपधात्वर्थबाधकत्वं दृष्टम् । मुखप्रसृतिं करोतीत्यर्थात् । तथाच दर्शन-बलादत्राप्यविरोध इत्याशयः । अत एवोक्तम् 'धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते' इति ॥

श्लोकः ५२

**भावप्रकाशः (कृ.टि.)**– लाभार्थत्वेऽनुमानविरोधं शङ्कते– **ननु निःपूर्व इति** ॥ अत्रायं प्रयोगः निर्वेदशब्दान्तर्गतो विदिधातुः वैराग्यार्थः निरित्युपसर्गविशिष्टत्वादिति ॥ नचाप्रयोजकता। 'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते। प्रहाराहारसंहारविहारपरिहारवदिति' मते उपसर्गमात्रस्य धात्वर्थबाधकत्वे सत्यर्थान्तरव्यवस्थापकतया तद्विशेषस्य निरःसुतरां तदुपपत्तेः। न चैवमपि वैराग्यार्थव्यवस्थापकत्वं कुत इति वाच्यम्। 'ब्राह्मणो निर्वेदमायात्' 'निर्वेदाद्रहनं वनमि'त्यादिप्रयोगात्। **जुगुप्सेति** ॥ जुगुप्सा निन्दा, विरामो विरतिः वैराग्यमिति यावत्, प्रमादोऽनवधानता,एतदर्थानां धातूनां योगे जुगुप्सादयो यतो भवन्ति तस्यावधेरपादानत्वं वक्तव्यमित्यर्थः। ननु प्रयोगादित्यनेनपूर्वपक्ष्युक्तानुमाननिरासः कथमित्यत आह– **इदमत्रेति** ॥ विदिधातवो बहवः। तत्र किं ज्ञानार्थकविदधातुं पक्षीकृत्य साध्यते विचारणार्थकं वा सत्तार्थकं वा लाभार्थकं वा विदिधातुसामान्यं वेति विकल्प्याद्यपक्षत्रये दोषमाह– **निरुपसर्ग इति** ॥ अत्र सत्तार्थस्येत्यादिना तृतीयपक्षे सिद्धसाधनतोक्ता। एवकारेणाद्यपक्षद्वये बाधः सूचित इति बोध्यं। ननु निर्विद्यत इति लाभार्थस्य विदेः कर्मणि रूपं किं न स्यादित्यत उक्तम्– **कर्तरीति** ॥ विरक्तिकर्तरीत्यर्थः। युज्यते सत्तार्थस्य निर्विद्यत इति रूपम्। दिवादिगणस्थात् तस्माच्छयन्प्रत्ययप्राप्तेः। लाभार्थस्य तुदादिगणस्थत्वेन शप्रत्यये कर्तरि निर्विन्दतीत्यादिरूपं स्यान्नतु निर्विद्यत इतीति भावः। उपलक्षणमेतत्। निर्विण्णइति प्रयोगदर्शनादित्यपि ग्राह्यम्। निर्विण्ण इत्यपि सत्तार्थस्यैव रूपम्। विद्येतेर्विन् न इष्यत इतिवचनात्। चतुर्थं निराकरोति– **लाभार्थस्येति** ॥ तथा च चतुर्थपक्ष बाध इति भावः। नन्वस्तु निरुपसर्गस्य धात्वर्थाविशेषकत्वम्। ब्राह्मणः पाण्डित्यं निर्विद्येत्यादिप्रयोगात्। धात्वर्थबाधकत्वाभावे तु नियामकं नास्ति। ततो विशिनष्टयेवेत्यवधारणविरेध इत्यत आह– **निर्विन्दतीति** ॥ विदिसामान्यं पक्षीकृत्य साध्यत इति पञ्चमपक्षस्तु एतेनैव निरस्तः। अंशे बाधात्। अंशे सिद्धसाधनमिति बोध्यम्।

ननु निरुपसर्गो लाभार्थस्यापि विदेरर्थबाधक एव नतु विशेषकः अन्यथोपसर्गेणेत्यादि-प्रागुक्तविरोधात्। न च पाण्डित्यं निर्विद्येति प्रयोगविरोधः। तत्रापि निरुपसर्गो ज्ञानाद्यर्थ-बाधनेन लाभार्थव्यवसुथापक इत्यभ्युपगमे बाधकाभावात्। प्रयोगादर्शनस्य पुरुषदोषत्वेन धात्वर्थबाधकत्वाभावनिर्णायकत्वायोगाच्च। तथा च चतुर्थपक्षे नानुमानस्य दूषणमस्तीत्यस्वर-

सादुक्तानुमानस्याप्रयोजकतामाह– **अथवेति** ॥ **व्याददातीत्यादाविति** ॥ आदिपदेन विद्यामादत्त इत्यादेः सङ्ग्रहः । इदमिहाभिसंहितम् । आङुपसर्गो विद्यामादत्त इत्यत्र ददातेरर्थं दानं बाधित्वा तम् आदानार्थं व्यवस्थापयति । स एव व्याददातीत्यत्र वीत्युपसर्गेण मुख-विवृत्तिरूपददात्यर्थे व्यवस्थापिते तस्य विशेषको दृष्टः । न च व्याददातीत्यत्राङुपसर्ग एव ददातेरर्थं दानं बाधित्वा तं मुखविवृत्तिपरं व्यवस्थापयति । वीत्युपसर्गस्तु तद्विशेषक इति किं न स्यादिति वाच्यम् । तत्र वीत्युपसर्गस्यैव प्रथमप्राप्तत्वेन मुखविवृति व्यवस्थापकत्वे वक्तव्ये परिशेषेणाङो विशेषकत्वस्यैव वक्तव्यत्वात् । अन्यथा विनिगमकाभावेनैकस्य बाधकत्वमपरस्य विशेषकत्वमिति व्यवस्था न स्यात्। विद्यमादत्त इत्यादिप्रयोगबाहुल्येनाङुपसर्गस्यादानार्थ-व्यवस्थापकत्वमेवेति निश्चयेन मुखविवृतिव्यवस्थापकत्वायोगाच्च ॥

## भाष्यम्

**नच ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति ॥**

**'आत्मारामा हि मुनयो निर्ग्रान्थ्या अप्युरुक्रमे ।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः'** (भाग.१.७.१०)

**इति वचनात् । अनुष्ठानाच्च शुकादीनाम् ॥**

भावप्रदीपिका (प.टी.)- श्रुतावपि 'निर्वेद'शब्दो वैराग्यार्थः किं न स्यात् ? इत्यत आह– **न चेति** ॥ अस्तु लाभार्थता निर्वेदशब्दस्यात्र वैराग्यार्थता किं न स्यात् ? इत्यत आह– **न च इति** ॥ किं बाधकं ज्ञानिनां भगवन्महिमादौ विरक्त्यभ्युपगमे ? इत्याशङ्क्य, किं तेषां श्रवणाद्यभावादेतत् कल्प्यते ? फलाभावाद्वा ? इति विकल्प्य, आद्यं दूषयति– **आत्मारामा इति** ॥

भावप्रकाशिका (न.टी.)– न च प्रयोगमात्रबलान्निर्वेदशब्दस्य लाभार्थता, किन्त्वि-तरस्यानुपपन्नत्वात्, वचनविरोधाच्चेत्याह– **न चेति** ॥ श्रवणाद्यनुष्ठानदर्शनाच्च शुकादीना-मपरोक्षदृशां न श्रुतादौ विरक्तिरित्याह– **अनुष्ठानाच्चेति** ।

श्लोकः ५२

**प्रमेयदीपिका (ज.टी.)– न केवलं गीतायां प्रयोगाल्लाभार्थता । किन्तु वैराग्यार्थानुपपत्तेश्चेत्याह– न चेति ।। अनेनान्तःकरणस्य मोहकलिलातिक्रमो नाम ज्ञानप्राप्तिरिति सूचितं भवति । आदिपदेन तदुपयुक्तं गृह्यते । कुतो न भवति? इत्यत आह– आत्मेति ।। भक्तिं श्रवणादिलक्षणां 'कस्य वा बृहतीमेतामात्मारामः समभ्यसत्' इत्यस्योत्तरत्वात् ।। अनुष्ठानाच्च 'श्रवणादेः' इति शेषः ।।**

**भावबोधः (र.टि.)– अनेनेति ।।** ज्ञानिनामिति निर्वेदगन्तॄणां ज्ञानित्ववचनेनेत्यर्थः । **तदुपयुक्तमिति ।।** भगवन्महिमज्ञानोपयुक्तं भागवतधर्मतन्महिमादिकमित्यर्थः ।। नन्वात्मारामेत्यत्र भगवन्महिमादिश्रवणस्य कर्तव्यत्वानुक्तेः कथमिदं तत्र प्रमाणमित्यत आह– **भक्तिं श्रवणादिलक्षणामिति ।।** अत्र श्रवणादीनां भक्तिज्ञापकतया भक्तित्वं द्रष्टव्यम् । यद्वक्ष्यति नवमे 'श्रवणकीर्तनादिभक्तिलिङ्गरहित' इति । किमत्र ज्ञापकमित्यतः अन्तरङ्गं तदाह– **कस्य वेति ।।**

**भावदीपः (रा.टि.)–** न केवलं प्रयोगाद् गीतायां लाभार्थतेति योजना ।। **अनेनेति ।।** 'ज्ञानिनाम्' इत्यादि कथनेनेत्यर्थः ।। **तदुपयुक्तमिति ।।** भगवन्महिमाश्रवणोपयुक्तगुरूपसत्तिसद्धर्मानुष्ठानादिकमित्यर्थः । भगवन्महिमाश्रवणे विरक्तिर्नेत्यर्थे प्रमाणत्वघटनायाऽह– **भक्तिं श्रवणादिलक्षणामिति ।।** महिमाकथनादिरादिपदार्थः । कुत एवं व्याख्या? इत्यत आह– **कस्येति ।।** प्रथमस्कन्धे सप्तमेऽध्याये आत्मारामः शुकाचार्यः (बृहतीं) महतीम् एतां भागवतसंहितां कस्य वा हेतोः समभ्यसदिति शौनकप्रश्नोत्तरत्वेन सूतपौराणिकैः 'आत्मारामा हि' इत्यादेरुक्तत्वाद् भक्तिपदस्यायमर्थोऽवगम्यत इति भावः ।।

**भावरत्नकोशः (सु.टि.)–** ननु 'आत्मारामाः' इत्यत्र मुनयः श्रवणादिकं कुर्वन्तीत्यनुक्तेः कथमिदं ज्ञानिनां श्रवणादौ विरागो न भवतीत्यत्र प्रमाणमित्यत आह– **भक्तिं श्रवणादिलक्षणामिति ।।** श्रवणकीर्तनस्मरणादेर्भक्तिज्ञापकत्वेनोपचारेण भक्तिशब्दार्थत्वाद् विवक्षितार्थे प्रमाणत्वमिति भावः । तथा च वक्ष्यति नवमे श्रवणादेर्भक्तिलक्षणत्वं 'श्रवणकीर्तनादिभक्तिलिङ्गरहितः' इति ।। भक्तिशब्देन श्रवणादिकं ग्राह्यमित्यत्रान्तरङ्गं ज्ञापकमाह– **कस्य वेति ।।** 'स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः । कस्य वा बृहतीमेतामात्मारामस्समभ्यसत्' इत्यत्र सः शुकाचार्यः मनसो विषयेभ्यो निवृत्तौ निरतः सर्वत्र चतुर्विधेषु पुरुषार्थेषु कस्य वा

पुरुषार्थस्य हेतोः बृहतीं महतीम् एतां भागवतीं संहिताम् आत्मनि परमात्मनि आ सम्यग् रमत इत्यात्मारामस्समभ्यसत् । अभिपूर्वादसु क्षेपण इत्यस्माल्लङ् । 'आडजादीनाम्' इत्याडागमः । श्यन्विकरणश्च बहुलं छन्दसीति न कृतः । उक्तधातोरेव लुङि आडागमथुगागमानाश्रयणे वा असदिति रूपम् । अस गतिदीप्त्यादानेष्विति धातोर्वाऽऽडागमो लुङि नाश्रितः । समादत्त श्रवणकीर्तनादिनाऽऽवर्तितवानिति शौनकप्रश्ने समभ्यासशब्देन 'यस्यां वै श्रूयमाणायाम्' इति प्रकृतश्रवणस्य 'शुकमध्यापयामास' इति कीर्तनस्य, तदनुषक्तस्मरणादेश्च प्राप्तत्वेन तदुत्तररूपे 'आत्मारामा हि' इत्यत्रापि भक्तिशब्देन श्रवणादिग्रहणं प्रश्नप्रतिवचनावैरुप्याय न्याय्यमिति हृदयम् । आत्मारामा मुनयस्तदितरे देवादयश्च निर्ग्रान्थाः निरुपादेयाः प्रयोजनोद्देशशून्या अपि उरुक्रमे भगवति अहैतुकीं निर्निमित्तां भक्तिमुक्तलक्षणां कुर्वन्ति । यतः इत्थम्भूतगुणः निरपेक्ष-भक्तमनोवशीकरणक्षमगुणशालीति भाष्योदाहृतभागवतश्लोकार्थो नातिगूढ इति नोक्तः । भागवतटीकायां तु 'आत्मारामश्च स्वरूपसुखे रममाणा अपि अत एव निर्ग्रान्था मुनयः उत्तमाधिकारिणो मुक्ताः उरुक्रमे अहैतुकीं प्रयोजनविधुराम् आनन्दरूपां भक्तिं कुर्वते । किं पुनर्बहुजन्मापेक्षितपरतत्त्वभक्त्यादिसाधनातिशयेन मुक्तावानन्दातिशयमाकाङ्क्षमाणाः शुकादय-स्तत्र भक्तिं कुर्वन्तीति वक्तव्यम् । कुतः ? इत्थम्भूतगुणो हरिः निरपेक्षमुक्तवशीकरणक्षमगुणः । किमुतामुक्तमनोवशीकरणक्षमगुण इति वाच्यमति भावः' इति व्याख्यातम् । भाष्यमनूद्य तत्र शेषमाह– **अनुष्ठानादिति** ॥ आचारदर्शनमप्यत्र प्रमाणमिति चशब्द इति भावः ।

**भावदीपिका (श्री.टि.)**– 'तस्मात्' इति श्रुतौ निर्वेदशब्दस्य लाभार्थे प्रयोगाद् गीतायां लाभार्थता इत्येव केवलं न, किन्त्विति योज्यम् ॥ **अनेनेति** ॥ निर्वेदगन्तॄणां ज्ञानित्व-वचनेनेत्यर्थः । **तदुपयुक्तम्** भगवन्महिमोपयुक्ततद्भक्तमहिमादिकम् । 'चरितं वैष्णवानां च विष्णूद्रेकाय कथ्यते' इति वचनादिति भावः । 'आत्माराम' इत्यत्र भगवन्महिमादिश्रवणस्य कर्तव्यत्वानुक्ते कथमिदं तत्र प्रमाणमित्यत आह– **भक्तिमिति** ॥ 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इति वचनादादिपदेन कीर्तनादिकं ग्राह्यम् । अत्र श्रवणादीनां भक्तिज्ञापकतयैव भक्तित्वं ज्ञातव्यम् । 'श्रवण-कीर्तनादिभक्तिलिङ्गरहित' इति हि नवमे वक्ष्यति । किमत्र ज्ञापकमित्यतः अन्तरङ्गं ज्ञापकं तावदाह– **कस्य वेति** ॥ कस्य प्रयोजनस्यार्थे । **एताम्** भागवतसंहिताम् । **आत्मारामः** शुकः ।

श्लोकः ५२

**समभ्यसत्** वारं वारं श्रवणाद्यभ्यासं कृतवान् । इत्यस्य शौनकादिप्रश्नस्य। **उत्तरत्वात्** उत्तरत्वेन 'आत्मारामा' इति श्लोकस्य प्रवृत्तत्वादित्यर्थः । एवं चात्र भक्तिशब्देन श्रवणाद्यग्रहणे प्रश्नोत्तरयोर्वैय्यधिकरण्यापत्तेः । किमर्थं श्रवणाद्यभ्यासं कृतवानिति पृष्टे भक्तिं कुर्वन्ति, इत्युत्तरस्य व्यधिकरणत्वादतोऽत्र भक्तिः श्रवणादिरूपैव विवक्षितेति भावः ॥

मूले– **निर्ग्रान्था इति ॥** अन्यत्र कुत्राप्याग्रहशून्या अपि उरुक्रमे तद्विषये अत्याग्रहेण भक्तिं कुर्वन्ति । कुत इत्यत उक्तम्– **इत्थम्भूतगुणो हरिरिति ॥** एतादृशानामपि स्वश्रवणादि-विषयकबुद्धिप्रेरकत्वरूपगुणवानित्यर्थः ॥

**भावप्रकाशः (कृ.टि.)– गीतायां प्रयोगादिति ॥** गीतायां लाभार्थतेत्यत्र हेतुः प्रयोगा-दिति याज्यम् । **अनेनेति ॥** ज्ञानिनामिति निर्वेदगन्तॄणां ज्ञानित्ववचनेनेत्यर्थः । अन्यथा ज्ञानित्वमप्रकृतं न वक्तव्यमिति भावः । **तदुपयुक्तमिति ॥** भगवन्महिमश्रवणोपयुक्तं भागवत-धर्मतन्महिमादिकमित्यर्थः । न चात्मारामा इत्यत्र भगवच्छ्रवणादिकं कुर्वन्तीत्यनुक्तेः कथमिदं ज्ञानिनां श्रवणादौ विरक्तिर्न भवतीत्यत्र प्रमाणमित्यत आह– **भक्तिम् श्रवणादिलक्षणामिति ॥** श्रवणादीनां भक्तिज्ञापकतयोपचारेण भक्तित्वोक्तिरियम् । तेन भक्तेः स्नेहरूपत्वात् कथं श्रवणादिरूपत्वमिति निरस्तम् । अत एव श्रवणकीर्तनादिभक्तिलिङ्गेत्यग्रिमग्रन्थाविरोधोऽपीति ध्येयम् । भक्तिशब्देन श्रवणादेः ग्रहणेऽन्तरङ्गज्ञापकमाह– **कस्य वेति ॥** कस्य हेतोर्महतीमेतां भागवतसंहितां समभ्यसत् तद्विषयकश्रवणादिकं कृतवानित्यर्थकतत्प्रश्नवाक्यं प्रत्यात्मारमा इत्यस्य प्रत्युत्तरवाक्यत्वादित्यर्थः ॥

## भाष्यम्

**नच तेषां फलं सुखं नास्ति । तस्यैव महत्सुखत्वात्तेषाम् ॥**

भावप्रदीपिका (प.टी.)– द्वितीयं दूषयति– **न चेति ॥**

भावप्रकाशिका (न.टी.)- ननु तेषां मुक्तेः सिद्धत्वात् किमर्थं श्रवणादिः ? इत्या-शङ्क्य, न तावत् फलाभावात् तत्राप्रवृत्तिः । तस्यैव परमसुखरूपत्वादित्येतत् सप्रमाणक-माह– **न चेति ॥**

**प्रमेयदीपिका (ज.टी.)– ननु शुकादीनां श्रवणाद्यनुष्ठानेऽपि फलं नास्ति । तत्फलस्य ज्ञानस्य प्राप्तत्वात् । फलाभावानुसन्धानमेवात्र वैराग्यशब्देनाभिप्रेतम् । यथाऽऽह मायावादी– 'तदा श्रोतव्यं च श्रुतं च निष्फलं प्रतिपद्यत इत्यभिप्रायः' इति । अनुष्ठानं तु लोकसङ्ग्रहार्थं संस्काराद्वा इत्यत आह– न चेति ।। कुतो न? इत्यत आह– तस्यैवेति ।। तस्यैव श्रवणादेरेव ।।**

**स्थान्यादेशोक्तिव्यत्ययेन द्वन्द्वेऽल्पाच्तरस्य परनिपातेन च 'आन् महतः समानाधिकरणजातीययोः' (पा.सू.६.३.४६) इत्यस्य विधेरनित्यत्वज्ञापनात्, 'महत्तत्वाद् विकुर्वाणात्' (भाग.३.६.७) इत्यादिप्रयोगदर्शनाच्च 'महत्सुखत्वात्' इति युक्तम् । तथाऽपि श्रवणादिकमेव कथं सुखम्? उत्तरक्षण एव महासुखोदयादैक्योपचार इत्यदोषः । तिष्ठतु तावत्कालान्तरभाविफलमिति एवशब्दः । नन्वस्मदादीनां श्रवणोत्तरक्षणे सुखं नोत्पद्यत इत्यत आह– तेषामिति ।। रसिकानामित्यर्थः । नहि पितृजीवनादिवार्ताश्रवणेनान्येषामिव पुत्रस्यापि न सुखेनोत्पत्तव्यमिति ।।**

**भावबोधः (र.टि.)– स्थान्यादेशोक्तिव्यत्ययेनेति ।।** 'इको यणचि' इत्यादिवत् महत आदित्येवं कर्तव्ये निर्देशापेक्षया व्यत्ययेनेत्यर्थः । **अल्पाच्तरस्येति ।।** जातीयसमानाधिकरणयोरिति वक्तव्ये अल्पाच्तरजातीयपदस्य परनिपातेनेत्यर्थः । **प्रयोगेति ।।** महति महत्तत्त्वपदस्य योगरूढिसद्भावात् योगमभिप्रेत्यात्रैवमुक्तम् । सुधायां तु रूढिमङ्गीकृत्य महत्तत्वमिति द्रव्यविशेषस्येयं संज्ञा । तेन 'आन्महत' इत्येव विधिर्न भवतीत्युक्तम् । अतो न विरोध इति ज्ञातव्यम् । शुकाद्यनुष्ठितश्रवणादिना मोक्षे सुखाभिव्यक्तेः कथं तस्यैवेत्युच्यते इत्यत आह– **तिष्ठत्विति ।।**

**भावदीपः (रा.टि.)–** ननु 'आन्महतः समानाधिकरणजातीययोः' (पा.सू.६.३.४६) इति षष्ठतृतीयपादे 'समानाधिकरणे उत्तरपदे जातीयप्रत्यये च परतः महत आकारादेशो भवति' इत्युक्तेः 'महासुखत्वात्' इति भाव्यमित्यत आह– **स्थान्यादेशेति ।।** 'महत आत्' इति निर्देष्टव्ये स्थान्यादेशव्यत्यासेन तथा जातीयसमानाधिकरणयोरिति निर्देष्टव्यम् । 'अल्पाच्तरं पूर्वम्' (पा.सू.२.२.३४) इत्यल्पाच्तरत्वस्य पूर्वनिपात उक्तः । तथा अत्रापि 'सामानाधिकरणजातीययोः' इति निर्देशाच्च आत्वविधेरनित्यत्वज्ञापनात् । तृतीयस्कन्धे षष्ठेऽध्याये

'महत्तत्वाद्विकुर्वाणादहं तत्त्वमजायत' (३.६.७) इति प्रयोगाच्चेत्यर्थः । वैशेषिकनये सुधायां महत्तत्वपदस्य सञ्ज्ञात्वात् 'बहुलं कृति' इति वाक्याद् आत्वं तत्र नेत्युक्तम् ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– नन्वान्महतः समानाधिकरणजातीययोः (पा.सू.६.३.४६) इति समानाधिकरणजातीययोः परतः महतः आकारान्तादेशविधानात् समानाधिकरणे सुखशब्दे परतः महतः आकारान्तादेशो महासुखत्वादिति भवितव्यम् । महत्सुखत्वादिति तु कथमित्यतोऽस्य विधेरनित्यत्वात् नानुपपत्तिरिति वक्तुं तदनित्यत्वं ज्ञापकोक्त्या व्युत्पादयति– **स्थान्यादेशोक्तिव्यत्ययेनेति** ॥

इको यण् इत्यादिवत् महतः आदिति निर्देशे कर्तव्यनिर्देशापेक्षया आन्महत इति विपरीतस्थान्यादेशनिर्देशकरणेनेत्यर्थः ॥

**द्वन्द्वे अल्पाच्तरस्य परनिपातेनेति** । अल्पाच्तरमिति द्वन्द्वे अल्पाच्तरस्य पूर्वनिपातविधायकशास्त्रानुसारेण शिवकेशवावित्यादिवत् जातीयसमानाधिकरणयोरिति अल्पाच्तरजातीयशब्दस्य पूर्वनिपाते कर्तव्ये समानाधिकरणजातीययोरिति तत्परनिपातेन चेत्यर्थः । उक्तिव्यत्ययस्य तत्रतत्र प्रयोजनकथनेन सप्रयोजनत्वनियमात् तस्यापि व्यत्ययस्य सप्रयोजनत्वावश्यम्भावात् प्रयोजनान्तरस्य चानुपलम्भेनाभावात् एतद्विध्यनित्यत्वज्ञापकत्वमेव तस्याश्रयणीयम् । नच स्थान्यादेशोक्तिव्यत्ययस्य प्रयोजनतया एतद्विध्यनित्यत्वज्ञापकतायाः सम्भवदुक्तिकत्वेऽपि न परनिपातस्य तत्कल्पकत्वम् । अल्पाच्तरशास्त्रस्यानित्यत्वज्ञापकत्वेन सावकाशत्वादिति वाच्यम् । समुद्राभ्राद्धः (पा.४.४.११८) इत्यादि व्यत्ययेनैव तदनित्यत्वसिद्ध्या तज्ज्ञापकत्वे पुनर्वैयर्थ्यापत्त्या असिद्धैतद्विध्यनित्यत्वज्ञापकतायाः एवावश्याश्रयणीयत्वादित्यशयात् ।

**भावरत्नकोशः (सु.टि.)**– **तत्फलस्य** अनुष्ठानफलस्य । ननु शुकादिकर्तृकश्रवणाद्यनुष्ठानस्य फलाभावोपपादनं ज्ञानिनां श्रवणादौ विरक्तिर्नास्तीत्यत्र कथमुपयोगीत्यत आह– **फलाभावानुसन्धानमेवेति** ॥ **मायावादी** शङ्करः । स्वभाष्ये **प्रतिपद्यते** अनुसन्धत्ते । एवमनुसन्दधानः किमिति तदनुतिष्ठेदित्यत आह– **अनुष्ठानं त्विति** ॥ संस्काराद् भावनाख्यादनादिवासनाबलात् । पूर्ववाक्ये प्रकृतस्य श्रवणादेस्तच्छब्देन परामर्शो न तु पूर्ववाक्यप्रकृतफलस्यैवेत्याह– **तस्यैव श्रवणादेरेवेति** ॥

ननु 'महत्सुखत्वात्' इति कथम् ? 'आन्महतःसमानाधिकरणजातीययोः' इति महच्छब्दस्य समानाधिकरणसमासे आत्त्वे सति महाव्रतमित्यादिवन्महासुखत्वादिति वाच्यत्वादित्यत आह– **स्थान्यादेशोक्तिव्यत्ययेनेति** ॥ 'इको यणचि', 'स्तोः श्चुना श्चुः' इत्यादिवन्महत आदिति निर्देशे कर्तव्ये 'आन्महतः' इति स्थान्यादेशोक्तिव्यत्ययः कृतः । तेनाऽऽत्त्वविधेरनित्यत्वं ज्ञायते। उक्तव्यत्ययस्यानन्यथासिद्धस्य किञ्चिज्ज्ञापकत्वौचित्यादिति भावः । ननु यदि स्थान्यादेशयोः पौर्वापर्यमवश्यं कर्तव्यमिति नियमः स्यात् तदा तदुक्तिव्यत्यय उक्तरीत्या ज्ञापकः स्यात् । न चैवम् ॥ 'मो राजि समः क्वौ' इत्यादौ तददर्शनात् । किञ्च स्थान्यादेशयोः पौर्वापर्यनियमे उद्देश्यविधेययोः पौर्वापर्यनियम एव मूलत्वेन वाच्यः । न च असौ अस्ति । 'वृद्धिरादैच्', 'आर्धधातुकं शेषः', 'कृदतिङ्' इत्यादौ व्यभिचारादित्यस्वरसादाह– **अल्पाच्तरस्येति** ॥ समानाधिकरणश्च जातीयश्चेति द्वन्द्वे समानाधिकरणशब्दापेक्षया जातीयशब्दस्याल्पाच्तरत्वात् 'अल्पाच्तरं पूर्वम्' इति पूर्वनिपाते कर्तव्येऽपि यत् परनिपातेनोच्चारणं तेन वाऽऽऽत्त्वविधिरनित्य इति ज्ञायत इत्यर्थः ॥

ननु 'लक्षणहेत्वोः क्रियायाः', 'समुद्राभ्राद्धः' इत्यादिनिर्देशाज्ज्ञापकात् पूर्वनिपातप्रकरणमनित्यमिति शाब्दिकसमयः । तदयं च निर्देशः पूर्वनिपातशास्त्रमनित्यमित्येव ज्ञापयेन्न पुनरात्त्वविधेरनित्यत्वम् । अन्यथा 'समुद्राभ्राद्धः' इत्यादिना विहितस्तद्धितोऽप्यनित्यः स्यात् । अतः सामर्थ्याभावान्न ज्ञापकतेत्यरुचेराह– **इत्यादिप्रयोगदर्शनाच्चेति** ॥ आदिपदेन 'परममहत्परिमाणम्' इत्यादितान्त्रिकप्रयोगसङ्ग्रहः । अयं भावः । 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति सूत्रेण प्रापितपूर्वनिपातस्याप्येकशब्दस्य 'दोषैकदृक् पुरोभागी', 'ह्लादैकमयी' इत्यादिप्रयोगदर्शनेन सङ्ख्यार्थकस्यैवोक्तशास्त्रतः पूर्वनिपातो न केवलार्थस्येत्यर्थविशेषाभिधायकस्यैव पूर्वनिपातो यथा नियमितः तथाऽत्रापि महच्छब्दस्य 'पृषन्महद्बृहज्जगच्छतृवच्च' इत्युणादावतिप्रत्ययान्ततया व्युत्पादितस्य 'विशालं पृथुलं महत्' इति कोशादिषु वैपुल्यवाचितया प्रसिद्धस्यैव ग्रहणेन 'सान्तमहतः', 'सन्महत्परमोत्तमोत्कृष्टाः','आन्महतः' इत्यादौ तस्यैव ग्रहणम्। न तु मह पूजायामिति विवरणान्महतेश्शतरि निष्पन्नं यन्महत्पदं तस्य। तच्च 'विशेषणं बहुलम्' इति समस्यते । न तु 'सन्महत्' इति सूत्रेण । आत्त्वप्रसङ्गात्। न च शत्रन्तस्याप्यात्त्वं किं न स्यादिति वाच्यम् । उक्तशत्रन्तस्य लोकविश्रुतत्वाभावात् । लोकप्रसिद्धेष्वेव शब्देषु शास्त्रप्रवृत्तेः । न पुनस्तदकरणशब्देष्वपि । यथोक्तं वैयाकरणैः

श्लोकः ५२

'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु' इति ॥

अत एव 'यत्तदेतेभ्यः परिमाणे वतुप्', 'यद्वृत्तान्नित्यम्' इत्यादौ 'त्यजियजितनिभ्यो डिः' इत्युणादौ यजिप्रकृतितया निष्पन्नस्यैव यच्छब्दस्य ग्रहणम् । न तु इणः शतरि निष्पन्नस्य यच्छब्दस्येति वैयाकरणानां पन्थाः । अतः महत् महीयमानं सुखं महत्सुखमिति सुभाषितमिति। ननु महत्तत्त्वादिप्रयोगे वैशेषिकाधिकरणसुधारीत्या 'बहुलं तणि' इति शास्त्रान्महत्तत्त्वशब्दस्य द्रव्यविशेषसञ्ज्ञात्वादात्त्वं न भवतीति वक्तुं शक्यम् । 'महत्सुखत्वात्' इत्यत्रासञ्ज्ञात्वाद् भवितव्यमेवाऽत्त्वेनेति चेन्न । महच्च तत् तत्त्वं च महत्तत्त्वमिति विगृह्य समासे उक्तरीतेरेवानुसर्तव्यत्वात्। सुधायां तु केवलरूढत्वाश्रवणेन समाधानान्तरमुक्तमिति न तद्विसंवाद इति स्वामिनः । केचित्तु, 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति शास्त्रेणाग्रेशब्दस्यैदन्तत्वे निपातितेऽपि यथा 'यूथं तदग्रसरगर्वितकृष्णसारम्' इत्यादिप्रयोगात् क्वचित् तदभावः एवमुक्तप्रयोगादत्राऽत्त्वाभाव इति भाव इत्याहुः ।

भावदीपिकायां तु 'किं बाधकं ज्ञानिनां भगवन्महिमादौ विरक्त्यभ्युपगमे' इत्याशङ्क्य 'किं तेषां श्रवणादिसद्भावे प्रमाणाभावादेतत् कल्प्यते फलाभावाद्वेति विकल्प्य आद्यं दूषयति– **आत्मारामा इति** ॥ द्वितीयं दूषयति– **नचेति** ॥ फलान्तराभावेऽपि श्रवणादिकमेव तान् प्रति महासुखरूपमिति भावः' इति व्याख्यातम् ॥

**तथाऽपि** शब्दानुपपत्तिपरिहारेऽपि । **उत्तरक्षण एव** श्रवणाद्युत्तरक्षण एव । **ऐक्योपचारः** कार्यकारणयोः । कार्यशब्देन कारणस्य व्यवहारः । शुकाद्यनुष्ठितश्रवणादेर्मोक्षे सुखातिशयहेतुत्वात् कथं तस्यैवेत्युच्यत इत्यत एवकारभावमाह– **तिष्ठत्विति** ॥ कालान्तरभाविफलं मोक्षगतसुखातिशयः। कथमनेनोक्तशङ्कानिरास इत्यतः तदर्थमाह– **रसिकानामिति** ॥ तदनुभवारूढं कर्तुमाह– **न हीति** ॥ ऐक्योपचारोऽप्यनेन व्याख्यातः ॥

**भावदीपिका** (श्री.टि.)– तत्फलस्य श्रवणाद्यनुष्ठानफलस्य । तर्हि प्रकृते किमायातमित्यत आह– **फलाभावेति** ॥ तदा निर्वेदं वैराग्यं गन्ताऽसि श्रुतं श्रोतव्यं च सर्वं निष्फलमित्यनुसन्धानवान् भविष्यसीत्यर्थः । श्रुतादीनां निष्फलत्वानुसन्धाने शुकादीनां तदनुष्ठानं व्यर्थं

स्यादित्यत आह– **अनुष्ठानं त्विति ॥ संस्काराद् वेति ॥** ज्ञानात् पूर्वं फलानुसन्धानेनानुष्ठानं कृतमभूत् । तत्संस्कारादिदानीमप्यनुतिष्ठन्तीत्यर्थः ॥

ननु 'आन्महतः समानाधिकरणजातीययोः' महत आकारोऽन्तादेशः स्यात्, समानाधिकरणे एकविभक्त्यन्तपदे, जातीये च पदे परे । 'प्रकारवचने जातीय' इति प्रकारवाची जातीयशब्दः । महाकाशम् । महाजातीयः । महतो वस्तुनः प्रकार इत्यर्थः । एवं च कर्मधारयविग्रहे समानाधिकरणे सुखपदे परे महत आकारान्तादेशे सति महच्च तत् सुखं च महासुखम् । तस्य भावस्तत्त्वम् । तस्मात् महासुखत्वादिति वाच्यम् । 'महत्सुखत्वात्' इति तु कथमित्यत आह– **स्थान्यादेशोक्तिव्यत्ययेनेत्यादि ॥**

अयमर्थः । आन्महत इत्ययं विधिरनित्यः । किं तत्र ज्ञापकमिति चेत् , स्वयमेव सूत्रकृताऽस्य विधेरनित्यत्वं ज्ञापितमित्युच्यते स्थानीति ॥ 'इको यणचि' इत्यादाविवाऽदौ महत इति स्थानिनं निर्दिश्य पश्चादादिति आदेशो निर्देष्टव्यः । नचैवमुक्तम् । किं नाम ? 'आन्महत' इति व्यत्यासेनैव। तेन ज्ञायते एतत्सूत्रोक्तो विधिर्न नित्य इति । किञ्च समानाधिकरणं च जातीयं चेति हि द्वन्द्वसमासः। द्वन्द्वे चाल्पाच्तरं पूर्वं प्रयोज्यम् । वैश्यब्राह्मणाविति प्रयोगात् । एवं प्रकृतेऽपि जातीयपदस्य समानाधिकरणपदापेक्षयाऽल्पाच्तरत्वात् जातीयसमानाधिकरणयोरिति वाच्येऽल्पाच्तरस्य जातीयपदस्य परनिपातकरणेन च 'आन्महत' इति विधिरनित्य इति स्वयमेव ज्ञापितं सूत्रकृता ॥

किञ्च, समानाधिकरणे तत्त्वपदे परेऽपि आकारान्तादेशमनङ्गीकृत्य 'महत्तत्त्वाद् विकुर्वाणात्' इति भागवते प्रयोगात्, प्रकृतेऽप्याकारोऽन्तादेशो न जात इति 'महत्सुखत्वात्' इति युक्तमिति । ननु अन्त्यसमाधाने सुधाविरोधः । तत्र च 'महत्तत्त्वगुणत' इत्यनुव्याख्यानव्याख्यानसमये महत्तत्त्वमिति द्रव्यविशेषस्य सञ्ज्ञा । तेन 'आन्महत' इति एष विधिर्न भवतीत्युक्तत्वात् । अत्र च महच्च तत् तत्त्वं चेति विग्रहमङ्गीकृत्य समानाधिकरणपदे परेऽप्याकारान्तादेशाभावोक्तेरिति चेत्, सत्यम् । महत्तत्त्वशब्दस्य योगरूढत्वाद् रूढिमङ्गीकृत्य सुधा प्रवृत्ता । योगमङ्गीकृत्येदं समाधानं प्रवृत्तमिति न कोऽपि विरोध इति सम्प्रदायविदः । महासुखजनकत्वेनाभेदोपचारादित्यभिप्रेत्योत्तरमाह– **उत्तरक्षण एवेति ॥**

श्लोकः ५२

नन्‌ शुकाद्यनुष्ठितश्रवणादिना मोक्षे सुखाभिव्यक्तेः कथं तस्यैवेत्युच्यत इत्यत आह– **तिष्ठत्विति ।। कालान्तरभावि फलम्** मोक्षगतसुखरूपम्‌ ।

**भावप्रकाशः (कृ.टि.)**– नन्वस्तु शुकादीनां श्रवणाद्यनुष्ठानस्य फलाभावः । तथाऽपि ज्ञानिनां श्रवणादौ विरक्तिः न भवतीत्यत्र किमायातमित्यत आह– **फलाभावानुसन्धानमेवेति ।।** ननु महत्सुखत्वादित्ययुक्तम्‌ । आन्महतः समानाधिकरणजातीययोरिति महच्छब्दस्यात्वे महासुखत्वादिति वक्तव्यत्वादित्यत आह– **स्थान्यादेशोक्तिव्यत्ययेनेति ।।** इको यणित्यादिवन्महत आदिति निर्देशे कर्तव्ये आन्महत इति स्थान्यादेशोक्तिपौर्वापर्यव्यत्ययेनास्य विधेः क्वचिदप्रवृत्तिर्ज्ञायत इति भावः । ननु स्थान्यादेशोक्तिपौर्वापर्यनियमो यदि स्यात्तदा तदुक्तिव्यत्यय उक्तरीत्याऽनित्यत्वज्ञापकः स्यात्‌ । नचैवम्‌ । मोराजिसमः । ईदग्रेरित्यादौ व्यभिचारात्‌ । किञ्च स्थान्यादेशयोः पौर्वापर्यनियमे उद्देश्यविधेययोः पौर्वापर्यनियम एव मूलत्वेन वाच्यः । नचासावप्यस्ति । 'वृद्धिरादैच्‌' । 'आर्धधातुकं शेषः' । 'कृदतिङि'त्यादौ व्यभिचारादित्यस्वरसादाह– **अल्पाच्तरस्येति ।।** जातीयपदस्येत्यर्थः । 'अल्पाचूतरमि'ति सूत्रेण द्वन्द्वेऽल्पाच्तरस्य पूर्वनिपातो विहितः । तथाप्यत्र परप्रयोगो व्यर्थं सदिति न्यायेनात्वविधेरनित्यत्वं ज्ञापयतीति भावः । ननु लक्षणहेत्वोः 'समुद्राभ्राद्धः' इत्यादिनिर्देशात्‌ पूर्वनिपातप्रकरणमनित्यमिति शाब्दिकानां घण्टाघोषः । अतः परनिपातस्यानुपपन्नत्वाभावात्‌ नानित्यत्वज्ञापकतेत्यरुच्या आह– **इत्यादिप्रयोगदर्शनादिति ।।** आदिपदेन परममहत्परिमाणमित्यादेः ग्रहणम्‌ । यथा खलु 'पुरोग्रतोग्रेषु सर्ते' (पा.३.२.१८) इत्यत्राग्रेशब्दस्यैदन्त्वे निपातितेऽपि 'यूथं तदग्रसरगर्वितकृष्णसारमि'ति प्रयोगात्‌ (रघु. ९.५५) क्वचित्तदभावः । यथा वा अप्सुमनःसमासिकतावर्षाणां बहुत्वश्चेति पाणिनिना सिकताशब्दस्य नित्यबहुवचनान्तत्वोक्तावपि कैय्यटेनैका सिकतेत्याद्यपि शिष्टप्रयोगदर्शनात्‌ सिद्ध्यतीति प्रयोगबलात्‌ क्वचित्तदभाव उक्तस्तथात्राप्युपपत्तिरिति भावः । सुधायां तु प्रकारान्तरोक्तेः न तद्विरोधः । कथमनेनोक्तशङ्कानिरास इत्यत आह– **रसिकानामित्यर्थ इति ।।**

## भाष्यम्

**'या निर्वृतिस्तनुभृतां तव पादपद्म-**
**ध्यानाद्‌ भवज्जनकथाश्रवणेन वा स्यात्‌ ।**

**सा(ऽऽ)ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्**
**किम्वन्तकासिलुलितात् पततां विमानात्'** (भाग.४.१०.१०)

**इत्यादिवचनात् ।। तेषामप्युपासनादिफलस्य साधितत्वात् ।।**

भावप्रदीपिका (प.टी.)– न केवलं तेषां श्रवणाद्येव सुखं, किन्त्वस्ति मोक्षे सुखातिशय इत्याह– **तेषामपीति ।**

भावप्रकाशिका (न.टी.)– **ब्रह्मणि स्वमहिमनि इति** स्वरूपेणाविर्भूते मुक्त इत्यर्थः। न केवलं भगवच्छ्रवणादेरेव सुखरूपत्वाज्ज्ञानिनामपि तत्र प्रवृत्तिः । किन्तु तत्साध्यफलसद्भावाच्चेत्याह– **तेषामिति ।।** 'बुद्धियुक्तः'(२.५०) इति श्लोकव्याख्यानावसर इति शेषः ।

प्रमेयदीपिका (ज.टी.)– अस्तु सम्भावना । निश्चयस्तु कुत इत्यत आह– **येति ।।** भवतो भवज्जनानां च स्वमहिमनि आविर्भूतस्वरूपे । **आब्रह्मणि** अल्पमुक्तेऽपि । न केवलं तात्कालिकं सुखं तत्फलम् । किन्तु मुक्तावानन्दवृद्धिश्चेत्याह– **तेषामपीति ।।** ज्ञानिनामपि ।।

**भावबोधः (र.टि.)–** 'सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्' इत्यत्र 'आङ् प्रश्लेषं, स्वमहिमन्याब्रह्मण्यपि सा मा भूदित्यन्वयं, सप्तम्याः सम्बन्धषष्ठ्यर्थत्वं, स्वमहिमनीति पदस्य मुक्तज्ञापकत्वम्, आङो ध्यानादिसाधनाधिक्याभावादिनिबन्धनमुक्तिगतेषदर्थत्वं, ब्रह्मणीत्यस्य स्वयोग्यानन्दादिपूर्णमुक्तजीववाचित्वं माङ्योगेन लुङ्त्वमभिप्रेत्य प्रवृत्तम् । परब्रह्मस्थितस्यापि ध्यानादिकं विना न भवतीति भागवततात्पर्यवाक्यं मनसि निधायाह– **स्वमहिमन्याविर्भूतस्वरूपे ।। आब्रह्मणि अल्पमुक्तेऽपीति ।।** ततश्चापरोक्षज्ञानोत्तरध्यानादिपदोक्तश्रवणाद्यधिकसाधनं विना परब्रह्मस्थितस्यापि अल्पमुक्तस्येति यावदित्यर्थकेनानेन स्वमहिमन्याब्रह्मण्यपीति पदत्रयम् । न भवतीत्यनेन माभूदित्येतच्चोक्ततात्पर्यं भवति ।

ननु स्वरूपसुखाभिव्यक्तौ परब्रह्मप्राप्तिरेव निमित्तं, न ध्यानादिसाधनवतः कथमल्पमुक्तस्य बहुतरसुखाभावे ध्यानाद्यभावो निमित्तत्वेनोच्यते इत्यत उक्तम्, सुप्तौ दृष्टत्वादिति प्राज्ञेनात्मना

श्लोकः ५२

सम्परिष्वक्त इत्यादिप्रमाणसिद्धायाः ब्रह्मप्राप्तेः सुप्तौ सत्वेऽपि कियत एव स्वरूपसुखस्याविर्भावो न बहुतरस्य ध्यानाद्यभावादिति ध्यानाद्यभाव एव निमित्तम्, न ब्रह्मप्राप्तिरिति तात्पर्यार्थ इति भावः। अत एव मुक्तस्येत्येव वक्तव्ये सुप्त्यनुगमाय परब्रह्मस्थितस्येत्युक्तम्।

**भावदीपः (रा.टि.)**– 'आब्रह्मणि' इत्यत्राङ्प्रश्लेषं कृत्वा तस्येषदर्थत्वं चोपेत्य, अपिपदस्य भिन्नक्रमेणार्थमाह– **आब्रह्मण्यल्पमुक्तेऽपीति** ॥ जीवन्मुक्तेऽपीत्यर्थः। तत्र हेतुः **आविर्भूतस्वरूप इति** ॥ अपरोक्षिणोऽपि बहुतरस्वरूपाविर्भावस्य प्रागुक्तेः ॥ चतुर्थस्कन्धनवमाध्यायटीकायां तु 'परब्रह्मणि स्थितस्यापि ध्यानादिकं विना न भवति' (भा.ता.४.१०.१०) इति तात्पर्यानुरोधेन 'स्वमहिम्नि स्वाधारे ब्रह्मणि 'स्थितस्य' इति शेषः। ध्यानादिकं विना सा निर्वृतिर्न भवति इति अन्तकासिलुलिताद्भगवद्भ्रूविजृम्भणाख्यखड्गविलोडिताद् विमानात् स्वर्गात् पततां सा निर्वृतिः मा भूत् न भवतीति किम्' इति व्याख्यातम् ॥ 'अल्पमुक्ते' इत्यादि तु व्याख्यानान्तरम् ॥

'मा भूत्' इत्यत्र माङ्योगे सर्वलकारापवादतया 'माङि लुङ्' (पा.सू.३.३.१७५) इति लुङो विधानादत्र मा भूदित्यस्य न भवतीत्यर्थ उक्तः तात्पर्ये। 'परब्रह्मणीत्यादि तात्पर्योक्तेरभिप्रायवर्णनेन तदनुगुणमेवेदं व्याख्यानम्' इत्येके ॥

**भावरत्नकोशः (सु.टि.)**– साक्षात्कृतं भगवन्तं प्रति ध्रुवस्य वचनं 'या निर्वृतिः' इति। ननु 'हे नाथ या निर्वृतिः– यत् सुखम्, तनुभृतां– प्राप्ततनुभजनफलानां रसिकानां तव पादपद्मध्यानात्, भवज्जनकथाश्रवणेन वा स्यात् भवति। सा स्वमहिमनि ब्रह्मण्यपि नाभूत्– न भवति। अन्तकस्य मृत्योरसिना लुलितात्– लूनात् विमानात् पततां पतनयोग्यानां स्वर्गिणां न भवतीति किमु वाच्यम्' इति श्लोकः भगवन्महिमश्रवणात् सुखं भवतीत्यत्र कथं प्रमाणम् ? भगवद्भक्तकथाश्रवणात् सुखस्यैवात्र कथनात्। परे ब्रह्मण्यपि तत्सुखं नास्तीत्यसम्भवदुक्तिकत्वाच्चेत्यतोऽत्र भवदिति तन्त्रम्। आब्रह्मशब्देनाल्पमुक्त एवोच्यत इति भावेनाह– **भवतो भवदिति** ॥ स्वः स्वीयोऽनुभवयोग्यः स्वरूपानन्दलक्षणो महिमा यस्य तस्मिन्निति विग्रहमभिप्रेत्य फलितमाह– **स्वमहिमनीति**। ब्रह्मशब्दोऽप्यत एव तत्र युक्त इति सूचितम्। इदानीं संसारदशावच्छिन्नब्रह्मादिदेवताद्यपेक्षया नीचा अपि पूर्वकल्पे लिङ्गभङ्गेन सम्यगाविर्भूतस्वरूपाः स्वानन्दं भुञ्जाना जनाः सन्ति। तत्स्वरूपसुखापेक्षयोत्तमानां देवानां संसारे

भगवन्महिमश्रवणादिजन्यं सुखमेवाधिकम् । आविर्भूतस्वरूपत्वात् तेषामेवाधिक्यम् । अनाविर्भूतस्वरूपत्वान्महतामपि सुखमनधिकमिति न युक्तम् । न हि निर्णिक्तं कांस्यम-निर्णिक्तात् सुवर्णादधिकमिति सम्भवतीति भावः । नन्वेतच्छ्लोकतात्पर्ये 'परे ब्रह्मणि स्थितस्यापि ध्यानादिकं विना न भवति । सुप्तौ दृष्टत्वात्' इति ब्रह्मशब्दः परब्रह्मपरतया व्याख्यातः । अतः कथमेवं व्याख्यानमिति चेत्, स्थितपदाध्याहारेण योजनान्तरं तदित्यविरोध इत्यभियुक्ताः । **तत्फलं** श्रवणादिफलम् । **साधितत्वात्** 'न बृहत्फलमुपासनादिनिमित्तम्' इत्यादिना प्रागेव साधितत्वादिति भाष्यार्थः स्फुट इति नोक्तः ।

**भावदीपिका (श्री.टि.)**– 'या निर्वृतिः' इति चतुर्थस्कन्धे साक्षात्कृतभगवन्तं प्रति ध्रुववचनम् । ततश्चायं श्लोकार्थः। हे नाथ! तनुभृतां ब्रह्माद्युत्तमाधिकारिणां तव पादपद्मध्यानाद् भवतो भवज्जनानां च कथाश्रवणेन वा या निर्वृतिः सुखं भवति सा स्वमहिमनि आविर्भूतस्वरूपेऽपि आब्रह्मणि अल्पमुक्ते मा भूत् न भवति यदा तदा अन्तकासिलुलिताद् विमानात् पततां स्वर्गादिस्थानां तत् सुखं न भवतीति किमु वाच्यम् इति । तथाचेदानीं संसारस्थब्रह्मादिदेवताद्यपेक्षया नीचा अपि पूर्वब्रह्मकल्पे लिङ्गभङ्गेन स्वस्वरूपसुखं भुञ्जानाः सन्तो मुक्ताः सन्तो जाताः सन्ति । तत्स्वरूपसुखापेक्षया उत्तमानां देवानां संसारे श्रवणादिजन्यं सुखमेवाधिकम् । ननु तेषामाविर्भूतस्वरूपत्वादेतेषां चातथात्वात् तेषां सुखमेवाधिकमिति चेन्न । नहि निर्णिक्तं कांस्यमनिर्णिक्तात् सुवर्णादधिकमिति सम्भवतीति भावः ॥ 'तिष्ठतु तावत् कालान्तरभावि फलमित्येवशब्द' इत्युक्तम् । तत् किं कालान्तरभावि फलमित्यतस्तत्प्रदर्शनपरमुत्तरवाक्यमित्याशयेनाऽह– **न केवलमिति** ॥ **तात्कालिकम्** शुकादीनां श्रवणोत्तरक्षणभावीत्यर्थः । **तत्फलम्** श्रवणादिफलम् ।

**भावप्रकाशः (कृ.टि.)**– ननु भगवन्महिमादिश्रवणेन सुखं भवतीत्यत्र कथमिदं मानम् । अत्र भगवद्भक्तकथाश्रवणेन सुखोक्तेरित्यतो भवदित्येतत् तन्त्रेणोपात्तं बोध्यमित्यभिप्रेत्य व्याचष्टे– **भवत इति** ॥ स्वः स्वीयोऽनुभवयोग्यो महिमा यस्येति विग्रहमभिप्रेत्य फलितमाह– **आविर्भूतस्वरूप** इति ॥ सा ब्रह्मणीत्यत्राङ्प्रश्लेषमभिप्रेत्य व्याचष्टे– **अल्पमुक्तेपीति** ॥ परब्रह्मस्थितस्यापि ध्यानादिकं विना न भवति सुप्तौ दृष्टत्वादिति । चतुर्थस्कन्धतात्पर्यनिर्णये तु योजनान्तरं कृतमित्यविरोधः ॥

श्लोकः ५२

## भाष्यम्

**तारतम्याधिगतेश्च । तथाहि– यदि तारतम्यं न स्यात्, 'नाऽत्यन्तिकं विगणयन्त्यपि ते प्रसादम्'** (भाग.३.१५.४८), **'नैकात्म्यतां मे स्पृहयन्ति केचित्'** (भाग.३.२६.३४), **'एकत्वमप्युत दीयमानं न गृह्णन्ति' इति मुक्तिमप्यनिच्छतां मोक्ष एव फलम्, तमिच्छतामपि स भवति सुप्रतीकादीनामिति कथमनिच्छतां स्तुतिरुपपन्ना स्यात् ॥**

भावप्रदीपिका (प.टी.)– ननु ज्ञानमात्रेण मोक्षसिद्धौ ज्ञानिकृतकर्मणाऽतिशयश्चेत्, तर्हि मुक्तौ तारतम्यं स्यात्, न च तद्युक्तम्, इत्याशङ्क्य, किं तारतम्यस्यायुक्तरीत्या प्रमाणाभावात् ? 'परमं साम्यम्' इत्यादिवचनाद्वा ? इति विकल्प्य दूषयति– **तारतम्येति ॥**

भावप्रकाशिका (न.टी.)– ननु सर्वज्ञानिनां मुक्तेरेकविधत्वात् कथं पुनरुपासनादौ विशेषः ? इत्यत आह–**तारतम्येति ॥** एतदेवोपपत्त्या वचनैरपि साधयति– **तथा हीत्यादिना ॥**

प्रमेयदीपिका (ज.टी.)– ज्ञानोत्तरस्याप्यनुष्ठानस्य यदि फलं स्यात् तर्ह्यनुष्ठानस्य एकविध्यनियमासम्भवात् स्वर्गवदपवर्गेऽपि तारतम्यं प्रसज्येत । नच तद्युक्तम् । अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेत्यतो नेदमनिष्टमिति भावेनाऽह– **तारतम्येति ॥** प्रमाणविरोधाभावाच्चेति चार्थः । कुतः प्रमाणान्मुक्ततारतम्याधिगतिः? इत्यतोऽर्थापत्तिं तावदाह– **तथाहीति ॥** यदि मुक्तानां तारतम्यं न स्यात् तदा मुक्तिमप्यनिच्छताम् एकान्तिनां मोक्षमात्रं फलम् ॥ तं मोक्षमिच्छताम् अपि सुप्रतीकादीनां स मोक्षो भवतीत्यङ्गीकार्यं स्यात् । तथा च 'नात्यन्तिकम्' इति मोक्षमनिच्छतां स्तुतिः कथमुपपन्ना स्यात् । निमित्ताभावात् । अतः स्तुत्यन्यथाऽनुपपत्त्येच्छतां मुक्तेरनिच्छतां मुक्तिरधिकेति गम्यत इत्यर्थः । आत्यन्तिकं मुक्तिहेतुम् । ऐकात्म्यतां सायुज्यम् । एकत्वमपि तदेव ॥

भावबोधः (र.टि.)– प्रमाणविरुद्धत्वाच्चेति ॥ परमं साम्यमुपैतीत्यादिना तातरम्याभावप्रतीतेरिति भावः ।

**भावरत्नकोशः** (सु.टि.)– **प्रमाणविरुद्धत्वात्** 'परमं साम्यमुपैति' इत्यादिवचन-विरुद्धत्वादित्यर्थः । इदं मुक्तितारतम्यप्रसञ्जनम् । 'तथा मुक्तिविशेषः' इत्यादिप्रमाणस्य मुक्तितारतम्ये वक्ष्यमाणत्वादुक्तम्– **तावदिति** ॥ के तथाविधा इत्यत उक्तम्– **एकान्तिनामिति** ॥ 'एकान्तानां न कस्यचित्' इत्युक्तमाधिकारिणां मुमुक्षाराहित्यस्यावगमादिति भावः । **सुप्रतीको** भक्तविशेषः । स इत्यनूद्यार्थमाह– **स इति** ॥ **निमित्तेति** ॥ उभयेषामपि मोक्षफलकत्वाविशेषेऽतिशायलक्षणस्तुतिनिमित्ताभावात् स्तुतिरनुपपन्ना स्यादित्यर्थः । 'प्रीतिर्मयि स्यात् तव वर्धमाना' इत्यादौ भगवत्प्रसादस्यैकान्तिभिरपि प्रार्थ्यमानत्वावगमात् कथं न गणयन्तीत्युच्यत इत्यत आत्यन्तिकशब्दस्य विवक्षितमर्थमाह– **आत्यन्तिकं मुक्तिहेतुमिति** ॥ मुक्त्युपाधिकः प्रसादो न तैरर्थ्यत इत्यर्थः । ऐक्यप्रतीतिनिरासायाह– **एकात्मतां सायुज्यमिति** ॥

'हरौ नियतचित्तत्वात् ग्रहवत् तत्प्रवेशनात् ॥
मोक्षं तादात्म्यमित्याहुर्न तद्रूपत्वतः क्वचित्'

इति प्रमाणे एकात्मतापरपर्यायतादात्म्यशब्देन सायुज्यलक्षणमोक्षाभिधानादेकात्मताशब्देन सायुज्यमेव ग्राह्यमिति भावः । 'एकात्मतां सायुज्यम्' इति प्राग् व्याख्यानेऽप्यनुजिघृक्षयाऽत्र पुनर्व्याख्यातवानिति मन्तव्यम् । **एकत्वमपीति** ॥ 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति' इत्यत्रोच्यमानमेकत्वमपि न स्वरूपैक्यम् । किन्तु सायुज्यमेवेत्यर्थः । 'नाऽत्यन्तिकम्' इत्यादीनि तृतीयस्कन्धगतवाक्यानि । तत्र 'नाऽत्यन्तिकम्' इति हरिं प्रति सनकादीनां वचनम् । 'नैकात्म।। मे' इति, 'सालोक्यसार्ष्टि' इति च, देवहूतिं प्रति भगवतः कपिलस्य वाक्यम् । तत्र–

'नाऽत्यन्तिकं विगणयन्त्यपि ते प्रसादं किं वाऽन्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः'

इति श्लोको भागवतटीकायां

'भक्तिज्ञानपरीपाकात् किञ्चित् पूर्वं च मुच्यते ।
दर्शनेन हरेस्तत्र नाऽनन्दः पूर्णतां व्रजेत्'

इति तात्पर्यानुसारेण अपरिपक्वकिञ्चिद्भगवद्दर्शनमात्रेण लिङ्गशरीरात्ययसमये विद्यमान-

श्लोकः ५२
भक्तिज्ञानपरिपाकाभावात् सम्यगनभिव्यक्तानन्दं मोक्षमपि न विगणयन्ति । विशिष्टोऽयमिति बहु मन्यन्ते । कुतः ? यतः कीर्तनीयशुद्धयशःशालिनो भवतः कथायाः रसज्ञाः कथामृत-पानतृप्ताः, भ्रुव उन्नयैरुज्जृम्भणविशेषैरर्पितभयमन्यत् पारमेष्ठ्यादिपदं न गणयन्तीति, किमु वक्तव्यं कुशला इति । 'मुमुक्षोः केवलो भक्तो मुक्तावपि सुखी भवेत्' इति वचनान्मोक्षे-च्छुभ्योऽनपेक्षकाणां मुक्तावानन्दोद्रेकः स्यादिति भक्त्यापादनमेव साधीय इति बुद्धिपाटवं सूचयतीति आत्यन्तिकप्रसादपदं मोक्षार्थतया व्याख्यातम् । अत्र तु प्रसादस्य भगवद्गतस्य मोक्षरूपत्वायोगात् तत्पदस्वारस्यायाऽत्यन्तिकपदं तद्विशेषणं तदनुकूलं व्याख्येयमिति भावेन 'मुक्तिहेतुम्' इति व्याख्यातम् । 'नैकात्मतां मे' इति श्लोकः प्रागुक्तार्थः ।

'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः'

इत्यत्र 'सार्ष्टिशब्देन समानैश्वर्यमुच्यते' इति टीका ।

'नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि ।
ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्णते ।।

तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यति' इति श्लोकतात्पर्यमन्यत्रोक्तं द्रष्टव्यम् ।

**भावदीपिका (श्री.टि.)– ।। ऐकविध्येति ।।** श्रवणाद्यनुष्ठाने तारतम्यस्यापि दर्शनात् तत्साध्ये आनन्दाभिवृद्धिरूपापवर्गेऽपि तारतम्यं स्यादित्यर्थः ।। **प्रमाणेति ।।** 'परमं साम्य-मुपैति' इति प्रमाणेत्यर्थः । मोक्षमात्रम् लिङ्गभङ्ग एव फलं न तरतमभावः । येनाऽनन्दाभि-वृद्धिरित्यर्थः । तदेव सायुज्यमेव । 'नाऽत्यन्तिकम्' इत्यादीनि तृतीयस्कन्धगतानि वाक्यानि । तत्र 'नाऽत्यन्तिकम्' इति हरिं प्रति सनकादीनां वाक्यम् । 'नैकात्मताम्' इति देवहूतिं प्रति कपिलवाक्यम् ।

'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जना'

इत्यपि देवहूतिं प्रति कपिलस्यैव वाक्यमिति ज्ञेयम् ।।

भावप्रकाशः (कृ.टि.)– **प्रमाणविरुद्धत्वाच्चेति** ॥ परमं साम्यमुपैतीत्यादिप्रमाण-विरुद्धत्वाच्चेत्यर्थः । **सुप्रतीकादीनामिति** ॥ सुप्रतीको नाम पुरुषविशेषः । 'हरौ नियतचित्तत्वा-द्ध्रहवत्तत्प्रवेशनात् । मोक्षं तादात्म्यम् इत्याहुः नतु तद्रूपतः क्वचिदिति प्रमाणेन तादात्म्य-वाचकशब्देन सायुज्यमोक्ष उच्यते इत्युक्तेस्तदनुसारेणाह–**सायुज्यमिति** ॥ एकत्वमपि तदेवेति । सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमित्युत । दीयमानं न गृण्हन्ति विना मत्सेवनं जना इति तृतीयस्कंधश्लोकोक्तमेकत्वमपि सायुज्यमेवेत्यर्थः । अत्र श्लोके सार्ष्टिः समानैश्वर्यमितिबोध्यम् ।

## भाष्यम्

**वचनाच्च ।**

'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ।
योगिनां भिन्नलिङ्गानामाविर्भूतस्वरूपिणाम् ।
प्राप्तानां परमानन्दं तारतम्यं सदैव हि ॥' इति ।

'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ।
मद्भक्तियोगाद् ज्ञानाच्च सर्वानतिशयिष्यसि ॥' इति च ॥

**साम्यवचनं तु प्राचुर्यविषयं दुःखाभावविषयं च । तथा चोक्तम्**

'दुःखाभावः परानन्दो लिङ्गभेदस्समा मताः ।
तथाऽपि परमानन्दो ज्ञानभेदात्तु भिद्यते ॥' इति नारायणाष्टाक्षरकल्पे ।

**अतो न वैराग्यं श्रुतादावत्र विवक्षितम् ॥**

भावप्रदीपिका (प.टी.)– द्वितीयं दूषयति– **साम्येति** ॥ अतो ज्ञानिनां भगव-न्महिमादौ विरागायोगान्न निर्वेदशब्दस्य तदर्थतेत्युपसंहरति– **अत इति** ॥

भावप्रकाशिका (न.टी.)– ननु तर्हि 'परमं साम्यमुपैति' इत्यादिवचनस्य का गतिः ? इत्यत आह–**साम्यवचनं त्विति** ॥ प्राचुर्यं प्रचुरानन्दं परमानन्द इत्यर्थः । तथा

श्लोकः ५२

ह्यत्रोदाहरति– 'दुःखाभावः परानन्दः' इति ॥ न चैतावताऽऽनन्दमयाधिकरणविरोध इत्याह– **तथाऽपीति ॥** ज्ञानभेदात् भक्तिज्ञानादितारतम्यादित्यर्थः । यत एवं ज्ञानिनामपि भगवन्महिमादिश्रवणाद्युपपत्तिः, अतस्तत्र न वैराग्यं विवक्षितमस्मिन् श्लोक इत्युपसंहरति– **अत इति ॥**

**प्रमेयदीपिका (ज.टी.)**– आगमाच्च तारतम्याधिगतिरित्याह– **वचनाच्चेति ॥** 'आविर्भूतस्वरूपिणाम्' इति कर्मधारयादतिशयार्थे इनिः । अनेन जीवन्मुक्तावैश्वर्य-तारतम्येनार्थापत्तेरन्यथोपपत्तिः परिहृता । 'लिङ्गभेदने', 'भिन्नलिङ्गानाम्' इत्याद्युक्तेः ॥

'परमं साम्यमुपैति' इत्यादि वचनविरुद्धं मुक्ततारतम्यमित्यत आह– **साम्येति ॥** प्राचुर्यं पूर्णत्वम् । कुत एतत्? उक्तप्रमाणविरोधात्, विशेषवचनाच्चेत्याह– **तथा चेति ॥** यद्यपि परानन्दोऽलम्बुद्धिगोचरत्वमात्रेण समः, तथाऽपि इत्यन्वयः । 'नच ज्ञानिनाम्' इत्यादिनोक्तमर्थमुपसंहरति– **अत इति ॥**

**भावबोधः (र.टि.)**– **अतिशयार्थे इनिः ॥** बहुव्रीहिणैव निर्वाहे इनेरप्राप्त्या अतिशयस्या-लाभादिति भावः ॥ **अलम्बुद्धिगोचरत्वमात्रेणेति ॥** तथा च न व्याहतिरिति भावः ।

**भावदीपः (रा.टि.)**– 'न कर्मधारयान्मत्वर्थीयः' इत्युक्तेराह– **अतिशयार्थे इनिरिति ॥** 'तथाऽपि' इत्यस्य अर्थाप्रतीतेराह– **यद्यपि परानन्द इति ॥** यद्वा '**समाः**' इति परानन्दस्य साम्यमुक्त्वा पुनर्भिद्यत इत्युक्तेः प्रतीतव्याहतिनिरासाय साम्यासाम्योक्तेर्भिन्नविषयत्वाभिप्रायेण आह– **यद्यपीति ॥**

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु आविर्भूतं स्वरूपं येषामिति बहुव्रीहिणैव मत्वर्थलाभाद् इनिप्रत्ययवैयर्थ्यमित्यतः बहुव्रीहिमाश्रित्य मतुबर्थप्रयोगे वैयर्थ्यदोषेऽपि आविर्भूतं च तत् स्वरूपं चेति आविर्भूतस्वरूपं तत् एषामस्तीति कर्मधारयमाश्रित्य मतुबर्थप्रत्ययप्रयोगशब्दान्तरत्वान्नदोष इत्याशयेनाह– **आविर्भूतस्वरूपाणामिति कर्मधारयादिनिरिति ॥**

ननु च तथाऽपि कर्मधारयान्मत्वर्थीयाद् बहुव्रीहिरेव इष्टो लघुत्वादिति न्यायात्* शब्दान्तरत्वाश्रयणेऽपि बहुव्रीहित्वविवक्षायामल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्ना-

★ यत्र बहुव्रीहिमत्वर्थीय-योरेकार्थता तत्रायं न्याय इति दुर्घटवृत्तौ ।

श्रयणं दोषः स्यादेवेति चेन्न। बहुव्रीह्यपेक्षया कर्मधारयमत्वर्थीयशब्दगौरवस्थले बहुयत्ना-श्रयणस्य दोषत्वेऽपि शब्दसाम्ये तददोषत्वस्य टीकाकृदभिप्रेतत्वात् । अत एव टीकायां यद्विकारीत्यत्र कर्मधारयमत्वर्थीयमभ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः । बहुव्रीहौ कर्मधारय-मत्वर्थीये चार्थगौरवाप्रसङ्गेन शब्दगौरवस्यैव लाघवन्यायविरुद्धत्वात्। प्रकृते च तदभावेन विरुद्धत्वात् । लाघवन्यायादरेण शब्दगौरविन्यासादिगतकर्मधारयमत्वर्थीयप्रयोगाणाम् 'एकगो-पूर्वाट्ठञ् नित्यम्' (पा.५.२.११८) इति सूत्रे दुर्घटवृत्तिकृता दर्शितत्वाच्चेति सकल-मकलंकमिति सम्प्रदायः ॥

वस्तुतस्तु यदा कर्मधारयान्मत्वर्थीयः क्रियते तदा स्वपदार्थमाश्रित्य कर्मधारयः कर्तव्यः । तेषामेव च पदार्थानामन्यत्र गुणाभावमश्रित्य मत्वर्थीय उत्पद्यत इति प्रतिपत्तिगौरवम् । यदा च पूर्वमेवान्यपदार्थप्राधान्यविवक्षा तदवर्तिपदार्थानां गुणभाव आश्रीयत इति प्रतिपत्तिलाघवम् । कर्मधारयो मत्वर्थीयसहित एवान्यपदार्थस्य प्रतिपादक इति गौरवम् । बहुव्रीहिस्त्वन्यानपेक्ष एव तत्प्रतिपादक इति शब्दलाघवञ्च भवतीति न कर्मधारयमत्वर्थीयाश्रयणं युक्तम् । तथान्य-पदार्थप्राधान्यविवक्षयां बहुव्रीहेरेव प्रसङ्गेन सर्वधनी, सर्वबीजी, सर्वकेशी नटः इत्याद्यभियुक्त-प्रयोगानुपपत्तिप्रसङ्गात् । तदुपपादनार्थं प्रवृत्तात्सर्वादेः कर्मधारयादिनिरिति भाष्यकारीय-वचनाल्लाघवानाश्रयेण वाचनिकः कर्मधारयादिनिरित्यत्र तात्पर्यमिति । कर्मधारयादपि न सम्बन्धमात्रार्थ इनिः किन्तु अतिशयार्थ इति भावेनोक्तम्– **अतिशयार्थ** इति ॥ 'भूम-निन्दाप्रशंसासु नित्ययोगेतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुपादयः ॥' इति वचनादिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– आविर्भूतं स्वरूपं येषामिति विग्रहे आविर्भूतस्वरूप-शालिनामिति बहुव्रीहिणैव भावात् किं मत्वर्थीयेनिप्रत्ययेनेत्यत आह– **अतिशयार्थ इति** ॥ आविर्भूतं च तत् स्वरूपं च अतिशयेनाऽविर्भूतस्वरूपमेषामस्तीत्यातिशायनिक इनिप्रत्ययोऽ-त्रोत्पादित इति न वैफल्यशङ्केति भावः । अनेनोक्तवचनोदाहरणेनेत्युक्तं विवृणोति– **लिङ्गभेदन इति** ॥ आदिपदेन परमानन्दं प्राप्तानामित्यादिग्रहः । प्रकृतोपयोगाय प्राचुर्यपदार्थमाह– **पूर्णत्वमिति** ॥ स्वस्वयोग्यतापेक्षया पूर्तिरित्यर्थः ।

श्लोकः ५२

प्राचीनटीकायां तु 'दुःखाभावः परानन्दः' इति वचनानुसारेण प्राचुर्यं परमानन्द इति व्याख्यातम् । प्राचुर्यं बाहुल्येन साम्यम् । असाम्यं त्वल्पमित्यन्यथाप्रतीतेर्वाऽऽह– **पूर्णत्व-मिति** ॥ एतत् पूर्णत्वादिनैव साम्यं न त्वन्यगुणैरित्येतत् कुतः प्रमाणादवसेयमित्यर्थः । **उक्तेति** ॥ 'तथा मुक्तिविशेषः' इत्याद्युक्तप्रमाणमन्यथा विरुद्ध्यत इत्यर्थः ॥

ननु परमानन्देऽपि कथं साम्यम् ? भगवदीयानन्दस्यानन्याधीनत्वादनवधिकत्वाच्चेत्यतः तथाऽपीत्येतदाकाङ्क्षां पूरयन् समत्वं विवक्षितमाह– **यद्यपीति** ॥ **ज्ञानभेदात्** ज्ञानभक्त्यादि-तारतम्यादिति भाष्यार्थः । **अत इतीति** ॥ यत एवं ज्ञानिनामपि भगवन्महिमादिश्रवणाद्युप-पत्तिरतोऽत्र श्लोके श्रुतादौ वैराग्यं न विवक्षितमिति भाष्यार्थः । क्रियेतापीत्यपिशब्दः सम्भावनायाम् ।

**भावदीपिका (श्री.टि.)**– ननु आविर्भूतं स्वरूपं येषां ते इति बहुव्रीहिणैवाऽविर्भूत-स्वरूपवत्त्वरूपार्थलाभान्मतुबर्थस्येनेर्वैय्यर्थ्यम् । 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादय' इति वचनात् । अत आविर्भूतस्वरूपाणामिति वाच्यम् । आविर्भूतस्वरूपिणामिति तु कथमित्यत आह– **आविर्भूतेति** ॥ आविर्भूतं च तत् स्वरूपं चाऽविर्भूतस्वरूपम् । तद् एषामतिशयेना-स्तीत्याविर्भूतस्वरूपिणः । तेषामिति कर्मधारयादिनिर्व्याख्यायत इति न कोऽपि दोष इति भावः । **साम्यमिति** ॥ भगवत्साम्यस्य सर्वमुक्तेष्वेकप्रकारत्वान्मुक्तानामपि साम्यं प्राप्तमेवेत्यर्थः ।

ननु साम्यवचनं प्राचुर्यविषयमित्युक्ते बाहुल्येन मुक्तानां साम्यमेव, असाम्यं त्वल्प-मित्यन्यथाप्रतीतेर्व्याचष्टे ॥ **पूर्णत्वमिति** ॥ **कुत इति** ॥ पूर्णत्वादिनैव साम्यं कुतः? सर्वैरपि गुणैः सर्वथा साम्यमेव मुक्तानां किं न स्यादित्यर्थः ॥ **उक्तेति** ॥ 'यथा भक्ति' इति प्रमाणेत्यर्थः ॥ 'दुःखाभाव' इति प्रमाणे मुक्तानन्दस्य सांसारिकानन्दविलक्षणत्वात् परत्वं परमत्वं च कथ्यत इति द्रष्टव्यम् । मुक्तानां परानन्दे समत्ववचनं भेदवचनं च व्याहतमित्यतो व्याचष्टे– **यद्यपीति** ॥

**भावप्रकाशः (कृ.टि.)**– **अतिशयार्थ इति** ॥ तथा चातिशयप्रतीत्यै इनिप्रयोगा-द्बहुव्रीहिनिर्वाह्ये कथं मत्वर्थीय इति शङ्का निरस्तेति भावः । अनेनेत्युक्तं विवृणोति– **लिङ्ग-भेदेन इति** ॥ आदिपदेनाविर्भूतस्वरूपाणामित्यादेर्ग्रहः । **उक्तेति** ॥ यथा भक्तिविशेषोत्रेत्या-द्युक्तेत्यर्थः । व्याघातपरिहारायोक्तम् **अलम्बुद्धीति** ॥

## भाष्यम्

**नच सङ्कोचे मानं किञ्चिद्विद्यमान इतरप्रयोगे । महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ॥ ५२ ॥**

भावप्रदीपिका (प.टी.)– श्रोतव्यादिपदेन भगवन्महिमेतराभिधानान्न वैराग्यार्थत्वेऽपि विरोध इत्यत आह– **नचेति** ॥ ननु सङ्कोचे लाभार्थत्वेऽपि समः । अन्यथा ज्ञानिनां ग्राम्यादिफलप्राप्तिरित्यत आह– **महद्भिरिति** ॥ ग्राम्यादेः श्रोतव्यशब्दवाच्यत्वमेव नास्तीत्यर्थः ॥ ५२ ॥

भावप्रकाशिका (न.टी.)– ननु वैराग्यवाच्यपि निर्वेदशब्दो भगवन्महिमान्यविषयमिति सङ्कोचः किं न स्यात् ? इत्यत आह– **नचेति** ॥ ज्ञानिनामपि भगवन्महिमादिश्रवणाद्यनुष्ठानान्यथानुपपत्त्या तदितरविषयत्वेन सङ्कोचः क्रियत एव । निर्वेदशब्दस्य लाभार्थेऽपि प्रयोगे विद्यमाने न युज्यत इत्यर्थः । नन्वेवमसद्विषयश्रोतव्यश्रुतसाफल्यावाप्तिरपि किं न स्यात् ? इत्यत आह–**महद्भिरिति** ॥ अनुचितत्वादेव तन्निरास इति भावः ॥ ५२ ॥

प्रमेयदीपिका (ज.टी.)– अस्तु तर्हि भगवन्महिमादिव्यतिरिक्तश्रुतादौ वैराग्यमत्र विवक्षितमित्यत आह– **नचेति** ॥ निर्वेदशब्दस्य वैराग्यैकार्थकत्वे निश्चिते तद्बलाच्छ्रोतव्यादिशब्दस्यार्थसङ्कोचः क्रियेतापि । इतरत्र नितरां लाभे तस्य श्रौतप्रयोगे विद्यमाने तु निर्मूलं सङ्कोचकल्पनम् इत्यर्थः ॥ ननु लाभार्थतायामप्यसच्छास्त्रादिव्युदासाय सङ्कोचः कार्य एवेत्यत आह– **महद्भिरिति** ॥ अयोग्यतयैव तन्निरासः, प्रकरणाद्वेति भावः ॥५२॥

भावबोधः (र.टि.)– श्रोतुं योग्यं श्रोतव्यमिति शब्दार्थमभिप्रेत्याह– योग्यतयेति ॥ श्रुतस्य चेत्येतत्सङ्ग्रहायाह प्रकरणाद्वेति ॥ ५२ ॥

भावदीपः (रा.टि.)– निरासः 'असच्छास्त्रस्य' इति योज्यम् ॥ प्रकरणाद्वेति ॥ 'बुद्धिर्योगे त्विमां शृणु' (२.३९) इति ज्ञानोपायश्रवणस्य प्रकरणादित्यर्थः ॥ ५२ ॥

श्लोकः ५२

**भावरत्नकोशः (सु.टि.)–** इतरत्रेत्यनूद्य अर्थमाह– **इतरत्रेति** ॥ **तस्य** निर्वेदशब्दस्य । सङ्कोचे मूलं शङ्कते– **नन्विति । लाभार्थतायामपि** निर्वेदशब्दस्य । **अयोग्यतया** 'श्रोतव्यस्य श्रुतस्य च' इत्यादावभ्यर्हितत्वान्महद्भिरिति कर्तृपदाध्याहारेऽसच्छास्त्रादौ महद्भिः श्रोतव्यत्वादेरयोग्यतापराहततया । **प्रकरणाद्वेति** ॥ श्रोतव्यं श्रुतं च वेदाद्येव । तस्यैव 'बुद्धिर्योगे त्विमां शृणु' इति मोक्षोपयोगिज्ञानत्वात् । वेदाद्येव च तादृशज्ञानजनकमिति प्रकरणबलादित्यर्थः ॥

**गीताक्षरार्थस्तु–** फलकामनादिवर्जितानीश्वराराधनरूपाणि कर्माणि मोक्षसाधनज्ञानार्थिना कियत्पर्यन्तं कर्तव्यानीत्यत उच्यते **यदा त इति** ॥ यदा ते तव बुद्धिः अन्तःकरणं मोहकलिलम् अन्यथाज्ञानलक्षणं दोषं व्यतितरिष्यति परित्यजति सम्यग्ज्ञानोदयवद् भवतीति यावत् । तदा महद्भ्यः श्रोतव्यस्य श्रुतस्य स्वविहितसर्वकर्मोपलक्षणम् । वेदश्रवणादेः निर्वेदं नितरां लाभं गन्ताऽसि प्राप्स्यसीति यावत् । मुक्तिहेतुज्ञानसाधनभूतो निवृत्तधर्मानुष्ठानलक्षणो योगः साक्षाज्ज्ञानसाधनश्रवणादिरूपप्रमाणस्यादृष्टद्वारा सत्त्वशुद्ध्युत्पादनेनोपकारकः सन् मिथ्याज्ञानलक्षणदोषनिवृत्त्यवान्तरप्रयोजनः तत्त्वज्ञानोदयावधिकः कर्तव्य इति भावः ॥ ५२ ॥

**भावदीपिका (श्री.टि.)–** क्रियेतापीत्यत्रापिः सम्भावनार्थः । श्रौतप्रयोगे 'तस्माद् ब्राह्मण । पाण्डित्यं निर्विद्य' इत्यादिरूपे ॥ **असच्छास्त्रेति** ॥ श्रोतव्यश्रुतपदाभ्यां तस्यापि प्राप्तेरित्यर्थः । श्रोतुं योग्यं श्रोतव्यमिति शब्दार्थमभिप्रेत्याऽह– **अयोग्यतयैवेति** ॥ असच्छास्त्रश्रवणस्य 'असच्छास्त्राधिगमनम्' इति महापातकेषु परिगणितत्वेन श्रोतुं योग्यत्वरूपं श्रोतव्यत्वं तत्र बाधितमिति श्रोतव्यपदात् तन्निरासलाभान्न लाभार्थतापक्षे सङ्कोचः कार्य इति भावः ॥ **प्रकरणाद्वेति** ॥ 'त्रैगुण्यविषया वेदा' इति वेदादिसच्छास्त्रप्रकरणान्नासच्छास्त्रस्य प्रसक्तिः । येन सङ्कोचः कार्यः स्यादिति भावः ॥ ५२ ॥

**भावप्रकाशः (कृ.टि.)– अयोग्यतयेति** ॥ श्रोतव्यस्य श्रुतस्य चेत्यत्राभ्यन्तर्हितत्वान्महद्भिरिति कर्त्राध्याहारेऽसच्छास्त्रादौ महद्भिः श्रोतव्यत्वादेर्बाधितत्वेनेत्यर्थः । **प्रकरणाद्वेति** ॥ श्रोतव्यं श्रुतं च वेदाद्येव मोक्षोपयोगिज्ञानप्रकरणात् । वेदादेरेव ज्ञानप्रयोजकत्वात् । तथा च प्रकरणादेवासच्छास्त्रव्युदास इत्यर्थः ॥ ५२ ॥

**श्रुतिविप्रतिपन्ना ते यथा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥**

## भाष्यम्

**तदेव स्पष्टयति– श्रुतिविप्रतिपन्नेति ॥ पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि निश्चला भवति । ततश्च समाधावचला, ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्दमग्नत्वात् । तदा योगमवाप्स्यसि उपायसिद्धो भवसीत्यर्थः ॥ ५३ ॥**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतार्य व्याचष्टे– **तदेवेति ॥**

भावप्रकाशिका (न.टी.)– नहि वेदविरुद्धबुद्धिर्मुक्तिसाधनम् । 'वेद एव द्विजातीनां निःश्रेयसकरः परः' इत्यादिविरोधात्, 'रचनानुपत्तेः' इत्यादिसमयान्तरनिरासवैय्यर्थ्याच्च । एतदेव मनसि निधायाह– **पूर्वमित्यादि** ॥ ५३ ॥

प्रमेयदीपिका (ज.टी.)– ननूत्तरश्लोकेऽपि योगानुष्ठानावधिरेवोच्यते । अतः पुनरुक्तिदोषः इत्यत आह– **तदेवेति ॥** किं तन्मोहकलिलम्? कीदृशं च तदतितरणम्? इत्याशङ्कायां पुंसामधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानावधिमनेन स्पष्टं करोतीत्यर्थः ॥ नन्वत्र 'श्रुतिविप्रतिपन्ना' इति श्रवणादितो वैराग्यमुच्यते । यथाह भास्करः 'वस्त्वन्तरश्रवणाद्विरक्तः' इति । ततः पूर्वत्रापि वैराग्यमर्थस्स्यात् । 'निश्चला', 'अचला' इति पुनरुक्तिश्च । योगावाप्तेरुत्तरा चेयमवस्था । तत्कथमुच्यते 'तदा योगमवाप्स्यसि इति'? इति शङ्कायां श्लोकं व्याचष्टे– **पूर्वमिति ॥** पूर्वावस्थात उत्तरावस्थायाः सामर्थ्यलब्धं वैलक्षण्यं दर्शयितुमुक्तम्– **वेदार्थेति ॥** चलनप्रसक्तिं दर्शयति– **विपरीतवाग्भिरिति ॥** असच्छास्त्रैरित्यर्थः । अनेन परोक्षज्ञानकाष्ठा दर्शिता । परोक्षतत्वनिश्चयानुवृत्तिव्युदासायोक्तम्– **ब्रह्मेति ॥** अत्रापि चलनप्रसक्तिमाह– **भेरीति ॥** तत्कथम्? इत्यत आह– **परमेति ॥** एतेनापरोक्षज्ञानकाष्ठा दर्शिता । उपायेन सिद्धः प्राप्तफलः । योगशब्देन तत्फलमुपलक्ष्यत इति भावः । श्लोकद्वयेऽप्येतदवस्थाप्राप्तिः योगानुष्ठानावधिरिति तात्पर्यम् ॥ ५३ ॥

श्लोकः ५३

**भावबोधः (र.टि.)– परोक्षेति ॥** योगावधिप्रतिपादकसमाधिशब्दार्थतयेत्यर्थः ॥ ५३ ॥

**भावदीपः (रा.टि.)– योगेति** ॥ ज्ञानोपायेत्यर्थः । **पुनरुक्तिरिति ॥** पूर्वश्लोकेनेति भावः ॥ **श्लोकद्वयेऽपीति ॥** 'यदा' (२.५२) इति 'श्रुति'(२.५३) इति श्लोकद्वयेऽपीत्यर्थः ॥ **एतदवस्थेति ॥** दुःशास्त्रैरचाल्यमानपरोक्षतत्त्वनिश्चयवत्त्वावस्थाप्राप्तिः । भेरीताडनादिनाप्यचल-समाध्यवस्थाप्राप्तिः ज्ञानोपायरूपनिवृत्तकर्मलक्षणयोगानुष्ठानावधिरित्यर्थः ॥ ५३ ॥

**भावरत्नकोशः (सु.टि.)**– यदा तदेति श्रवणादाह– **योगानुष्ठानावधिरेवेति ॥ तदति-तरणं** मोहकलिलातितरणम् ॥ **अधममध्यमोत्तमावस्थेति ॥** बुद्धेः श्रुतिविप्रतिपन्नत्वावस्था– अधमा । परोक्षतत्त्वनिश्चयरूपतावस्था– मध्यमा । अपरोक्षज्ञानत्वावस्था– उत्तमेत्यर्थः । आदिपदेन तत्कारणग्रहः । असम्प्रज्ञातसमाधित्वावस्थाग्रह इति केचित् ॥ **पूर्वश्लोकोक्तमेवेति** ॥ अनेन भाष्ये 'तदेव' पूर्वोक्तप्रमेयमेवेत्यभिप्रेत्य तद्विवृतं 'योगानुष्ठानावधिम्' इतीति ज्ञेयम् । स्पष्टयतीत्यत्र स्पष्टशब्दात् 'तत्करोति' इति णिजिति भावेनोक्तम्– **स्पष्टं करोतीति ॥** 'श्रवणादितः' इति वदतास्मिन् मते श्रुतिशब्दः श्रवणाद्युपलक्षक इत्युक्तं भवति । **पूर्वत्र** 'यदा ते मोह' इति श्लोके । **इयमवस्था** अचलत्वावस्था । **वेदार्थानुकूलेन** वेदार्थविमर्शजनितेनेति भाष्यार्थः । **अनेन** असच्छास्त्रश्रवणेऽप्यचलनकथनेन । **परोक्षज्ञानकाष्ठा** परोक्षज्ञानसीमा । **तत् कथं** भेरीताडनादावप्यचलनं कथम् ? **एतेन** भेरीताडनादावप्यचलत्वकथनेन । योगशब्द-स्योपायार्थत्वाद् भाष्ये 'उपायसिद्धः' इत्युक्तम् । तद्विग्रहं दर्शयन्नर्थमाह– **उपायेनेति** ॥ तर्हि 'योगमवाप्स्यसि' इति कथमित्यतो भाष्यतात्पर्यमाह– **योगेति ॥** अनेन योगावाप्तेरुत्तरा चेयमवस्थेति कृतचोद्यं परिहृतं भवति । कियत्पर्यन्तं योगानुष्ठानमिति चोद्यस्य परिहारमाह– **श्लोकद्वयेऽपीति ॥ एतदवस्था** परमानन्दमग्नत्वानुकूलासम्प्रज्ञातसमाधित्वावस्था ।

**गीताक्षरार्थस्तु–** किं तन्मोहकलिलम् ? कीदृशश्च तदतितरणम् ? इत्याकाङ्क्षायां पुंसा-मधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तयोगानुष्ठानावधिरेव स्पष्टीक्रियते– श्रुतिविप्रति-पन्नेति ॥ परोक्षतत्त्वनिश्चयात् पूर्वं श्रुतिभिः वेदैः विप्रतिपन्ना विरुद्धा सती ते बुद्धिः यदा वेदार्थानुकूलेन तत्त्वनिश्चयेनासच्छास्त्रैरपि निश्चला 'इदमदो वा' इति संशयानास्कन्दिता स्थास्यति । अनेन परोक्षज्ञानकाष्ठा दर्शिता । ततश्च समाधिर्भवति । भवति च तस्मिन् ब्रह्मप्रत्यक्षदर्शनेन परमानन्दमग्नतया भेरीताडनादावप्यचला चलनहीना बुद्धिर्यदा स्थास्यति

अनेनापरोक्षज्ञानकाष्ठा दर्शिता तदा योगं योगफलं ज्ञानोपायानुष्ठानस्य फलम्, अवाप्स्यसि प्राप्तवान् भविष्यति । एतेन बुद्धेः मनसः मोहकलिलं श्रुतिविरुद्धत्वरूपो दोषः । तत्तरणं च वेदार्थानुकूलेन परोक्षभगवत्तत्त्वनिश्चयेनाचलतयाऽवस्थानम् । तदा निर्वेदं गन्ताऽसीत्यस्य विवरणं 'समाधावचला बुद्धिः' इतीत्युक्तं भवति । श्लोकद्वयेऽप्येतदवस्थावाप्तिर्योगानुष्ठानावधिरिति तात्पर्यम् ॥ ५३ ॥

**भावदीपिका** (श्री.टि.)– ॥ **अधममध्यमोत्तमावस्थादीति** ॥ बुद्धेः श्रुतिविप्रतिपन्नत्वावस्थाऽधमा । परोक्षतत्त्वनिश्चयावस्था मध्यमा । अपरोक्षज्ञानावस्थोत्तमेत्यर्थः । आदिपदेनासम्प्रज्ञातसमाध्यवस्थाग्रहणम् । कथमुच्यत इत्यत 'श्रुतिर्वस्त्वन्तरश्रवणं, तस्माद् विप्रतिपन्ना विरक्ता' इति भास्करेण व्याख्यातत्वादित्याह– **यथाऽऽहेति** ॥ **पूर्वत्रापीति** ॥ 'तदा गन्ताऽसि निर्वेदम्' इत्यत्रापीत्यर्थः । इयमवस्था 'समाधावचला' इत्युक्ताऽवस्था ॥ **सामर्थ्येति** ॥ पूर्वावस्थायां बुद्धेः श्रुतिविप्रतिपन्नत्वे उत्तरावस्थायां श्रुत्यानुकूल्यमर्थाल्लब्धमित्यर्थः ॥ **काष्ठेति** ॥ विपरीतवाग्भिरपि निश्चलत्वावस्थाप्राप्तिः परोक्षज्ञानस्यावधिः फलमित्यर्थः । 'समाधावचला' इत्युक्ते तत्र कारणापेक्षायां भाष्ये ततश्चेत्युक्तम् । तेन च पूर्वं परोक्षतत्त्वनिश्चयस्य प्रकृतत्वात् तस्यैव कारणत्वेनानुवृत्तिः प्रतीयतेऽत आह– **परोक्षेति** ॥ एवं च ततश्च परोक्षतत्त्वनिश्चयानन्तरं जातेन ब्रह्मप्रत्यक्षदर्शनेन बुद्धिः समाधावचला भवतीति भाष्यं योज्यम् ॥ **एतदिति** ॥ भेरीताडनादावप्यचलत्वमित्यर्थः ॥ **काष्ठेति** ॥ भेरीताडनादावपि निश्चलत्वरूपासम्प्रज्ञातसमाध्यवस्थाप्राप्तिरपरोक्षज्ञानस्यावधिः फलमित्यर्थः । नन्वत्र 'योगमवाप्स्यसि' इति योगावाप्तिरेवोच्यते । नतु योगफलावाप्तिः । तत् कथमिदं व्याख्यानमित्यत आह– **योगशब्देनेति** ॥ ननु योगस्य कीदृशाङ्गत्वमिति शङ्कितस्य श्लोकद्वयेन किमुत्तरं जातमित्यत आह– **श्लोकद्वयेऽपीति** ॥ **एतदवस्थेति** ॥ असम्प्रज्ञातसमाध्यवस्थेत्यर्थः । तथाचैतदवस्थाप्राप्तिपर्यन्तं योगस्य वारं वारमनुष्ठेयत्वादवहननादिवत् स्वरूपोपकारकाङ्गत्वमित्युक्तं भवतीति भावः ॥ ५३ ॥

**भावप्रकाशः** (कृ.टि.)– **उत्तमावस्थादीति** ॥ आदिपदेनावस्थाकारणसङ्ग्रहः । **अनेनेति** ॥ असच्छास्त्रश्रवणेऽपि निश्चलत्वकथनेनेत्यर्थः । **एतेनेति** ॥ भेरीताडनेप्यचलत्वकथनेनेत्यर्थः ॥ ५३ ॥

अर्जुन उवाच–

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

## भाष्यम्

**स्थिता प्रज्ञा ज्ञानं यस्य स स्थितप्रज्ञः । भाष्यतेऽनयेति भाषा । लक्षणमित्यर्थः ॥ उक्तं लक्षणमनुवदति लक्षणान्तरं पृच्छामीति ज्ञापयितुम्– समाधिस्थस्येति ॥**

भावप्रदीपिका (प.टी.)– प्रकृतज्ञानिलक्षणं पृच्छतीति सम्बन्धस्य स्पष्टत्वात् 'स्थितप्रज्ञस्य' इति श्लोकव्याख्यामेव करोति– **स्थितेति** ॥ 'किं प्रभाषेत' इत्यतः 'का भाषा' इत्यस्यार्थभेदमाह– **भाष्यत इति** ॥ समाधिस्थज्ञानिनः किं लक्षणमिति भ्रान्तिर्मा भूदित्याह– **उक्तमिति** ॥

भावप्रकाशिका (न.टी.)– उक्तार्थप्रश्नरूपत्वेन पूर्वसङ्गतेः प्रसिद्धत्वादुत्तरश्लोकस्य व्याख्यानमेव करोति– **स्थितेति** ॥ 'किं प्रभाषेत' इत्यतः 'का भाषा' इत्यस्यार्थभेदमाह– **भाष्यत इति** ॥ 'समाधिस्थस्य' इति समाधिं कुर्वत इति प्रतीतिः स्यात् । तां व्यावर्तयन् यथावद्व्याचष्टे– **उक्तमिति** ॥ समाधौ सत्यां ब्रह्मप्रत्यक्षदर्शनेन परमानन्दमग्नत्वात् यस्य बुद्धिरचलत्वेन स्थिता तस्येत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीति सङ्गतेः स्फुटत्वात्तामनुक्त्वा प्रज्ञाशब्दस्य बुद्धिमात्रार्थत्वप्रतीतिनिरासाय स्थितप्रज्ञशब्दार्थमाह– **स्थितेति** ॥ प्रतिष्ठां प्राप्ता । **ज्ञानम्** अपरोक्षम् । 'किं प्रभाषेत' इत्यतः 'का भाषा' इत्यस्यार्थान्तरमाह– **भाष्यत इति** ॥ ज्ञानीति व्यवह्रियत इत्यर्थः । भाषा इति भाषाशब्दस्य स्त्रीलिङ्गत्वाद् 'अनया' इत्युक्तम् । व्यवहारकारणानामनेकत्वात् कस्यायं प्रश्न इति न ज्ञायते । अत आह– **लक्षणमिति** ॥ सास्नादिमत्वं लक्षणं दृष्ट्वा हि गौरिति व्यवह्रियते ॥

ज्ञानिमात्रव्युदासाय **'समाधिस्थस्य'** इति विशेषणमिति प्रतीयते । **समाधिं कुर्वत इति । यथाह सङ्करः 'लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सयाऽर्जुन उवाच'** इति । तदसदिति भावेनाऽह– **उक्तमिति ।। ज्ञानिसामान्यलक्षणविषय एवायं प्रश्नः । किमर्थं तर्हि 'समाधिस्थस्य'** इत्युक्तमिति चेत् **'समाधावचला बुद्धिः'** इत्यनेनोक्तं ज्ञानिसामान्यलक्षण-मनेनानुवदतीति ब्रूमः । न हीदं न लक्षणम् । ज्ञानिमात्रनिष्ठधर्मत्वात् । किमर्थोऽनुवादः? इति चेत् तज्ज्ञातं मयेति ज्ञापनार्थमिति वदामः । एतज्ज्ञापनेऽपि किं प्रयोजनम्? इति चेत् लक्षणान्तरं पृच्छामीति ज्ञापयितुम् । अन्यथा सिद्धप्रश्नोऽयमित्युपेक्ष्यः प्रसज्येतेति भावः । लक्षणान्तरप्रश्नस्य चेदं प्रयोजनम् । अयावल्लक्ष्यभावित्वान्न तत् सम्यग्व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीति । अत एव प्रसिद्धलक्षणपद-परित्यागेनाप्रसिद्धभाषापदोपादानमिति ।।

**भावबोधः (र.टि.)– अर्थान्तरमिति ।।** तथा च न पुनरुक्तिरिति भावः ।।

**भावदीपः (रा.टि.)–** स्थितापदार्थः **प्रतिष्ठां प्राप्तेति ।।** भेरीताडनादिनाऽप्यचञ्चलतां प्राप्तेत्यर्थः । लक्षणस्य व्यवहारहेतुत्वं व्यनक्ति– **सास्नादीति ।। अन्यथेति ।।** लक्षणान्तरप्रश्न-ज्ञापनाभाव इत्यर्थः । **न तदिति ।।** समाधिस्थत्वम् ।। **अत एवेति ।।** अयावल्लक्ष्येत्यादि-नोक्तार्थज्ञापनार्थत्वादेवेत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु ज्ञानिलक्षणस्यैव ज्ञानीति व्यवहारसाधनत्वात् तद्विवक्षया अनेनेति वक्तव्यम् । अनयेति स्त्रीलिङ्गं तु कथमित्यतः नानयेति भाषाशब्दार्थ-भूतलक्षणापेक्षया स्त्रीलिङ्गं किन्तु भाषापेक्षयेति न तदनुपपत्तिरिति आह– **भाषाशब्दस्य स्त्रीलिङ्गत्वादिति ।।**

**भावरत्नकोशः (सु.टि.)– प्रकृते** अपरोक्षज्ञानकाष्ठाप्रदर्शनेन । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इति कोशकारवचनादाह– **बुद्धिमात्रार्थत्वेति ।।** स्थिताशब्दार्थः– **प्रतिष्ठां प्राप्तेति ।।** सुदृढनिष्पन्नेत्यर्थः । 'स्थिता प्रज्ञा ज्ञानं यस्येति' यत्प्रसिद्धार्थकमपि प्रज्ञापदं ज्ञानार्थं व्याख्याति तेन ज्ञानमित्यपरोक्षज्ञानं मुख्यं ग्राह्यमिति भावेनाऽह– **ज्ञानमपरोक्षमिति ।। अर्थान्तरमिति ।।** तथाच धात्वर्थैक्यान्न पुनरुक्तिरिति भावः । लक्षणवत् 'अयं ज्ञानी'

श्लोकः ५४

इत्याप्तोपदेशवागिन्द्रियादिरूपव्यवहारकारणवाहुल्यादुक्तम्– **अनेकत्वादिति** ॥ **कस्य** व्यवहार-कारणस्य । **लक्षणस्य** व्यवहारहेतुत्वमुपपादयति– **सास्नेति** ॥ **'प्रश्नबीजं प्रतिलभ्यार्जुन उवाच** लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया' इति शङ्करभाष्यं सान्वयमनुवदति– **लब्धेति** ॥ शङ्कर-पक्षस्यासत्वं भाष्याभिप्रायं वदन् दर्शयति– **ज्ञानिसामान्येति** ॥ सम्प्रज्ञातासम्प्रज्ञातसमाध्यव-स्थापन्नज्ञानिमात्रेत्यर्थः । स्थिप्रज्ञस्येति ज्ञानिमात्रप्रतीतेः सङ्कोचे कारणाभावादिति हृदयम् । कारणं शङ्कते– **किमर्थमिति** ॥ **तर्हि** ज्ञानिसामान्यलक्षणविषयप्रश्ने । अनुवादस्य प्राप्ति-सापेक्षत्वात् तामाह– **समाधाविति** ॥ **अनेन** 'सामाधिस्थस्य' इत्यनेन । समाधिमत्वस्य ज्ञानिलक्षणत्वमुपपादयति– **नहीति** ॥ ज्ञानीतरावृत्तित्वे सति ज्ञानिवृत्तित्वरूपासाधारण-धर्मत्वादित्यर्थः । असाधरणधर्मो हि लक्षणं परिकीर्त्तितमिति भावः । **ज्ञापनार्थः** ज्ञापन-प्रयोजकः। अनुवाद इति वर्त्तते । **लक्षणान्तरं** समाधिस्थत्वलक्षणादन्यत् । **अन्यथा** लक्षणान्तरप्रश्नज्ञापनाभावे ॥ **सिद्धप्रश्न इति** ॥ समाधिस्थस्य ज्ञानिनः समाधिस्थत्वमेव लक्षणमिति सिद्धत्वात् समाधिस्थस्य किं लक्षणमिति प्रश्नः सिद्धार्थविषयत्वेन नोत्तरार्ह इत्युपेक्षणीयः स्यादित्यर्थः । सिद्धः प्रश्नो यस्य स इति बहुव्रीहिर्वा । अत एव भगवत्पादैः 'प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः । सिद्धार्थता च वैफल्यम्' इति सिद्धार्थकत्वं प्रश्नदोष इति विभावितमिति भावः। **अयावल्लक्ष्यभावित्वात्** लक्ष्यसमसमयवृत्तित्वाभावात् ॥ **तत्सम्यग्व्यवहारेति** ॥ समाधिस्थत्वं सार्वत्रिकव्यवहारोपयोगि न भवतीत्यर्थः । 'इति' इदं प्रयोजनमिति सम्बन्धः । **अत एव** सार्वत्रिकव्यवहारोपयोगिलक्षणज्ञानस्य प्रश्नप्रयोजनस्य सत्त्वादेव । अयावल्लक्ष्यभावित्वादित्युक्तार्थज्ञापनार्थत्वादेवेति तु स्वामिनः ।

**भावदीपिका (श्री.टि.)**– ननूत्तरश्लोकस्य पूर्वेण सङ्गतेरनुक्तत्वान्न्यूनतेत्यत आह– **ज्ञानिनीति** ॥ **प्रकृत इति** ॥ पूर्वश्लोकेनेत्यर्थः ॥ **लब्धावसर इति** ॥ शङ्कां कर्तुं लब्धावकाश इत्यर्थः । **प्रतिष्ठां** निश्चलताम् ॥ **अर्थान्तरमिति** ॥ तथाच न पुनरुक्तिरिति भावः । ननु व्यवहारकारणलक्षणशब्दस्य नपुंसकत्वादनेनेति वक्तव्येऽनयेति कथमुक्तमित्यत आह– **भाषा-शब्दस्येति** ॥ योगवृत्त्या लक्षणवाचिभाषाशब्दस्येत्यर्थः॥ **अनेकत्वादिति** ॥ वागिन्द्रिय-शब्दज्ञानानामपि व्यवहारकारणत्वादित्यर्थः । **लब्धसमाधिप्रज्ञस्य** लब्धासम्प्रज्ञातसमाध्यव-स्थावत इत्यर्थः ॥ **ज्ञानिसामान्येति** ॥ सम्प्रज्ञातासम्प्रज्ञातोभयावस्थावज्ज्ञानिसामान्येत्यर्थः ।

**इत्यनेनोक्तम्** असम्प्रज्ञातसमाध्यवस्थावत्त्वरूपम् । लक्षणत्वं कुत इत्यत आह– **ज्ञानिमात्रेति** ।। ततश्चातिव्याप्तिशून्यत्वेनासाधारणधर्मत्वाल्लक्षणमित्यर्थः ।। **अन्यथेति** ।। लक्षणान्तरं पृच्छामीत्यभिप्रायाभाव इत्यर्थः ।। **सिद्धप्रश्नोऽयमिति** ।। समाधिस्थस्य ज्ञानिन समाधिस्थत्वमेव लक्षणमिति सिद्धत्वात् समाधिस्थस्य किं लक्षणमिति प्रश्नः सिद्धार्थत्वेनोपेक्ष्यः स्यादिति भावः । यथोक्तम्– 'प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः । सिद्धार्थता च वैफल्यम्' इति ।। **न तदिति** ।। असम्प्रज्ञातसमाध्यवस्थापन्नत्वरूपलक्षणस्य सम्प्रज्ञातसमाध्यवस्थापन्ने ज्ञानिन्यभावेनायावल्लक्ष्यभावित्वेनाव्याप्तत्वान्न सार्वत्रिकव्यवहारोपयोगित्वमित्यर्थः । **सम्यग् व्यवहारः** सार्वत्रिकव्यवहारः । सार्वत्रिकव्यवहारोपयोगि यतोऽतस्तादृशं लक्षणं ज्ञास्यामीति योज्यम् ।। **अत एवेति** ।। सार्वत्रिकव्यवहारोपयोगिलक्षणज्ञानस्य प्रश्नप्रयोजनस्य विद्यमानत्वादेवेत्यर्थः ।। **भाषेति** ।। भाष्यते व्यवह्रियतेऽनयेति सार्वत्रिकव्यहारहेतुभूतलक्षणवाचिभाषाशब्देनोक्तं प्रयोजनं सूचितमिति भावः ।।

**भावप्रकाशः (कृ.टि.)– अर्थान्तरमिति** ।। तथा च न पुनरुक्तिरिति भावः । मूले भाष्यतेऽनयेति । 'गुरोश्च हल' (पा.३.३.१०३) इति करणे प्रत्ययेऽजाद्यतष्टाबिति टापि च भाषेति रूपसिद्धिरिति बोध्यम् ।। **अनेकत्वादिति** ।। लक्षणवदुपदेशादेरपि व्यवहारकारणत्वादिति भावः ।।

## भाष्यम्

**कं ब्रह्माणमीशं रुद्रं च वर्तयतीति केशवः । तथाहि निरुक्तिः कृता हरिवंशेषु रुद्रेण कैलासयात्रायाम् ।।**

'हिरण्यगर्भः कः प्रोक्त ईशः शङ्कर एव च ।
सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान् ।।' इति वचनान्तराच्च ।

**किमासीत किं प्रत्यासीत ।।**

भावप्रदीपिका (प.टी.)– **स्थितप्रज्ञोत्तमप्रवर्तको हरिर्जानात्येव तल्लक्षणमिति भावेनाह– कमिति ।।**

श्लोकः ५४

'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतौ ततः केशवनामवान् ॥' इति हरिवंशे

आसाया अकर्मकत्वात् कथं आसीत किमिति भ्रान्तिर्मा भूदित्याह– **किमिति ॥**

भावप्रकाशिका (न.टी.)– स्थितप्रज्ञमुख्यौ केशौ वर्तयति च भगवान्, तल्लक्षणं भगवतैव वक्तव्यमित्यर्जुनाभिप्रेतं केशवशब्दार्थमाह– **कमिति ॥**

'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतौ ततः केशवनामवान् ॥'

इति हरिवंशवचनाच्चेयं निरुक्तिर्ग्राह्येत्याह– **तथा हीति ॥** आसेरकर्मकत्वात् 'किमासीत' इत्युक्तौ 'आसीत न वा' इत्यपि प्रतीतिः स्यात् । तां व्यावर्तयन् यथावद्व्याचष्टे– **किमिति ॥**

प्रमेयदीपिका (ज.टी.)– 'कश्च, अश्च, ईशश्च केशाः ब्रह्मविष्णुमहेश्वराः । ते यस्यावयवभूताः स केशवः परमात्मोच्यते' इति भास्करो निरुक्तवान् 'एतत् श्रुत्वा वचनं केशवस्य' इत्यत्र । तदसदिति भावेनाऽह– **कमिति ॥** कुत इयं निरुक्तिः? इत्यत आह– **तथाहीति ॥**

'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिषु ।
आवां तवाङ्गसम्भूतौ ततः केशवनामवान् ॥'

इति हरिवंशवचनम् ॥ वचनान्तराच्चेयमेव निरुक्तिः स्वीकार्येत्याह– **हिरण्यगर्भ इति ॥** अत इति लभ्यते । तेनैवशब्दस्यान्वयः । हिरण्यगर्भ एव नत्वन्यः प्रजापतिः । शङ्कर एव नत्वन्यः समर्थ इति वा । अनेन केशयोः कर्मणोरुपपदयोरन्तर्णीतण्यर्थात् 'वृतु वर्तने'(पा.धा.७५८) इत्यस्माद्धातोः 'डोऽन्यत्रापि दृश्यते' इति डप्रत्यय इत्युक्तं भवति । आसेरकर्मकत्वात् कथं कर्मप्रश्नः? इत्यत आह– **किमासीतेति ॥** अध्याहृतप्रतियोगनिमित्ता द्वितीया । न कर्मणीत्यर्थः ॥

भावदीपः (रा.टि.)– एवशब्दान्वयं दर्शयन्नेव तद्व्यावर्त्यमाह– हिरण्यगर्भ एवेत्यादिना ॥

**डप्रत्यय इति ॥** डित्यभस्यापि टेर्लोप इति टिलोपे केशव इति रूपमिति भावः ॥ **आसेरिति ॥** 'आस उपवेशने' (पा.धा.१०२१) इत्यस्येत्यर्थः ॥

**वाक्यार्थप्रदीपः (पां.टि.)– अन्यत्रापि दृश्यत इतीति ॥ 'अन्येष्वपि दृश्यते'** (पा.३.२.१०१) इत्येतत्सूत्रीयस्य 'अन्येभ्योऽपि दृश्यते इति वक्तव्यम्' इतिवार्तिकस्यायमर्थतोऽनुवादः । यद्यपि सूत्रस्थसर्वोपाधिव्यभिचारार्थापिशब्दबलादेव उपपदानियमधात्वनियमयोः सिद्ध्या उपपदान्तरे धात्वन्तरादपि 'अन्येष्वपि दृश्यते' इति सूत्रेणैव डप्रत्ययसिद्ध्या वार्तिकस्यैव अनारम्भणीयत्वम् । अत एव[1] माधवेनोक्तम्– परितः खाता परिखा 'अन्येष्वपि दृश्यत इती'ति । ततश्च 'डोऽन्यत्रापि दृश्यते' इति तदर्थानुवादो न युक्तः । तथाप्यङ्गीकृत्य वार्तिकारम्भमर्थतस्तदनुवादः कृतः । वस्तुतस्तु अन्तात्यन्तेति (पा.३.२.४८) सूत्रीयं वार्तिकमेवैतत् । अत एव धातुवृत्तिकृता 'ग्रामगः डोऽन्यत्रापि दृश्यत इति डः' इत्युक्तम्[2] । अन्यत्रापि 'विहगः, डोऽन्यत्रापि दृश्यत इति डः' इति ॥ यद्यपि गमेरयं डो व्यापारितः । तथाप्युपपदानियमवत् धात्वनियमोऽप्य विशेषेण वक्तुं शक्यत इति भावेन इह टीकायां वर्ततेरपि व्यापारित इति द्रष्टव्यम् ॥

**डप्रत्यय इतीति ॥** ततश्च डित्वात् ऋत् इति टिलोपे केशवरूपनिष्पत्तिरिति भावः ॥ **अध्याहृतप्रतियोगनिमित्ता द्वितीयेति ॥**

> 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
>
> द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' (महाभाष्य.२.३.२)

इत्यत्र तसिलन्तस्योभशब्दस्याभावात् एकदेशग्रहणेनोभयशब्दस्यैव ग्रहणात् तसिलन्तोभयसर्वशब्दयोः धिक्शब्दस्य च प्रयोगे द्वितीयां विधाय कृतद्विवचनेषु उपर्यधःशब्देष्वपि प्रयुज्यमानेषु द्वितीयां विधाय ततः 'अन्यत्रापि दृश्यते' इति प्रापकलक्षणान्तराभावेऽपि यत्र अभियुक्तप्रयोगानुसारेण द्वितीया दृश्यते तत्र द्वितीयाभ्यनुज्ञानात् । वृत्तिकारेण 'अभितःपरितः समयानिकषाहाप्रतियोगेषु' इति अन्यत्र शब्दस्य व्याख्यातत्वात् प्रतिशब्दयोगे एवेयं द्वितीयेत्यर्थः । नन्वत्र प्रतिशब्दादर्शनात् न तद्योगे द्वितीयेयं वक्तुं युक्तेत्यत उक्तम्–

१. माधवीयधातुवृत्तौ भ्वादिषु खनु अवदारणे(६०७) इति धातुव्याख्यानावसर उक्तम् ।

२. माधवीयधातुवृत्तौ भ्वादिषु गम्लृ गतौ (७००) इति धातुव्याख्यानावसर उक्तम् ।

श्लोकः ५४

**अध्याहृतेति** ।। न **कर्मणीत्यर्थ इति** । ततश्चोपपदविभक्तित्वेन कर्मकारकविभक्तित्वाभावात् कारकविभक्तित्वे कर्मप्रश्नत्वेन तदनुपपत्तिप्रसक्तावपि जसेः कर्मानपेक्षक्रियाभिधायकत्वेनाकर्मकत्वात् कर्मप्रश्नत्वाभावेन न तदनुपपत्तिशङ्कावकाश इति भावः ।

**भावरत्नकोशः (सु.टि.)**– केशा अस्य सन्तीत्यत्र षष्ठ्यर्थं सम्बन्धं वक्तुमुक्तम्– **अवयवभूता इति** ।। 'केशाद्वोऽन्यतर-स्याम्' इति वप्रत्ययो मत्वर्थीय इति भाव इति केचित् । अपरे तु प्रकृतस्य केशशब्दस्य 'आद्गुणः' इत्येकादेशेन सिद्धस्य लाक्षणिकतया 'केशाद्वोऽन्यतरस्याम्' इति सूत्रे ग्रहीतुमशक्यत्वान्न तेन वप्रत्ययः । 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषाविरोधात् । किन्तु सूत्रे 'अन्येभ्योऽपि दृश्यते' इति यद् वार्तिकं तेनात्र वप्रत्यय इति व्याचक्षते । **सृष्ट्यादिना वर्तयति** जगत्सृष्टिसंहारौ प्रति नियमयति । **अत इति लभ्यत इति** ।। यतश्शब्दश्रवणादिति शेषः । **अन्यः** दक्षादिः । 'ईश ऐश्वर्ये' इति धातोस्सामर्थ्यमीशशब्दाभिधेयमिति भावेनोक्तं– **समर्थ इति** ।। **केशयोः कर्मणोः** कशब्देशशब्दयोः कर्मवाचिनोः । **डोऽन्यत्रापि दृश्यत इति डप्रत्यय इति** ।। डप्रकरणे 'अन्यत्रापि दृश्यते' इति वार्तिकादत्र डप्रत्यय इत्यर्थः । यद्यपीदं वार्तिकमुपपदान्तरेऽपि गमेर्डप्रत्ययविधानार्थं कृतम् । ग्राम इत्याद्युदाहरणात् । तथाच नानेन वृतेर्डप्रत्ययः शक्यो विधातुम् । तथाऽप्यपिशब्दस्य 'अन्येष्वपि दृश्यते' इत्यत्रेव सर्वोपाधिव्यभिचारार्थत्वात् 'वृतु वर्तने' इत्यस्मादपि डप्रत्ययो वक्तव्य इति भावेनैवमुक्तम् ।।

केचित्तु, 'गमेश्च' इत्यधिकारस्थवार्तिकमेवेदं न भवति । किन्तु 'सप्तम्यां जनेर्डः' इति प्रकरणस्थस्य 'अन्येष्वपि दृश्यते' इति सूत्रस्यैवायमर्थतोऽनुवादः 'डोऽन्यत्रापि' इति ।। तत्र चापिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि डप्रत्ययो भवति । परितः ख्यातः परिख्य इत्युदाहृतं वृत्ताविति प्रकृते वृत्तेरपि डप्रत्यय इति व्याचक्षते । केशवशब्देन भगवत्सम्बोधने प्रयोजनमुक्तं भावप्रदीपिकायां– 'स्थितप्रज्ञोत्तमब्रह्मरुद्रप्रवर्तको भगवान् जानात्येव प्रश्नपरिहाराय तल्लक्षणमिति ज्ञापयितुम्' इति ।। तथा च प्राचीनटीका– 'स्थितप्रज्ञमुख्यौ केशौ वर्तयति भगवानिति तल्लक्षणं भवतैव वक्तव्यमित्यर्जुनाभिप्रेतं केशवशब्दार्थमाह' इति ।। **आसेः** आस उपवेशन इति धातोः । 'आसीत किमित्यन्वयभ्रान्तिं वारयन् यथावद् व्याचष्टे 'किं प्रतीति' इति भावप्रदीपिकायाम् । **प्रतियोगेति** ।। प्रतेः कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । न पुनः 'कर्मणि द्वितीया' इति सूत्रेणेत्यर्थः ।।

**भावदीपिका (श्री.टि.)– कश्च अश्चेति** ॥ अत्र पूर्वरूपे सति क इत्येव भवतीति ज्ञातव्यम् ॥ **अवयवभूता इति** ॥ **यस्य** अवयविभूतस्य । कृष्णस्यावयवभूता इत्यर्थः । अवयव-भूता इति मत्वर्थीयवप्रत्ययार्थः । तथाह्युक्तम्– 'केशाद् वोऽन्यतरस्याम्' इति । केशशब्दा-न्मत्वर्थे वप्रत्ययः स्याद् विकल्पेनेति सूत्रार्थः । एवं च केशशब्दात् ते अस्य सन्तीति मत्वर्थे वप्रत्यये केशवेति रूपम् । तत्र तद्वत्त्वं कथमस्येति शङ्कायाम् अवयविनोऽवयवत्वं प्रसिद्ध-मित्यभिप्रेत्य मत्वर्थविवरणं कृतं ते यस्यावयवभूता इति ॥

नन्वेतच्छ्लोकव्याख्यानपरे भास्करीयभाष्ये केशवशब्दस्यानिरुक्तत्वात् कथं 'भास्करो निरुक्तवान्' इति असदनुवादः क्रियते? इत्यत आह– **एतत् श्रुत्वेति** ॥ सर्वदेहिषु विषये ईशः । सम्भूतौ च । त्वमिति शेषः । व्यावृत्तिसमुच्चयार्थकयोर्विरुद्धयोरेवचशब्दयोरेकत्रान्वया-योगादध्याहृतातश्शब्देनान्वय इत्याशयेनाऽह– **अत इतीति** ॥ यच्छब्दबलादिति भावः ॥ **तेनेति** ॥ तथाचात एव भवान् केशव इति सम्बन्धो द्रष्टव्यः । अतश्शब्दाध्याहारेऽपि न तेनैवशब्दसम्बन्ध इत्येवं पक्षान्तरमाह– **हिरण्यगर्भ एवेति** ॥ हिरण्यगर्भ एव कशब्देनोक्तः, नत्वन्य प्रजापतिर्दक्षः । तथा शङ्कर एवेशशब्देनोक्तो नत्वन्यः कश्चित् समर्थो राजादिरित्यर्थः । **अन्तर्णीतेति** ॥ अत एव सृष्ट्यादिना वर्तयतीति णिजर्थो दर्शित इति ज्ञातव्यम् ॥

ननु 'सप्तम्यां जनेर्डः' 'पञ्चम्यामजातौ' इति सप्तम्यन्ते पञ्चम्यन्ते वोपपदे डप्रत्ययविधानात् पङ्कजमित्युदाहृतत्वाच्च कथमत्र कर्मण्युपपदे सति डप्रत्यय इत्यत आह– **डोऽन्यत्रापीति** ॥ अन्यत्रापि द्वितीयान्ते उपपदेऽपि डप्रत्ययो दृश्यत इत्यर्थः । तथाच केशयोः शब्दयोः कर्मणो-रुपपदयोः सतोः वृतु वर्तने अस्माड्डप्रत्यये तस्य लोपे टिभूतस्य ऋत् इत्यस्य लोपे प्रत्ययाकारे च मिलिते सति केशव् अ, केशवेति रूपम् । **आसेः** अस भुवीति धातोः ॥ **कथमिति** ॥ 'किमासीत' इति कर्मप्रश्नः कथमित्यर्थः ॥ **अध्याहृतेति** ॥ किमित्यत्र न कर्मणि द्वितीया । किन्तु 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति कर्मप्रवचनीयसञ्ज्ञकप्रति-शब्दाध्याहारेण 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रेण द्वितीयेति भावः ॥

**भावप्रकाशः (कृ.टि.)– स केशव इति** ॥ केशा अस्य सन्तीत्यर्थे केशाद्वोन्यतर-स्यामिति वप्रत्ययः । प्रकृते केशशब्दस्य आद्गुण इति एकादेशेन लाक्षणिकतया सौत्रकेशशब्देन ग्रहीतुमशक्यत्वात् लक्षणप्रातिपदोक्तयोः प्रातिपदोक्तस्यैव ग्रहणमिति परिभाषाविरोधात् । किन्तु

श्लोकः ५४

उक्तसूत्रेऽन्येभ्योऽपि दृश्यत इति यद्वार्तिकं तेनात्र वप्रत्ययः । 'अवयवभूताः' इत्युक्तिस्तु पर्यवसितार्थाभिप्रायेणेति बोध्यम् । **डोऽन्यत्रापि इति** ॥ एतद्वार्तिकस्य' अन्तात्यन्त'इति डप्रकरणस्थत्वात् प्रकरणलब्धप्रत्ययकथनाय ड इत्युक्तम् । न त्वेवमेव वार्तिकपाठ इति ज्ञेयम् ॥ ननूक्तवार्तिकेनोपपदान्तरे सति गमेरेव डो विहितः, 'गमेश्च' इत्यधिकाराद् ग्रामग इत्याद्युदाहरणाच्च । तत्कथमत्र तेन ड इति चेत्– सत्यम् । तथाऽप्युक्तवार्तिके धात्वन्तरादपि डोऽभिप्रेतः । काव्ये दुर्घटवृत्तौ 'अरिहयोगविचक्षण' इत्यत्रारिशब्दोपपदाद्धन्तेरन्यत्रापि दृश्यत इति ड इत्युक्तत्वात् सर्वोपाधिव्यभिचारार्थापिशब्दप्रयोगाच्च । वस्तुतस्तु 'अन्येष्वपि दृश्यते' इति सूत्रस्यार्थानुवादोऽयम् 'डोऽन्यत्रापि दृश्यत इति' इति । तथा च 'अन्येष्वपि दृश्यते' इति सूत्रेणात्र डप्रत्ययः । तेनोपपदान्तरेपि धात्वन्तरादपि डप्रत्ययविधानादिति बोध्यम् ॥

## भाष्यम्

**न चार्जुनो न जानाति तल्लक्षणादिकम् ।**

**'जानन्ति पूर्वराजानो देवर्षयस्तथैव च ।**
**तथाऽपि धर्मान् पृच्छन्ति वार्तायै गुह्यवित्तये ।**
**न ते गुह्याः प्रतीयन्ते पुराणेष्वल्पबुद्धिनाम् ॥' इति वचनात् ॥५४॥**

**भावप्रदीपिका (प.टी.)– स्वयमपरोक्षज्ञान्यर्जुनश्चेत् किमिति तल्लक्षणादिकं पृच्छति ? इत्यत आह– नचेति ॥ ५४ ॥**

**भावप्रकाशिका (न.टी.)– यः स्वयं स्थितप्रज्ञः स्थितप्रज्ञोत्तमप्रवर्तकं श्रीविष्णुं च जानाति स कथं तल्लक्षणादि (न) जानाति ? अतः किमर्थं पृच्छति ? इत्यत आह– नचेति ॥ आदिशब्देन तत्प्रवृत्त्युद्देश्यम् ॥ ५४ ॥**

प्रमेयदीपिका (ज.टी.)– प्रश्नकरणादर्जुनस्याज्ञत्वं प्रतीतम् । तन्निवारयति– **नचेति** ॥ तल्लक्षणादिकं ज्ञानिलक्षणं तत्प्रवृत्त्यनुपपत्तिसमाधानं च । प्रश्नस्यान्यथोपपत्तेरिति भावः । कुतः? इत्यत आह– **जानन्तीति** ॥ समासान्तो विधिरनित्यः । अतः 'पूर्वराजानः' इति साधु । देवर्षयश्च तथैव जानन्त्येव । 'धर्मान्' इत्युपलक्षणम् । वार्तायै गुरोरात्मनां च

ख्यात्यै । लोकस्य गुह्यार्थवित्तये च । एतेषां प्रश्नकरणं लोकानां कथं गुह्यार्थवित्तये भवति? इत्यतो व्यतिरेकमुखेन उपपादयति– **न त इति** ॥ **'छन्दस्युभयथा'** (पा.सू.३.४.११७) इत्यतः **'अल्पबुद्धिनाम्'** इति दीर्घत्वाभावः । गुह्यास्तेऽर्थाः पुराणादिषु प्रश्नोत्तरनिबन्धनेन विनोक्तिमात्रेणाल्पबुद्धीनां व्यक्तं न प्रकाशन्ते । नच प्रश्नाकरणे तदुपनिबन्धनं सम्भवतीत्यर्थः । एतेन **'मोहादिस्त्वभिभवादेः'** इत्येतत् प्रपञ्चितं भवति ॥ ५४ ॥

**भावबोधः (र.टि.)– अन्यथोपपत्तेरिति** ॥ विशेषज्ञानाद्यर्थत्वेनेत्यर्थः । ज्ञानिलक्षणादिकं जानन्तीत्यत्र कथमिदं मानमित्यत आह– **धर्मानित्युपलक्षणमिति** ॥ **प्रपञ्चितमिति** ॥ आदिशब्दद्वयार्थत्वेनाभिमतप्रश्नविशेषज्ञानादौ प्रमाणोपन्यासेनेत्यर्थः ॥ ५४ ॥

**भावदीपः (रा.टि.)– अन्यथोपपत्तेरिति** ॥ लोकानुग्रहाद्यर्थतयोपपत्तेरिति भावः ॥ ननु 'राजाहस्सखिभ्यष्टच्' (पा.सू.५.४.९१) समासान्ते सति 'पूर्वराजा' इति भाव्यमित्यत आह– **समासान्त इति** ॥ 'ऋक्पूरब्धूःपथामानक्षे' (पा.सू.५.४.७४) इति निर्देशात् ज्ञापकादनित्य इति भावः ॥ **धर्मानित्युपलक्षणमिति** ॥ 'ज्ञानिलक्षणादिकस्य' इति योज्यम् । तेनोक्तार्थसंवादीदमिति भावः ॥ ननु अङ्गपादे ('ह्रस्वनद्यापो नुट्' (पा.सू.७.१.५४) 'नामि' (पा.सू.६.४.३) इति सूत्रेण दीर्घोक्तेः 'बुद्धीनाम्' इति भाव्यमित्यत आह– **छन्दस्युभयथा अपीति** ॥ **इत्येतत्प्रपञ्चितमिति** ॥ 'मोहादिस्त्वभिभवादेः' इत्यत्र क्रमाद् आदिपदद्वयार्थप्रश्नलोकानुग्रहयोः प्रदर्शनेन प्रपञ्चितमित्यर्थः ॥ ५४ ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु पूर्वे च ते राजानश्चेति पूर्वशब्देन राजन्शब्दस्य समासे राजन्शब्दस्य तत्पुरुषतया तस्मात् 'राजाहस्सखिभ्यः टच्' इति टचि टिलोपे च परिनिष्पन्नपूर्वराजशब्दस्याकारान्ततया 'पूर्वराजाः' इति प्रथमाबहुवचनेन भवितव्यम्, 'पूर्वराजानः' इति तु कथम्? इत्यत आह– **समासान्तो विधिरनित्य इति** ॥ एतद्विधेरनित्यत्वं च देवादीनामादिराज्ञामित्युत्तराध्याये ग्रन्थकार एव ज्ञापकोक्त्या व्युत्पादयिष्यतीति न तद्व्युत्पादनं पृथगपेक्षितम् ॥ ननु 'नामि' इति नामि परतः अदन्ताङ्गस्य दीर्घताविधानात् तत्पराल्पबुद्धिशब्दस्य दीर्घतायां 'अल्पबुद्धीनाम्' इति भवितव्यम् । 'अल्पबुद्धिनाम्' इति तु कथम्? इत्यतः 'छन्दस्युभयथा' इति छन्दसि नामि दीर्घत्वादीर्घत्वयोरनुशासनात्, पुराणस्यापि 'इतिहास-

श्लोकः ५४

पुराणः पञ्चमो वेदानां वेदः' इति छन्दस्तुल्यत्वात् 'अल्पबुद्धिनाम्' इति नामि दीर्घत्वाभावो युक्त एवेत्याह– **छन्दस्युभयथेत्यतो अल्पबुद्धिनामिति नामि दीर्घत्वाभाव इति** ।।

यद्यपि वृत्तिकृता तिसृचतसृशब्दयोः नामि दीर्घत्वादीर्घत्वविषयतया एतत् सूत्रं व्याख्यातम्। तथाऽपि धातृणां धातॄणामित्यादि वैदिकप्रयोगसंरक्षणार्थम् अविशेषेण नामि दीर्घत्वादीर्घत्वविषयतया एतत्सूत्रीयहरदत्तादिव्याख्यानमनुसृत्य अस्यात्रोपन्यास इति द्रष्टव्यम् ।।

**भावरत्नकोशः (सु.टि.)**– यः स्वयं स्थितप्रज्ञः स्थितप्रज्ञोत्तमप्रवर्तकं श्रीविष्णुं च जानाति स कथं तल्लक्षणादिकं न जानाति ? चेज्जानाति, प्रश्नो न युज्यते । अज्ञानमूलत्वात् तस्येति प्रश्नान्यथानुपपत्त्या प्राप्तमज्ञानमपाकर्तुं प्रवृत्तमुत्तरभाष्यमवतारयति– **प्रश्नेति** ।। आदिशब्दार्थमाह– **तत्प्रवृत्तीति** ।। ज्ञानिप्रवृत्तीत्यर्थः। लक्षणादिज्ञाने प्रश्नानुपपत्तिरित्यत आह– **प्रश्नस्येति** ।। **अन्यथेति** ।। लोकानुग्रहगुर्वात्मख्यात्याद्यर्थत्वेनोपपत्तेरित्यर्थः । कुतः जानात्येवेत्येतत् ।

ननु कथं पूर्वराजान इति प्रयोगः ? यावता 'राजाहस्सखिभ्यष्टच्' इति सूत्रेण टच्प्रत्ययो विहितः । महाराजाय नम इत्युदाहरणं चेत्यत आह– **समासान्त इति** ।। 'द्वित्रिभ्यां पाद्दन्मूर्धसु' इति निर्देशेन, 'प्रतेरंश्वादयश्च' इत्यत्र अंश्वादिगणे राजशब्दस्य पाठेन च समासान्तविधेरनित्यत्वज्ञापनादाह– **अनित्य इति** ।। तथैवेत्यनुवादः । जानन्त्येवेति व्याख्या । ज्ञानिलक्षणस्यात्र प्रश्नविषयत्वात् तस्य च अग्निहोत्रादिवद्धर्मरूपत्वाभावात् कथमस्य प्रकृते प्रमाणत्वमित्याशङ्क्याह **उपलक्षणमिति** ।। ज्ञानिलक्षणादेरिति योज्यम् । वार्ताशब्देन वृत्तान्तादिग्रहणे प्रकृतासङ्गतिरित्यतः अर्थान्तरमाह– **वार्ताया इति** ।। स्वस्य गुह्यार्थवित्तय इति योजनायां जानन्तीत्यनेन व्याहतिः। तेन 'गुह्याः' इत्युक्त्यनानुगुण्यं चेत्यत आह– **लोकस्येति** ।। पूर्वार्धगतचशब्दावृत्तिमभिप्रेत्येयमुक्तिः । **एतेषां** पूर्वराजानां देवऋषीणां चेत्यर्थः । ननु नामि परतो दीर्घत्वे अल्पबुद्धीनामिति स्यादित्यत आह– **छन्दसीति** ।। दीर्घप्रकरणस्थमिदं सूत्रम् । नामि दीर्घो वा स्याच्छन्दसीति तदर्थः । व्यतिरेकमुखेनोपपादयतीत्युक्तं विवृणोति **गुह्यास्तेऽर्था इति** ।। अकृतप्रश्नस्याप्युपनिबन्धोऽस्त्वित्यत आह– **न चेति** ।। केनचिद-कृतस्यापि प्रश्नस्य स्वयमुत्प्रेक्षयोपनिबन्धे प्रतारकतादोषः पुराणकर्तुः स्यादिति भावः ।

नन्वर्जुनस्य ज्ञानित्वे 'यज्ज्ञात्वा न पुनर्मोहम्' इति मोहः कथमुच्यते ? कथं च तस्य तत्र तत्र प्रश्नकरणम् ? इत्याशङ्का 'मोहादिस्त्वभिभवादेः' इति भाष्ये परिहृता । अतो 'न चार्जुनः' इत्यादिग्रन्थस्तेन गतार्थः । तत्रादिपदेन प्रश्नस्य ख्यात्याद्यर्थं करणसम्भवादित्यत आह– **एतेनेति** ॥ 'वार्तायै गुह्यवित्तये' इति प्रमाणोदाहरणेनेत्यर्थः । 'मोहादिः' इति भाष्ये प्रथमादिपदेन प्रश्नो ग्राह्यः। द्वितीयादिपदेन तु न केवलं 'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय च' इति प्रमाणावेदितं विशेषज्ञानं स्थापनं च ग्रहीतव्यम् । किन्त्वेतत्स्मृतिबलात् ख्यात्याद्यपीति पूर्वोक्तस्य प्रपञ्चनान्न गतार्थताशङ्केति भावः ।

**गीताक्षरार्थस्तु**— ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीत्युच्यते **अर्जुन उवाचेति** ॥ **केशव** केशयोः कर्मणोरुपपदयोरन्तर्णीतण्यर्थाद् वृतु वर्तन इत्यस्माड्डुप्रत्यये कं ब्रह्माणम् ईशं रुद्रं च वर्तयतीति केशवः । तत्सम्बुद्धिः । ब्रह्मरुद्रप्रवर्तक । **स्थिता** प्रतिष्ठां प्राप्ता प्रज्ञा अपरोक्षज्ञानं यस्य स तथा । तस्य का भाषा ? भाष्यते ज्ञानीति व्यवह्रियतेऽनयेति भाषा लक्षणम् । ज्ञानीति येन लक्षणेन पुरुषो व्यवहारकर्म भवति तल्लक्षणं किम् ? सास्नादिमत्त्वं लक्षणं दृष्ट्वा हि गौरिति व्यवह्रियते । ज्ञानिसामान्यलक्षणविषय एवायं प्रश्नो न तु लाब्धसमाधिप्रज्ञलक्षणविषयः । किमर्थं तर्हि 'समाधिस्थस्य' इति लक्ष्यविशेषोक्तिरिति चेत् 'समाधावचला बुद्धिः' इत्यनेनोक्तं ज्ञानिलक्षणमनेनानुवदतीति वदामः । न हीदमलक्षणम् । ज्ञानिमात्रनिष्ठधर्मत्वात् । किमर्थोऽनुवाद इति चेत् तज्ज्ञातं मयेति ज्ञापनार्थ इति ब्रूमः । एतज्ज्ञापनेऽपि किं प्रयोजनमिति चेत्, लक्षणान्तरं पृच्छामीति ज्ञापनम् । अन्यथा सिद्धप्रश्न एवायमित्युपेक्ष्यः प्रसज्येत । लक्षणान्तरप्रश्नस्य चेदं प्रयोजनम् अयावल्लक्ष्यभावित्वाज्ज्ञातमपि लक्षणं न सम्यग् व्यवहारोपयोगि । यावल्लक्ष्यभावि तु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीति । अत एव प्रसिद्धलक्षणपदपरित्यागेनाप्रसिद्धभाषापदोपादानमिति ॥ स्थितधीः अपरोक्षज्ञानी किं प्रभाषेत ? किंविषयकं भाषणं कुर्यात् ? किमासीत ? प्रतीति शेषः। किं प्रत्यासीत ? किमुद्दिश्य च व्रजेत ? किमुद्देश्यकप्रवृत्तिं कुर्यादिति ॥ ५४ ॥

**भावदीपिका (श्री.टि.)– समाधानं** गमनादिप्रवृत्तिरित्यादिरूपं 'या निशा' इत्यादिना वक्ष्यमाणम् । नन्वर्जुनस्य लक्षणादिज्ञाने तद्विषयकप्रश्नकरणं न युक्तम् । तस्य सन्देह-मूलकत्वादित्यत आह– **प्रश्नस्येति** ॥ **अन्यथोपपत्तेरिति** ॥

श्लोकः ५४

'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा ।
पृच्छन्ति साधवो यस्मात् तेन पृच्छसि पाण्डव'

इति वचनाद् विशेषज्ञानाद्यर्थत्वेनोपपत्तेरित्यर्थः ॥

ननु पूर्वराजन्शब्दात् 'राजाहः सखिभ्यष्टच्' इति टच्प्रत्यये टिभूत'अन्' इत्यस्य लोपे पूर्वराजेत्यकारान्तप्रातिपदिके सति जसि पूर्वराजा इति भाव्यम् । पूर्वराजान इति तु कथमित्यत आह– **समासान्त इति** ॥ अनित्यत्वादत्र टच् न जात इति नकारान्तमेव प्रातिपदिकमिति भावः ॥ **तथैवेति** ॥ पूर्वराजवज्ज्ञानन्त्येवेत्यर्थः । ज्ञानिलक्षणादिकं जानन्तीत्यत्र कथमिदं मानमित्यत आह– **धर्मानिति** ॥ ज्ञानिलक्षणादिकमपि ग्राह्यमिति भावः । **कथं** भवतीत्यन्वयः। व्यधिकरणत्वादित्याशयः ॥ **उपपादयतीति** ॥ तत्प्रश्नोत्तरस्य पुराणेषूपनिबन्धनेन भविष्यतीत्याशयेनोपपादयतीत्यर्थः ॥

ननु 'बुद्धि आम्' इति स्थिते 'ह्रस्वनद्यापो नुट्' ह्रस्वान्तान्नद्यन्तादाबन्ताच्च परस्याऽमो नुडागमः स्यादिति सूत्रेण नामि परेऽजन्तशब्दस्याङ्गस्य बुद्धीत्यत्र इकारस्य दीर्घेऽल्पबुद्धीनामिति स्यादित्यत आह– **छन्दसीति** ॥ छन्दसि विषये सौत्रे विधिरुभयथा भवतीत्यर्थः । तथाच कदाचिद्दीर्घो भवति कदाचिन्नेत्यर्थः । अस्यापि वचनस्य छन्दःकल्पत्वान्नामि परे दीर्घस्याजातत्वादल्पबुद्धिनामिति युक्तमिति भावः । नन्वकृतस्यापि प्रश्नस्योपनिबन्धोऽस्त्विति चेत्, तत्राऽह– **नच प्रश्नाकरण इति** ॥ तथा सति प्रतारकत्वप्रसङ्गादिति भावः ॥ **एतेनेति** ॥ 'प्रश्नकरणं लोकानां गुह्यवित्तये' इति प्रमाणोपन्यासेनेत्यर्थः । 'मोहादिस्त्वभिभवादेः' इत्यत्राऽद्यादिपदेन प्रश्नप्रकरणं द्वितीयादिपदेन विशेषज्ञानादिरूपनिमित्तग्रहणम् । तथाच मोहोऽभिभवात् प्रश्नकरणं च गुह्यवित्तय इति यत्पूर्वोक्तं तत्प्रमाणोक्त्या प्रपञ्चितं भवति । आदिपदद्वयोक्तार्थेऽस्य प्रमाणत्वादिति भावः ॥ ५४ ॥

**भावप्रकाशः (कृ.टि.)**– नन्वर्जुनस्याज्ञानित्वे लक्षणादिप्रश्नोऽनुपपन्न इत्यत आह– **प्रश्नस्यान्यथोपपत्तेरिति** ॥ गुर्वादिख्यात्याद्यर्थत्वेनोपपत्तेरित्यर्थः ॥ ननु 'राजाहस्सखिभ्यष्टच्' इति टच्प्रत्यये पूर्वराजा इति स्यादित्यत आह– **समासान्त इति** ॥ ननु ज्ञानिलक्षणादिकं जानातीत्यत्र कथमिदं मानं लक्षणादिज्ञानित्वानुक्तेरित्यत आह– **धर्मानित्युपलक्षणमिति** ॥

ननु वार्ताशब्देन वृत्तान्तग्रहणेऽसङ्गतिरित्यत आह– **वार्तायामिति** ॥ वृत्तिर्गुरोरात्मनां च वृत्तमस्यामस्ति विषयतयेति वार्ता । 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' इति णप्रत्यये आदिवृद्धिः । तथा च योगेनोक्तार्थलाभ इति भावः । ननु 'स्वस्य गुह्यार्थवितये' इति व्याख्याने जानन्तीत्यनेन व्याहतिः । न ते गुह्या इत्युपपादनानानुगुण्यश्चेत्यत आह– **लोकस्येति** ॥ **छन्दस्युभयथेतीति** ॥ नामि यो दीर्घस्तत्प्रकरणस्थमिदं सूत्रम् । अस्यार्थः सिद्धान्तकौमुद्यामुक्तः । नामि दीर्घो वा स्याच्छन्दसीति । ननु नचार्जुन इत्यादिग्रन्थो मोहादिस्त्वभिभवादेरित्यनेनैव गतार्थः । तत्रादिपदाभ्यां प्रश्नस्य ख्यात्याद्यर्थत्वसूचनादित्यत आह– **एतेनेति** ॥ प्रश्नस्य ख्यात्याद्यर्थत्वप्रतिपादनेनेत्यर्थः । तथा च मोहादिरिति वाक्ये प्रथमादिपदेन प्रश्नः, द्वितीयेन तु न केवलं प्रमाणान्तरबलाद्विशेषज्ञानं स्थापनं च ग्राह्यम् । किन्त्वेतत्स्मृतिबलात् ख्यात्याद्यपीति पूर्वोक्तस्यैव प्रपञ्चनान्न गतार्थतेति भावः ॥ ५४ ॥

श्रीभगवानुवाच–

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवाऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

## भाष्यम्

**गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका । मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन् लक्षणं प्रथमत आह– प्रजहातीति ॥ एवं परमानन्दतृप्तः किमर्थमेवं प्रवृत्तिं करोति? इति प्रश्नाभिप्रायः । प्रारब्धकर्मणा ईषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धिपूर्विका प्रवृत्तिः सम्भवति इत्याशयवान् परिहरति ॥**

भावप्रदीपिका (प.टी.)– चोद्यद्वयपरिहारच्छेदेनोत्तरं प्रघट्टकमवतारयति– **गमनादीति** ॥ ननु 'या निशा' इत्यादिना दर्शयिष्यन्, एतल्लक्षणं तदुद्देश्य पृच्छेत् (?) किं कारणम् ? इत्यत आह– **एवमिति** ॥ ननु परमानन्दतृप्तस्येषदभिसन्धिपूर्विका प्रवृत्तिरपि कथम् ? इत्यत आह– **प्रारब्धेति** ॥

श्लोकः ५५

**भावप्रकाशिका (न.टी.)– 'का' इति लक्षणं पृष्टम्, 'किम्' इति तत्प्रवृत्त्युद्देश्यम् । तदुभयोत्तरत्वेनोत्तरं ग्रन्थसन्दर्भमवतारयति– गमनादीति ।। पृच्छति लक्षणं तत्स्वरूपज्ञापनार्थं लोकस्य । तत्प्रवृत्त्युद्देश्यं किमिति ? इत्याकाङ्क्षायामाह– एवमिति ।। ब्रह्मप्रत्यक्षदर्शनेन परमानन्दमग्नत्वाद्यस्य बुद्धिर्भेरीताडनादावपि ततो नापगच्छति, तस्येतरविषयाभिसन्धानमीषदपि कुतः ? इत्यत आह– प्रारब्धेति ।।**

**प्रमेयदीपिका (ज.टी.)–** लक्षणप्रश्नस्यैवोत्तरं प्रतीयते । न तु 'स्थितधीः' इत्यादेः, इत्यतस्तदुत्तरस्थानं दर्शयन् अनन्तरप्रकरणार्थं दर्शयति– **गमनादीति** ।। अभिसन्धिः प्रयोजनोद्देशः । ईषदभिसन्धिसूचनाय अतिशब्दः । प्रवृत्तिमात्रमिहाभिप्रेतम् । न भाषणादिकमेवेति ज्ञापनाय 'भाषणादि' इति नोक्तम् । व्यवहाराय लक्षणप्रश्नो घटते । प्रवृत्त्युद्देश्यप्रश्नस्तु व्यर्थ एव । नच शक्यः प्रतिवक्तुम् । अनेकेषां प्रवृत्त्युद्देश्यस्यैकरूपस्याभावादित्यभिप्रायेण भगवतोपेक्षितोऽसाविति किं न स्यात्? किं तदुत्तरस्थानप्रदर्शनेन? अन्यथाऽल्पमप्युद्देश्यं वक्तव्यमित्यत आह– **एवमिति** ।। एवं भेरीताडनादावपि 'अचला' इत्युक्तप्रकारेण परमानन्दतृप्तश्चेत् किमर्थं प्रवृत्तिं करोति? न कुर्यात् । करोति च । तस्मादुक्तमसदित्युक्ताक्षेप एवात्राभिप्रेतः । प्रश्नस्तु मुखत एव । अतो नोपेक्षामर्हतीति भावः । एतच्चार्जुनस्य प्रेक्षावत्त्वाद् गम्यते। एवं चेत् 'गमनादिप्रवृत्तिः' इत्युक्तः परिहारो न पूर्णः। प्रवृत्तिकारणानुक्तेरित्यत आह– **प्रारब्धेति** ।। ईषत् तिरोहितं ब्रह्म यस्यासौ तथोक्तः । परिहरति 'द्वितीयं प्रश्नं 'या निशा' इत्यादौ' इति शेषः ।।

**भावबोधः (र.टि.)–** ननु गीतानुसारेण भाषणादीति वक्तव्यम् । वैपरीत्येन व्रजेतेत्युक्तगमनादित्वेन वचने किं प्रयोजनमित्यत आह– **प्रवृत्तिमात्रमिति** ।। **द्वितीयं प्रश्नमिति** ।। प्रवृत्तिप्रश्नत्वेन भाषणादिप्रश्नानामेकरूपत्वादिति भावः ।।

**भावदीपः (रा.टि.)– अनन्तरप्रकरणेति** ।। 'प्रजहाति' इत्याद्यनेककार्यात्मकोत्तरप्रकरणार्थमित्यर्थः । भाष्ये अनौचित्यमाशङ्क्य निराह– **प्रवृत्तीति** ।। **इहेति** ।। 'स्थितधीः किं प्रभाषेत' इत्यर्ध इत्यर्थः । शङ्कते– **व्यवहारायेति** ।। यद्युत्तरार्धे गमनप्रश्नमात्रमभिमतं तर्हि पूर्वार्धोक्तप्रश्न एव समाधानार्ह इति गमनप्रश्न एव समाधानार्ह इति बुद्ध्या भगवता 'प्रजहाति' इत्यादिना परिहार उच्यते । उत्तरार्धोक्तप्रश्नस्तूपेक्ष्यत्वान्न परिहृतो भगवतेति किं न स्यादित्यर्थः ।

तत्र हेतुः— **प्रवृत्तीत्याद्यर्थ एवेति** ॥ व्यवहारानुपयोगादिति भावः ॥ **नचेति** ॥ किञ्चेत्यर्थः ॥ **अन्यथेति** ॥'व्रजेत किम्' इत्यस्यावश्यं परिहर्तव्यत्व इत्यर्थः । **उक्तमसदिति** ॥ 'समाधावचला बुद्धिस्तदा योगमवाप्स्यसि' इत्युक्तमसदित्यर्थः । **अत्रेति** ॥ 'व्रजेत किम्' इत्यत्रेत्यर्थः ॥ **एतच्चेति** ॥ आक्षेपाभिप्रायवत्त्वमित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)— अनन्तरप्रकरणार्थमिति** ॥ प्रजहातीत्याद्यनेकश्लोकात्मकोत्तर-प्रकरणार्थमित्यर्थः । नन्वभिसन्धिरभिप्रायः । स चेच्छारूपः । 'अभिप्रायो हीच्छा' इति तर्कताण्डवोक्तेः । तथा च प्रवृत्तेरिच्छापूर्वकत्वमवर्जनीयमिति कथमभिसन्धिपूर्वकत्वनिषेध इत्यतोऽभिसन्धिशब्दस्य विवक्षितमर्थमाह— **अभिसन्धिः प्रयोजनोद्देश इति** ॥ अत्यभि-सन्धिपूर्वकत्वमेव निषिध्यते । न तु सर्वथाऽभिसन्धिपूर्वकत्वमिति वा न व्याहतिरिति भावेनाह— **ईषदिति** ॥ ननु गीतापाठक्रमानुसारेण भाषणादिप्रवृत्तिरिति भाषणीयम् । न तु 'व्रजेत' इत्युक्तगमनादीत्यत आह— **प्रवृत्तिमात्रमिति** ॥ व्यावृत्तिव्यवहारयोर्लक्षणज्ञानप्रयोजनत्वादाह— **व्यवहारायेति** ॥ **प्रवृत्तीति** ॥ 'व्रजेत किम्' इति ज्ञानिप्रवृत्त्युद्देश्यप्रश्न इत्यर्थः । तज्ज्ञानेऽपि स्वस्य प्रयोजनाभावादिति भावः । वस्तुतस्तु प्रत्युत्तरमेव न युक्तं कर्तुमित्याह— **न चेति** ॥ **अनेकेषां** ज्ञानिनाम् । **उपेक्षितः** असौ प्रष्टा । उत्तरार्धोक्तप्रश्नस्तु उपेक्ष्यत्वान्न परिहृतो भगवतेति किं न स्यादित्यर्थः । तत्र हेतुः— **प्रवृत्त्युद्देश्यस्येति** ॥ **अन्यथा** प्रवृत्त्युद्देश्यप्रश्नस्य व्यर्थत्वेनोपेक्षणीयत्वाभावे । 'ततश्च समाधावचला । ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि' इति भाष्यं सान्वयमेवंशब्दार्थं वक्तुमनुवदति— **एवमितीति** ॥ 'किमर्थम्' इत्याक्षेपतात्पर्यं— **न कुर्यादिति** ॥ **उक्तं** 'समाधावचला बुद्धिः' इत्युक्तम्, परमानन्दतृप्तत्वं वा । तर्ह्याक्षेपाभिप्राय इत्येव भाषणीयमित्यत आह— **प्रश्नस्त्विति** ॥ प्रश्नो वाचनिकः । आक्षेपस्त्वाभिप्रायिक इत्यर्थः । एतच्च उपेक्षानर्हत्वम् । केचित्तु, 'प्रश्नस्याक्षेपगर्भत्वं किमिति कल्प्यते ? प्रश्नमात्रमेवेदं किं न स्यादित्यत आह— **एतच्चेति** ॥ प्रश्नस्याक्षेपगर्भत्वम् । न हि प्रेक्षावानर्जुनो व्यर्थं प्रवृत्त्युद्देश्यप्रश्नं कुर्यात् । तथात्वे प्रेक्षावत्त्वहानिः स्यात् । अतस्तदन्यथानुपपत्त्या तत् कल्प्यत इति भावः' इति व्याचक्षते । एवं **चेत्** प्रश्न आक्षेपगर्भश्चेत् । **पूर्णः** पर्याप्तः । साक्षात्कृतपरब्रह्मणो ज्ञानिनो ब्रह्म कथं तिरोहितं भवेदित्यतस्तत्र कारणोक्तिः— **प्रारब्धेति** ॥ स्पष्टत्वात् 'ईषत्तिरोहित-ब्रह्मणः' इत्यत्र सामानाधिकरण्यभ्रमं निरस्यन् विग्रहं दर्शयति— **ईषदिति** ॥ **द्वितीयं प्रश्नमिति** ॥ भाषणादिप्रश्नानां प्रवृत्त्युद्देश्यप्रश्नत्वेनैकीकरणवचनमिति ज्ञेयम् ॥

श्लोकः ५५

**भावदीपिका (श्री.टि.)– ॥ अनन्तरप्रकरणेति ॥** 'श्रीभगवानुवाच प्रजहाति' इत्युत्तरप्रकरणेत्यर्थः । **ईषदभिसन्धिः** देहयात्रार्थमिति शेषः । ननु गीतानुसारेण भाषणादीति वक्तव्यम् । वैपरीत्येन व्रजेतेत्युक्तगमनस्याऽदित्वेन वचने किं प्रयोजनमित्यत आह– **प्रवृत्तिमात्रमिति ॥** प्रवृत्त्युद्देश्योऽर्थोऽयमिति प्रतिवक्तुं कस्मान्न शक्य इत्यत आह– **अनेकेषामिति ॥** पुरुषाणामित्यर्थः । **एकरूपस्य** एकप्रकारस्य ॥ **उत्तरस्थानेति ॥** 'या निशा' इत्यादिरूपेत्यर्थः ॥ **अन्यथेति ॥** प्रवृत्त्युद्देश्यप्रश्नस्य व्यर्थत्वेनोपेक्षितत्वाभावे यथोत्तरत्र महदुद्देश्यं तत्प्रवृत्तौ कथ्यत एवमल्पमप्युद्देश्यं यत्प्रवृत्तावस्ति तदपि वक्तव्यं स्यादित्यर्थः । तथाचाल्पमुद्देश्यं यथा नोक्तमेवं महदुद्देश्यमपि नोक्तमित्येवास्तु, किं तदुत्तरस्थानप्रदर्शनेनेति भावः । न कुर्यादित्यतः परं कारणाभावादिति शेषः । उक्तं परमानन्दतृप्तत्वम् । **मुखतः** आपाततः । **अतः** आक्षेपरूपत्वात् ॥ **अर्हतीति ॥** किन्तु परमानन्दतृप्तत्वेऽपि प्रवृत्तिर्घटते मत्तादिवदित्याशयेन गमनादिप्रवृत्तिरित्यादिना त्वदुत्तरस्थानप्रदर्शनं कार्यमिति ज्ञेयम् । नन्वाक्षेपगर्भत्वं प्रश्नस्य किमिति कल्प्यते? प्रश्नमात्रमेवैतत् किं न स्यादित्यत आह– **एतच्चेति ॥** प्रश्नस्याऽक्षेपगर्भत्वम् । नहि प्रेक्षावानर्जुनो व्यर्थं प्रवृत्त्युद्देश्यप्रश्नं कुर्यात् । तथात्वे प्रेक्षावत्त्वहानिः स्यात् । अतस्तदन्यथानुपपत्त्या एतत् कल्प्यत इति भावः ॥ **एवं चेत्** आक्षेपगर्भप्रश्नश्चेत् । **न पूर्णः** उक्ताक्षेपपरिहारासमर्थः ॥ **द्वितीयं प्रश्नमिति ॥** ननु गमनादिप्रश्नस्य चतुर्थत्वात् चतुर्थं प्रश्नमिति वक्तव्यम् । सत्यम् । प्रवृत्तिप्रश्नत्वेन भाषणादिप्रश्नानामेकरूपत्वाभिप्रायेण द्वितीयमित्युक्तमित्याशयः ।

**भावप्रकाशः (कृ.टि.)–** ननु अभिसन्धिरभिप्रायो ज्ञानमेव । तथा च गमनादिप्रवृत्तेर्ज्ञानपूर्वकत्वात् कथमभिसन्धिपूर्वकत्वनिषेध इत्यत आह– **अभिसन्धिरिति ॥** ननु पाठक्रमेण भाषणादीति वक्तव्यम् । गमनादीति कथमुक्तमित्यत आह– **उक्तमिति ॥** परमानन्दतृप्तत्वमित्यर्थः । **द्वितीयं प्रश्नमिति ॥** भाषणादिप्रश्नानां प्रवृत्त्युद्देश्यप्रश्नत्वेनैकत्वादेकवचनमिति बोध्यम् ॥

## भाष्यम्

**प्रायः सर्वान् कामान् प्रजहाति । शुकादीनामपीषद्दर्शनात् ॥ 'त्वत्पादभक्तिमिच्छन्ति ज्ञानिनस्तत्त्वदर्शिनः' इत्युक्तेः तामिच्छन्ति ॥ यदा त्विन्द्रादीनामाग्रहो दृश्यते तदाभिभूतं तेषां ज्ञानम् ॥ तच्चोक्तम्–**

'आधिकारिकपुंसां तु बृहत्कर्मत्वकारणात् ।
उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्यो विलक्षणा' इति ।

**अत एव वैलक्षण्यादनधिकारिणामाग्रहादि चेदस्ति न ते ज्ञानिन इत्यवगन्तव्यम् ।**

भावप्रदीपिका (प.टी.)– ननु भगवतैव सर्वकामप्रहाणस्य ज्ञानिलक्षणतयोक्तेः कथमीषदभिसन्धिरभिमता ? इत्यत आह– **प्राय इति** ॥ कुतः सङ्कोचः ? इत्यत आह– **शुकादीनामिति** ॥ ईषन्निषिद्धकामादनादिविधभक्त्या कामदर्शनाच्च सर्वपदसङ्कोच इत्यर्थः । प्रायः सर्वकामप्रहाणलक्षणमिन्द्रादिष्वव्याप्तमित्यत आह– **यदेति** ॥ इन्द्रादीनां ज्ञानित्वेऽपि ज्ञानाभिभवकल्पनस्य निर्मूलत्वात्, अज्ञानिष्वपि ज्ञानं प्रकल्प्याभिभवः कल्प्यतामित्यत आह– **तच्चोक्तमिति** ॥

भावप्रकाशिका (न.टी.)– ननु सर्वकामान् प्रजहातीति वक्तुः कथमीषदभिसन्ध्याऽवशेषोऽभिप्रेतः ? इत्याशङ्क्य, प्रायिकोऽयं सर्वशब्दः, स्थितप्रज्ञमुख्यानां शुकादीनामपीषद्विषयाभिसन्धिदर्शनादिति भावेनाह– **प्राय इति** ॥ भक्तिमपि त इच्छन्ति, अतः प्रायिकमेव सर्वकामप्रहाणमिति भावेनाह– **त्वदिति** ॥ ननु यदि सर्वकामप्रहाणं ज्ञानिलक्षणम्, तर्हीन्द्रादयोऽपि न ज्ञानिनः । तेषामपि कदाचिदाग्रहदर्शनादित्याशङ्क्य ज्ञानिनामपि तेषां कदाचिज्ज्ञानाभिभवे कारणमस्तीत्येतत् सप्रमाणकमाह– **यदेति** । अतोऽन्येषामेवैतल्लक्षणाभावेनाज्ञानितेत्याह– **अत इति** ॥

प्रमेयदीपिका (ज.टी.)– ननु सर्वकामप्रहाणिर्ज्ञानिलक्षणत्वेनोच्यते । तत्कथमल्पाभिसन्ध्यङ्गीकारः? इत्यत आह– **प्राय इति** ॥ कुतस्सर्वशब्दसङ्कोचः? इत्यत आह– **शुकादीनामपीति** ॥ 'विरुद्धकामस्य' इति शेषः । तच्च प्रवृत्तिलिङ्गेन आगमाच्चेति ज्ञातव्यम् । अनुकूलकामस्तु सर्वथाऽस्त्येव । अतोऽपि सङ्कोच इत्यत आह– **त्वत्पादेति** ॥ तां भक्तिम् । उपलक्षणमेतत् । प्रायेण विरुद्धकामत्यागो ज्ञानिनो लक्षणं चेदिन्द्रादीनां ज्ञानित्वं न स्यात् । बहुतरविरुद्धकामदर्शनात् । तथाभूता अपि चेद् ज्ञानिनस्तर्हि देवदत्तादयोऽपि किं न स्युः? इत्यत आह– **यदा त्विति** ॥ आग्रहः विरुद्धकामाभि-

श्लोकः ५५

**निवेशः ॥ एतत्प्रमाणेन स्थापयति– तच्चेति ॥ 'आधिकारिकाः' इति पुरुषविशेषसञ्ज्ञा । 'प्रजापाश्च तथा देवाः'** (भा.ता.५.६.५) **इत्यादि वचनात् । देवदत्तादिप्रतिवन्दीं मोचयति– अत एवेति ॥ एतदागमोक्तादेव । आदिपदेन विरुद्धक्रोधादिग्रहणम् । अनेन कामशब्दः क्रोधादीनामप्युपलक्षणार्थ इति सूचितं भवति ॥**

**भावबोधः (र.टि.)– प्रवृत्तिलिङ्गेनेति ॥** दैत्यानां वरदानादिविपरीतप्रवृत्तिलिङ्गेन ॥ **आगमादिति** 'कचिद्विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरिम्' इत्यागमाच्चेत्यर्थः । **उपलक्षण-मेतदिति ॥** ज्ञानादिविषयकेच्छायामपि प्राक्प्रमाणोपन्यासादित्यर्थः । **कामशब्द इति ॥** 'प्रजहाति यदा कामान्' इत्युक्त इत्यर्थः । **इन्द्रादीति ॥** तेषामिदानीम् असम्प्रज्ञातसमाध्य-भावेन लक्ष्यत्वाभावेनाव्याप्त्याक्षेपाप्रसक्तिरित्यर्थः ।

**भावदीपः (रा.टि.)– एतच्च प्रवृत्तिलिङ्गेनागमाच्चेति ज्ञातव्यमिति॥** सन्न्यास-भिक्षाटनाद्युद्देश्यकप्रवृत्तिलिङ्गेन **'यं प्रव्रजन्तम्'**(भाग.१.१.२) इत्याद्यागमाच्च ज्ञातव्य-मित्यर्थः। भगवदेकचित्ततया परमानन्दमग्नस्योक्तरूपप्रवृत्तिकामस्य विरुद्धत्वादित्याहुः । **उपलक्षणमेतदिति ॥** 'परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दन' इति श्रुतसायुज्यादिमोक्षकामस्य, 'इच्छा च तस्य युक्ता' इत्यादिना प्रागुक्तेश्वरप्रसादज्ञानादिकामस्य च' इति योज्यम् । **'तथा देवाः' इत्यादिवचनादिति ॥** पञ्चमस्कन्धषष्ठाध्यायतात्पर्ये 'प्रजापाश्च तथा देवाः महाधीकारिणः स्मृताः' इत्यादि ब्रह्माण्डवचनादित्यर्थः ॥ **कामशब्द इति ॥** 'यदा कामान्'इति श्लोकस्थकामशब्द इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– प्रहाणिः** प्रकर्षेण त्यागः । ईषदित्यनन्तरं पूरणीयमाह– **विरुद्धेति ॥ तच्चेति ॥** विरुद्धकामत्वं संन्यासभिक्षाटनाद्युद्देश्यकप्रवृत्तिलिङ्गेन, कृष्णेनोत्तरा-विषयेऽस्त्रं निवर्तयेत्युक्तेऽपि द्रौणेस्तत्रैवास्त्रनिपातनादिविपरीतप्रवृत्तिलिङ्गेन वा, 'यं प्रव्रजन्त-मनुपेतमपेतकृत्यम्' इति, 'कचिद् विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरिम्' इत्याद्यागमाच्च ज्ञातव्यमित्यर्थः । **उपलक्षणमिति ॥** 'भक्तिमिच्छन्ति' इत्येतद्वचनम् । 'परब्रह्मत्वमिच्छामि' इत्यादिशास्त्रवेदितसायुज्यादिमोक्षकामस्य', 'इच्छा च तस्य युक्ता' इत्यादिभाष्योक्तेश्वरप्रसाद-ज्ञानादिकामस्य चोपलक्षणया ग्रहणमित्यर्थः । **इन्द्रादीनां ज्ञानित्वं न स्यादिति ॥** न चेष्टापत्तिः । 'न च तेषां शुद्धसत्त्वानाम्' इत्यादिनेन्द्रादीनां प्राग् ज्ञानित्वस्य साधितत्वादिति

भावः । **एतत्** विरुद्धकामाभिनिवेशकाले ज्ञानं तेषामभिभूतमित्येतत् । **पुरुषविशेषेति** ॥ महाधिकारिणोऽल्पाधिकारिणश्चेति पदस्थद्विविधपुरुषेत्यर्थः । **इत्यादिवचनादिति** ॥

'प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ।
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधीकारिणः परे'

इति पञ्चमतात्पर्योदाहृतब्रह्माण्डवचनादित्यर्थः । **महाधीकारिणः,** 'उपसर्गस्य घञमनुष्ये बहुलम्' इत्यधेर्दीर्घः । देवाः प्रजापतयश्च महाधिकारिकाः शास्त्रोक्ताः । अल्पाधिकारिणः अल्पाधिकारिकाः प्रोक्ता इत्यर्थस्य विवक्षितत्वान्नोक्तार्थे प्रमाणाभावशङ्कावकाशः । तर्हि देवदत्तादयोऽपि विरुद्धकामा ज्ञानिनः किं न स्युरिति शङ्कितत्वादाह– **देवदत्तेति** ॥ अनधि-कारिणाम् उक्ताधिकारिकव्यतिरिक्तदेवदत्तादीनामिति भाष्यार्थः । कामशब्दः 'प्रजहाति यदा कामान्' इति गीतागतः । 'क्रोधादीनाम्' इत्यादिपदेन विरुद्धमत्सरादिग्रहणम् ॥

**भावदीपिका (श्री.टि.)**– ॥ **प्रवृत्तिलिङ्गेनेति** ॥ दैत्यानां वरदानादिरूपप्रवृत्तिलिङ्गे-नेत्यर्थः ॥ **आगमाच्चेति** ॥ 'कचिद् विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरिम्' इत्यागमाच्चेत्यर्थः ॥ **उपलक्षणमेतदिति** ॥ ज्ञानादिविषयकेच्छायामपि प्राग् ब्रह्मजिज्ञासेत्यादिप्रमाणोपन्यासाद् ज्ञानादिकमपीच्छन्तीति ग्राह्यम् ॥ **बहुतरेति** ॥ अहल्याधर्षणादिरूपेत्यर्थः । **तथाभूताः** बहुतरविरुद्धकामवन्तोऽपि ॥ **पुरुषविशेषसञ्ज्ञेति** ॥ पदस्थानां सञ्ज्ञेत्यर्थः । के ते पुरुषविशेषा इत्यत आह– **प्रजापाश्च तथा देवा इत्यादिवचनादिति** ॥

'प्रजापाश्च तथा देवा महाधीकारिणः स्मृता ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ॥
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधीकारिणः परे ॥'

इति पञ्चमस्कन्धतात्पर्योदाहृतब्रह्माण्डपुराणवचनादित्यर्थः ॥ **एतदागमोक्तादेवेति** ॥ बहुप्रारब्धकर्मवत्त्वाख्यबृहत्कर्मत्वरूपवैलक्षण्यादेव । **अनेन** 'आग्रहादि' इत्यादिपदेन भाष्ये

श्लोकः ५५

क्रोधादीनां सङ्गृहीतत्वेन 'प्रजहाति यदा कामान्' इत्यत्र कामशब्दः क्रोधादीनामुपलक्षक इति सूचितमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ईषदित्यनन्तरमध्याहार्यमाह– **विरुद्धकाम्यस्येति शेष इति** ।। **प्रवृत्तिलिङ्गेनेति** ।। कृष्णेनोत्तरागर्भविषयेऽस्त्रं विनिवर्तयेत्युक्तेऽपि द्रौणेस्तत्रैवास्त्रपातनादि-रूपविपरीतप्रवृत्तिलिङ्गेनेत्यर्थः । **आगमादिति** ।।'कश्चिद्विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरिम्' इत्याद्यागमादित्यर्थः । **उपलक्षणमिति** ।। ज्ञानादिकामनाया अपि प्राक् साधितत्वादिति भावः । **पुरुषविशेषेति** ।। महाधिकारिणोऽल्पाधिकारिणश्चेति द्विविधपुरुषेत्यर्थः । **इत्यादिवचनादिति** ।।

'प्रजापाश्च तथा देवा महाधीकारिणः स्मृता ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ।।
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधीकारिणः परे ।।'

इति पञ्चमस्कन्धतात्पर्यवचनादित्यर्थः ।।

**विरुद्धक्रोधादीति** ।। आदिपदेन विरुद्धमत्सरादेः सङ्ग्रहः । **कामशब्द इति** ।। 'प्रजहाति यदा कामान्' इति कामशब्द इत्यर्थः ।

## भाष्यम्

**न चात्र समाधिं कुर्वतो लक्षणमुच्यते । 'यः सर्वत्रानभिस्नेहः'** (२.५७) **इत्यादि स्नेहनिषेधात् ।। नहि समाधिं कुर्वतस्तस्य शुभाशुभप्राप्तिरस्ति । असम्प्रज्ञातसमाधेः । सम्प्रज्ञाते त्वविरोधः तथाऽपि न तत्रैवेति नियमः ।**

**'कामादयो न जायन्ते ह्यपि विक्षिप्तचेतसाम् ।**
**ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात् ।।' इति स्मृतेः ।।**

भावप्रदीपिका (प.टी.)– नन्वेतल्लक्षणं समाधिस्थस्यैव किं न स्यात् ? न । प्रश्नात् पदानुगुण्यादव्याप्तिशङ्काभावाचेत्याह– **न चेति** ।। समाधिस्थस्य स्नेहाभावो युक्त एवेत्यत

आह— **न हीति** ।। सम्प्रज्ञातसमाधिस्थस्य सुख्यादिप्राप्तावपि स्नेहाभावाविरोधात् तस्येदं लक्षणमित्यत आह— **सम्प्रज्ञाते त्विति** ।। यद्यपीति संयोज्यम् । असम्प्रज्ञात-समाधिस्थानां ज्ञानिनां वर्तमानत्वाच्च तत्रैवेति (न) नियम इत्यर्थः ।

भावप्रकाशिका (न.टी.)– ननु समाधिं कुर्वतः एवैतल्लक्षणं किं न स्यात् ? तथा सति नाव्याप्तिशङ्का, 'समाधिस्थस्य' इति प्रश्नपदानुगुण्यं चेत्यत आह— **न चेति** ।। ननूचित एव स्नेहनिषेधः, तस्य क्वचिदपि स्नेहाभावात् इत्याशङ्क्य शुभाशुभं प्राप्यानभिस्नेह इत्युक्तेः, तदभावाच्चासम्प्रज्ञातसमाधिस्थस्य, अतो नेदं लक्षणं तस्येत्याह— **न हीति** ।। ननु समाधिं कुर्वत्यपि सम्प्रज्ञाते 'शुभाशुभं प्राप्य' इत्येतद्विरोधाभावात् तस्मिन्नेव पुंसीदं लक्षणं किं न स्यात् ? इत्याशङ्क्य, उक्तप्रकारेणासमाधिस्थेऽपि सम्भवादुभयोरपीदं लक्षणमित्येतत् सप्रमाणकमाह— **सम्प्रज्ञाते त्विति** ।। सम्यक् प्रज्ञानं सम्प्रज्ञातं देहादिविषयं यस्मिन् स सम्प्रज्ञातः । नपुंसके भावेऽप्युक्तप्रत्ययदर्शनात् ।

प्रमेयदीपिका (ज.टी.)– ननु समाधिं कुर्वतो ज्ञानिनो लक्षणमेतदिति व्याक्रियताम् । तथा सति प्रश्नवाक्यस्थं 'समाधिस्थस्य' इति पदं समञ्जसं स्यात् । सर्वशब्दश्चा-सङ्कुचितार्थः स्यात् । इन्द्रादि विषयाक्षेपाप्रसक्तिश्चेत्यत आह— **न चेति** ।। समाधिं कुर्वतः स्नेहनिषेधोऽनुगुण एवेत्यत आह— **न हीति** ।। नात्र स्नेहनिषेधमात्रमुच्यते । किन्तु 'तत्तत्प्राप्य शुभाशुभम्' इति शुभाशुभार्थप्राप्तिपूर्वकम् । नच तत्प्राप्तिः समाधिं कुर्वतो ज्ञानिनोऽस्ति । कुतः ? इत्यत उक्तम्— **असम्प्रज्ञातेति** ।। असम्प्रज्ञातः समाधिः यस्यासौ तथोक्तः । बाह्यार्थानुसन्धानं यत्र नास्ति सोऽसम्प्रज्ञातसमाधिः । इतरः सम्प्रज्ञात-समाधिरिति योगशास्त्रे प्रसिद्धिः । तथा च लक्षणमसम्भवि प्रसज्येत । सावकाशेभ्यो बहुभ्यो निरवकाशस्यैकस्यैव बलवत्त्वमिति भावः । एवं तर्हि सम्प्रज्ञातसमाधिस्थस्यै-तल्लक्षणमस्तु । तत्रोक्तदोषाभावादित्यत आह— **सम्प्रज्ञाते त्विति** ।।

यद्यपि सम्प्रज्ञातसमाधौ शुभाशुभप्राप्तिसम्भवेनासम्भवित्वं नाम लक्षणविरोधो नास्ति । तथाऽपि कामादिहानं समाधिस्थ एव पुंसीति नियमो नास्ति । असमाधिस्थेऽपि ज्ञानिनि विद्यमानत्वात् । तथाचातिव्याप्तिः स्यादित्यर्थः । असमाधिस्थेऽपि ज्ञानिनि कामाद्यभावः कुतः? इत्यत आह— **कामादय इति** ।। तदर्थं 'सर्वथा' इति विशेषणप्रक्षेपेऽपि पुरुष-

श्लोकः ५५

**विशेषेऽतिव्याप्तिपरिहारो दुर्घट एव । नचास्मन्मतेऽप्यव्याप्तिदोषः । असम्प्रज्ञातसमाधिस्थ-व्यतिरिक्तविषयत्वात् । सम्भवतस्तु तद्विषयत्वादिति ॥**

**भावबोधः (र.टि.)– बहुभ्य इति** ॥ समाधिस्थस्येति पदसामञ्जस्यादिभ्य इत्यर्थः । सावकाशत्वं तु आद्यस्यानुवादपरत्वेन द्वितीयस्य सर्वशब्दसङ्कोचस्यावश्यकत्वेन तृतीय-स्येन्द्रादीनामभिभूतज्ञानत्वेनेति ज्ञातव्यम् । विक्षप्तचेतसामित्यनेन समाध्यभावोक्तेः 'कामादयः' इति वाक्यं विवक्षितार्थे प्रमाणमिति ज्ञातव्यम् ।

**सर्वथेतीति** ॥ विक्षिप्तचेतसा कदाचित् कथञ्चित् कियान्वा विरुद्धकामः सम्भवतीति तद्व्यावृत्तिरिति भावः । **पुरुषविशेष इति** ॥ उत्पन्नापरोक्षज्ञाने ऋजुगणे इत्यर्थः । तत्र लोकयात्रादिनोभयविधसमाध्यभावदशायामपि अच्छिन्नधर्मत्वेन विरुद्धकामसम्भावनाया अप्य-भावात्। न च तेषामुभयविधसमाध्यभावासिद्धिः । 'अज्ञानं च चतुर्वारम्' इत्यादिना तत्सिद्धेरिति । नच तद्व्यतिरिक्तत्वे सति सम्प्रज्ञातसमाधिस्थज्ञानित्वं लक्ष्यतावच्छेदकमिति वाच्यम् । तदपेक्षया ज्ञानित्वस्य लघुत्वात् । ननु यः सर्वत्रेति लक्षणे भवता यथा असम्प्रज्ञात-समाधिस्थव्यतिरिक्तज्ञानित्वं लक्ष्यतावच्छेदकमभिमतम्, तथा ममापीति चेन्न । अस्मदभिमता-सम्प्रज्ञातसमाधिस्थव्यतिरिक्तज्ञानित्वापेक्षयैतस्य गुरुशरीरत्वात् असम्प्रज्ञातसमाधिस्थव्यतिरिक्ता-नामपि केषाञ्चित् ज्ञानिनां व्यावर्तितत्वेनातिसङ्कोचकत्वाच्चेति भावः । **अव्याप्तिदोष इति** ॥ 'तत्तत्प्राप्य शुभाशुभम्' इत्युक्तलक्षणस्येत्यर्थः । **सम्भवतस्त्विति** ॥ 'प्रजहाति' इत्यनेनोक्त-प्रायो विरुद्धकामरहितत्वादिरित्यर्थः ॥

**भावदीपः (रा.टि.)– नात्रेति** ॥ लक्षणोक्तिप्रकरणे 'यः सर्वत्र' (२५७)इति तृतीयश्लोक इत्यर्थः ॥ **शुभाशुभमितीति** ॥ 'अनेन' इति शेषः ॥ **प्राप्तिपूर्वकमित्यत्र** 'स्नेहनिषेधः' इत्यनुषङ्गः ॥ **असम्भवि प्रसज्येतेति** ॥ 'समाधिं कुर्वतो ज्ञानिनो लक्षणत्वे' इत्यापादकं योज्यम् ॥ ननु समाधिस्थपरत्वे **'प्रश्नवाक्यस्थम्'** इत्यादिना अनेकानुगुण्यमुक्तमित्यत आह– **सावकाशेभ्य इति** ॥ प्रागुक्तदिशा अनुवादसङ्कोचविधानादिना सावकाशेभ्यः समाधिस्थपद-सर्वशब्द (इन्द्रादि).. अनादिविषयाक्षेपेभ्यः ....शुभाशुभप्राप्तिपूर्वकस्नेहनिषेधरूपनिरवकाश-रूपस्य एकस्येत्यर्थः ।

**तदर्थमिति ॥** ज्ञानिमात्रेऽनतिव्याप्त्यर्थम् । सर्वदा कामादयो न जायन्त इति 'सर्वदा' इति विशेषण इत्यर्थः । **पुरुषविशेष इति ॥** ब्रह्मादिपुरुषविशेष इत्यर्थः । तत्र कदाऽपि विरुद्धकामानुदयादिति भावः । **अव्याप्तिदोष इति ॥** 'तत्तत्प्राप्य' इत्युक्तिलक्षणस्य । असम्प्रज्ञातसमाधिस्थपुरुषविशेषेऽव्याप्तिरित्यर्थः । **सम्भवत इति ॥** **'प्रजहाति'** इत्यादिनोक्त-कामक्रोधादिराहित्यरूपस्येत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)–** व्याक्रियतामित्यत्रोपष्टम्भकमाह– **तथा सतीति ॥ समाधिस्थस्येतीति ॥** समाधौ तिष्ठतीति व्युत्पत्तौ समाधिं कुर्वतो लाभ इति भावः । उत्तरश्लोकाक्षरपर्यालोचनयाऽप्येवमित्याह– **सर्वशब्द इति ॥** 'कामान् सर्वान् पार्थ' इत्यत्रत्यसर्वशब्द इत्यर्थः । समाध्यवस्थायामेव सर्वकामप्रहाणं सम्भवतीति भावः । सर्वकामप्रहाणस्य ज्ञानिलक्षणत्वे इन्द्रादावव्याप्तिः स्यात् । तेषां बहुतरविरुद्धकामदर्शना-दितीन्द्रादिविषये योऽयमाक्षेपः कृतः सोऽप्यत्र नास्तीत्याह– **इन्द्रादीति ॥** तेषां विरुद्ध-कामाभिनिवेशकाले समाध्यभावेनालक्ष्यत्वादेवाव्याप्तिशङ्कानवकाश इत्यर्थः । शुभाद्यर्थप्राप्त्यभावे 'असम्प्रज्ञातसमाधेः' इत्येतद्धेतुसमर्पकं यथा स्यात् तथा व्याचष्टे– **बाह्येति ॥** बाह्यार्थानु-सन्धानं यत्रेति वदन् सम्प्रपूर्वाज्ज्ञानातेर्भावे निष्ठा । सं प्रकृष्टं ज्ञातं ज्ञानं यस्मिन् स तथेति व्युत्पत्तिमभिप्रैति । **लक्षणं** प्राप्तशुभाद्यर्थस्नेहशून्यत्वरूपम् । **असम्भवि** समाधिं कुर्वत्सु ज्ञानिषु शुभादिबाह्यार्थानुसन्धानासम्भवाल्लक्ष्यनिष्ठाभावप्रतियोगित्वरूपासम्भवदूषितं स्यादित्यर्थः ।

ननु समाधिं कुर्वतो ज्ञानि॰ो लक्षणमेतदित्यङ्गीकारे समाधिस्थपदसामञ्जस्यं, सर्वशब्दा-सङ्कोचः, इन्द्रादिविषयाक्षेपाप्रसक्तिश्चेति साधकानि बहूनीत्युक्तमित्यत आह– **सावकाशेभ्य इति ॥** प्रागुक्तदिशाऽनुवादेन, सङ्कोचावश्यम्भावेन, अभिभूतज्ञानत्वेन च सावकाशेभ्यः समाधिस्थपदसामञ्जस्यादिभ्यः शुभप्राप्तिपूर्वकस्नेहनिषेधरूपस्य निरवकाशस्यैकस्यापि बलवत्त्वम् । यथा 'शब्दादेव प्रमितः' इत्यधिकरणे 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इत्यत्रेशानो वायुर्विष्णुर्वेति विशये वायुप्रापकाणां प्राणव्यवस्थापकत्वमध्यमत्वसदैवोपास्यत्वानां लिङ्गानां सत्त्वाद् वायुरिति प्राप्ते, विष्णुरेवायं वामनशब्दादेवेति सिद्धान्तितम् । तत्र लिङ्गानि सावकाशानि वामनशब्दस्त्वेकोऽपि निरवकाश इति बहूनां लिङ्गानां सावकाशानामेकेन वामनशब्देन बाध उक्तः तथाऽत्रापीति भावः । **एवं तर्हि** यद्युक्तरीत्याऽसम्प्रज्ञातसमाधिस्थ-लक्षणत्वेन व्याख्याने । **दोषः** उक्तदोषः असम्भवः ।

श्लोकः ५५

'तथाऽपि' इति भाष्यं सङ्गमयितुमाह– **यद्यपीति ॥ विक्षिप्तचेतसाम्** असमाधिस्थानामपि। तथा चानेन विवक्षितार्थसिद्धिः। **तदर्थं** ज्ञानिमात्रेऽनतिव्याप्त्यर्थम्। **सर्वथेति विशेषणप्रक्षेप इति ॥** असमाधिस्थज्ञानिनां कदाचित् कथञ्चिद् विरुद्धकामः सम्भवत्येवेति तद्व्यावृत्तिरिति भावः। **पुरुषविशेषे** उत्पन्नापरोक्षज्ञाने ऋजुगणे। तत्र सम्प्रज्ञातासम्प्रज्ञातरूपोभयविधसमाध्यभावदशायामपि 'शुद्धे भागवते धर्मे निरतो यद्वृकोदरः' इत्यादिशास्त्रावेदिताच्छिन्नधर्मताके विरुद्धकामनासम्भावनाया अप्यभावात्। न च तेषामुभयविधसमाध्यसिद्धौ मानाभावः। द्वितीयनवमे 'कर्मविमोहिते इदं कार्यमित्यजानति' इति, षष्ठे 'अज्ञानं तु चतुर्वारं द्विवारं भयमेव च। शोकोऽपि तावान्' इत्यादेरेव तत्र मानत्वादिति भावः। **अव्याप्तिदोष इति ॥** 'तत्तत् प्राप्य शुभाशुभम्' इति शुभाशुभार्थप्राप्तिपूर्वकस्नेहनिषेधरूपलक्षणस्यासम्प्रज्ञातसमाधिस्थपुरुषविशेषेऽव्याप्तिदोष इत्यर्थः। बाह्यार्थानुसन्धानाभावेन शुभाशुभप्रतीतेस्तत्राभावादिति भावः। **व्यतिरिक्तविषयत्वात्** 'तत्तत्प्राप्य शुभाशुभम्' इति लक्षणवाक्यस्येति शेषः। तर्हि किं नाम तत्र लक्षणं ज्ञातव्यम्? इत्यत आह– **सम्भवतस्त्विति ॥** 'प्रजहाति यदा कामान्' इत्युक्तस्य प्रायो विरुद्धकामादि-रहितत्वादेस्सर्वत्र सुसम्पादस्येत्यर्थः।

**भावदीपिका (श्री.टि.)– ॥ समञ्जसं स्यादिति ॥** पूर्वोक्तानुवादरूपत्वाभावादिति भावः। असम्प्रज्ञातसमाधिस्थस्य ज्ञानिनो लक्षणमेतदिति व्याख्याने इन्द्रादीनां बहुतरविरुद्धकामदर्शनाद् ज्ञानित्वं न स्यादित्याक्षेपस्य प्रसक्तिरेव नास्ति। इन्द्रादीनामसम्प्रज्ञातसमाध्यवस्थाभावात्। तथात्वे जगद्व्यापारविलयापत्तेः। तथाच लक्ष्यतावच्छेदकानाक्रान्तत्वेनालक्ष्यतया निरुपचरितसर्वकामप्रहाणिरूपलक्षणस्येन्द्रादावसम्भवो न दोषायेत्याशयेनाऽह– **इन्द्रादीति ॥ असम्भवीति ॥** शुभाशुभप्राप्तिपूर्वकं तत्र स्नेहशून्यत्वलक्षणमसम्प्रज्ञातसमाध्यवस्थापन्ने लक्ष्ये नास्तीत्यसम्भव इत्याशयः **॥ यत्र नास्तीति ॥** किन्तु केवलं भगवदनुसन्धानमेवास्तीति शेषः॥ **इतर इति ॥** बहुतरं भगवदनुसन्धानमस्ति, बाह्यार्थानुसन्धानं चेषदित्यर्थः॥

ननु असम्प्रज्ञातसमाध्यवस्थावत एवेदं लक्षणम्। नच 'यः सर्वत्र' इति लक्षणस्यासम्भवदोष इति वाच्यम्। 'समाधिस्थस्य' इति विशेषणबलात् तथा 'प्रजहाति यदा कामान् सर्वान्' इति सर्वशब्दबलात्। तदर्थं प्रायेण विरुद्धकामत्यागस्य लक्षणत्वे इन्द्रादौ बहुतरविरुद्धकामदर्शनेन ज्ञानित्वं न स्यात्। तथाभूतानामपि ज्ञानित्वे देवदत्तादीनामपि तथात्वा-

पत्तेरिति बहुभ्यो ज्ञापकेभ्योऽसम्भवरूपस्यैकस्य दोषस्य बाधसम्भवादित्यत आह– **सावकाशेभ्य इति** ॥ आद्यस्यानुवादपरत्वेन द्वितीयस्य सर्वशब्दसङ्कोचेन तृतीयस्येन्द्रादीनामभिभूतज्ञानत्वेन सावकाशत्वं ज्ञातव्यम् ॥ **उक्तदोषाभावादिति** ॥ 'यः सर्वत्र' इति लक्षणस्यासम्भवाख्यदोषाभावादिति भावः। 'प्रजहाति' इत्युक्तं कामादिहानं तूभयानुगतं लक्षणमस्त्विति वाक्यशेषः ।

**विरोधः** दोषः ॥ **कामादिहानमिति** ॥ 'प्रजहाति' इत्यनेनोक्तमुभयानुगतं लक्षणमिति तूक्तं कामादिहानमित्यर्थः ॥ **समाधिस्थ एवेतीति** ॥ सम्प्रज्ञातासम्प्रज्ञातरूपोभयविधसमाध्यवस्थापन्ने ज्ञानिनीत्यर्थः ॥ **असमाधिस्थेऽपीति** ॥ प्रारब्धकर्मानुसारेण लोकयात्राव्याख्यानादिना विक्षिप्तचेतसि उभयविधसमाधिशून्येऽपरोक्षज्ञानिनीत्यर्थः ॥ **कामादय इतीति** ॥ **'विक्षिप्तचेतसाम्'** इत्यनेन **समाध्यभावोक्ते** 'कामादयः'इति **वाक्यमसमाधिस्थेऽपि** ज्ञानिनि कामाद्यभावसद्भावे **प्रमाणमिति** ज्ञातव्यम् ॥ **तदर्थमिति** ॥ असमाधिस्थेऽतिव्याप्तिपरिहाराय सर्वथा कामादिहानं लक्षणतया विवक्षितम् । विक्षिप्तचेतस्यसमाधिस्थे कदाचित् कथञ्चित् कियांश्चित् च विरुद्धकामः सम्भवतीति तद्व्यावृत्तिरिति भावः ॥ **पुरुषविशेषेति** ॥ उत्पन्नापरोक्षज्ञानऋजुगण इत्यर्थः । तत्र लोकयात्राव्याख्यानादिनोभयसमाध्यभावदशायामप्यच्छिन्नधर्मत्वेन विरुद्धकामसम्भावनाया अप्यभावात्। यथोक्तं ब्रह्मणा–

'न भारती मेऽङ्ग मृषोपलक्ष्यते न कर्हिचिन्मे मनसो मृषा गतिः ।
न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः'

इति ॥ **अस्मन्मत इति** ॥ सम्प्रज्ञातरूपोभयविधसमाध्यवस्थापन्नज्ञानिनो लक्ष्यत्वमिति मते 'तत्तत् प्राप्य शुभाशुभम्' इति लक्षणस्यासम्प्रज्ञातसमाध्यवस्थाविशिष्टेऽव्याप्तिदोष इत्यर्थः। **असम्प्रज्ञातसमाधिस्थव्यतिरिक्तेति** ॥ सम्प्रज्ञातसमाधिस्थेत्यर्थः ॥ **विपयत्वादिति** ॥ 'तत्तत् प्राप्य शुभाशुभम्' इति लक्षणस्येत्यर्थः । तर्ह्यसम्प्रज्ञातसमाध्यवस्थावत किं लक्षणमित्यत आह– **सम्भवत इति** ॥ 'प्रजहाति' इत्याद्युक्तस्य प्रायो विरुद्धकामरहितत्वादेः सम्भवत असम्भवरहितस्य लक्षणस्य तद्विषयत्वाद् असम्प्रज्ञातसमाधिस्थविषयत्वादित्यर्थः ।

इदमत्राऽऽकूतम् । उभयावस्थाविशिष्टस्यापि ज्ञानिनः 'प्रजहाति' इत्युक्तप्रायसर्वकामप्रहाणिर्लक्षणम्। इदमेव च सार्वत्रिकव्यवहारोपयोगि । नच प्रायपदवैय्यर्थ्यं शङ्क्यम् ।

श्लोकः ५५

अम्प्रज्ञातसमाधिस्थेऽपि भक्तिज्ञानादिकामनायाः सत्त्वेन तद्व्यावृत्त्यर्थत्वात् । अत एव 'त्वत्पाद' इत्यादिप्रमाणोदाहरणं कृतम् । सम्प्रज्ञातावस्थाविशिष्टज्ञानिमात्रस्य तु 'तत्तत् प्राप्य' इत्युक्तं लक्षणमिति द्रष्टव्यम् ॥

ननु रुद्रादौ बहुतरविरुद्धकामसत्तादशायां प्रायः सर्वकामप्रहाणिर्नास्तीत्यसम्भव इति चेन्न । इष्टत्वात् । अत्रानभिभूतज्ञानित्वं लक्ष्यतावच्छेदकम् । तस्य तदनाक्रान्तत्वात् । रुद्रादिदेवानां तावदसम्प्रज्ञातसमाधिर्नास्त्येव । तथात्वे जगद्व्यापारविलयप्रसङ्गात् । यथोक्तं 'या निशा' इत्यत्र तात्पर्ये 'देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यत्र दृश्यते' इत्यादि । तथाच सम्प्रज्ञातसमाधिना यदा ज्ञानित्वावस्था तदानीमेव लक्ष्यत्वम् । नतु ज्ञानाभिभवेन विरुद्धकामवत्तादशायाम् । यथोक्तं तात्पर्ये–

'अपरोक्षदृशोऽपि स्याद् यदा नास्त्यपरोक्षदृक् ।
क्वचिद् विरुद्धकामोऽपि यथाऽयुध्यद्धरो हरिम् ॥
अतोऽनभिभवो यावद् दृशोस्तावन्निगद्यते । स्थितप्रज्ञ'

इत्यादि । अतोऽत्र नाननुगमादिशङ्केति द्रष्टव्यम् । केचित्तु 'प्रजहाति' इत्युक्त 'तत्तत्प्राप्य' इत्युक्तलक्षणवदन्यान्यत्वं सर्वत्रास्तीति नाननुगम इत्याहुः ॥

**भावप्रकाशः (कृ.टि.)– इन्द्रादीति ॥** तेषामाग्रहकाले समाध्यभावेनालक्ष्यत्वादेवा-व्याप्तिशङ्काभाव इत्यर्थः । **सावकाशेभ्यो बहुभ्य इति ॥** अनुवादत्वेन सङ्कोचावश्यम्भावेनाभि-भूतज्ञानत्वेन च सावकाशेभ्यः । समाधिस्थपदसामञ्जस्यादिभ्यो बहुभ्य इत्यर्थः । **उक्तदोषेति ॥** असम्भवेत्यर्थः ।

**सर्वथेति ॥** असमाधिस्थज्ञानिनां तु कदाचित् कियांश्चिद्विरुद्धकामः सम्भवत्येवेति तद्व्यावृत्तिरिति भावः । **पुरुषविशेष इति ॥** अपरोक्षज्ञानिऋजुगण इत्यर्थः । तत्र लोकयात्रादिनोभयविधसमाध्यभावदशायामप्यच्छिन्नधर्मत्वेन विरुद्धकामसम्भावनाया अप्य-भावात् । न च तेषामुभयविधसमाध्यभावासिद्धिः । 'अज्ञानं तु चतुर्वारम्' इत्यादिना तत्सिद्धे-रिति भावः । 'प्रजहाति' इत्युक्तापरोक्षज्ञानिलक्षणस्यानपरोक्षज्ञान्यृजुषु यथा नातिव्याप्तिः तथा

'एतान्येव ज्ञानोपायानि इत्येतद्व्याख्यावसरे स्पष्टम् । **व्यतिरिक्तविषयत्वादिति** ।। 'तत्तत्प्राप्य शुभाशुभम्' इत्यादेरिति शेषः । **सम्भवतस्त्विति** ।। 'प्रजहाति' इत्याद्युक्तस्येत्यर्थः ।।

## भाष्यम्

**मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति– मनोगतानिति ।। विरोधश्चोच्यते 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' (२.५९) इति । न चैतददृष्ट्याऽपलपनीयम् । पुरुषवैशेष्यात् ।।**

भावप्रदीपिका (प.टी.)– ज्ञानिनः सर्वकामाभावे कारणाकाङ्क्षापरिहाराय 'मनोगत' पदमवतार्य व्याचष्टे– **मनोगता हीति** ।। कुतो ज्ञानकामनयोर्विरोधः ? इत्यत आह– **विरोधश्चेति** ।। असम्भवीदं लक्षणमित्यत आह– **न चेति** ।।

भावप्रकाशिका (न.टी.)– ज्ञाने सति कामनिवृत्तौ हेत्वाकाङ्क्षायां तदुक्तिपरत्वेनोत्तरं पदं व्याचष्टे– **मनोगता हीति** ।। विषयकामभगवज्ज्ञानयोः कथं विरोधः ? इत्याकाङ्क्षायामाह– **विरोधश्चेति** ।। एवंविधपुरुषादर्शनादसम्भावितमिदं लक्षणमिति नाशङ्कनीयमित्याह– **न चेति** ।।

प्रमेयदीपिका (ज.टी.)– कामानां मनोगतत्वाव्यभिचाराद् व्यर्थं विशेषणमित्यतो नेदं विशेषणम् । किन्तु सर्वकामत्यागस्यासम्भवित्वमाशङ्क्य तदुपपादनाय युक्तिरियमुक्तेत्याह– **मनोगता हीति** ।। तत्रैव मनस्येव । कामज्ञानयोर्विरोधः कुतः? इत्यत आह– **विरोधश्चेति** ।। 'रसो रागः' (२.५६) इति वक्ष्यति ।। ननु सर्वकामप्रहाणमस्मदादिषु न दृष्टम् । तद्दृष्टान्तेन ज्ञानिष्वपि तदभावानुमानाद् असम्भवित्वं लक्षणस्येत्यत आह– **न चेति** ।। कुतः? उदाहृतप्रमाणविरोधात् । प्रमाणविरुद्धार्थानुमाने च पण्डितमूर्खादिपुरुषवैचित्र्यापलापप्रसङ्गादित्याह– **पुरुषेति** ।।

भावबोधः (र.टि.)– ।। **रसो राग इतीति** ।। तथा च रसशब्देन कामग्रहणात् तस्य ज्ञानेन सह विरोधे इदं प्रमाणमिति भावः । तस्मिन् स्थितत्वं सर्वसाधारणमतो व्याचष्टे– **तदेकाग्रचित्तस्येति** ।। ५५ ।।

श्लोकः ५५

**भावदीपः (रा.टि.)– ॥ उदाहृतेति ॥** 'कामादयः' इति प्रमाणेत्यर्थः ॥ ५५ ॥

**भावरत्नकोशः (सु.टि.)– ॥ कामानां मनोगतत्वाव्यभिचारादिति ॥** 'सम्भव-व्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति व्यभिचारभाव एव विशेषणत्वम् । न चात्र व्यभिचारोऽस्ति । अमनोगतकामाभावात् । इदं च परीत्या । स्वरीत्या तु स्वरूपभूतकाम-व्यावृत्त्यर्थं 'मनोगताः' इति विशेषणमिति ॥ 'कामा येऽस्य हृदि स्थिताः' 'इत्यन्तः-करणस्थानां कामानां मोक्षमेव हि । आह श्रुतिर्हृदीत्येव न चेद् व्यर्थं विशेषणम्' इत्यनु-व्याख्यानसुधयोः, 'कामा येऽस्य हृदि स्थिताः' इत्यत्राप्यन्तःकरणस्थानामेव कामानां मोक्ष उक्तो न तु स्वरूपभूतानाम्' इति तैत्तरीयभाष्ये च स्थितम् । **सर्वकामत्यागस्य** 'प्रजहाति' इत्युक्तसर्वकामत्यागस्य । कदाऽपि काप्यदर्शनाद् यावल्लक्ष्यनिष्ठाभावप्रतियोगित्वरूप-मसम्भवित्वमित्यर्थः । **तदुपपादनाय** लक्षणसम्भवोपपादनाय । व्यवहितकामपरत्वभ्रमनिरासा-याह– **तत्रैव मनस्येवेति ॥ कामज्ञानयोरिति ॥** अनेन 'तद्विरुद्ध' इत्यत्र तच्छब्देन कामो ग्राह्य इत्युक्तं भवति । कामज्ञानयोर्विरोधे 'रसोऽप्यस्य' इत्यस्य प्रमाणत्वं स्फोरयितुं तत्रत्यरसशब्दार्थमाह – **रसो राग इति ॥** कामज्ञानयोर्विरोधे कथमिदं प्रमाणम् ? तत्र रसज्ञानयोर्विरोधोक्तेरित्यत आह– **रसो राग इति वक्ष्यतीत्यपि गमयन्ति ॥** तथा च दृष्ट्वा वर्तमानस्य रसशब्दितः कामो निवर्तत इत्युक्तौ ज्ञानकामयोर्निवर्त्यनिवर्तकभावलक्षणो विरोधः शास्त्र उच्यत इति भाष्यार्थ उक्तो भवति । **तदभावानुमानादिति ॥** न ज्ञानिनः सर्वकाम-प्रहाणवन्तः, पुरुषत्वादस्मदादिवदिति सर्वकामप्रहाणाभावानुमानादित्यर्थः । **उदाहृतेति ॥** 'कामादयो न जायन्ते' इत्युदाहृतप्रमाणविरोधात् सर्वकामप्रहाणं नापलपनीयमित्यर्थः । **वैचित्र्येति ॥** प्रत्यक्षसिद्धपाण्डित्यशालिनं कञ्चन पक्षीकृत्य, नायं पाण्डित्यशाली पुरुषत्वात् सम्मतवदिति प्रयोगसम्भवाद् वैचित्र्यमपलापनीयं स्यादित्यर्थः ।

**भावदीपिका (श्री.टि.)–** ननु कामस्य ज्ञानेन विरोध इत्यत्र कथमिदं मानम्? रस-शब्दस्य कामवाचित्वाभावादित्यत आह– **रसो राग इति वक्ष्यतीति ॥** 'रसो रागस्तथा रक्ति शोभनाध्यास एव च' इत्यभिधानं वक्ष्यतीत्यर्थः ॥ **अनुमानादिति ॥** 'ज्ञानिनः न सर्वकाम-प्रहाणिमन्त । पुरुषत्वात् । अस्मदादिवत्' इति ज्ञानिषु सर्वकामप्रहाण्यभावस्यानुमानादित्यर्थः । **उदाहृत इति ॥** 'कामादयो न जायन्ते' इत्युदाहृतेत्यर्थः ॥ **अपलापेति ॥** पुरुषत्वेन हेतुना

पण्डितस्यापि मूर्खत्वं मूर्खस्यापि पण्डितत्वमनुमातुं शक्यमिति तदुभयापलापोऽपि स्यादिति भावः ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **कामानामिति** ॥ इदं च पररीत्या । स्वरीत्या तु स्वरूपभूतकामानां व्यावृत्यै मनोगता इति विशेषणं सार्थकमित्यन्यत्र प्रतिपादितम् । ननु कामज्ञानयोर्विरोधे कथमिदं मानम् ?। अत्र रसज्ञानयोर्विरोधोक्तेरित्यत आह– **रसो राग इति वक्ष्यतीति** ॥ वीतरागभयक्रोधा इत्येतद्व्याख्यावसर इति शेषः ॥

## भाष्यम्

**आत्मना परमात्मना । परमात्मन्येव स्थितस्सन् । आत्माख्ये तस्मिन् स्थितस्य तत्प्रसादादेव तुष्टिर्भवति ॥**

'विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः ।
देवाद्भवति वै तुष्टिर्नान्यथा तु कथञ्चन ॥'

**इत्युक्तं हि नारायणाष्टाक्षरकल्पे ॥ अतो नात्मा जीवः ॥ ५५ ॥**

भावप्रदीपिका (प.टी.)– सुषुप्तावेतल्लक्षणमतिव्याप्तमित्यत आह–**आत्मनेति** ॥ 'आत्म'शब्देन जीवः किं न स्यात् ? इत्यत आह– **आत्माख्य इति** ॥ ५५ ॥

भावप्रकाशिका (न.टी.)– 'आत्मनि' इत्यादौ स्वस्मिन्नेवेत्यपि प्रतीतिर्मा भूदिति यथावद्व्याचष्टे– **आत्मनेति** ॥ कुतोऽत्रात्मशब्दोक्तो विष्णुरेव, न जीवः ? इत्याकाङ्क्षायाम्, आत्मेत्याख्याया भगवतोऽन्यत्रासम्भवात्, विषयपरित्यागेन भगवद्ध्यायिनस्तस्मिन्नेव सन्तोषः, तत्प्रसादादेव भवतीति वचनबलाच्चेति भावेनाह– **आत्माख्य इति** ॥५५॥

प्रमेयदीपिका (ज.टी.)– 'आत्मनि' 'आत्मना' इति पदद्वयेन जीव एवात्रोच्यते' इति कश्चित् । 'तृतीयान्तेन मनः' इत्यपरः। तदुभयमसदिति भावेनाऽह– **आत्मनेति** ॥ 'स्थितस्सन्' इति शेषोक्तिः । वाक्यार्थं वदन् स्वव्याख्यानोपपत्तौ परव्याख्यानानुपपत्तौ च युक्तिमाह– **आत्माख्य इति** ॥ तस्मिन् स्थितस्य तदेकाग्रचित्तस्य । अत्र त्यक्तविषय-

**स्यापि तुष्टिरुच्यते । सा च परमात्मपरिग्रहे सम्भवति । नान्यथेत्यर्थः ॥ कुतः ? इत्यत आह– विषयांस्त्विति ॥ ततः किम्? इत्यत आह– अत इति ॥ ५५ ॥**

**भावरत्नकोशः (सु.टि.)– ॥ जीव एवोच्यत इति ॥ आत्मन्येव** प्रत्यगात्मस्वरूप एव। आत्मना **स्वेनैवेति** शब्दद्वयेन जीव उच्यत इति शङ्कर आहेत्यर्थः । **अपरः** आत्मना मनसा, आत्मैकावलम्बनेनेति रामानुज इत्यर्थः । परमात्मन्येवेत्यतःपूर्वं आत्मनीत्यनुवादो भाष्ये योज्यः । परमात्मनि स्थितत्वं सर्वसाधारणमित्यतो व्याचष्टे– **तदेकाग्रचित्तस्येति** ॥ पूर्वार्धे सर्वकामप्रहाणोक्तेराह– **त्यक्तेति** ॥ **सा च** तुष्टिः । **परमात्मपरिग्रहे** आत्मशब्देन । **अन्यथा** जीवादिपरिग्रहे । **रामे स्थितिमतः** तदेकाग्रचित्तस्य । **ततो देवाद्** रामदेवप्रसादात् । **अतः** भगवत्प्रसादमन्तरा । **तुष्टिः** गीतोक्ताऽपि जीवस्य सदाऽसत्त्वात्, लोकसिद्धतुष्टिकारणविषयाणां त्यक्तत्वाच्च न शक्योपपादयितुम् । **अतो** न आत्मशब्देन **जीवः** मनो वा ग्राह्यमिति शेषभाष्यार्थः ।

**गीताक्षरार्थस्तु**—– का भाषेति ज्ञानिलक्षणप्रश्नस्योत्तरमुच्यते– **प्रजहातीति** ॥ यदा मनोगतान् सर्वान् कामान् कामक्रोधादिदोषान् प्रजहाति प्रकर्षेण त्यजति । यदा चात्मन्येव परमात्मन्येव, स्थितः सन्निति शेषः, तदेकचित्तः सन् आत्मना परमात्मना तत्प्रसादेन तुष्टः सन्तोषसम्भृतो भवति तदा स्थितप्रज्ञः अपरोक्षज्ञान्युच्यते । सुप्ते मूर्च्छिते चाज्ञानिनि सर्वकामप्रहाणिर्लक्षणमतिव्याप्तमित्यत उक्तम्– आत्मन्येवेतीति केचिद् व्याख्याय आत्मानम-परोक्षीकृत्य तस्मिन्नेव स्थितत्वम्, तत्प्रसादलब्धपरितोषश्च लक्षणमिति न सुप्तादावतिव्याप्तिरिति पर्यहरन् । कामादेर्मनोगतत्वाव्यभिचारान्नेदं विशेषणमिति चेत्, नेदं कामविशेषणम् । किन्तु सर्वकामत्यागस्यासम्भवित्वमाशङ्क्य तदुपपादनाय युक्तिरनेनोच्यते । ज्ञानस्य कामादेश्च मनोनिष्ठत्वान्मनसि ज्ञाने जाते 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्यत्र रसशब्देन रागापर-पर्यायकामस्याभिसंहिततया तद्विरुद्धस्य कामादेर्हानं युक्तमिति सूचनात् । प्रायस्सर्वविरुद्धकामा-दित्यागवत्त्वे सत्यपरोक्षीकृतभगवत्प्रसादायत्तसन्तोषणशालित्वं ज्ञानिनो लक्षणम्। यश्चैवं-लक्षणकः स ज्ञानी व्यवह्रियत इत्युक्तं भवतीति ॥ ५५ ॥

**भावदीपिका (श्री.टि.)– ॥ तृतीयान्तेनेति ॥** आत्मशब्देनेत्यर्थः । तथाच सप्तम्यन्तात्मशब्दस्तु जीववाचीति भावः । तथाचाऽत्मनि स्वस्मिन्नात्मना मनसा तुष्ट इत्यर्थो

द्रष्टव्यः । शेषोक्तिः । गीतायामित्यर्थः । तस्मिन् स्थितत्वं सर्वसाधारणमित्यतो व्याचष्टे **तदेकाग्रेति** ॥ **अत्रेति** ॥ 'प्रजहाति' इति श्लोके पूर्वार्धेन त्यक्तविषयत्वम्, उत्तरार्धेन तुष्टिरुच्यत इत्यर्थः ॥ **परिग्रहे** ॥ आत्मशब्देनेति शेषः ॥ ५५ ॥

भावप्रकाशः (कृ.टि.)– परमात्मस्थितत्वं सर्वसाधारणमित्यत आह– **तदैकाग्रेति** ॥ ५५ ॥

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

## भाष्यम्

**तदेव स्पष्टयत्युत्तरैस्त्रिभिः श्लोकैः । एतान्येव ज्ञानोपायानि । तच्चोक्तम्– 'तद्वै जिज्ञासुभिः साध्यं ज्ञानिनां यत्तु लक्षणम्' इति । शोभनाध्यासो रागः ॥ 'रसो रागस्तथा रक्तिः शोभनाध्यास उच्यते' इत्यभिधानात् ॥**

भावप्रदीपिका (प.टी.)– पुनः श्लोकत्रयेऽपि लक्ष्यनिर्देशाल्लक्षणान्तरमुच्यत इति शङ्का मा भूदित्याह– **तदेवेति** ॥ आत्मतुष्ट्यकामत्वलक्षणं जिज्ञासावतिव्याप्तमित्यत आह– **एतानीति** । उपायतया तत्र वर्तते, न तु ज्ञानिनीव स्वाभाविकतयेत्यर्थः । 'विगत-स्पृह'पदात् 'वीतराग'पदस्यार्थभेदमाह– **शोभनेति** ॥ ५६ ॥

भावप्रकाशिका (न.टी.)– 'दुःखेषु' इत्यादिभिः 'स्थितधीर्मुनिः' 'तस्य प्रज्ञा प्रतिष्ठिता' इति पुनर्लक्ष्यनिर्देशाल्लक्षणान्तरोक्तिरिति नाशङ्कनीयमित्याह– **तदेवेति** ॥ न केवलं 'प्रजहाति' इत्याद्युक्तिनिपिद्धसर्वकामप्रहाणादीनि ज्ञानिनामेव लक्षणत्वेनोच्यन्ते । किन्तु ज्ञानार्थिभिरप्यनुष्ठेयानीत्येतत् सप्रमाणकमाह– **एतानीति** । दुःखेषु वर्तमानेषु तत्परिहर्तुं नोद्विग्नमनाः । सुखेषु वर्तमानेषु 'एवमेव स्यात्' इति न स्पृहयतीत्यकामत्वमेव स्पष्टितं भवति । 'विगतस्पृह'पदात् 'वीतराग'पदस्यार्थभेदं सप्रमाणकमाह– **शोभनेति** ॥ अशोभने शोभनत्वाध्यासरहितः । अतस्तत्रापि न कामः । वीतभयत्वात् तत्परिहर्तुं कामोऽपि न । वीतक्रोधादपि कामरहितः । 'कामः कथं पुनरस्य मनः श्रयेत' इति वचनात् । एवमुत्तरश्लोकाभ्यामपि 'सर्वान् कामान् प्रजहाति' इत्येतत् स्पष्टितं भवतीति ॥ ५६ ॥

श्लोकः ५६

प्रमेयदीपिका (ज.टी.)– ननु लक्षणस्यानेनैवोक्तत्वात् किं 'दुःखेषु' इत्यादिना? इत्यत आह– **तदेवेति** ॥ उक्तं लक्षणमेव । स्पष्टनं च कामशब्दोपलक्षितदोषान्तरत्याग-कथनादिनेति ज्ञेयम् ॥ ननु कामत्यागादीनि ज्ञानसाधनतयोच्यन्ते 'अमानित्वम्' (१३.८) इत्यादौ ॥ ततो ज्ञानिलक्षणस्य जिज्ञासावतिव्याप्तिरित्यत आह– **एतान्येवेति** ॥ उप समीपे आयः फललाभो येषां तान्युपायानि साधनानि । सत्यमेतत् । तथाऽपि जिज्ञासौ प्रयत्नसाध्यानि, ज्ञानिनि तु स्वभावसिद्धानीति न दोष इति भावः ॥

अत्र प्रमाणमाह– **तत्रेति** ॥ समुच्चयवादी त्वाह– 'यानीह स्थितप्रज्ञलक्षणान्युच्यन्ते तान्येवापवर्गसाधनानि' इति । तद्वाऽनेन दूषयति । ज्ञानसाधनान्येव नापवर्गसाधनानि । यथोक्तं 'कामकारेण चैके' (ब्र.सू.३.४.१५) इति । आनन्दवृद्ध्यर्थता त्वङ्गीकृतैव । 'योगे त्विमां शृणु' इत्युक्त्वा कथं योगादन्यदुच्यते? इत्यतो वेदमुदितमिति । विगतस्पृह-पदेनैव 'वीतरागः' इत्येतद् गतार्थमित्यत आह– **शोभनेति** ॥ अशोभनेषु विषयेषु शोभनत्व भ्रान्तिः। रसः, रागः, रक्तिः इत्येतैः काम उच्यते । तथा शोभनाध्यासः उच्यत इत्यर्थः ॥ ५६ ॥

भावबोधः (र.टि.)– ॥ **उप समीप इति** ॥ रूढस्यैव उपायशब्दस्य पुंलिङ्गत्वनियमो यौगिकस्य तु विशेष्यलिङ्गत्वमिति भावः । 'तद्वै जिज्ञासुभिः' इति उदाहरिष्यमाणवचनानु-सारेणाभिप्रायमाह– **सत्यमेतदिति** ॥ **स्वभावसिद्धानीति** ॥ एतच्च लक्षणे विवक्षितमिति भावः । **कामकारेणेति** ॥ अनेन सूत्रेण परोक्षज्ञानोत्तरं विहिताकरणे विहितकरणे च ज्ञानिनो मुक्तिर्भवत्येवेत्युच्यते । समुच्चयसाध्यत्वे तद्विरोधः स्यादित्यर्थः ॥

भावदीपः (रा.टि.)– ॥ **इत्यादाविति** ॥ 'अमानित्वमदम्भित्वम्' इति त्रयोदशेऽ-ध्याये ॥ नपुंसकत्वनिर्वाहायाऽह– **उप समीप** इत्यादि ॥ **यथोक्तमिति** ॥ कामात्यागेऽपि ज्ञानिनो मोक्षो नियत इत्येतद् ज्ञानपादे सूत्रकृतोक्तमित्यर्थः । 'कामकारेण च' कामचारेणापि ज्ञानिनो मोक्षं 'कामचाराः कामभक्षाः' इत्येके शाखिनः पठन्तीत्यर्थः ॥ **अङ्गीकृतैवेति** ॥ 'शमदमाद्युपेतः स्यात् तथाऽपि तु' इति सूत्रकृतैवोक्तेरिति भावः ॥ **इदमुदितमिति** ॥ 'एतान्येव' इत्यादिकमुदितमित्यर्थः । 'रसवर्ज्यम्' इति वक्ष्यमाणोपयोगायाऽह– **इत्यैतेः काम उच्यत इति** ॥ अत्र '**तथा**' इत्यनन्तरम् 'अपि' इत्येतदनुषज्यते ॥ ५६ ॥

**भावरत्नकोशः (सु.टि.)– ॥ अनेनैव** अवश्यवक्तव्यस्य लक्षणस्य 'प्रजहाति यदा' इति श्लोकेनैवोक्तत्वादित्यर्थः । **'दोषान्तरत्यागकथनादिना'** इत्यत्र दोषान्तरं भयादि । आदिपदेन द्वेषप्रसञ्जकप्रदर्शनं, द्वेषाभावप्रदर्शनं च गृह्यते । इत्यादौ त्रयोदशाध्याये । ननूपायशब्दस्येणो घञि निष्पन्नत्वाद् घञन्तस्य च 'घञजबन्ताः' इति पुंलिङ्गत्वानुशासनात् कथं भाष्ये नपुंसक-लिङ्गत्वमित्यत आह– **उप समीप इति** ॥ तत्र विशेष्याकाङ्क्षायां शङ्कितातिव्याप्तिपरिहाराय भावमाह– **सत्यमिति ॥ एतत्** कामत्यागादीनि ज्ञानसाधनतयोच्यन्त इत्येतत् । भाष्ये साध्य-पदस्वारस्यमनुरुन्धान आह– **प्रयत्नसाध्यानीति । स्वभावेति** ॥ स्वाभाविककामादित्यागस्य ज्ञानिलक्षणत्वान्न जिज्ञासावतिव्याप्तिरिति भावः । **समुच्चयवादी** ज्ञानं विहितकरण-निषिद्धाकरणसमुच्चितमेव मोक्षहेतुरिति समुच्चयवादी । **तद्वा अनेन** तन्मतं वा 'एतान्येव ज्ञानोपायानि' इति भाष्येण । एवकारं व्यत्यस्य योजयंस्तद्व्यावर्त्यमाह– **ज्ञानेति** ॥ स्थितप्रज्ञ-लक्षणान्यपवर्गसाधनानीत्यत्रापवर्गशब्देन मोक्षमात्रमुच्यते ? उत तत्रत्यानन्दोत्कर्षोऽपीति विकल्प्य आद्य आह– **यथोक्तमिति** ॥ यथेष्टाचारेणापि ज्ञानिनो मोक्षं 'कामचाराः काम-भक्षाः' इत्येके शाखिनः पठन्तीति सूत्रार्थः । अस्मिन् सूत्रे ज्ञानिनो विरुद्धकामादित्यागा-भावेऽपि मोक्षनियमोक्तेः 'प्रजहाति यदा कामान्' इत्याद्युक्तलक्षणान्यपवर्गसाधनमित्युक्त-मयुक्तमिति भावः ।

द्वितीय आह– **आनन्देति** ॥ 'शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्' इत्यादौ सूत्रकृतैव आनन्दातिशयहेतुताया उक्तत्वादिति भावः । पूर्वयोजनापेक्षयाऽन्तरङ्गत्वात् प्रकारान्तरमाह– **योगे त्विमामिति** ॥ इदं 'एतान्येव' इत्यादिकं प्रमाणम् । गमनिका तु पूर्ववदेवेति भावः । शुभार्थे प्रेम्णो गुणत्वात् तत्प्रहाणमयुक्त-मित्यतोऽध्यासपदार्थं वक्तुं शेषमाह– **अशोभनेष्विति** ॥ शोभनत्वमात्यन्तिकसुखसाधनत्वम् । **इत्येतैः** शब्दैः । काम इति शेषोक्तिः । तथाशब्दस्वारस्यायाह– **तथेति ॥ उच्यते** क्वचित् । अत्र चापौनरुक्त्याय शोभनाध्यास एव ग्राह्य इति भावः । एतेन यत्प्राग् वक्ष्यतीत्युक्तं तदपि ज्ञापितं भवति ॥ ५६ ॥

**भावदीपिका (श्री.टि.)– ॥ अमानित्वमित्यादाविति ॥** 'अमानित्वम्' इत्यादौ 'असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु' इत्याद्युक्त्वाऽन्ते 'एतज्ज्ञानमिति प्रोक्तम्' इति ज्ञान-

साधनत्वोक्तेरित्यर्थः । **जिज्ञासौ** ज्ञानेच्छावत्परोक्षज्ञानिनीत्यर्थः । ननूपायशब्दस्य नित्यपुंलिङ्गत्वादुपायानीति कथमित्यत आह– **उप समीप इति** ॥ **फलेति** ॥ ज्ञानाख्यफलेत्यर्थः । तथाच रूढस्यैवोपायशब्दस्य पुंलिङ्गत्वनियमेन यौगिकस्य तस्य तु विशेष्यनिघ्नत्वम् । अयं तूपायशब्दो यौगिक इत्याशयेन योगः प्रदर्शित इत्याशयः ॥ **सत्यमेतदिति** ॥ एतान्येव ज्ञानोपायानीति ज्ञानिलक्षणस्य जिज्ञासावतिव्याप्तिरिति यद्यपीत्यर्थः ॥ **स्वभावसिद्धानीति** ॥ प्रकृते च स्वभावसिद्धान्येव लक्षणत्वेन विवक्षितानीति न जिज्ञासावतिव्याप्तिरिति भावः । मूले ज्ञानिनां यत् लक्षणं तज्जिज्ञासुभिः साध्यम् । ज्ञानिनां तु स्वभावसिद्धमिति शेषः । **तान्येव** कामादिवर्जनान्येव । ज्ञानसहितानीति शेषः ।

**समुच्चयवादी प्रष्टव्यः** । एतेषां कामत्यागादीनामपवर्गसाधनत्वं वदता त्वयाऽपवर्गशब्देन किं विवक्षितमिति । लिङ्गभङ्गो वा, आनन्दवृद्धिर्वा? नाऽद्य इत्याह– **नापवर्गेति** ॥ लिङ्गभङ्गरूपेत्यर्थः । कुत इत्यत आह– **कामकारेण चैक इति** ॥ 'कामचारा कामभक्षा कामवादा कामेनैवेमं लोकं देहमुत्सृज्याथ परात् परमीयुरनारम्भणम्' इति चैके पठन्तीति सूत्रार्थः । तथाचानेन सूत्रेणापरोक्षज्ञानोत्तरं विहिताकरणे निषिद्धकरणे च ज्ञानिनो लिङ्गभङ्गरूपा मुक्तिर्भवत्येवेत्युच्यते । समुच्चयसाध्यत्वे तद्विरोधः स्यादिति भावः । द्वितीये त्विष्टापत्तिरित्याह– **आनन्देति** ॥ **इदम्** कामत्यागादिरूपं लक्षणम् । **इदमुदितम्** एतान्येवेति वाक्यम् । तथाच यानि स्वभावसिद्धानि ज्ञानिलक्षणानि तान्येव जिज्ञासुना साधितानि सन्ति, ज्ञानोपायान्यपि भवन्तीति योगत्वं युक्तमित्याशयः । रसशब्दस्य रागवाचित्वं तूक्ताभिधानादवगन्तव्यमित्युत्तरत्र वक्ष्यमाणत्वादत्र च तदनुक्तेस्तदर्थमध्याहारेण योजयति– **काम उच्यत इति** ॥ ५६ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **कथनादिनेति** ॥ आदिपदेन द्वेषप्रसञ्जकप्रदर्शनं द्वेषाभावकारणप्रदर्शनं च सङ्गृह्यते ॥ ननूपपूर्वादिणः करणे घञन्तत्वादुपायशब्दः पुंलिङ्गः । 'घञबन्त' इति लिङ्गानुशासने घञन्तस्य पुंस्त्वविधानात् । तत्कथं ज्ञानोपायानीत्युक्तमित्यत आह– **उप समीप इति** ॥ दिगन्तराललक्षणभिन्नबहुव्रीहिस्तावद् विशेष्यनिघ्नबहुव्रीहिः । अमरेण (तथोक्तेः) तथोक्तत्वात् । उपायशब्दोऽपि तादृशो बहुव्रीहिः । अतो न पुंस्त्वनियमः । नच तथाऽपि नपुंसकत्वे विनिगमकाभावः । 'सामान्ये नपुंसकम्' इति तदुपपत्तेरिति भावः ॥

'तद्वै जिज्ञासुभिः' इत्यग्रिमप्रमाणानुसारेणाभिप्रायमाह– **सत्यमेतदिति ॥ स्वभावसिद्धानीति ॥** तथा च स्वाभाविकस्य कामत्यागादेः लक्षणत्वान्नातिव्याप्तिरिति भावः । अपवर्गसाधनत्वे किम् अनिष्टनिवृत्त्यादिरूपापवर्गसाधनत्वमुत आनन्दोद्रेकरूपतत्साधनत्वमिति विकल्प्याद्य आह– **यथोक्तमिति** ॥ यथेष्टाचारेणापि ज्ञानिनो मोक्षमेके शाखिनः पठन्तीति सूत्रार्थः । तथा च सूत्रे विरुद्धकामादित्यागाभावेऽपि ज्ञानिनो नियमेन मोक्षोक्तेरुक्तमयुक्तमिति भावः । द्वितीये त्वाह– **आनन्देति** ॥ तथाशब्दस्वारस्याय योजयति– **रसो राग इति** ॥ एतेन 'रसो राग इति वक्ष्यति' इति यत्प्रागुक्तं तत्प्रमापितम् ॥ ५६ ॥

**यः सर्वत्रानभिस्नेहः तत्तत् प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

## भाष्यम्

**सर्वत्र अनभिस्नेहाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ॥ ५७ -५८ ॥**

भावप्रदीपिका (प.टी.)– 'वीतक्रोध'पदेन 'न द्वेष्टि' इत्यस्यागतार्थत्वमाह– **सर्वत्रेति** ॥ ५७--५८ ॥

भावप्रकाशिका (न.टी.)– 'वीतक्रोधः' इत्यनेन 'न द्वेष्टि' इत्यस्य पुनरुक्तिशङ्कां परिहरन्नुत्तरश्लोकं व्याचष्टे– **सर्वत्रेति ॥ शुभाशुभं** सुखदुःखसाधनम् । शुभस्नेहाभावादेवाशुभं प्राप्यापि न द्वेष्टि इत्यर्थः ॥ ५७-५८ ॥

प्रमेयदीपिका (ज.टी.)– 'वीतरागभयक्रोधः' (२.५६) इत्युक्तत्वात् 'न द्वेष्टि' इति पुनरुक्तिरित्यत आह– **सर्वत्रेति** ॥ सकारणकं द्वेषवर्जनमत्रोच्यत इत्यर्थः ॥ ५७-५८ ॥

श्लोकः ५७,५८

**भावरत्नकोशः (सु.टि.)– ॥ सकारणकमिति ॥** विषयेष्वभिस्नेहो हि तल्लाभविरोधिषु द्वेषकारणम् । तदभावाद् द्वेषोऽपि समूलस्त्यक्तव्य इत्यर्थः ॥

गीताश्लोकत्रयाक्षरार्थस्तु– उक्तं ज्ञानिलक्षणमेव कामशब्दोपलक्षितदोषान्तरत्यागकथनादिना स्पष्टीक्रियते– **दुःखेष्वित्यादित्रिश्लोक्या** । दुःखेषूपनतेषु अनुद्विग्नमनाः अक्षुभितमनस्कः सुखेषु विगतस्पृहः विहीनाभिलाषः सुखसाधनेषु विषयेषु स्पृहारहित इति वा, सुखेषूपनतेषूत्साहहीन इति वाऽर्थः । वीताः अपगताः रागभयक्रोधा यस्मात् स तथा । अशोभनेषु विषयेषु शोभनत्वभ्रान्ती रागः । स मुनिः स्थितधीः अपरोक्षज्ञानीत्युच्यते । वीतरागभयक्रोधत्वं केन हेतुना भवतीत्यत उच्यते – **यस्सर्वत्रेति** ॥ पुत्रदारादिषु विषयेषु । हेत्वर्थगर्भं चेदं विशेषणम् । सर्वत्रानभिस्नेहत्वात् शुभाशुभं प्राप्यापि नाभिनन्दति न द्वेष्टीति सकारणकं द्वेषादिवर्जनमत्रोच्यते । तस्य प्रज्ञा अपरोक्षज्ञानम् । किञ्च अयं ज्ञानी यदा इन्द्रियार्थेभ्यः शब्दादिभ्यः सर्वशः सर्वस्मिन् देशे काले सर्वाणि चेन्द्रियाणि श्रोत्रादीनि संहरते प्रत्याहरति । अनायासेन प्रत्याहरणे दृष्टान्तः – **कूर्मोऽज्ञानीवेति** ॥ ५७-५८ ॥

**भावदीपिका (श्री.टि.)– ॥ सकारणमिति ॥** पूर्वं क्रोधत्यागमात्रमुक्तम् । अत्र तु सर्वत्रानभिस्नेहत्वरूपकारणसहितं द्वेषवर्जनमुच्यत इति न पुनरुक्तिरित्यर्थः ॥ ५७-५८ ॥

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

## भाष्यम्

**नचैतल्लक्षणं ज्ञानमयत्नतो भवतीत्याहोत्तरैः श्लोकैः । निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति ॥**

भावप्रदीपिका (प.टी.)– एवंभूतं चेत् ज्ञानम्, कुतस्तर्हि सर्वे न साधयन्ति ? इत्याशङ्कां परिहर्तुं श्लोकत्रयमवतारयति– **न चेति ॥** तत्राद्यश्लोकं व्याचक्षाणोऽवतारयति– **निराहारत्वेनेति ॥** एवकारेण 'रसवर्जम्' इति व्याख्यातः । रागो न निवर्तत इत्यर्थः ॥

भावप्रकाशिका (न.टी.)– पुनः श्लोकत्रयान्ते लक्ष्यनिर्देशात्, लक्षणस्यैव पृष्टत्वात् तत्रापि लक्षणोक्तिशङ्का मन्दस्य स्यात् । तां व्यावर्तयितुं तत्र प्रतिपाद्यमाह– **न चेति ॥**

तत्राद्यश्लोकं व्याचक्षणोऽवतारयति– **निराहारेति ।।** निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति इत्यनेन साष्टमांशस्य पूर्वार्धस्य एकोऽर्थः कथ्यते । एवकारेण रसवर्जमित्येतत् व्याख्यानात्(तम्) । द्वौ हि विषयप्रवृत्तिहेतू रागो भोगशक्तिश्च । निराहारत्वं च तन्निवृत्तिहेतुः । एवं च निराहारस्य रसवर्जं विषया विनिवर्तन्त इत्युक्ते केषाञ्चिन्निराहार-त्वेन भोगशक्त्यभावः एव न रागाभाव इत्यर्थः ।।

**प्रमेयदीपिका** (ज.टी.)– 'विषया विनिवर्तन्ते' इत्यादिश्लोकत्रयान्तेऽपि 'तस्य प्रज्ञा प्रतिष्ठिता' इत्युक्तत्वादिदमपि लक्षणविवरणमिति भ्रान्तिस्स्यात् । तन्निराकरणार्थमाह– **नचेति ।।** एतल्लक्षणं यस्माद्भवति तदेतल्लक्षणम् । 'अयत्नतः' अल्पयत्नतः । 'अनुदरा कन्या' इति यथा । 'यद्येवंलक्षणकं ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत्साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिरा इव बम्भ्रमीति । अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्याशङ्कापरिहारार्थम्' इति शेषः ।।

'त्रिभिः' इत्यनुवर्तते । ज्ञानस्याल्पप्रयत्नासाध्यत्वमत्र न प्रतीयत इत्याशङ्क्योपोद्घात-प्रक्रिययेन्द्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमाद्येन श्लोकेनोच्यत इति भावेन तं व्याचष्टे– **निराहारत्वेनेति ।।** एतेन 'रसवर्जम्' इत्येतदन्तस्य वाक्यस्यार्थ उक्तः । एवशब्देन 'रसवर्जम्' इत्येतद्व्याचष्टे । तथाहि– **निराहारस्य देहिनः । तेन** निराहारत्वेनेति यावत् । 'विषयाः' रूपादयः । तद्भोगसमर्थानीन्द्रियाण्यनेनोपलक्ष्यन्ते । तानि विनिवर्तन्ते । 'रसवर्जं' रसः रागः, तं वर्जयित्वा । विषयाभिलाषः चैतसिको निराहारत्वेन न विनिवर्तत इति ।।

**भावबोधः** (र.टि.)– ननु 'प्रजहाति' इत्यादिना ज्ञानिन एव लक्षणमुक्तम्, न तु ज्ञानस्य । अत एतल्लक्षणमित्यत्र षष्ठ्यर्थबहुव्रीहिर्न सम्भवतीत्यत आह– **एतल्लक्षणं यस्मादिति ।।** काम-प्रहणादेः अपरोक्षज्ञानसाध्यत्वादिति भावः । **उपोद्घातेति ।।** ज्ञानस्य अल्पप्रयत्नासाध्यत्वे तत्साधनेन्द्रियजयस्य महाप्रयत्नसाध्यत्वस्य हेतुत्वादिति भावः । **इन्द्रियाणि (अनेन उपलक्ष्यन्ते) इति ।।** निराहारत्वेन विषयाणां निवर्तनाभावात् विषयविषयिभावलक्षणशक्यसम्बन्धात्, विषयभोगसामर्थ्यद्योतनरूपप्रयोजनसम्भवाच्चेति भावः । **तानि विनिवर्तन्त इति ।।** तेषां विषयभोगशक्तिः क्षीयत इति यावत् ।।

श्लोकः ५९

**भावदीपः (रा.टि.)– ॥ एतदिति ॥** सर्वकामप्रहाणादिरूपं लक्षणमित्यर्थः । 'षष्ठी शेषे' (पा.सू.२.३.५०) इति सूत्रभाष्योक्तमाह– **अनुदरा कन्येति यथेति ॥** सूक्ष्ममध्यमायामनुदरा इति यथोच्यते तथेत्यर्थः ॥ **एवंलक्षणमिति** बहुव्रीहिः । कामप्रहाणादिलक्षणसाधनं ज्ञानं यदीत्यर्थः ॥ **न तदिति ॥** ज्ञानमित्यर्थः ॥ **बम्भ्रमीति ॥** पुनः पुनः भ्रमतीत्यर्थः । 'भ्रमु चलने' (पा.धा.८५०) इत्यस्य यङ्लुकि रूपम् ॥ **उपोद्घातप्रक्रिययेति ॥** उपयुक्तं प्रागुक्त्वा पश्चात्तत्प्रधानोक्तिरिति न्यायेनेत्यर्थः ॥ इन्द्रियजयस्य महाप्रयत्नसाध्यत्वोक्तिश्च ज्ञानस्य अल्पप्रयत्नासाध्यत्वोक्तावुपयुक्तेति भावः ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ दन्दह्यमानशिरा इति ॥** 'दह भस्मीकरणे' इत्यस्मात् 'लुपसदचर' इति धात्वर्थगर्हायां यङि 'सन्यङोः' इति द्विर्भावे हलादिशेषे 'जपजभदह' इति अभ्यासस्य नुकि अनुस्वारे निष्पन्नदन्दह्यशब्दस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां कर्मणि शानचि 'आनपरे मुक्' इति मुकि दन्दह्यमानशब्दनिष्पत्तिः । गर्हितं दन्दह्यत इति दन्दह्यमानं तादृशं शिरो यस्य स तथोक्त इत्यर्थः ॥ 'भ्रमु चलने' इत्यस्मात् पुनः पुनः अतिशयेन भ्रमतीत्यर्थे धातोः 'एकाचः' इति यङि, यङः 'अचि च' इति अनिमित्तकत्वेनान्तरङ्गत्वादादो यङो लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' इति द्विर्भावे हलादिशेषे, 'अभ्यासस्य च' इति अभ्यासस्य वशभावे अभ्यासकार्ये अनुनासिकान्तस्येति अदन्ताभ्यासस्य नुकि तस्यानु-स्वारे सति धातुत्वात् लटि तस्य तिपि यङः 'अनुदात्ते च' इति यङन्तात् परस्य हलादेः 'पितः सार्वधातुकस्य' इति पिति बम्भ्रमतीति रूपनिष्पत्तिरिति द्रष्टव्यम् ॥

**भावरत्नकोशः (सु.टि.)–** ननु 'प्रजहाति' इत्यादिना ज्ञानिन एव लक्षणमुक्तं न तु ज्ञानस्य । अतः 'एतल्लक्षणम्' इत्यत्र यस्य तदिति षष्ठ्यर्थगर्भबहुव्रीहिर्न सम्भवतीत्यत आह– **एतदिति ॥** कामप्रहाणादिरूपमित्यर्थः । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति वक्ष्यमाणरीत्या ज्ञानिलक्षणकामप्रहाणादेरपरोक्षज्ञानसाध्यत्वावगमादिति भावः । नन्वपरोक्षज्ञानस्य सर्वमतेऽपि यत्नजन्यत्वादप्रसक्तमयत्नजन्यत्वं कथं निषिध्यते भाष्य इत्यत आह– **अल्पयत्नत इति ॥**

> 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
> अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः'

इत्युक्तेर्नञोऽत्राल्पार्थत्वमिति भावः ।

अत्र प्रयोगमपि प्रमाणयति – **अनुदरा कन्येति यथेति** ॥ **'षष्ठी शेषे'** इति सूत्रमहाभाष्ये 'सतोऽप्यविवक्षा भवति । यथाऽनुदरा कन्या' इत्युक्तम् । तद् विवृतं कैयटे 'सदप्युदरं महत्त्वाभावप्रतिपादनाय न विवक्ष्यते' इति ॥ तथा च नञो महत्त्वाभावरूपाल्पत्वमर्थ इत्यल्पोदरेत्यर्थः सम्पद्यते । 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्चेति वैकल्पिकष्टाप्' इति ॥ **एवंलक्षणं** एवंविधलक्षणकारणम् । **कामादीति** ॥ कस्मादित्यनुवर्तते । भ्रमतेर्यङ्लुगन्तस्य रूपं – **बम्भ्रमीतीति** ॥ पुनःपुनर्भ्रमतीत्यर्थः । ज्ञानसम्पादनेन कामाद्युपद्रवनिबर्हणसम्भवादिति भावः ॥ **त्रिभिरितीति** ॥ 'उत्तरैः' इत्यनन्तरमिति शेषः । **उपोद्घातप्रक्रिययेति** ॥ 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते' इत्युक्तोपोद्घातसङ्गत्येत्यर्थः । इन्द्रियजयस्य महाप्रयत्नसाध्यत्वोक्तिर्ज्ञानस्याल्पप्रयत्नासाध्यत्वोक्त्युपयोगिनीति भावः ।

ननु 'रसवर्जमित्येतदन्तस्य' इति कथम् । भाष्ये तदर्थानुक्तेरित्यत आह– **एवशब्देनेति** ॥ तदुभयं भाष्यारूढत्वायोपपादयति– **तथा हीति** ॥ गीतापदमनुवदंस्तस्य भाष्यं तात्पर्यकथनमित्याह– **निराहारस्येति** ॥ अनेन विषयपदेन निराहारत्वेन विषयनिवृत्त्यननुभवादुपलक्षणत्वोक्तिः । तानि तद्भोगसमर्थानीन्द्रियाणीत्यस्य इन्द्रियाणां विषयभोगसामर्थ्यानि निवर्तन्त इत्यर्थः । 'सविशेषणे हि विधिनिषेधौ विशेष्ये बाधाद् विशेषणमुपसङ्क्रामतः' इति न्यायादिति भावः । 'तेन रक्तं रागात्' इत्यादौ रागशब्दस्यान्यार्थपरत्वादत्र विवक्षितमर्थमाह– **विषयाभिलापश्चैतसिक इति** ॥

**भावदीपिका (श्री.टि.)**– 'प्रजहाति' इत्यादिना ज्ञानिन एव लक्षणमुक्तं न ज्ञानस्य । अत एतत् लक्षणं यस्येति षष्ठ्यर्थगर्भबहुव्रीहेरयोगात् पञ्चम्यर्थगर्भो बहुव्रीहिरित्याह– **एतदिति** ॥ **यस्मादिति** ॥ कामप्रहाणादेरपरोक्षज्ञानसाध्यत्वादिति भावः । नन्वयत्नतो न भवतीत्युक्त्या यत्नतो भवतीति प्राप्तम् । तथाचाल्पयत्नतोऽपि भवतीति प्राप्त्या प्रकृतविरोध इत्यत आह– **अयत्नत इति** ॥ ननु नञोऽल्पार्थत्वं कुत्र दृष्टम्? इत्यत आह– **अनुदरा कन्येति** ॥ अल्पोदरवतीत्यर्थः ॥ **तदिति** ॥ कामादिप्रहाणिलक्षणकं तत्साधनं ज्ञानमित्यर्थः ॥ **उपोद्घातप्रक्रिययेति** ॥ ज्ञानस्याल्पप्रयत्नासाध्यत्वे तत्साधनेन्द्रियजयस्य महाप्रयत्नसाध्यत्वस्य हेतुत्वादिति भावः ॥ **इन्द्रियाणीति** ॥ निराहारत्वेन विषयाणां निवर्तनरूपमुख्यार्थासम्भवाद् विषयविषयिभावलक्षणशक्यसम्बन्धाद् विषयभोगलक्षणसामर्थ्यद्योतनरूपप्रयोजनसद्भावा-

त्रेन्द्रियाणि लक्ष्यन्त इति भावः ॥ **तानि विनिवर्तन्ते** तेषां विषयभोगशक्तिः क्षीयत इति यावत् । **चैतसिकः** विषयपञ्चकविषयकमानसिकरागः । पञ्चानां बाह्येन्द्रियाणां स्वस्वविषयभोगशक्तिक्षयो निराहारत्वेन भवति । विषयपञ्चकविषयकमानसिकरागक्षयो निराहारत्वेन न भवति । किन्त्वपरोक्षज्ञानेनैव भवतीत्याशयः ॥

**भावप्रकाशः (कृ.टि.)–** प्रजहातीत्यादिना ज्ञानिन एव लक्षणमुक्तं न तु ज्ञानस्य । अत एव एतल्लक्षणमित्यत्र **षष्ठ्यर्थ** बहुव्रीह्ययोगादाह– **एतल्लक्षणं यस्मादिति** ॥ कामप्रहाणादेरपरोक्षज्ञानजन्यत्वादिति भावः । नन्वपरोक्षज्ञानस्य सर्वमतेऽपि यत्नजन्यत्वात् अयत्नजन्यत्वमप्रसक्तं कथं निषिध्यत इत्यत आह– **अल्पयत्नत इति** ॥

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः'

इत्युक्तेः नञोऽल्पार्थत्वादिति भावः । अल्पार्थत्वे प्रयोगमप्याह– **अनुदरेति** ॥ अल्पोदरेत्यर्थः । **उपोद्घातेति** ॥ ज्ञानस्याल्पप्रयत्नासाध्यत्वं यत्प्रकृतं तदुपयुक्तत्वेनेत्यर्थः । ननु रसवर्जपदार्थस्यैवानुक्तत्वात् कथमुच्यते रसवर्जमित्येतदन्तस्यार्थ उक्त इतीत्यत आह– **एवशब्देनेति** ॥ निराहारत्वेन विषयनिवृत्त्यभावादाह– **उपलक्ष्यन्त इति** ॥ **तानि निवर्तन्त इति** ॥ सविशेषणे हीति न्यायेनेन्द्रियाणां विषयभोगशक्तयो निवर्तन्त इत्यर्थः ॥

## भाष्यम्

**इतरविषयाकाङ्क्षाभावो वा । रसाकाङ्क्षादिर्न निवर्तते । स त्वपरोक्षज्ञानादेव निवर्तत इत्याह– विषया इति ॥**

भावप्रदीपिका (प.टी.)– अर्थान्तरं चाह– **इतरेति** ॥ अर्थेन्द्रियजयः शक्त्यभावेन च तत्र सर्वेन्द्रियाणां शक्तिनाशेन जय इत्याद्योऽर्थः । रसनेतरेन्द्रियाणां द्वयमपि निवर्तते । रसनस्यैकमपि न निवर्तत इति द्वितीयम् ॥

भावप्रकाशिका (न.टी.)– तस्यैवान्योऽर्थः कथ्यते– **इतरेत्यादिना** ॥ केषाञ्चित् निराहारत्वेन रसेतररूपादिविषयाकाङ्क्षा विनिवर्तते न भोगशक्तिमात्रम् । रसगुणाकाङ्क्षा

**तद्भोगशक्तिश्च न विनिवर्तत इत्यर्थः । तन्निवृत्तिः कदा ? इत्यत आह– स त्विति ।। द्वितीयमर्थं स्थापयति– इन्द्रियाणीति । रसनाम् इन्द्रियम् । असौ रसना जिह्वा । रस्ये रसनीये वर्धते अधिकाकाङ्क्षा भवतीत्यर्थः ।।**

**प्रमेयदीपिका (ज.टी.)– अस्यैवार्थान्तरमाह– इतरेति ।।** आकाङ्क्षाशब्देन भोग-शक्तयोऽपि लक्ष्यन्ते । 'रसवर्जम्' इत्यस्यार्थो– **रसाकाङ्क्षादिरिति ।।** ततश्चेयं योजना । निराहारत्वेन रसादितरे विषयाः तद्भोगशक्तयः, तदाकाङ्क्षाश्चेति यावत् । विनिवर्तन्ते रसं वर्जयित्वा । मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य तद्भोगशक्तिश्च न निवर्तते इति । 'रसोऽपि' इत्यस्यार्थमाह– **स त्विति ।।** आद्येऽर्थे सः रसः सर्वविषयविषयको रागः । द्वितीये सः रसः तद्भोगशक्तिः, तदाकाङ्क्षा च। उक्तमर्थं श्लोकारूढं करोति– **इत्याहेति ।।**

**भावबोधः (र.टि.)– ।। तद्भोगशक्तयोऽपीति ।।** अत्रार्थे उदाहरिष्यमाण 'इन्द्रियाणि जयन्ति' इति प्रमाणे सामान्यतः चतुर्णामिन्द्रियाणां जयस्य निराहारत्वेनोक्तत्वात् तस्य च 'असौ रस्ये तु वर्धते' इति उत्तरग्रन्थानुसारेण चतुर्णां भोगशक्तिक्षयेण विषयचतुष्टयविषयक-मानसिकरागक्षयेण चेति प्रकारद्वयेनापि विवक्षितत्वादिति भावः । अत एव 'रसाकाङ्क्षादिः' इति भाष्ये रसनेन्द्रियभोगशक्तिसङ्ग्राहकादिपदप्रयोगः ।

**भावदीपः (रा.टि.)– ।। इयं योजनेति ।।** 'गीतावाक्यस्य' इति योज्यम् ।। **तद्भोग-शक्तय इति ।।** अत्र 'इन्द्रियाणाम्' इति 'तदाकाङ्क्षा' इत्यत्र च 'मनसः' इति योज्यम् ।। **द्वितीय इति ।।** 'अर्थः' इत्यनुषज्यते ।।

**भावरत्नकोशः (सु.टि.)– ।। अस्यैव** रसवर्जमित्येतदन्तस्यैव । 'इतर' इत्यत्र प्रतियोग्याह– **रसादिति ।। तद्भोगशक्तयः** इन्द्रियाणाम् । **तदाकाङ्क्षाः** मनसः । इति इयं योजनेति पूर्वेण सम्बन्धः । **आद्येऽर्थे** रसशब्दस्य चैतसिकाभिलाषग्रहणपक्षे । **द्वितीये** रसनेन्द्रियग्राह्यगुणपरत्वे ।

**भावदीपिका (श्री.टि.)– ।। अस्यैव** 'विषया विनिवर्तन्ते','रसवर्जम्' इत्यस्यैव ।। **भोगशक्तयोऽपीति ।।** रसनेन्द्रियव्यतिरिक्तानां चतुर्णामिन्द्रियाणामित्यर्थः ।। **योजनेति ।।** अर्थान्तरत्वपक्षे गीताया भाष्यस्य च मिलित्वा योजनेत्यर्थः । इतरत्वस्यावधिसापेक्षत्वाद्

रसादितर इत्युक्तम् । 'विषयाः' इत्यनूद्य तस्य लक्षणयाऽर्थद्वयमाह– **तद्भोगशक्तय इत्यादि** ।। चतुर्णामिन्द्रियाणां विषयचतुष्टयभोगशक्तयः, विषयचतुष्टयविषयकमानसिकाकाङ्क्षाश्चेत्यर्थः । आद्येऽर्थे निराहारत्वेनेन्द्रियाणां विषयभोगसामर्थ्याभाव एव भवतीत्याद्येऽर्थे । 'सः' इत्यनूद्य 'रसः' इति व्याख्यानम् । तस्याप्यर्थमाह– **सर्वविषयविषयकेति** ।। विषयपञ्चकविषयकेत्यर्थः । द्वितीये इतरेत्युक्तार्थे । 'सः' इत्यस्य 'रसः' इत्यर्थमुक्त्वा तस्याप्यर्थ उच्यते– **तद्भोगशक्तीति** ।। रसनेन्द्रियस्य रसभोगशक्तिर्मनसस्तद्विषयकाकाङ्क्षा चेत्यर्थः । तथाच रसनेन्द्रियव्यतिरिक्तानां चतुर्णाम् इन्द्रियाणां रसेतरविषयभोगशक्तिक्षयः, मनसो विषयचतुष्टयविषयकाकाङ्क्षायाश्च क्षयो निराहारत्वेन भवति । रसनेन्द्रियरसभोगशक्तिक्षयो मनसस्तद्विषयकरागक्षयश्च ब्रह्मसाक्षा-त्कारेणैव भवतीत्याशयः ।।

**भावप्रकाशः (कृ.टि.)**– **अस्यैवेति** ।। 'रसवर्जम्'इत्येदन्तस्यैवेत्यर्थः । 'रसाकाङ्क्षादिः' इत्यग्रिमभाष्ये रसभोगशक्तिसङ्ग्रहायादिपदं प्रयुक्तम् । तत्स्वारस्यायार्थमाह– **भोगशक्तयोपीति** ।।

## भाष्यम्

**'इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।**
**वर्जयित्वा च रसनामसौ रस्ये तु वर्धते ।।'** (भाग.११.८.१९) ।

**इति वचनाद् भागवते । रसशब्दस्य रागवाचित्वाच्च ।। ५९ ।।**

भावप्रदीपिका (प.टी.)– द्वितीये प्रमाणमाह– **इन्द्रियाणीति** ।। प्रथमार्थं स्थापयति– **रसेति** ।। ५९ ।।

**भावप्रकाशिका (न.टी.)**– रसरागशब्दयोः पर्यायत्वात् प्रथमोऽर्थोऽपि युक्त इत्याह– **रसशब्दस्येति** ।। ५९ ।।

प्रमेयदीपिका (ज.टी.)– द्वितीयार्थे प्रमाणमाह– **इन्द्रियाणीति** ।। जयन्ति भोगशक्तिक्षयेण रागक्षयेण च । असौ रसना तु । रस्ये विषये । प्रकारद्वयेन च वर्धते । आद्यमर्थमुपपादयति– **रसशब्दस्येति** ।। 'उक्तं युक्तम्' इत्युभयत्र शेषः ।। रसशब्दस्य

रागवाचित्वं तूक्ताभिधानादवगन्तव्यम् । अचेतने चेतनवदुपचारात् 'रसः परं दृष्ट्वा निवर्तते' इति युक्तम् ॥

**अयमर्थसङ्ग्रहः । यदा बाह्येन्द्रियाणि विषयैस्सन्निकृष्यन्ते तदा तद्द्वारा मनस्तत्र प्रवर्तते ।प्रवृत्ते च मनसि रागो भवति । तत आत्मनः क्षोभ इत्येष इन्द्रियाणामविजयः । यो हि यं व्याकुलं करोति स तेन विजित इत्युच्यते । यदा तु बाह्येन्द्रियाणि विषयसन्निधानेऽपि न तैः सन्निकृष्यन्ते, सन्निकृष्टान्यपि न मनः तदाभिमुख्येनाहरति,आहृतेऽपि मनसि न विषयरागो जायते, तदा नात्मनः क्षोभो भवतीत्येष इन्द्रियजयः । सोऽयं सङ्ग्रहेण द्वेधा– बाह्येन्द्रियाणां शक्तिक्षयान्मनसो रागक्षयाच्च । एतद्द्वयं च पुरुषभेदेनोक्तप्रकारद्वयेन निराहारत्वब्रह्मसाक्षात्काराभ्यां भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ॥ ५९ ॥**

**भावबोधः (र.टि.)– ॥ उक्तं युक्तमित्युभयत्र शेष इति ॥** तेन वचनादिति वाचित्वा-च्चेति पञ्चम्युपपत्तिरिति भावः । ननु अचेतनस्य रसस्य कथं दर्शननिवृत्ती प्रति कर्तृत्वमित्यत आह **अचेतनेति ॥ एतद्द्वयं चेति ॥** शक्तिक्षयो रागक्षयश्चेति द्वयमुक्तप्रकारद्वयेन निराहारत्वेन विषयभोगसामर्थ्याभाव एवेति इतराकाङ्क्षाभावो वेति उक्तप्रकारद्वयेन भवतीत्यर्थः । ननु निराहारत्वेन पञ्चानामपि बाह्येन्द्रियाणां स्वस्वविषयभोगशक्तिक्षय एव भवति । विषयपञ्चक-विषयकमानसिकरागक्षयस्त्वपरोक्षज्ञानेनैवेत्येकः प्रकारः । चतुर्णामेव बाह्येन्द्रियाणां तत्तद्विषय-भोगशक्तेः, विषयचतुष्टयमात्रविषयकमानसिकरागस्य च क्षयो निराहारत्वेन, रसनेन्द्रियस्य रसभोगशक्तिक्षयः, रसविषयकमानसरागक्षयश्चापरोक्षज्ञानेनेत्यपरः । तथा चैतत्प्रकारद्वयस्य परस्परविरुद्धत्वेनैकत्र समावेशायोग इत्यत उक्तम्– **पुरुषभेदेनेति ॥** पुरुषाणां विचित्रस्वभाव-त्वेन केषाञ्चिदाद्यः प्रकारः, केषाञ्चित् द्वितीय इति पुरुषभेदेनेत्यर्थः ॥ ५९ ॥

**भावदीपः (रा.टि.)– ॥ द्वितीयार्थ** इति ॥ रसनेन्द्रियविषयेतरविषयविषयीकरणः रागः तद्भोगशक्तिश्च निवर्तत इत्यर्थे प्रमाणमाहेत्यर्थः॥ **प्रकारद्वयेनेति** ॥ भोगशक्त्या रागेण चेति प्रकारद्वयेनेत्यर्थः । **उभयत्रेति** ॥ 'इति वचनात्' इत्यत्र 'रागवाचित्वाच्च' इत्यत्र चेत्यर्थः ॥ **सोऽयमिति** ॥ इन्द्रियजय इत्यर्थः ॥ **पुरुषभेदेनेति** ॥ जिज्ञासुज्ञानिरूपपुरुषभेदेन ॥ 'उक्त-प्रकारद्वयेन' इत्येतद्व्यनक्ति– **निराहारत्वेति** ॥ ५९ ॥

श्लोकः ५९

**भावरत्नकोशः (सु.टि.)**– ॥ **द्वितीयार्थे** रसनेन्द्रियविषयेतरविषयविषयकाकाङ्क्षा रागस्तद्भोगशक्तिश्च निवर्तत इत्यर्थे । **'इन्द्रियाणि'** इत्यस्य चक्षुरादीनि मनश्चेत्यर्थो भाष्ये । **रस्ये** विषये रसनेन्द्रिययोग्यविषये । **प्रकारद्वयेन** भोगशक्त्यक्षयेण रागाक्षयेण चेति प्रकारद्वयेन चेत्यर्थः । **उभयत्र इति** वचनात् इत्यत्र, रागवाचित्वाच्चेत्युभयत्र हेतुद्वये साध्यमध्याहर्तव्य- मित्यर्थः । **उक्ताभिधानात्** 'रसो रागस्तथा रक्तिः' इत्युक्ताभिधानात् । ननु दर्शनं चेतनधर्मः । रसस्त्वचेतनः । तत् कथं 'रसो दृष्ट्वा निवर्तते' इति प्रयोग इत्यत आह– **अचेतन इति** ॥

ननु ज्ञानस्याल्पप्रयत्नासाध्यत्वप्रतिपादनायोपोद्घातसङ्गत्येन्द्रियजयस्य महाप्रयत्नसाध्यत्वमत्र श्लोके प्रतिपाद्यत इत्यवतारितम् । न चेदमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वं 'विषया विनिवर्तन्ते' इति गीतया 'निराहारत्वेन' इत्यादिभाष्येण वा स्फुटं प्रतिभासत इत्यतो भावमाह– **अयमर्थसङ्ग्रह इति** ॥ क्षोभकत्वमात्रेण कथमविजितत्वमित्यत उपपादयति– **यो हीति** ॥ **सोऽयम्** इन्द्रियजयः । इन्द्रियजयस्य 'युक्त आसीत मत्परः' इत्यादिशास्त्रेषु नानाकारण- कत्वावेदनादाह– **सङ्ग्रहेणेति** ॥ **शक्तिक्षयात्** विषयोपभोगसामर्थ्यकुण्ठनात् ॥

ननु निराहारत्वेन पञ्चानामपि बाह्येन्द्रियाणां स्वस्वविषयभोगसामर्थ्यक्षयः, अपरोक्षज्ञानेन तु विषयपञ्चकविषयकमानसरागक्षय इत्येकः प्रकारः । निराहारत्वेन रसनेतरचतुरिन्द्रियगोचर- तत्तद्विषयभोगशक्तेः तदाकाङ्क्षायाश्च निवृत्तिः, अपरोक्षज्ञानेन तु रसभोगशक्तेस्तदाकाङ्क्षायाश्च निवृत्तिरित्यपरः । अनयोश्च परस्परविरुद्धत्वात् कथमेकत्र समावेश इत्यत उक्तम्– **पुरुषभेदे- नेति** ॥ पुरुषाणां च विचित्रस्वभावत्वात् केषाञ्चिदाद्यः, केषाञ्चित्तु द्वितीयः प्रकार इति भावः । **उक्तप्रकारद्वयेन** 'निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति, इतरविषयाकाङ्क्षाभावो वा' इत्युक्तप्रकारद्वयेनेत्यर्थः । उक्तप्रकारद्वयविवरणं निराहारत्वब्रह्मसाक्षात्काराभ्यामित्यपि गमयन्ति । **इति** 'अयमर्थसङ्ग्रहः' इति सम्बन्धः ॥ ५९ ॥

**भावदीपिका (श्री.टि.)**– ॥ **द्वितीयार्थे** इतरविषयकाङ्क्षाभावे वेत्युक्तार्थे ॥ **जयन्ती- त्यादि** ॥ मनीषिणो निराहारत्वेन रसनां वर्जयित्वा रसनेन्द्रियव्यतिरिक्तानीन्द्रियाणि भोग- शक्तिक्षयेण मनसस्तद्विषयकाकाङ्क्षाक्षयेण च जयन्ति । असौ रसना तु रसनेन्द्रियं तु रस्ये स्वविषये प्रकारद्वयेन रसभोगशक्त्यभिवृद्ध्या रागाभिवृद्ध्या च वर्धते । मनसस्तद्विषयक- रागाभिवृद्धिहेतुत्वेन वर्धत इति यावदिति योज्यम् ॥ **आद्यमर्थमिति** ॥ निराहारत्वेन

विषयभोगसामर्थ्याभाव एव भवति । रसवर्जं रसो रागस्तं वर्जयित्वा विषयाभिलाषश्चैतसिको निराहारत्वेन न निवर्तत इत्याद्यमर्थमित्यर्थः ॥ **उपपादयतीति** ॥ स्यादाद्योऽर्थो यदि रसशब्दस्य रागवाचित्वं स्यात् । तदेव कुत इत्यतः पूर्वोदाहृतमभिधानं मनसि निधायोपपादयतीत्यर्थः ॥ **उभयत्रेति** ॥ भागवते एकादशस्कन्धे इति वचनादितरविषयेत्यर्थान्तरकथनं युक्तम् । रसशब्दस्य रागवाचित्वाच्च निराहारत्वेनेत्याद्यर्थकथनं युक्तमित्युभयत्र शेष इत्यर्थः । ननु रसस्याचेतनत्वात् कथं 'दृष्ट्वा निवर्तते' इति दर्शननिवृत्ती प्रति कर्तृत्वमित्यत आह– **अचेतनेति** ॥ **एतद्वयं चेति** ॥ शक्तिक्षयो रागक्षयश्चेति द्वयम् । **उक्तप्रकारद्वयेन** निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति, इतरविषयाकाङ्क्षाभावो वेत्युक्तप्रकारद्वयेन भवतीत्यर्थः ॥

ननु निराहारत्वेन पञ्चानामपि बाह्येन्द्रियाणां स्वस्वविषयभोगशक्तिक्षय एव भवति । विषयपञ्चकविषयकमानसिकरागक्षयस्त्वपरोक्षज्ञानेनैवेत्येकः प्रकारः । तथा चतुर्णामेव बाह्येन्द्रियाणां तत्तद्विषयभोगशक्तेर्विषयचतुष्टयविषयकमानसिकरागस्य च क्षयो निराहारत्वेन भवति । रसनेन्द्रियस्य रसभोगशक्तिक्षयः रसविषयकमानसिकरागक्षयश्चापरोक्षज्ञानेनेत्यपरः । तथाचैतत्प्रकारद्वयस्य परस्परविरुद्धत्वेन नैकस्मिन् पुरुषे समावेशो युक्त इत्यत उक्तम्– **पुरुषभेदेनेति** ॥ पुरुषाणां विचित्रस्वभावत्वेन केषाञ्चिद् आद्यः प्रकारः, केषाञ्चिद् द्वितीय इति पुरुषभेदेनोपपन्नत्वान्न दोष इति भावः ॥ ५९ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **प्रकारद्वयेनेति** ॥ भोगशक्तिस्तदाकाङ्क्षाचेति प्रकारद्वयेनेत्यर्थः । वचनादिति वाचित्वाच्चेति च पञ्चम्युपपत्त्यर्थमाह– उक्तं **युक्तमित्युभयत्र शेष** इति ॥ ननु दर्शननिवृत्ती प्रति रसस्य कथं कर्तृत्वम् अचेतनत्वादित्यत आह– **अचेतन** इति ॥ **सोऽयमिति** ॥ इन्द्रियजयः कारणद्वयेन भवतीत्यर्थः । मत्परो युक्त आसीतेत्यादिना साधनान्तरस्य वक्ष्यमाणत्वात् कथमेतदित्यत उक्तम्– **सङ्ग्रहेणेति** ॥ कारणद्वयमेवाह– **बाह्येति** ॥ **उक्तप्रकारद्वयेनेति** ॥ निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति इतरविषयाकाङ्क्षाभावो वेत्युक्तप्रकारद्वयेनेत्यर्थः । ननु निराहारत्वेन बाह्येन्द्रियाणां भोगशक्तिक्षयः । अपरोक्षज्ञानेन तु मानसिकरागक्षय इत्येकप्रकारः । निराहारत्वेन रसेतरविषयभोगशक्तेस्तदाकाङ्क्षायाश्च निवृत्तिः । अपरोक्षज्ञानेन तु रसभोगशक्तेः तदाकाङ्क्षायाश्च निवृत्तिरिति द्वितीयः । अनयोश्च परस्परविरुद्धत्वात् कथमेकत्र समावेश इत्यत उक्तम्– **पुरुषभेदेनेति** ॥ पुरुषाणां विचित्रस्वभावत्वात् केषाञ्चिदाद्यः प्रकारः केषाञ्चित् द्वितीय इति भावः ॥ ५९ ॥

**यततो ह्यपि कौन्तेय पुरुषस्य विजानतः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

## भाष्यम्

**अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि मनो हरन्ति इन्द्रियाणि। पुरुषस्य शरीराभिमानिनः । को दोषस्ततः । प्रमाथीनि प्रमथनशीलानि पुरुषस्य ॥ ६० ॥**

भावप्रदीपिका (प.टी.)– ननु किमपरोक्षज्ञानोपवासादिना ? परोक्षज्ञानेन प्रत्याहारादिना रसेन्द्रियजयसिद्धेरित्येतत्परिहर्तुं द्वितीयं श्लोकं व्याचष्टे– **अपरोक्षेति** ॥ ६० ॥

भावप्रकाशिका (न.टी.)– ननु किं हर्यपरोक्षज्ञानेन ? किन्तु सर्वोत्तमत्वात् सर्वेन्द्रियसंसेव्यो हरिरिति परोक्षज्ञानादेवोक्तो रसो निवर्तिष्यते । तथा किं निराहारत्वेन ? किन्तु प्रत्याहारादिसाधारणयत्नादेवेतरे विषया विनिवर्तिष्यन्त इत्याशङ्कोत्तरत्वेनोत्तरश्लोकं व्याचष्टे– **अपरोक्षेति** ॥ 'हि'शब्देन प्रसिद्धमेतदजामिळादाविति सूचितम् । नोदाहरणं भाष्ये । पुरे सक्तत्वात् पुरुषः शरीराभिमानी ॥ ६० ॥

प्रमेयदीपिका (ज.टी.)– ननु यत्नज्ञानाभ्यामिन्द्रियजयमुक्त्वा 'यततो ह्यपि' इति तद्विरुद्धं कथमुच्यते? इति चेत् न । इन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन? प्रत्याहारादिना साधारणेन प्रयत्नेन तत्सम्भवात् । तथा किमपरोक्षज्ञानेन? नित्यानित्यविवेकज्ञानेनापि तदुपपत्तेरित्याशङ्क्य तन्निषेधोऽत्र क्रियत इत्याशयवान् व्याचष्टे– **अपरोक्षेति** ॥ ज्ञानस्य प्राधान्यसूचनाय 'विपश्चितोऽपि' इत्येतत् पश्चादुक्तमपि 'अपरोक्ष' इति, आदौ व्याख्यातम् । 'यततोऽपि' इत्यस्यार्थः– **साधारणेति** ॥ 'हरन्ति' विषयसन्निकृष्टानि तदभिमुखं कृत्वा तद्रागीकुर्वन्तीत्यर्थः । 'पुरुषस्य' इति व्यर्थम् । स्त्रीणामप्येवम्भावादित्यत आह– **पुरुषस्येति** ॥ एतच्चोक्तोपपादनार्थम् । 'प्रमाथीनि' इत्यस्य प्रयोजनं वक्तुमाह– **क इति** ॥ एतावता आत्मनस्तदविजयः कथमित्याशयः ? मनो हृतवन्ति पुरुषस्य क्षोभणशीलानीति न तेन जितानीति भावः । 'पुरुषस्य' इत्यनेन उभयत्रास्यान्वयं दर्शयति ॥ ६० ॥

**भावबोधः (र.टि.)**– ॥ **उक्तोपपादनार्थमिति** ॥ प्रत्याहारादिसाधारणप्रयत्ननित्यानित्य-वस्तुविवेकज्ञानवतोऽपीन्द्रियजयाभावे शरीराभिमानस्य हेतुत्वादिति भावः । **उभयत्रेति** ॥ 'पुरुषस्य प्रमाथीनि' पुरुषस्य मनः' इत्युभयत्रेत्यर्थः ॥ ६० ॥

**भावदीपः (रा.टि.)**– ॥ **तदुपपत्तेरिति** ॥ रागक्षयोपपत्तेरित्यर्थः ॥ **उक्तोपपादनायेति** ॥ 'मनोहरन्ति' इत्याद्युक्तोपपादनाय शरीराभिमानिन इत्यर्थः ॥ **एकं** 'पुरुषस्य'इति पदमित्यर्थः ॥ **उभयत्रेति** ॥ 'पुरुषस्य मनो हरन्ति, पुरुषस्य प्रमाथीनि' इत्युभयत्रेत्यर्थः ॥ ६० ॥

**भावरत्नकोशः (सु.टि.)**– 'निराहारस्य' इति, 'दृष्ट्वा' इति चोक्तत्वादाह– **यत्नज्ञानाभ्यामिति** ॥ **तद्विरुद्धम्** इन्द्रियजयोक्तिविरुद्धम् । 'न' इत्यनन्तरम् अत्र श्लोके महा-प्रयत्नवतोऽपीन्द्रियाणि न जेतुं शक्यानीत्यभिधानस्य क्रियमाणत्वात्, 'तथाऽभिधाने ह्युक्त-विरोधः । किं तर्हि क्रियत इति चेत्' इति शेषः । **प्रत्याहारादिनेति** ॥

'इन्द्रियाणां विचरणं विषयेषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारस्स उच्यते ॥'

इत्युक्तप्रत्याहारः । आदिपदेन 'अपरे नियताहाराः' इत्यादौ नियताहारत्वस्येन्द्रियजय-हेतुत्वाभिधानान्नियताहारत्वस्य सङ्ग्रहः तेनेत्यर्थः । **तत्सम्भवात्** इन्द्रियजयसम्भवात् । **तदुपपत्तेः** रागक्षयोपपत्तेः । **क्रमात्** पश्चाद् व्याख्येयस्याप्यादौ व्याख्याने बीजमाह– **ज्ञानस्येति** ॥ अपरोक्षज्ञानस्येत्यर्थः । 'विपश्चितोऽपि' इत्यनुवादेनैवापिशब्दोऽत्राप्यन्वेतीति ज्ञायते । अत एव भाष्ये उभयत्रापिपदम् । असन्निहितविषयाणां, विषयसन्निधानेऽप्यसन्निकृष्टानाम् इन्द्रियाणां मनोहर्तृत्वमनुभवविरुद्धम् । हरणं च किं विवक्षितमित्यतः 'मनो हरन्तीन्द्रियाणि' इति भाष्यं सोपस्करं व्याख्यति – **हरन्तीत्यादि** ॥ **एवम्भावात्** मनोहरणादिभावात् ।

एवमपि कथं वैयर्थ्यं परिहरणीयं? तत्राह– **एतच्चेति** ॥ प्रत्याहारादिसाधारणप्रयत्ने, नित्यानित्यविवेकज्ञाने च सत्यपि इन्द्रियजयो न भवतीत्युक्तार्थोपपादनाय शरीराभिमानिन इत्यर्थकं पुरुषपदं प्रयुक्तमित्यर्थः । पुरं शरीरं सरति गच्छत्यभिमनुत इति पुरुषः । निरुक्त-त्वादुकारः । ततः षत्वम् । शरीराभिमानो हीन्द्रियजयहेतुरिति तदावेदकं तत्पदं सार्थकमिति भावः । 'ततः' इत्यस्यार्थः – **एतावतेति** ॥ इन्द्रियाणां स्वद्वारा विषयसन्निकृष्टे मनसि

रागोत्पादकत्वमस्तीत्येतावता । **तदविजयः** इन्द्रयाविजयः । इन्द्रियाणि मनो हरन्तीत्यस्य **मनो हृतवन्तीति** ॥ प्रथमनशब्दार्थः– **क्षोभणेति** । व्याकुलीभावसम्पादनस्वभावानीत्यतो न तेन पुरुषेण विजितानीत्यर्थः । **उभयत्र** मन इत्यत्र, प्रमाथीनीत्यत्र च ॥ ६० ॥

**भावदीपिका (श्री.टि.)– ॥ यत्नः** निराहारत्वरूपः । **ज्ञानम्** अपरोक्षं ताभ्यामित्यर्थः । **प्रत्याहारः** विषयेभ्यो मनस आहरणम् । **तत्सम्भवात्** इन्द्रियजयसम्भवात् । **तदुपपत्तेः** इन्द्रियजयोपपत्तेः ॥ **तन्निषेध इति ॥** साधारणयत्नज्ञानयोर्निषेध इत्यर्थः । ननु 'यततोऽपि' इत्यादौ व्याख्येयम् । तद्विहाय पश्चादुक्तं 'विपश्चित' इति पदमादौ कस्माद् व्याख्यातमित्यत आह– **ज्ञानस्येति ॥** साधारणप्रयत्ननित्यानित्यविवेकज्ञानयोर्मध्ये नित्यानित्यविवेकज्ञानस्य प्राधान्यसूचनायेत्यर्थः ॥ **सन्निकृष्टानि** इन्द्रियाणि ॥ **द्वितीयान्तस्य** मनःपदस्याध्याहारः कार्यः । **तदभिमुखं** विषयाभिमुखम् । **तद्रागि** विषयविषयकाकाङ्क्षायुक्तम् । **एवम्भावात्** 'इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मन' इत्युक्तप्रमेयस्य भावादित्यर्थः ॥ **उक्तोपपादनार्थमिति ॥** प्रत्याहारादिसाधारणप्रयत्ननित्यानित्यवस्तुविवेकज्ञानवतोऽपि इन्द्रियजयाभावे शरीराभिमान एव कारणमित्युक्तोपपादनार्थं पुरुषस्येति विशेषणमित्यर्थः ।

मूले – 'ततः इन्द्रियाणां मनोहरणात् को दोषः' इत्यस्याऽऽशयमाह– **एतावतेति** ॥ 'इन्द्रियाणि मनो हरन्ति' इत्येतावतेत्यर्थः । **तदविजयः** इन्द्रियाविजयः । प्रमथनशीलानीत्यस्य भावमाह– **मनो हृतवन्तीति ॥** हृतवन्ति सन्ति तेनाऽऽत्मना न जितानि । तथा चाऽऽत्मनस्तदविजय इति भावः ॥ **उभयत्रेति ॥** पुरुषस्य प्रमाथीनि पुरुषस्य मनो हरन्तीत्युभयत्रेत्यर्थः ॥ ६० ॥

**भावप्रकाशः (कृ.टि.)– ॥ प्रत्याहारादिनेति ॥**

'इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
बलादाहरणं तेषां प्रत्याहारः स उच्यते'

इत्युक्तप्रत्याहारेत्यर्थः । आदिपदेन नियताहरत्वस्य सङ्ग्रहः । चतुर्थे 'अपरे नियताहाराः' इत्यादिना तस्येन्द्रियजयहेतुत्वोक्तेः । **उक्तोपपादनार्थमिति ॥** प्रत्याहारादिसाधारणप्रयत्ने नित्यानित्यवस्तुविवेकज्ञाने च सत्यपि इन्द्रियजयो न भवतीत्यत्र शरीराभिमानस्य हेतुत्वादिति भावः । **उभयत्रेति ॥** मन इत्यत्र प्रमाथीनीत्यत्र चेत्यर्थः ॥ ६० ॥

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

## भाष्यम्

**तर्ह्यशक्यान्येवेत्यत आह– तानीति ॥ बहुयत्नवतः शक्यानि । अतो यत्नं कुर्यादित्याशयः ॥**

भावप्रदीपिका (प.टी.)– यदि श्रुतादिसम्पन्नस्य प्रत्याहारादिनाऽवश्यानीन्द्रियाणि तर्हि तज्जयोऽसम्भावित एवेत्याशङ्कां परिहर्तुं तृतीयश्लोकमवतार्य व्याचष्टे– **तर्हीति** ॥

भावप्रकाशिका (न.टी.)– ननु यदि श्रुतिसम्पन्नस्यापीन्द्रियाणि नियन्तुमशक्यानि प्रत्याहारादिना, तर्हि न केनापि शक्यानीत्याशङ्क्य, तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **तर्हीति** ॥ 'सं'शब्दार्थमाह– **बह्विति** ॥ **अतः** उक्तनिराहारत्वविविक्त-सेवादिबहुयत्नं **कुर्यात्** इत्यर्थः ॥

प्रमेयदीपिका (ज.टी.)– उपोद्घातस्य साध्ये वक्तव्ये **'तानि सर्वाणि'** इति किमुच्यते? इत्यतो अन्तरापतितां शङ्कां निवर्तयितुमेतदिति भावेनाऽह– **तर्हीति** ॥ यदि साधारणयत्न विवेकज्ञानाभ्यां न जीयन्त इत्यर्थः । 'अशक्यान्येव जेतुम्' इति शेषः । निराहारस्य देहावस्थानासम्भवाद् ब्रह्मापरोक्षज्ञानस्य चेन्द्रियजयसाध्यतयाऽभिप्रेतत्वेनेतरेतराश्रयप्रसङ्गा-दिति भावः । तथाच 'तज्जयस्य ज्ञानसाधनत्वं यद्विवक्षितं तन्न सम्भवति' इति शङ्काशेपः । इन्द्रियसंयमोऽशक्य एवेति शङ्कायां 'तानि सर्वाणि संयम्यासीत' इति किमेतदुच्यते? इत्यत आह– **बहुयत्नवत इति** ॥ **यत्नं** 'बहुम्' इति शेषः ॥ यद्यपि तज्जये परोक्तं साधनमस्मदुक्तं चाशक्यम् । तथाऽपि तत्प्रतिनिधिना महाप्रयत्नेन जय्यानीत्यर्थः । एतदप्युपोद्घातत्वेनैवोक्तमिति ज्ञातव्यम् ॥

भाववोधः (र.टि.)– ॥ एतदपीति ॥ इन्द्रियजयस्य निराहारत्वब्रह्मसाक्षात्कार-प्रतिनिधिमहाप्रयत्नसाध्यत्वमपि ज्ञानस्याल्पप्रयत्नासाध्यत्वे हेतुत्वेनोच्यत इत्यर्थः ॥

श्लोकः ६१

**भावदीपः (रा.टि.)– ॥ उपोद्घातस्येति ॥** इन्द्रियजयस्य महाप्रयत्नसाध्यत्वरूपोपयुक्तप्रमेयस्य ज्ञानम् अल्पप्रयत्नसाध्यम् इत्येवंरूपे साध्ये वक्तव्य इत्यर्थः । **न परोक्तमिति ॥** प्रत्याहारादिसाधारणप्रयत्नरूपम् **अस्मदुक्तं चेति ॥** निराहारत्वरूपं देहावस्थानायोगेन **अशक्यम् ॥ 'यद्यपि'** इत्यनुषङ्गः ॥ **तत्प्रतिनिधिनेति ॥** अस्मदुक्तप्रतिनिधिना तत्कार्यकारिणा महाप्रयत्नेनेत्यर्थः ॥ एतेनान्योन्याश्रयोऽपि प्रत्युक्तः । ज्ञानस्येन्द्रियजयसाध्यत्वेऽपि तस्य महाप्रयत्नसाध्यत्वेन ज्ञानासाध्यत्वात् **एतदपीति॥ 'तानि'** इति श्लोके इन्द्रियजयस्य महाप्रयत्नसाध्यत्वकथनमपि ज्ञानस्याल्पप्रयत्नासाध्यत्वप्रमेयोपयोगित्वेनोक्तमित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ उपोद्घातस्य** इन्द्रियजयस्य महाप्रयत्नसाध्यत्वरूपोपयुक्तप्रमेयस्य । साध्ये ज्ञानमल्पप्रयत्नासाध्यमित्येवंरूपे । तर्हीत्यस्य प्रतियोग्याह– **यदीति ॥ अशक्यान्येव** इन्द्रियाणि ॥ ननु निराहारत्वस्य ब्रह्मापरोक्षज्ञानस्य च तज्जयहेतुत्वात् कथं जेतुमशक्यान्येवेत्युच्यत इत्यतः शङ्कितुर्भावमाह– **निराहारस्येति ॥ देहेति ।** यदधिष्ठानानीन्द्रियाणि जय्यानि स्युरित्याशयः । **इतरेतराश्रयेति ।** 'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता' इतीन्द्रियजयस्य ब्रह्मापरोक्षज्ञानसाधनत्वं ब्रह्मापरोक्षज्ञानस्य चेन्द्रियजयहेतुत्वमिति परस्पराश्रयदोषापातादित्यर्थः । इन्द्रियाणामजय्यत्वोक्तेः फलं वक्तव्यम् । तच्च भाष्ये न दृश्यत इत्यतस्तद्दर्शयितुमाह– **तथा चेति ॥**

'इन्द्रियसंयमः' इत्यादिना कृतचोद्यस्य परिहाराय भाष्यभावमाह– **यद्यपीति ॥ परोक्तं** प्रत्याहारादिसाधारणप्रयत्नरूपं साधनम् । सत्यपि तस्मिन् मनो हरन्ति पुरुषस्य क्षोभणशीलानीति न तेन विजितानीत्यन्वयव्यभिचारादिति भावः । अस्मदुक्तं निराहारत्वं ब्रह्मज्ञानं चाशक्यम् । देहावस्थानासम्भवादन्योन्याश्रयदोषाच्चेति भावः । **तत्प्रतिनिधिना** अस्मदुक्तसाधनप्रतिनिधिना तत्कार्यकारिणा । एतेनान्योन्याश्रयदोषः परिहृतः । ज्ञानस्येन्द्रियजयसाध्यत्वेऽपि इन्द्रियजयस्य महाप्रयत्नसाध्यत्वेन ज्ञानासाध्यत्वादिति स्वामिनः ॥

नन्विन्द्रियजयस्यास्मदुक्तनिराहारत्वब्रह्मसाक्षात्काररूपसाधनप्रतिनिधिभूतमहाप्रयत्नसाध्यत्वोक्तिरसङ्गतेत्यत आह– **एतदपीति ॥** इन्द्रियजयस्य महाप्रयत्नसाध्यत्वमपि ज्ञानस्याल्पयत्नासाध्यत्वे हेतुत्वेनैवोक्तमिति नासङ्गतिरिति भावः ॥

**भावदीपिका** (श्री.टि.)– ननु निराहारत्वेनेन्द्रियजयस्य साधयितुं शक्यत्वे कथमशक्यत्वमित्यत आह– **निराहारस्येति** ॥ अस्तु तर्हि ब्रह्मसाक्षात्कारेण तज्जय इति चेत्, तत्राऽह– **ब्रह्मापरोक्षज्ञानस्य चेति** ॥ **इतरेतराश्रय इति** ॥ इन्द्रियजयसाध्यस्य ब्रह्मापरोक्षज्ञानस्येन्द्रियजयं प्रति साधनत्वाङ्गीकारे इन्द्रियजये सत्यपरोक्षज्ञानं, तस्मिन् सतीन्द्रियजय इत्यन्योन्याश्रयः स्यादित्यर्थः ॥ **तथा चेति** ॥ इन्द्रियाणां जेतुमशक्यत्वे सतीत्यर्थः । **तज्जये** इन्द्रियजये । **परोक्तम्** प्रत्याहारविवेकज्ञानरूपम् । **अस्मदुक्तम्** निराहारत्वब्रह्मसाक्षात्काररूपम् । देहावस्थानासम्भवान्योन्याश्रयाभ्यामशक्यमित्यर्थः । **तत्प्रतिनिधिना** निराहारत्वादिप्रतिनिधिना । निरन्तरं भगवत्येव मनोयोजनरूपेण महता प्रयत्नेनेत्यर्थः ॥ **जय्यानीति** ॥ 'क्षय्यजय्यौ शक्यार्थे' इत्युक्तत्वाद् जेतुं शक्यानीत्यर्थः ॥ **एतदपीति** ॥ इन्द्रियजयस्य निराहारत्वब्रह्मसाक्षात्कारप्रतिनिधिरूपमहाप्रयत्नसाध्यत्वमपि ज्ञानस्याल्पप्रयत्नासाध्यत्वे हेतुत्वेनोच्यत इत्यर्थः ।

**भावप्रकाशः** (कृ.टि.)– नन्वस्मदुक्तसाधनप्रतिनिधिभूतमहाप्रयत्नसाध्यत्वोक्तिरसङ्गतेत्यत आह– **एतदपीति** ॥ उक्तं महाप्रयत्नसाध्यत्वं ज्ञानस्याल्पप्रयत्नासाध्यत्वेनोक्तमित्यर्थः ॥

## भाष्यम्

**युक्तः मयि मनोयुक्तः (मनोयोगयुक्तः) । अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः । फलमाह– वशे हीति ॥ ६१ ॥**

भावप्रदीपिका (प.टी.)– 'सं'शब्दार्थः – **बहिरिति** ॥ तन्निग्रहेण किं फलम् ? इत्यपेक्षायामुत्तरार्धमवतारयति–**फलमिति** ॥ ६१ ॥

भावप्रकाशिका (न.टी.)– एवं यतमानस्योक्तलक्षणं ज्ञानं सिद्ध्यतीत्याह– **फलमिति** ॥ एतदपि गङ्गाद्वारादौ यतमानेऽजामिळादौ प्रसिद्धमिति 'हि'शब्दसूचितत्वान् नात्राप्युदाहरणं भाष्ये ॥ ६१ ॥

प्रमेयदीपिका (ज.टी.)– 'युक्तः' इति नैतद्युजिरो रूपम् । येन प्रतिसम्बन्ध्याकाङ्क्षायां तदनुक्तिर्दोषः स्यात्, किन्तु समाध्यर्थस्य युजेरिति भावेनाऽह– **युक्त इति** ॥ 'मत्परः'

श्लोकः ६१

इत्युत्तरत्र श्रवणात् **'मयि'** इत्युक्तम् । **'मत्परः'** इत्यद्वैतज्ञानमिति अन्यैर्व्याख्यातम् । तन्नाक्षरानुसारीत्याशयवान् व्याचष्टे— **अहमेवेति** ।। भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरं मनसो योजनमिन्द्रियजये परं साधनमिति भावः । निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मन्तव्यम् ।।

यदर्थमयमुपोद्धात उक्तस्तत्प्रदर्शनपरतयोत्तरार्धतात्पर्यमाह— **फलमिति** ।। यद्येवं ततः किम्? इत्याकाङ्क्षायामिन्द्रियजयस्य ज्ञानं फलमाहेत्यर्थः । यत एवं ज्ञानं महायास-साध्येन्द्रियजयफलमत एवायासभीरुर्जनो न तत्साधयति । ननु ज्ञानस्योक्तलक्षणसाधनत्वा-भावाद् इति श्लोकत्रयतात्पर्यार्थः ।। ६१ ।।

**भावबोधः (र.टि.)**– ।। **वस्तुगतिप्रदर्शनार्थमिति** ।। निराहारत्वब्रह्मसाक्षात्काराभ्या-मपीन्द्रियजयस्य जायमानत्वाभिप्रायेणैवेदमुक्तम् । न त्वेतत्साध्येन्द्रियजयस्यापरोक्षज्ञान-साधनत्वाभिप्रायेणेत्यर्थः । गीतायां विषयध्यानसङ्गरूपस्य रागादिदोषकारणस्य सम्मोहादिरूप-रागादिदोषफलस्य च निरूपणात् तदनुरोधेन भाष्यं द्वेधा व्याचष्टे **–रागादिदोषस्येत्यादिना** ।। ६१ ।।

**भावदीपः (रा.टि.)**– ।। **वस्तुगतीति** ।। निराहारेणापीन्द्रियाणां भोगशक्तिक्षयः प्रमित इति भावेनैवोक्तं मुख्यं साधनं भगवति मनोयोग एवेत्यर्थः ।। ६१ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **युजिर इति** ।। 'युजिर् योगे' इत्यस्येत्यर्थः । **तदनुक्तिदोषः** अमुकेनेति प्रतिसम्बन्ध्यनुक्तिदोषः । **युजेरिति** ।। 'युज समाधौ' इत्यस्येत्यर्थः । तथा च 'मनस्समाधिमान्' इत्यस्य तात्पर्यं 'मयि मनो युक्तः' इति भाष्यमिति भावः ।। **अद्वैत-ज्ञानमन्यैरिति** ।। यथाऽऽह शङ्करः 'मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परः । नान्योऽहम्, तस्मादिति बुद्धिमानासीत' इति ।। अभेदबुद्धेरेतद्गीताक्षरैरनुत्पादादाह– **अक्षरेति** ।। गीताभाष्योक्तास्मच्छब्दविवक्षितमर्थमाह– **भगवानेवेति** ।। 'यस्य' इत्यत्र ज्ञातृज्ञेयभाव-सम्बन्धः षष्ठ्यर्थो विवक्षित इति भावेनोक्तम् इति **ज्ञात्वेति** ।।

ननु भगवतस्सर्वोत्तमत्वज्ञानपूर्वं तत्र निरन्तरं मनोयोजनमेव चेन्द्रियजयहेतुस्तर्हि 'विषया विनिवर्तन्ते' इति निराहारत्वस्येन्द्रियाणां विषयभोगसामर्थ्याभावरूपजयहेतुत्वोक्तिरयुक्ता

स्यादित्यत आह– **निराहारत्वादिकं त्विति** ॥ महानुभावानां ज्ञानिनामपि निराहारत्वेनेन्द्रियाणां भोगशक्तिक्षयः प्रमित इत्यभिसन्धायैव निराहारत्वस्य तज्जयप्रयोजकत्वमुक्तम् । मुख्यं तु साधनं निरन्तरमनोयोग एवेत्यर्थः । निराहारत्वादिसाध्येन्द्रियजयस्यापरोक्षज्ञानसाधनत्वप्रदर्शनव्यवच्छेदायैवकारः । एवं सर्वोत्कृष्टत्वज्ञानपूर्वकं भगवति मनोयोजनस्येन्द्रियजयं प्रति मुख्यसाधनत्वम् । 'प्रज्ञा प्रतिष्ठिता' इति श्रवणादाह– **ज्ञानमिति** ॥ ननु 'यद्येवंलक्षणं ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत् साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिरा इव बंभ्रमीति । अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्याशङ्कापरिहारार्थं 'विषया विनिवर्तन्ते' इत्यादिश्लोकत्रयमुक्तम्' इत्युक्तम् । तत् कथमनेन परिहार इत्यतः श्लोकत्रयतात्पर्यार्थमाह– **यत एवमिति** ॥ ६१ ॥

**गीताक्षरार्थस्तु**– नन्वेवंविधलक्षणस्य साधनभूतं चेज्ज्ञानं तर्हि सर्वोऽपि जनः कस्मान्न तत् साधयति । कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानशिरा इव बम्भ्रमीति ? अतो नास्त्येवेदं ज्ञानिषु लक्षणमिति शङ्कापरिहारार्थं एतल्लक्षणं ज्ञानं नाल्पप्रयत्नसाध्यम् । किन्तु निराहारत्वेनेन्द्रियजयः । तेनैव ज्ञानमित्यादि दुस्सम्पादत्वं ज्ञानस्योच्यते 'विषयाः' इत्यादित्रिश्लोक्या । तत्राप्युपोद्घातप्रक्रियया इन्द्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमाद्यश्लोकेनोच्यते ।

निराहारस्य देहिनः, तेन निराहारत्वेन इति यावत् । विषयाः रूपादयः । तद्भोगसमर्थानीन्द्रियाण्यनेनोपलक्ष्यन्ते । तानि निवर्तन्ते । रसवर्जं रसो रागः तं वर्जयित्वा । विषयाभिलाषश्चैतसिको निराहारत्वेन न निवर्तत इति ॥ यद्वा, रसवर्जं मधुराम्ललवणरसादितरे विषयाः रूपगन्धस्पर्शशब्दाः, इन्द्रियाणां तद्भोगशक्तयः, तदाकाङ्क्षाश्चेति यावत् । विनिवर्तन्ते रसं वर्जयित्वा । मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य तद्भोगशक्तिश्च न निवर्तते । तद् द्वयं कदा निवर्तत इत्यत उक्तं– **रसोऽपीति** ॥ अस्य देहिनः रसः सर्वविषयविषयो रागः, मधुराम्लादिगुणो वा । तेन तद्ग्राहकेन्द्रियस्य तद्भोगशक्तिस्तदाकाङ्क्षा च लक्ष्यते । परं परमात्मानं दृष्ट्वा निवर्तते । अचेतने चेतनवदुपचारात् 'रसः परं दृष्ट्वा निवर्तते' इति युक्तम् ॥

अयमर्थसङ्ग्रहः । यदा बाह्येन्द्रियाणि विषयैस्सन्निकृष्यन्ते तदा तद्द्वारा मनस्तत्र प्रवर्तते । प्रवृत्ते च मनसि रागो भवति । तत आत्मनः क्षोभ इत्येष इन्द्रियाणामविजयः । यो हि यं व्याकुलं करोति स तेनाविजित इत्युच्यते । यदा तु बाह्येन्द्रियाणि विषयसन्निधानेऽपि न

श्लोकः ६१

तैस्सन्निकृष्यन्ते, सन्निकृष्टान्यपि न मनस्तदाभिमुख्येनाहरन्ति, आहृतेऽपि मनसि न विषयरागो जायते, तदा नात्मनः क्षोभो भवतीत्येष इन्द्रियजयः । सोऽयं सङ्ग्रहेण द्वेधा । बाह्येन्द्रियाणां विषयभोगशक्तिक्षयात्, मनसो रागक्षयाच्च । एतद्द्वयं च जिज्ञासुज्ञानिलक्षणपुरुषभेदेनोक्त-प्रकारद्वयेन निराहारत्वब्रह्मसाक्षात्काराभ्यां भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ॥

नन्विन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन ? प्रत्याहारेण परोक्षज्ञानादिरूप-साधारणप्रयत्नेन तत्सम्भवात् । तथा किं परब्रह्मापरोक्षज्ञानेन ? नित्यानित्यविवेकादिज्ञानेनापि तदुपपत्तेरित्यत उच्यते – **यततो ह्यपीति** ॥ विपश्चितः अपरोक्षज्ञानरहितज्ञानिनोऽपि यततः यतमानस्य साधारणप्रयत्नवतोऽपीन्द्रियाणि विषयसन्निकृष्टानि प्रसभं बलात् मनो हरन्ति विषयाभिमुखं कृत्वा तद्रागि कुर्वन्ति । एतदुपपादनाय 'पुरुषस्य शरीराभिमानिनः' इति विशेषणम् । एतावता कथमात्मन इन्द्रियाविजय इत्यत उक्तं– **प्रमाथीनीति** ॥ मनो हृतवन्ति पुरुषस्य क्षोभणशीलानि, न तेन विजितानीति भावः । अत इन्द्रियजये महानेव प्रयत्नः कार्य इति ॥

ननु यदि साधारणप्रयत्नविवेकज्ञानाभ्यामिन्द्रियाणि न जीयन्ते तर्हि तानि जेतुमशक्यान्येव स्युः । न च निराहारत्वादिना ब्रह्मापरोक्षज्ञानेन वा तज्जयः शक्यः कर्तुमिति वाच्यम् । निराहारस्य देहावस्थितेरेवायोगेन तेनेन्द्रियजयसम्पादनासम्भवात् । ब्रह्मापरोक्षज्ञानस्य चेन्द्रियजयसाध्यतयाऽभिप्रेतत्वेनेतरेतराश्रयप्रसङ्गात् ॥ तथा च तज्जयस्य यज्ज्ञानसाधनत्वं विवक्षितं तन्न भवतीत्याशङ्क्य, यद्यपीन्द्रियजये न परोक्तं प्रत्याहारादि साधनम् । नाप्यस्मदुक्तं निराहारत्वादिकम् । अशक्यत्वात् । तथाऽपि तत्प्रतिनिधिना महता प्रयत्नेन तानि जय्यानीत्युच्यते तानीति । सर्वाणि तानीन्द्रियाणि संयम्य विषयेभ्यः प्रत्याहृत्य युक्तः, समाध्यर्थस्य युजे रूपं, भगवति मनो युञ्जानः मत्परः भगवानेव सर्वस्मादुत्कृष्टो यस्य स आसीत तिष्ठेत् । भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरमनोयोजनमिन्द्रियजये परं साधनमिति भावः । निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति मन्तव्यम् ।

यद्येवं ततः किमित्याकाङ्क्षायाम् इन्द्रियजयस्य ज्ञानं फलमित्युच्यते – **वशे हीति** ॥ प्रज्ञा अपरोक्षज्ञानम् । यत एवं ज्ञानं महायाससाध्येन्द्रियजयफलम् अत एवाऽयासभीरुर्जनो न तत् साधयति । न तु ज्ञानस्योक्तलक्षणत्वाभावादिति श्लोकत्रयतात्पर्यार्थ इति ॥ ५९-६१ ॥

**भावदीपिका (श्री.टि.)– ॥ युजिर इति ॥** युजिर् योगे, युज् इत्येव धातुः । शिष्टमनुबन्धार्थम् । अस्मात् कर्तरि क्तप्रत्यये युक्त इति रूपम् ॥ **प्रतिसम्बन्धीति** ॥ युक्त इत्यस्य सहित इत्यर्थकत्वात् केनेति करणकारकाकाङ्क्षायां तस्यात्र गीतायामनुक्तत्वात् तदाख्या दोषः स्यादित्यर्थः ॥ **समाध्यर्थस्येति** ॥ मनस्समाधानार्थकस्येत्यर्थः । युज समाधौ । अत्राप्य-कारोऽनुबन्धार्थः । अत्रापि कर्तरि क्तप्रत्यये 'युक्तः' इति रूपम् । तथाच 'युक्त' इत्यस्य मनस्ससमाधानयुक्त इत्यर्थ इति भावेनेत्यर्थः ॥

ननु 'युज् समाधौ' इत्येतद्रूपत्वे मनःसमाधियुक्त इत्येतावदेवाऽयास्यति । 'मयि' इति कस्मादुक्तम्? न ह्ययं धात्वर्थ इत्यत आह– **मत्पर इतीति ॥** अन्यत्र मनोयोगयुक्तत्वे वक्ष्यमाण'मत्पर' इत्युक्तमयुक्तं स्यात् । अतस्तद्बलात् 'मयी'त्युक्तमिति भावः । 'उत्कृष्टो यस्य' इत्यत्र उत्कृष्ट इति ज्ञानं यस्येत्यर्थो विवक्षितः । अन्यथा स्वरूपसदुत्कृष्टत्वस्य सर्वान् प्रत्यपि सत्त्वेन यस्येति विशिष्योक्त्ययोगात् । अतः 'उत्कृष्ट इति ज्ञात्वा' इत्युक्तम् । नन्वेव-मिन्द्रियाणां महाप्रयत्नेन जेतुं शक्यत्वे 'विषया विनिवर्तन्ते' इत्यादिना निराहारत्वब्रह्म-साक्षात्कारयोरिन्द्रियजयं प्रति साधनत्वकथनमनुपपन्नमापन्नमित्यत आह– **निराहारत्वादिकं त्विति ॥** निराहारत्वब्रह्मसाक्षात्काराभ्यामपीन्द्रियजयस्य जायमानत्वाभिप्रायेण 'विषया विनिवर्तन्ते' इत्युक्तम् । नतु तादृशेन्द्रियजयस्यापरोक्षज्ञानसाधनत्वाभिप्रायेण । अत्र चापरोक्ष-ज्ञानसाधनीभूतेन्द्रियजयप्रकार उक्त इत्यदोष इत्याशयः ॥ **यद्येवमिति ॥** इन्द्रियजयस्य महाप्रयत्नसाध्यत्वमित्यर्थः । **न तत् साधयति** ज्ञानं न साधयति । अत एव कामाद्युपद्रव-परिहारार्थं दन्दह्यमानशिराः सन् बम्भ्रमीतीति शेषः ॥ **नन्वित्यादि ॥** 'उक्तलक्षणसाधनत्वा-भावादिति नतु' इत्यन्वयः । तथाच 'प्रजहाति' इत्यादिनोक्तं ज्ञानिनां लक्षणं युक्तमेवेति शेषः ॥ ६१ ॥

**भावप्रकाशः (कृ.टि.)– ॥ अद्वैतज्ञानमिति ॥** '(मत्परः)अहं वासुदेवः सर्वप्रत्यगात्मा पर उपास्यो यस्य सः मत्परः नान्योऽहं तस्मादिति बुद्धिमान् (आसीत) 'इति व्याख्यात-मित्यर्थः । तर्हि निराहारत्वादिसाधनोक्तिः व्यर्थेत्यत आह– **निराहारत्वादिकमिति ॥ वस्तुगतिप्रदर्शनार्थमेवेति ॥** महानुभावानां ज्ञानिनां निराहारत्वब्रह्मसाक्षात्काराभ्यामपीन्द्रिय-जय इति प्रदर्शनार्थमित्यर्थः । निराहारत्वादिसाध्येन्द्रियजयस्यापरोक्षज्ञानसाधनत्वप्रदर्शन-व्यवच्छेदायैवकारः ॥ ६१ ॥

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥ ६२ ॥

क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशाद् विनश्यति ॥ ६३ ॥

## भाष्यम्

रागादिदोषकारणमाह– परिहाराय श्लोकद्वयेन । सम्मोहः अकार्येच्छा । तथाहि सम्मोहशब्दार्थ उक्त उपगीतासु

'....सम्मोहसञ्ज्ञितम् ॥
अधर्मलक्षणं चैव नियतं पापकर्मसु' (म.भा.आश्व.३६.८) इति ॥

तथाचान्यत्र 'सम्मोहोऽधर्मकामिता' इति ॥ स्मृतिविभ्रमः प्रतिषेधादि-स्मृतिनाशः । बुद्धिनाशः सर्वात्मना दोषबुद्धिनाशः । विनश्यति नरकाद्यनर्थं प्राप्नोति । तथा ह्युक्तम्–

'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा ।
दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते' इति ॥ ६२,६३ ॥

भावप्रदीपिका (प.टी.)– रागाद्यभावो ज्ञानकारणमित्युक्तम् । स च कथं स्यात् ? इत्याकाङ्क्षानिवृत्त्यर्थमुत्तरश्लोकद्वयमवतार्य व्याचष्टे– रागादीति ॥ ननु कामकारणसम्मोहस्य कथं क्रोधसाध्यत्वमित्यत आह– सम्मोह इति ॥ 'सम्मोह'शब्दस्यान्यथाज्ञाने रूढत्वात् कथमेतदित्यत आह– तथा हीति ॥ पापकर्मसु कारणतयाऽभिमतम्, स्वयं वाऽधर्मसाधनं सम्मोहसञ्ज्ञितमित्यर्थः । विशेषवचनं चात्राह– तथा चेति ॥ श्रुतिविभ्रमेनै-वैकार्थ्यादिदोषबुद्धिनाशस्याप्तेः– सर्वात्मनेति ॥ उक्तहेतुहेतुमद्भावे प्रमाणमाह– तथा हीति ॥ ६२-६३ ॥

भावप्रकाशिका (न.टी.)– भगवतः सर्वोत्कृष्टत्वात् तत्रैव मनोयुक्तः, तज्ज्ञानं मुक्तिसाधनं लभत इत्युक्तम् । अधुना विषयमनःसंयोगपरिहाराय यदि विषयान् ध्यायेत् तर्हि तेषु स्नेहेन रागादिदोषाः स्युर्नरकाद्यनर्थहेतव इति व्याचष्टे उत्तरश्लोकद्वयमवतार्य– **रागेत्यादिना ॥** ननु 'मुह वैचित्र्ये' इति धातोर्मिथ्याज्ञानाग्रहः सम्मोहः स्यात् । उक्तं हि 'मोहश्चैव विपर्ययः । तदाग्रहो महामोहः' । तत्कथमकार्येच्छा सम्मोहः ? इत्याशङ्क्य, अधर्मोऽपि मोहनामेत्येतत् तावदाह– **तथा हीति ॥** न केवलं मिथ्याज्ञानं मोहसञ्ज्ञकम्, किन्त्वधर्मोऽपीत्यर्थः । अधर्मेच्छाया अप्यधर्मत्वात् मोहशब्दार्थतोक्ता । इदानीमधर्मेच्छामपि सम्मोहशब्द एव वक्तीत्याह– **तथा चेति ॥** एवंविधसम्मोहादिप्रणाशान्तानां हेतुहेतुमद्भाव प्रमाणमाह– **तथा ह्युक्तमिति ॥** ६२,६३ ॥

प्रमेयदीपिका (ज.टी.)– 'ध्यायतः' इत्यादिना प्रकृतानुपयुक्तं किमेतदुच्यते? इत्यत आह– **रागादीति ॥** रागादिदोषस्य कारणं रागादिदोषकारणम् । तथा रागादिदोषः कारणं यस्य तद् रागादिदोषकारणम् । **परिहाराय** रागादिदोषस्य । इदमुक्तं भवति । 'मत्परो युक्त आसीत' इतीन्द्रियजयस्य परमसाधनमुक्तम् । रागादिदोषपरिहारोऽप्यपरं साधनमिति वक्ष्यति । तत्र स एव कथं स्यात् ? इत्याकाङ्क्षायामुपोद्घातप्रक्रिययेदमुच्यत इति । सम्मोहो मूर्च्छाऽत्र न सङ्गच्छत इत्यतोऽन्यथा व्याचष्टे– **सम्मोह इति ॥** अकार्येच्छा अधर्मेच्छा । कुतः? इत्यत आह– **तथा हीति ॥** संशब्दस्तु तस्यैव विशेषक इति भावः । अदृष्टरूपाधर्मविषयम् । तद्धेतुषु पापकर्मर् च नियतं कामनं मोहसञ्ज्ञितमित्यर्थः ॥

स्पष्टं चात्र प्रमाणमाह– **तथा चेति ॥** यत्किञ्चिद्विषयस्य स्मृतिविभ्रमस्य प्रकृतानुपयोगात् सम्यग्व्याचष्टे– **स्मृतिविभ्रम इति ॥** विभ्रमः अनवस्थानम् । नाश इति यावत् । चेतनस्य कथं बुद्धिनाशः? इत्यत आह– **बुद्धीति ॥** स्मृतिविभ्रम एवायमित्यतः 'सर्वात्मना' इत्युक्तम् । 'नित्य आत्मा' इत्युक्तम् । तत्कथं विनश्यति? इत्यत आह– **विनश्यतीति ॥**

उक्तेऽर्थे प्रमाणमाह– **तथाहीति ॥** 'तदा' दोषादृष्टेः । एतदुक्तं भवति । रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिः कार्यमिति ज्ञानेन तत्परिजिहीर्षायां विषयध्यानं परम्परया तत्कारणमिति ज्ञानेन तदकरणात् तयोरनुत्पादो भवतीति ॥ ६२-६३ ॥

श्लोकः ६२,६३

**भावबोधः (र.टि.)– ॥ उपोद्घातेति ॥** रागादिदोषपरिहरकारणतत्फलयोः परिहारस्य हेतुत्वात् साध्यं वक्तुम् उपोद्घातप्रक्रियया आदौ तद्धेतुमाहेत्यर्थः । **न सङ्गच्छत इति ॥** रागाद्य-फलत्वादिति भावः । अकार्यशब्दस्य कारणानर्हत्वार्थकत्वप्रतीतिनिरासार्थमाह– **अधर्मेति ॥** तद्धेतुभूतपापकर्मेत्यर्थः । **संशब्द इति ॥** तथा च गीतायाः प्रमाणसमानार्थत्वमिति भावः ॥ ६२, ६३ ॥

**भावदीपः (रा.टि.)– गीतायां द्वयोरप्युक्तेः भाष्येऽप्यर्थद्वयमाह– रागादीति ॥ वक्ष्यतीति ॥** 'रागद्वेष' (२.६४) इत्यादाविति भावः ॥ ६३ ॥

**भावरत्नकोशः (सु.टि.)–** 'ध्यायत' इत्यादौ विषयध्यानादिरूपस्य रागादिदोषकारणस्य, रागादिदोषफलस्य सम्मोहादेश्चोक्तेस्तदनुरोधेन भाष्यं द्वेधा व्याचष्टे– **रागादिदोपस्येत्यादि ॥ यस्य सम्मोहादेः** । प्रकृतानुपयुक्तं किमेतदुच्यत इति कृतचोद्यं कथमनेन परिहृतमित्यतो भाष्यभावमाह– **इदमुक्तमिति ॥** परमसाधनं सर्वोत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरं मनसो योजनम् । **वक्ष्यति** 'रागद्वेषवियुक्तैः' इत्यादाविति शेषः । **स एव** रागादिदोषपरिहार एव । **उपोद्घातेति ॥** रागादिदोषपरिहारे कारणफलपरिज्ञानस्य हेतुत्वात् तत्साध्यं वक्तुमादौ तत्साधनमाहेत्यर्थः । **न सङ्गच्छत इति ॥** 'क्रोधाद् भवति सम्मोहः' इत्युक्तकार्यकारण-भावस्याननुभवादिति भावः ॥

ननु कर्तुमशक्यमकार्यं चन्द्रमण्डलाहरणादि । अनादि वा गगनाधकार्यम् । तदिच्छा च न क्रोधजन्या अननुभवादित्यत आह– **अधर्मेति ॥** वेदप्रणिहितं हि कार्यस्तद्विरुद्धश्चाकार्यः । स चाधर्म एव । तथा च वक्ष्यति 'सम्मोहोऽधर्मकामिता' इति भावः । सम्मोहशब्दार्थे प्रमाणे वक्तव्ये मोहशब्दार्थे तदुक्तिरसङ्गतेत्याशङ्क्याह– **संशब्दस्त्विति ॥** तस्यैव यः प्रमापयितव्यो मोहस्तस्यैव । तथा च नासङ्गतिरिति भावः । अधर्मपापशब्दयोः पर्यायत्वेऽप्यत्र कार्यकारणे एव गृह्येते इति भावेन व्याचष्टे– **अदृष्टेत्यादि ॥ सम्यगिति ॥** स्मृतेर्विषयप्रदर्शनेन, विभ्रमशब्दार्थ-कथनेनेत्यर्थः । 'नाशः' इति भाष्यघटनायाह– **विभ्रमोऽनवस्थानमिति ॥** 'भ्रमु अनवस्थाने' इति धातोरिति भावः । **कथमिति ॥** चेतनस्य बुद्धिमत्पदार्थत्वेन तत्र भाविनाशवचनमयुक्तमिति भावः । **उक्तेऽर्थे** 'क्रोधाद् भवति सम्मोहः' इत्यादौ नरकाद्यनर्थं प्राप्नोतीत्यर्थे । 'यदा' इति

श्रवणादध्याहारः **तदा** इति । उपोद्घातप्रक्रियया इदमुच्यत इत्युक्तं विशदयति – **एतदुक्तं भवतीति** ॥ **कार्यं** फलम् । **तत्परिजिहीर्षायां** नरकाद्यनर्थप्राप्तिपरिहारेच्छायाम् ।

**गीताक्षरार्थस्तु**– 'मत्परो युक्त आसीत' इति हरिसर्वोत्तमत्वज्ञानपूर्वकं तस्मिन्नेव मनोयोजनमिन्द्रियजयस्य परमं साधनमुक्तम् । रागादिपरिहारोऽप्यपरं साधनमिति 'रागद्वेष-वियुक्तैः' इत्यत्र वक्ष्यते । तत्र रागादेर्यत्कारणं यच्च फलं तदुभयज्ञाने सत्येव तत्परित्यागो भवतीत्यतस्तदुपोद्घातप्रक्रिययेदमुच्यते– **ध्यायत इति श्लोकद्वयेन** ॥ विषयान् शब्दादीन् शोभनत्वबुद्ध्या ध्यायतः पुंसः तेषु तत्सदृशेषु च सङ्गः स्नेहः सङ्गाच्च कामः इच्छा सञ्जायते अधिका भवति । कामाच्च केनचित् प्रतिहतात् क्रोधोऽभिजायते । क्रोधाच्च सम्मोहः विशेषेणा-धर्मेच्छा, सम्मोहात् स्मृतिविभ्रमः, स्मृतेः परवित्तापहरणादेरधर्मत्वाभिधायकशास्त्रार्थस्मरणस्य विभ्रमः अनवस्थानम् । नाश इति यावत् । 'रागद्वेष' इत्यादिस्मृतिभ्रंशाच्च बुद्धिनाशः सर्वात्मना दोषबुद्धिनाशः पूर्वं निर्णीतदोषबुद्धेः सर्वथा नाश इत्यर्थः । बुद्धिनाशात् प्रणश्यति नरकाद्यनर्थं प्राप्नोति । एतदुक्तं भवति । रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिः कार्यमिति ज्ञानेन तत्परिजिहीर्षायां विषयध्यानं परम्परया कारणमिति ज्ञानेन तदकरणात् तयोरनुत्पादो भवतीति ॥ ६२-६३ ॥

**भावदीपिका (श्री.टि.)**– गीतायां विषयध्यानसङ्गरूपस्य रागादिदोषकारणस्य सम्मोहादिरूपरागादिफलस्य च निरूपणात् तदनुसारेण भाष्यं द्वेधा व्याचष्टे – **रागादीत्या-दिना** ॥ **कारणं** विषयध्यानादि । **यस्य** क्रोधस्य । **परमसाधनं** तस्मिन्नेव मनोयोजनरूपम् । **वक्ष्यति** 'रागद्वेषविहीनैस्तु' इत्यनेनेति शेषः । **सः** रागद्वेषपरिहारः ॥ **उपोद्घातेति** ॥ रागादिदोषपरिहारे तत्कारणतत्फलयोः परिहारस्य हेतुत्वात् साध्यं वक्तुमुपोद्घातप्रक्रियया तद्धेतुमादावाहेत्यर्थः । इदं 'ध्यायतः' इत्यादिना रागादिदोषकारणम् ॥ **न सङ्गच्छत इति** ॥ क्रोधेन मूर्च्छाया अजननादिति भावः । अकार्यस्य गगनादेरिच्छा इत्यन्यथाप्रतीतिवारणायाऽह– **अधर्मेति** ॥ अधर्मशब्देनादृष्टं ग्राह्यम् । तथाच तद्धेतुभूतब्रह्म-हननादिरूपपापकर्मेच्छेत्यर्थः । अधर्मस्य कर्तुमयोग्यत्वेनाकार्यत्वादिति भावः ॥

ननूपगीतायां मोहशब्दार्थकथनेऽपि सम्मोहशब्दार्थाकथनादाह– **संशब्दस्त्विति** ॥ उपसर्गाणां धात्वर्थव्यञ्जकत्वादिति भावः । यथोक्तं मीमांसकैः

'धातावेव विलीनार्थ उपसर्गेण काश्यते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥' इति ।

**तद्धेतुषु** अदृष्टहेतुषु । प्रमाणेऽधर्मेच्छाया मोहत्वालाभाद् वक्ष्यमाणप्रमाणानुसारेण च नियतमित्यनन्तरमध्याहार्यमाह– **कामनमिति ॥ अनवस्थानमिति ॥** 'भ्रमु सञ्चलने' इति धातोरिति भावः ॥ **कथमिति ॥** बुद्धिनाशे ज्ञानाधारत्वरूपं चेतनत्वमेव न स्यादिति भावः ॥ **सर्वात्मनेति ॥** स्मृतिविभ्रमे तु सर्वात्मना प्रतिषेधादिस्मृतिनाशो न विवक्षित इति भावः । विस्मृते पूर्वं दोषदर्शनसद्भावाद् दोषादृष्टेरिति कथमित्यत आह– **तदेति ॥** विस्मृत्यवस्थाया-मित्यर्थः । 'यदा' इत्युक्तत्वात् 'तदा' इत्यस्य लाभः । **कार्यं** फलम् । **तत्परिजिहीर्षायां** सत्याम् । **तत्कारणं** तयो रागद्वेषयोः कारणम् । **तदकरणात्** विषयध्यानाकरणात् । **तयोः** रागद्वेषयोः ॥ ६२-६३ ॥

**भावप्रकाशः (कृ.टि.)–** 'ध्यायतः' इत्यादिना रागादिदोषहेतोः तत्फलस्य चोक्तेस्तदनु-रोधेन भाष्यं द्वेधा व्याचष्टे– **रागादिदोषस्येत्यादिना ॥ वक्ष्यतीति ॥** 'रागद्वेषवियुक्तैस्तु' इत्यत्रेति शेषः । **न सङ्गच्छत इति ॥** क्रोधाजन्यत्वादिति भावः । ननु कर्तुमशक्यमकार्यम् । यद्वा अकार्यमनादितदिच्छा न क्रोधजन्या अननुभवादित्यत आह– **अधर्मेच्छेति ॥** ननु 'सम्मोहोऽकार्येच्छा' इत्यत्र कथमिदं मानम् । अत्र मोहशब्दार्थस्यैवोक्तेरित्यत आह– **संशब्द इति ॥** नन्वधर्मलक्षणमित्यनेन यदि मोहस्याधर्मरूपत्वमुच्यते तदा विरोधः । यद्यधर्मविषयत्वम् तदा 'नियतं पापकर्मसु' इत्यनेन पुनरुक्तिः । अधर्मपापशब्दयोः पर्यायत्वादित्याशङ्क्य अधर्मपापशब्दाभ्यां कार्यकारणग्रहणान्न पौनरुक्त्यमिति भावेनाह– **अदृष्टरूपेत्यादिना ॥ यत्किञ्चिद्विषयस्य** स्मृतिविभ्रमस्येति ॥

अत्र द्वावाक्षेपौ- स्मृतिविभ्रमपदेन स्मृतिरूपभ्रम एव ग्राह्यः । स्मृतेः विभ्रमो भ्रान्तिरित्य-स्यार्थस्य साक्षिवेद्ये भ्रान्त्यभावेन बाधितत्वात् । तथा च प्रकृतानुपयोग इत्येक आक्षेपः । यत्किञ्चिद्विषयस्येति द्वितीयः । अत एव भाष्ये विषयोक्तिः षष्ठीसमासमुपेत्य विभ्रमपदार्थोक्ति-श्चेति ध्येयम् । ननु विभ्रमशब्दस्य कथं नाशार्थत्वमित्यत आह– **विभ्रमोऽनवस्थानमिति ॥** 'भ्रमु अनवस्थाने' इति धातुव्याख्यानादिति भावः । प्रकृतमाह– **नाश इति यावदिति ॥ उक्तमिति ॥** 'नत्वेवाहम्' इत्यादाविति शेषः ॥ ६२-६३ ॥

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

## भाष्यम्

**इन्द्रियजयफलमाहोत्तराभ्यां श्लोकाभ्याम् ॥**

भावप्रदीपिका (प.टी.)– नन्वेवं रागादिजये किं फलम् ? इत्याशङ्कोत्तरत्वेनोत्तर-श्लोकद्वयमवतार्य व्याचष्टे– **इन्द्रियेति** ॥ रागादिजयादिन्द्रियजयाख्यं फलमाद्यश्लोके । इन्द्रियजयस्य फलं द्वितीय इति ज्ञेयम् ।

भावप्रकाशिका (न.टी.)– रागादिदोषपरिहारस्य किं फलम् ? इत्याकाङ्क्षोत्तर-त्वेनोत्तरश्लोकमवतार्य व्याचष्टे– **इन्द्रियजयफलमिति** ॥ इन्द्रियजयाख्यं फलं इन्द्रिय-जयस्य फलमिति च । तत्र रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलं प्रथमश्लोकेनाह । इन्द्रिय-जयस्य फलं सर्वदुःखहानिं द्वितीयेन ॥ ६४ ॥

प्रमेयदीपिका (ज.टी.)– 'रागद्वेष'इति श्लोकद्वयस्य तात्पर्यमाह– **इन्द्रियेति** ॥ इन्द्रियजयश्च तत्फलं च इन्द्रियजयफलम् । इन्द्रियजयस्य फलं इन्द्रियजयफलम् । अस्त्वेवं रागद्वेषपरिहारः । ततः किम् ? इत्याकाङ्क्षायां रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमाह– **इन्द्रियजयेन किं भवति?** 'वशे हि यस्येन्द्रियाणि'इति ज्ञानं भवतीत्युक्तमिति चेत्– सत्यम् । तत्किं साक्षादिन्द्रियजयफलम्? उत व्यवहितम्? इत्याकाङ्क्षायामिन्द्रियजयस्य फलं ज्ञानं यथा भवति तथाऽऽहेत्यर्थः ॥

भावबोधः (र.टि.)– 'आत्मवश्यैर्विधेयात्मा' इति तृतीयपादे रागद्वेषपरिहार-फलस्येन्द्रियजयस्य तदुत्तरपादपञ्चकेन प्रसादादेरिन्द्रियजयसाध्यस्योक्तेः तदनुरोधेन भाष्यं द्वेधा व्याचष्टे – **इन्द्रियजयश्च तदित्यादिना** ॥ **इन्द्रियजयस्य फलं ज्ञानं यथा भवतीति** ॥ यथा येन प्रकारेण मनःप्रसादद्वारेणेति यावत् । **तथा** तं प्रकारं ज्ञानस्य मनःप्रसादद्वारेन्द्रिय-जन्यत्वरूपं **प्रसादमधिगच्छति** । 'प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति' इत्येनेन आह इत्यर्थः । तथा च 'वशे हि' इत्युक्तविवरणरूपत्वान्न पुनरुक्ततेति भावः ।

श्लोकः ६४

**भावदीपः (रा.टि.)**– 'यदा' इत्यस्य प्रतिसम्बन्ध्युक्त्या अर्थोक्तिः **तदा दोषादृष्टेः इति** । गीतायां पूर्वोत्तरभागोक्तार्थानुरोधेन भाष्यस्यापि द्वेधाऽर्थमाह– **इन्द्रियजयश्च तदिति** ॥ कर्मधारयतत्पुरुषयोः तन्त्रेणायं निर्देशो भाष्य इति भावः ॥ इन्द्रियजयाख्यफलोक्तावसर-सङ्गतिमाह– **अस्त्वेवमिति** ॥ उत्तरार्धे इन्द्रियजयस्य फलोक्तेरप्याकाङ्क्षालक्षणसङ्गतिमाह– **इन्द्रियजयेन किमिति** ॥ 'फलम्' इत्यनुषङ्गः ॥ किं फलं भवतीति पृष्टे 'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा' (२.६१) इति प्रागुक्तज्ञानरूपफलमाशङ्क्य तदङ्गीकारेण स्वप्रश्नाभिप्रायं विविच्याऽह– **'वशे हि' इत्यादिना 'इति' इत्यन्तेन** ॥ **यथेति** ॥ येन प्रकारेण मनःप्रसादद्वारा **भवति** तथाऽह इत्यर्थः । तथा चेन्द्रियजयेन ज्ञानोदयप्रकारोक्ति-परत्वादस्य 'वशे हि' इत्यनेन न गतार्थतेति भावः ॥

**भावरत्नकोशः (सु.टि.)**– 'रागद्वेष' इत्यादि त्रिपाद्या रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमुच्यते । 'प्रसादमधिगच्छति' इत्यादिना चेन्द्रियजयस्य फलम् । अतस्तदुभयानुरोधेन भाष्यं द्वेधा व्याचष्टे– **इन्द्रियजयश्च तत्फलमित्यादिना** ॥

**भावदीपिका (श्री.टि.)**– 'आत्मवश्यैर्विधेयात्मा' इति तृतीयपादेन रागद्वेषपरिहार-फलस्येन्द्रियजयस्य तदुत्तरपादपश्चकेन प्रसादादेरिन्द्रियजयसाध्यत्वस्य चोक्तेस्तदनुरोधेन भाष्यं द्वेधा व्याचष्टे – **इन्द्रियजयश्च तदित्यादिना** ॥ **उक्तमितीति** ॥ 'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता' इत्युक्तत्वादिति भावः ॥ **यथा भवति तथाऽऽहेति** ॥ यथा येन प्रकारेण, मनःप्रसादद्वारेणेति यावत्, तथा तं प्रकारं ज्ञानस्य मनप्रसादद्वारेन्द्रियजयजन्यत्वरूपं 'प्रसाद-मधिगच्छति । प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति' इत्यनेनाऽहेत्यर्थः । तथाच 'वशे हि' इत्युक्तविवरणरूपत्वान्न पुनरुक्तिरिति भावः ॥

**भावप्रकाशः (कृ.टि.)**– 'आत्मवश्यैर्विधेयात्मा ' इत्यन्तेन रागद्वेषपरिहारस्येन्द्रिय-जयाख्यं फलमुच्यते 'प्रसादमधिगच्छति' इत्यादिना चेन्द्रियजयस्य फलम् । अतस्त-दुभयानुगुण्याय व्याचष्टे– **इन्द्रियजयश्च तदित्यादिना** ॥

## भाष्यम्

**विषयान् अनुभवन्नपि । विधेय आत्मा मनो यस्य सः । जितात्मेत्यर्थः । प्रसादं मनःप्रसादम् ॥ ६४ ॥**

**भावप्रदीपिका** (प.टी.)– तुशब्दार्थः– **अपीति** ॥

**भावप्रकाशिका** (न.टी.)– **तुशब्दोक्तं विशेषं दर्शयितुमपिशब्दमाधाय व्याचष्टे** ॥

**प्रमेयदीपिका** (ज.टी.)– 'रागद्वेषपरिहारवद् विषयचरणस्यापीन्द्रियजयसाधनत्व-मुच्यते' इत्यन्यथाप्रतीतिनिरासाय आह– **विषयानिति** ॥ निराहारत्वमिन्द्रियजये कारणम् । तच्चाशक्यम् । अतः कथमिन्द्रियजयः? इत्याशङ्क्य देहधारणमात्रोपयुक्त-विषयानुभवो न दोषायेति तदभ्युपगममात्रमनेन क्रियत इति भावः । इन्द्रियजयवाचकं पदमत्र न श्रूयत इत्यतस्तद्व्याचष्टे– **विधेय इति** ॥ सः 'विधेयात्मा' इति शेषः । किमनेनापि? इत्यत आह– **जितात्मेति** ॥

अनेन पादत्रयेण रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमुक्तम् । यद्यप्यनुवादोऽयं प्रतीयते। तथाऽप्यप्राप्तत्वादन्यथा वाक्यवृत्तिः । तथाहि य उक्तविधया त्यक्तरागद्वेषः सः रागद्वेषवियुक्तैः ताभ्यामप्रयुक्तैः केवलं शरीरधारणार्थं विषयांश्चरति । सः विधेयात्मा भवति। तत एव बाह्येन्द्रियाण्यपि तस्य वश्यानि भवन्तीति । अत एव क्रमेण वाक्य-द्वयस्य पृथक् तात्पर्यं नोक्तम्। द्वितीयाकाङ्क्षोत्तरत्वेनेन्द्रियजयस्य ज्ञानं व्यवहितफलमिति दर्शयितुं साक्षात् फलमुक्तम्– **विधेयात्मा प्रसादमधिगच्छतीति** ॥

तत्र प्रसादो नाम आत्मधर्म इति प्रतीयते । तन्निवृत्त्यर्थमाह– **प्रसादमिति** ॥ 'प्रसन्नचेतसः'(२.६५)इति वक्ष्यमाणत्वादिति भावः ॥ ६४ ॥

**भावबोधः** (र.टि.)– ॥ **उक्तविधयेति** ॥ रागद्वेषयोः फलानिच्छया कारणत्यागेनेत्यर्थः । ननु रागद्वेषयोः मनोधर्मत्वेन सर्वपुरुषबाह्येन्द्रियाणां सदा तद्वियुक्तत्वात् इनार्थिन एव किं विशिष्योच्यते इत्यत आह– **ताभ्यामप्रयुक्तैरिति** ॥ **बाह्येन्द्रियाणीति** ॥ अनेन 'आत्मवश्यैः' इतिपदमुक्तार्थं भवति । ननु यद्येवमन्यथा वाक्यवृत्तिः, तर्हि 'रागद्वेषवियुक्तैः' इत्यादिपाद-त्रयात्मकवाक्यस्य रागद्वेषत्यागस्येन्द्रियजयरूपं फलमाहेति, 'प्रसादमधिगच्छति' इत्यादिपाद-पञ्चकात्मकवाक्यस्य इन्द्रियजयस्य प्रसादादिरूपं फलमाहेति क्रमेण पृथक् तात्पर्यं वक्तव्यम् । 'इन्द्रियजयफलमाह' इत्येकोक्त्या वाक्यद्वयतात्पर्यकथने किं निमित्तमित्यत आह– **अत एवेति** ॥ तात्पर्यार्थवशादुक्तरीत्या अन्यथा वाक्यवृत्तावपि अन्वयमुखेन श्लोकद्वयस्यैकवाक्यत्वेन

श्लोकः ६४

प्रतीयमानत्वादेवेत्यर्थः । यद्वा एवं तर्हि 'आत्मवश्यैः' इत्यस्य पूर्वं पृथक् तात्पर्यं वक्तव्यम् । तत्कुतो नोक्तमित्यत आह– **अत एवेति** ॥ यतो मनोजये सति बाह्येन्द्रियजयार्थं पुनः प्रयत्नानपेक्षा । यद्वक्ष्यत्यष्टमे 'मनो निरुध्य इत्यनेनैव सर्वेन्द्रियसंयमनं लब्धम्' इति । अत एव मनोजयबाह्येन्द्रियजययोरेकप्रयत्नसाध्यत्वादेव मनोजयप्रतिपादक'विधेयत्मा' इति पदतात्पर्य-कथनेनैव बाह्येन्द्रियजयप्रतिपादक–आत्मवश्यपदतात्पर्यमुक्तप्रायमेवेत्यभिप्रेत्य 'आत्मवश्यैर्विधे-यात्मा' इति पदद्वयस्य पृथक् तात्पर्यं नोक्तम् । बाह्येन्द्रियजयस्य मनोजयानन्तरभावित्वेन गीतापाठक्रमेण साध्यसाधनभावाभावात् क्रमेण च तापर्यं नोक्तमित्यर्थः ॥ ६४ ॥

**भावदीपः (रा.टि.)**– ॥ **अनुवादोऽयमिति** ॥ 'विधेयात्मा' इत्यन्तो ग्रन्थ इत्यर्थः ॥ **अप्राप्तत्वादिति** ॥ यथा 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां च' इत्यादौ यथा यच्छब्दाद्यनुवादलिङ्गसत्वेऽप्यप्राप्तत्वाद् अपूर्वकर्मविधिबोधकत्वं तथाऽत्र विधेयात्मत्वादेः पूर्ववाक्यैर्मानान्तरेण वा प्राप्तत्वाभावात् । **अन्यथा** विधिपरत्वेन **वाक्यवृत्तिः** वाक्यस्य बोधकतेत्यर्थः ॥ तं प्रकारं व्यनक्ति– **तथाहीत्यादिना** ॥ **उक्तविधयेति** ॥ 'एतदुक्तं भवति' इत्यादिनोक्तविधया इत्यर्थः ॥ **अत एवेति** ॥ हेतुहेतुमद्भावापन्नत्वादेव विधेयात्मपद-तात्पर्योक्त्यैव 'इन्द्रियैः आत्मवश्यैः' इत्यस्योक्ततात्पर्यकत्वादेवेत्यर्थः॥ **द्वितीयाकाङ्क्षेति**॥ 'किं साक्षादिन्द्रियजयफलम्' इत्यादिनोक्तद्वितीयेत्यर्थः ॥ ६४ ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **परिहारवत्** परिहारस्येव । 'तत्र तस्येव' इति षष्ठ्यन्तादि-वार्थे वतिः । **विषयचरणस्य** विषयानुभवस्यापि । कथमनेन भाष्येणोक्तान्यथाप्रतीतिनिरासः? इत्यतस्तद्भावमाह– **निराहारत्वमिति** ॥ **अशक्यं** निराहारस्य देहावस्थानासम्भवादिति भावः । **तदभ्युपगममात्रमिति** ॥ नतु यथेष्टं विषयोपभोग इत्यर्थः । अत्र यच्छ्लोकद्वयं 'इन्द्रियजय-फलमाह' इत्यवतारितं तत्र ॥

ननु 'जितात्मेत्यर्थः' इति कस्येदं व्याख्यानम् ? 'विधेय आत्मा मनो यस्य 'इत्युक्त-विग्रहवाक्यस्येति चेन्न । 'विधेयात्म ' इति समासपदप्रदर्शनप्रसङ्गे जितात्मेत्युक्त्ययोगात्, अर्थपदास्वारस्याच्चेत्याशङ्क्य, नेदं कस्यचिद् गीतापदस्य व्याख्यानम् । किन्तु 'रागद्वेष-वियुक्तैः' इत्यादि त्रिपादीतात्पर्यकथनरूपम् । भाष्ये 'सः' इत्यनन्तरं विधेयात्मेति समासपदं

चाध्याहार्यम्। तथा चेन्द्रियजयवाचकं पदमत्र नेति चोद्यं परिहृतं भवतीत्यभिप्रायेणाह– **विधेयात्मेति शेष इति ॥ अनेनापि** विधेयात्मत्वेनापि। **अनुवादोऽयमिति ॥** चरन्निति शतुः श्रवणात्, विधेयात्मा भवेदित्यश्रवणात्, 'प्रसादमधिगच्छति' इत्यत्र तिङः श्रवणाच्चेति भावः ॥

॥ **अप्राप्तत्वादिति** ॥ यथा 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्यादौ यच्छब्दाद्यनुवादलिङ्गसद्भावेऽप्यप्राप्तत्वाद् अपूर्वकर्मविधिपरत्वमभ्युपगतं मीमांसकैः तथाऽत्रापि शरीरधारणमात्रानुकूलविषयानुभवस्य विधेयात्मत्वस्य च पूर्ववाक्यैर्मानान्तरेण वाऽप्राप्तत्वात्। **अन्यथा** विधेयार्थबोधकत्वेन। **वाक्यवृत्तिः** वाक्यस्य बोधकता वाक्यव्याख्यानमिति यावत्। कर्तव्येति शेषः। तामेवाह– **तथा हीति ॥ उक्तविधया** 'रागद्वेषयोः परम्परया नरकाद्यनर्थप्राप्तिः कार्यमित्यत्र' इति शेषः। ननु रागद्वेषयोर्मनोधर्मत्वेन तद्वियुक्तत्वस्य सर्वपुरुषबाह्येन्द्रियसाधारणत्वात् किं जिज्ञासोरेव विशिष्यैवम्भाव उच्यत इत्यत आह– **ताभ्यामप्रयुक्तैरिति** ॥ रागद्वेषाभ्यामप्रवर्तितैः। रागद्वेषकलुषितमनोनधिष्ठितैरित्यर्थः। अप्रयुक्तैरिति वदन् 'अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः', 'काम एष क्रोध एषः' इत्यादिप्रश्नप्रतिवचनादीनि रागद्वेषयोः प्रवर्तकत्वे प्रमाणमित्यभिप्रैति। 'आत्मवश्यैः' इत्यनुवादलब्धमाह– **तत एवेति ॥** विधेयात्मत्वादेव ॥

'आत्मवश्यैः' इत्यत्र आत्मशब्दो जिज्ञासुपर इत्याह– **तस्येति** ॥ इतिशब्दस्य 'तथा हि' इति पूर्वेण सम्बन्धः। **अत एवेति ॥** हेतुहेतुमद्भावापन्नत्वादेव विधेयात्मपदतात्पर्योक्त्या 'आत्मवश्यैरिन्द्रियैः' इत्यस्याप्युक्ततात्पर्यकत्वादेवेत्यर्थः। यद्वा, ननु यदि 'रागद्वेषः' इत्यादेः 'प्रसादमधिगच्छति' इत्येतस्य चोक्तविधया पृथग्वाक्यत्वं तर्हि भाष्ये 'रागादित्यागस्येन्द्रियजयाख्यं फलमाह' इति, 'इन्द्रियजयस्य फलमाह' इति च क्रमेण वाक्यद्वयस्य तात्पर्यं पृथग्वाच्यम्। 'इन्द्रियजयफलमाह' इत्येकोक्त्या वाक्यद्वयतात्पर्यकथने को हेतुरित्यत आह– **अत एवेति ॥** तात्पर्यवशादन्यथा वाक्यवृत्तावप्यन्वयमुखेन वाक्यद्वयस्याप्येकवाक्यतया प्रतीयमानत्वादेवेत्यर्थः। 'प्रसादम्' इति भाष्यं सङ्गमयितुं गीतामवतारयति–**द्वितीयाकाङ्क्षेति ॥** ज्ञानं किं साक्षादिन्द्रियजयफलमुत व्यवहितमिति द्वितीयाकाङ्क्षेत्यर्थः। 'प्रसादमधिगच्छति' इत्येवोपादातव्येऽपि यत् 'विधेयात्मा' इत्याह– तदाख्यातोपात्तकर्तुः स्फोरणाय। इन्द्रियजयवाचकपदप्रदर्शनाय वा। तस्य हि साक्षात्फलप्रतिपादनाय तुरीयः पादः। अभ्यर्हिततया

तदुपस्थित्यवश्यम्भावादाह– **आत्मधर्म इति** ॥ मनोधर्मत्वे भाष्याभिप्रेतयुक्तिमाह– **प्रसन्नेति** ॥ ६४ ॥

**भावदीपिका (श्री.टि.)– ॥ विषयचरणस्येति** ॥ 'चर गतिभक्षणयोः' इति धातोर्विषयानुभवस्येत्यर्थः ॥ **तच्चाशक्यमिति** ॥ देहावस्थानासम्भवान्निराहारत्वमशक्यमित्यर्थः ॥ **अनेनेति** ॥ 'विषयानिन्द्रियैश्चरन्' इत्यनेन देहधारणमात्रोपयुक्तविषयानुभवाभ्युपगममात्रं क्रियत इत्यर्थः । भाष्ये **जितात्मा** जितमना इत्यर्थः ॥

ननु 'रागद्वेषवियुक्तैः' इत्यादिपादत्रयेण रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमुक्तमित्यसत् । पादत्रयस्यानुवादरूपत्वेन विधिरूपत्वाभावात् । 'प्रसादमधिगच्छति' इत्यस्यैव तथात्वात् । अनुवादकस्य च न स्वार्थसत्तानिश्चयरूपत्वमित्याशङ्क्याऽऽह– **यद्यपीत्यादिना ॥ अप्राप्तत्वादिति** ॥ तथाचानुवादकत्वं न सम्भवतीति भावः ॥ **अन्यथेति** ॥ विधेयत्वेनेत्यर्थः । **वाक्यवृत्तिः** वाक्यव्याख्यानम् ॥ **उक्तविधयेति** ॥ विषयध्यानसङ्गरूपकारणस्य सम्मोहादिरूपफलस्य च त्यागेनेत्यर्थः । ननु रागद्वेषयोर्मनोधर्मत्वेन सर्वपुरुषबाह्येन्द्रियाणां सदा तद्वियुक्तत्वाद् ज्ञानार्थिन एव किं विशिष्योच्यत इत्यत आह– **ताभ्यामप्रयुक्तैरिति** ॥ रागद्वेषाभ्यामप्रवर्तितैः अप्रेरितैरित्यर्थः । रागद्वेषयोश्च प्रवर्तकत्वं 'प्रवर्तनालक्षणाः स्युर्दोषा रागादयश्च ते' इत्याद्यभियुक्तवाक्येन सिद्धमिति ज्ञातव्यम् ॥ **बाह्येन्द्रियाणीति** ॥ अनेनाऽत्मवश्यैरिति पदमुक्तार्थं भवति ॥

नन्वेवं वाक्यवृत्तावङ्गीक्रियमाणायां वाक्यभेदज्ञापनार्थमिन्द्रियजयाख्यं फलमाहेति इन्द्रियजयस्य फलमाहेति क्रमेण तात्पर्यं भाष्यकारैः कस्मान्नोक्तमित्यत आह– **अत एवेति** ॥ यत एवमनुवादकतयैकवाक्यत्वेन प्रतीयमानत्वेऽपि अप्राप्तत्वरूपबाधकेनानुवादकत्वासम्भवेनोक्तविधया वाक्यवृत्तेर्ज्ञातुं शक्यत्वादेवेत्यर्थः ।

भावबोधे तु – तात्पर्यार्थवशादुक्तरीत्याऽन्यथा वाक्यवृत्तावपि अन्वयमुखेन श्लोकद्वयस्यैकवाक्यत्वेन प्रतीयमानत्वादेवेत्यर्थ इति व्याख्यातम् ॥

**वाक्यद्वयस्येति** ॥ पादत्रयात्मकमेकं वाक्यं, 'प्रसादमधिगच्छति' इत्यारभ्य पञ्चपादात्मकमपरं वाक्यमिति वाक्यद्वयस्येत्यर्थः ॥ **द्वितीयाकाङ्क्षेति** ॥ तज्ज्ञानं किं साक्षादिन्द्रियजयफलम्, उत व्यवहितमिति द्वितीयाकाङ्क्षेत्यर्थः ॥ **आत्मधर्मः** इच्छारूपः ॥ ६४ ॥

**भावप्रकाशः** (कृ.टि.)– ननु 'विधेय आत्मा' इत्यादिवाक्यं गीतायां नास्ति । तेन तदनुवादेन जितात्मेत्यर्थ इति व्याख्यानं न युज्यते । नच विधेय आत्मेति समासार्थावबोधकमेतदिति वाच्यम् । तथासति समासपदप्रदर्शनप्रसङ्गादित्याशङ्क्य 'सः' इत्यस्यानन्तरमध्याहार्यमाह– **स विधेयात्मेति शेष इति** ॥ **उक्तविधयेति** ॥ रागद्वेषयोः परम्परयेत्यादिनेति शेषः । ननु रागद्वेषावियुक्तत्वं सर्वपुरुषबाह्येन्द्रियसाधारणम् । तयोः मनोधर्मत्वात् । तत् किं जिज्ञासोरेव विशिष्यैवमुच्यते? इत्यत आह– **ताभ्यामप्रयुक्तैरिति** ॥ 'आत्मवश्यै'रित्यनुवादलब्धार्थमाह– **तत एवेति** ॥ ननु यदि 'रागद्वेषे'त्यादेः 'प्रसादमधिगच्छती'त्यादेश्चोक्तविधया पृथक् वाक्यत्वं तर्हि 'रागादित्यागस्येन्द्रियजयाख्यं फलमाह' इति 'इन्द्रियजयस्य फलमाह' इति च क्रमेणवाक्यद्वयस्य पृथक् तात्पर्यं वाच्यम् ।'इन्द्रियजयफलमाह' इत्येकोक्त्या वाक्यद्वयतात्पर्यकथने को हेतुरित्यत आह– **अत एवेति** ॥ तात्पर्यवशादन्यथावाक्यवृत्तावप्यन्वयमुखेन वाक्यद्वयस्यैकवाक्यतया प्रतीयमानत्वादित्यर्थः ॥ ६४ ॥

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**

## भाष्यम्

**कथं प्रसादमात्रेण सर्वदुःखहानिः? प्रसन्नचेतसो हि बुद्धिः पर्यवतिष्ठति । ब्रह्मापरोक्ष्येण सम्यक् स्थितिं करोति । प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः॥ ६५ ॥**

भावप्रदीपिका (प.टी.)– कथं मनःप्रसादमात्रादपरोक्षज्ञानम् ? इत्यत आह– **प्रसाद इति** ॥ ६४-६५ ॥

भावप्रकाशिका (न.टी.)– 'निराहारस्य देहिनः' 'इन्द्रियाणि जयन्त्याशु निराहाराः' इत्यनयोः समानार्थत्वात् निवृत्तविषयो हि जितेन्द्रियः । अयं तु रागद्वेषवियुक्तत्वात् **विषयाननुभवन्नपि** 'जितमनाः' इति शेषः । अतः **प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः** इत्येतद्रागतो विषयागतिरिति व्याख्येयम् । **स्वतः** इति प्रयत्नं विनेत्यर्थः ॥ ६५ ॥

श्लोक: ६५

**प्रमेयदीपिका** (ज.टी.)– प्रसादे सति किं स्यात्? इत्यत उक्तं– **प्रसाद इति ॥** तदाक्षिपति– **कथमिति ॥** 'तरति शोकमात्मवित्' इत्यादिविरोधादिति भावः ॥ किञ्च 'प्रसादे सति ज्ञानं भवति' इति वा व्यवधानान्तरं वा वक्तव्यम् । तन्नोक्तम् । सर्वदुःखहानिस्त्ववक्तव्यैवोक्ता' इति चाक्षेपशेषः । एतत्परिहारत्वेनोत्तरार्धं व्याख्याति– **प्रसन्नेति ॥**

एतेन प्रसादस्य फलद्वयमुच्यत इत्यपि प्रतीतिर्निरस्ता भवति । प्रसादे सति ब्रह्मापरोक्षज्ञानं भवति । तच्च व्यवधानेनेति भविष्यति । ततो भवन्ती सर्वदुःखहानिः प्रसादफलतयोक्तेति न वक्तव्यानुक्तिः । नाप्यवक्तव्योक्तिः । 'बुद्धियुक्तः' (२.५१) इति श्लोके सुकृतदुष्कृतहानं ज्ञानफलमित्युक्तम् । तदयुक्तम् । अपुरुषार्थत्वादित्याशङ्कां परिहर्तुं प्रसङ्गादिदमुक्तमिति ॥

ननु यस्यानासायेनाभिलषितविषयोपनतिः तस्य मनोऽव्याकुलं प्रसन्नमित्युच्यते । ततः कथं प्रसादस्येन्द्रियजयफलत्वं ज्ञानसाधनत्वं चोच्यते? इत्यत आह– **प्रसादो नामेति ॥** 'अत्र विवक्षिता' इति शेषः । **स्वतोऽपि** प्रयत्नं विनाऽपि । **विषयागतिः** विषयान् प्रति अप्रवृत्तिः ॥ ६५ ॥

**भावबोधः** (र.टि.)– ॥ **एतेनेति** ॥ हि यस्मात् प्रसन्नचेतसः सर्वदुःखहानिहेतुभूता बुद्धिः पर्यवतिष्ठति, तस्मात् मनःप्रसादे सति सर्वदुःखहानिः ज्ञानद्वारा भवति इति पूर्वोत्तरधार्थयोः हेतुहेतुमद्भावरूपतया कथनेन प्रसादस्य सर्वदुःखहानिः, बुद्धिश्चेति स्वातन्त्र्येण फलद्वयं गीतायामुच्यत इति प्रतीतिर्निरस्ता भवतीत्यर्थः । अत एव भाष्ये हिशब्दसाहित्येन गीतानुवादः कृत इति भावः । **व्यवधानेनेति** ॥ 'नास्ति बुद्धिरयुक्तस्य' इति वक्ष्यमाणप्रकारणेत्यर्थः ॥ **ततः कथमिति** ॥ अभिलषितविषयोपनतेरिन्द्रियजयसाध्यताया ज्ञानसाधनतायाश्च विरुद्धत्वादिति भावः ॥ ६५ ॥

**भावबोधः** (र.टि.)– उत्तरश्लोकं स्वयमेवावतारयति– **प्रसादे सतीत्यादिना ॥ तदिति ॥** 'प्रसाद' इत्यादि पूर्वार्धोक्तमाक्षिपतीत्यर्थः । तत्रापरोक्षज्ञानं चित्तनिरोधादिव्यवधानेन 'नास्ति बुद्धिरयुक्तस्य' इत्युत्तरश्लोके भविष्यतीत्यर्थः ॥ **ततः** अपरोक्षज्ञानादित्यर्थः ॥ **नाप्यवक्तव्योक्तिरिति ॥** वक्तव्यज्ञानस्योक्तेरिति भावः ॥ व्यवधानेन भवतोऽप्यनिष्टनिवृत्तिरूपफलस्य वक्तव्यत्वादिति भावः ॥ कुतः तस्य वक्तव्यता? इत्यत आह– **बुद्धीत्यादिना ॥ ज्ञानसाधनत्वञ्चेति ॥** व्यवधानेनेति भावः ॥ ६५ ॥

**भावरत्नकोशः (सु.टि.)**– उत्तरभाष्यं सङ्गमयितुं गीतामवतारयति–**प्रसादे सतीति** ।। तत् मनःप्रसादेन सर्वदुःखहानम् । 'तरति शोकमात्मवित्' इत्यादावात्मज्ञानिनः शोकशब्दित-सर्वदुःखप्रहाणिः श्रूयते । मनःप्रसादमात्रेण सर्वदुःखहान्युक्तौ तद्विरोधः स्यादित्यर्थः । **एतेनेति** ।। 'कथं मनःप्रसादमात्रेण सर्वदुःखहानिः' इत्याक्षेपपूर्वक 'प्रसन्नचेतसो हि' इत्यादिभाष्येणेत्यर्थः । न केवलमुक्ताक्षेपनिरास इत्यपेरर्थः । **तच्चेति** ।। अपरोक्षज्ञानं व्यवधानेन चित्तनिरोधादिव्यवधानेनेत्येतत् 'नास्ति बुद्धिरयुक्तस्य' इत्युत्तरश्लोके भविष्यतीत्यर्थः । ततः अपरोक्षज्ञानात् । **वक्तव्यानुक्तिः** अवश्यवक्तव्यज्ञानानुक्तिः । सर्वदुःखहानिरवक्तव्येत्युक्तम् । तदपि नेत्याह– **नापीति** ।। व्यवधानेन भवतोऽप्यनिष्टनिवृत्तिरूपफलस्य वक्तव्यत्वादिति भावः । तत् कथमत्र सङ्गतमित्यत आह– **बुद्धियुक्त इति** ।। **अपुरुषार्थत्वात्** सुखावाप्ति-दुःखहान्योरेव पुरुषार्थत्वादिति भावः । **अभिलषितविषयोपनतिः** इष्टविषयलाभः । ततः **कथमिति** ।। अव्याकुलत्वापरपर्यायमनःप्रसादस्येन्द्रियजयफलत्वं नोपपद्यते । अनायासेनाभि-लषितविषयोपनतिफलत्वात् । इन्द्रियाणामभिलषितविषयेभ्यः प्रत्याहरणं हि जयः । तथा तस्य ज्ञानसाधनत्वं चायुक्तम् । विषयोपभोगजन्याव्याकुलत्वस्य विषयविरागसाध्यज्ञानसाधनत्व-विरोधादिति भावः । विषयाणामागतिरिति प्रतीतौ पुनरुक्तचोद्यापरिहार एवेत्यतो व्याचष्टे– **विषयान् प्रत्यप्रवृत्तिरिति** ।। विवक्षितप्रसादस्येन्द्रियजयफलत्वं ज्ञानसाधनत्वं च न विरुद्धमिति भावः ।।

**गीताक्षरार्थस्तु**– अस्त्वेवं रागद्वेषपरिहारः, ततः किमित्यपेक्षायां रागद्वेषपरिहारस्येन्द्रिय-जयाख्यम्, इन्द्रियजयाच्च किं स्यादित्याकाङ्क्षायां ततो जायमानं फलमुच्यते **रागद्वेषेति द्वाभ्याम्** ।। य उक्तविधया त्यक्तरागद्वेषः सः रागद्वेषवियुक्तैः ताभ्यामप्रयुक्तैः आत्मवश्यैः स्वाधीनैः इन्द्रियैः केवलं शरीरधारणार्थं विषयान् ईश्वरनुन्नाननुभवन्नपि विधेयात्मा स्वाधीन आत्मा मनो यस्य स तथा स भवति । तत एव बाह्येन्द्रियाण्यपि तस्य वश्यानि भवन्ति । अनेन पादत्रयेण रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलमुक्तम् ।

इन्द्रियजयेनापि किं स्यादिति द्वितीयाकाङ्क्षोत्तरत्वेनेन्द्रियजयस्य ज्ञानं व्यवहितफलमिति दर्शयितुं साक्षात् फलमुच्यते – **विधेयात्मा प्रसादमधिगच्छतीति** ।। तत्र प्रसादो नाम प्रयत्नेन विनाऽपि मनसः प्रायो विषयान् प्रत्यप्रवृत्तिरत्र विवक्षिता । तामधिगच्छति प्राप्नोति । प्रसादे

श्लोकः ६५

सति किं स्यादित्यत उच्यते – **प्रसाद इति** ॥ मनसः प्रसादे सति अस्य प्रसन्नचेतसः पुरुषस्य आशु बुद्धिः ब्रह्मापरोक्षज्ञानं पर्यवतिष्ठति सम्यग् भवति । ततश्चास्यापरोक्षज्ञानिनः सर्वदुःखानां हानिरुपजायते समीपे निष्पद्यते । हि प्रसिद्धमेतत् 'तरति शोकमात्मवित्' इत्यादाविति ॥ 'बुद्धियुक्तः' इति श्लोके सुकृतदुष्कृतहानं ज्ञानफलमुक्तम् । तदयुक्तम् । अपुरुषार्थत्वादिति शङ्कां परिहर्तुं प्रसङ्गादिदमुदितमिति ॥ ६४-६५ ॥

**भावदीपिका (श्री.टि.)**– ॥ **तरतीति** ॥ ज्ञानेनैव सर्वदुःखहानिश्रवणान्न मनःप्रसादेन सर्वदुःखहानिरित्याशयः ॥ **व्यवधानान्तरमिति** ॥ प्रसादेन ज्ञाने जननीयेऽन्यद् व्यवधानं वा वक्तव्यमित्यर्थः ॥ **अवक्तव्यैवेति** ॥ सर्वदुःखहानेर्मनःप्रसादफलत्वाभावादिति भावः ॥ **एतेनेति** ॥ भाष्ये 'प्रसन्नचेतसो हि' इति हिशब्दसाहित्येन गीतानुवादकरणेनेत्यर्थः ॥ **फलद्वयमिति** ॥ प्रसाद इति श्लोकेन सर्वदुःखहानिर्बुद्धिश्चेति स्वातन्त्र्येण फलद्वयमित्यर्थः । कथमित्यत आह– **प्रसादे सतीति** ॥ हि यस्मात् प्रसन्नचेतसः सर्वदुःखहानिहेतुभूता बुद्धिः पर्यवतिष्ठति, एवं प्रसादे मनःप्रसादे सति जातया बुद्ध्या सर्वदुःखानां हानिरस्योपजायते इति योज्यम् ॥ **व्यवधानेनेति** ॥ चित्तनिरोधाख्ययुक्तिद्वारेत्यर्थः । **भविष्यति** 'नास्ति बुद्धि-रयुक्तस्य' इति वक्ष्यमाणप्रकारेणेत्यर्थः । अतो न वक्तव्यस्य व्यवधानस्यानुक्तिरित्यन्वयः । **ततः** ज्ञानात् ॥ **प्रसादफलतयेति** ॥ एवं परम्परामभिप्रेत्य 'प्रसादे सर्वदुःखानां हानिः' इत्युक्तमिति । नाप्यवक्तव्योक्तिः सर्वदुःखहानेः परम्परया प्रसादफलत्वेनावक्तव्यत्वाभावादिति भावः । ननु सत्यमेवं वस्तुगतिस्तथाऽप्यत्र सर्वदुःखहानेर्ज्ञानफलत्वोक्तौ का सङ्गतिरित्यत आह– **बुद्धीति** ॥ **अपुरुषार्थत्वादिति** ॥ इष्टप्राप्त्यनिष्टनिवृत्त्योरन्यतरत्वाभावादिति भावः ॥ **परिहर्तुमिति** ॥ अनिष्टनिवृत्तिरूपत्वादित्याशयेनेत्यर्थः ॥ **प्रसङ्गादिदमिति** ॥ 'प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति' इति बुद्धिरूपमनःप्रसादफलकथनेन तत्फलरूपाया दुःखनिवृत्तेरपि स्मारितत्वेन प्रसङ्गसङ्गत्योक्तमिति भावः । **उपनतिः** प्राप्तिः ॥ **इन्द्रियजयफलत्वमिति** ॥ इन्द्रियजयाभावेऽपि उक्तरूपमनःप्रसादसद्भावादित्याशयः ॥ **ज्ञानेति** ॥ अभिलषितविषयोपनतौ च तादृशप्रसादस्य ज्ञानसाधनत्वं विरुद्धमिति भावः । **अप्रवृत्तिः** मनस इति शेषः ॥ ६५ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **इत्यत उक्तमिति** ॥ गीतायामिति शेषः । **एतेनेति** ॥ कथं प्रसादमात्रेण सर्वदुःखहानिरित्याक्षेपपूर्वकं 'प्रसन्नचेतसो हि' इत्येतत्परत्वव्याख्याने कृत

एवोक्ताक्षेपनिरासो नान्यथा । तेनान्यथाप्रतीतिनिरास इति भावः । अत एव भाष्ये हिशब्द-साहित्येन गीतानुवाद इति बोध्यम् । **व्यवधानेनेति** ॥ 'नास्ति बुद्धिरयुक्तस्य' इति वक्ष्यमाण-व्यवधानेनेत्यर्थः । **ततः कथमिति** ॥ अव्याकुलत्वाख्यप्रसादस्येन्द्रियजयफलत्वं कथम् । अनायासेनाभिलषितविषयोपनतिफलत्वात् ज्ञानसाधनत्वं च कथम्?। विषयोपनतिजन्य-व्याकुलत्वस्य ज्ञानसाधनत्वविरोधादित्यर्थः ॥ ६५ ॥

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**नचाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

## भाष्यम्

**प्रसादाभावे दोषमाहोत्तराभ्यां श्लोकाभ्याम् । न हि प्रसादाभावे युक्तिः चित्तनिरोधः । अयुक्तस्य च बुद्धिः सम्यज्ज्ञानं च नास्ति । तदेवोपपादयति– न चायुक्तस्येति ॥**

भावप्रदीपिका (प.टी.)– ननु मार्गान्तरेण मोक्षसिद्धेः किमनेन दुरापाद्यप्रसादेन ? इत्याशङ्कोत्तरतयोत्तरश्लोकद्वयमवतार्य व्याचष्टे– **प्रसादेति** ॥ नन्वत्र युक्त्यभावे दोष उच्यते, न प्रसादाभाव इत्यत आह– **न हीति** ॥ अयुक्तस्य बुद्धिर्भावना च नास्तीति भ्रान्तिर्मा भूदित्याह– **तदेवेति** ॥ अयुक्तस्य ध्यानाभावान्नापरोक्षज्ञानमित्यर्थः ॥ 'न चाभावयतः शान्तिः' इत्यत्रापि न चाभावयतो ज्ञानं, ज्ञानिनः शान्तिरिति ज्ञेयम् ॥

भावप्रकाशिका (न.टी.)– 'प्रसन्नचेतसो ह्याशु बुद्धिः' इत्युक्तत्वात् नास्ति बुद्धिर-प्रसन्नचेतस इति वक्तव्ये अयुक्तस्य बुद्धिर्नेत्युक्तेः प्रसादसाध्ययुक्तिर्नामाङ्गीकार्येति भावेन उत्तरश्लोकमवतार्य व्याचष्टे– **प्रसादाभाव इति** ॥ कथमयुक्तस्य बुद्धिर्नास्ति ? इत्या-शङ्कायाम्, अयुक्तस्य भावनाभावात्, तदभावे बुद्ध्यभावादिति भावेनाह– **तदेवेति** ॥६६॥

प्रमेयदीपिका (ज.टी.)– वक्तव्यस्योक्तत्वात् 'नास्ति बुद्धिः' इत्यादिकं किमर्थम्? इत्यत आह– **प्रसादेति** ॥ 'श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन? यदर्थमिन्द्रियजयोऽपेक्षित इत्याशङ्क्य' इति शेषः । नन्वत्र प्रसादाभावे

श्लोकः ६६

इदं स्यादिति नोच्यते । अतः कथमेतदुक्तमित्यतः प्रकरणप्राप्तमध्याहरति– **न हीति** ।। ननु प्रसादरहिता अनुमिमत इत्यत आह– **चित्तेति** ।। एकाग्रतेत्यर्थः । एवमध्याहारे सति 'नास्ति बुद्धिः' इत्येतत्सम्बद्ध्यत इति भावेनाऽह– **अयुक्तस्येति** ।। ज्ञानमात्रं प्रकृता-नुपयुक्तमयुक्तं चेत्यत आह– **सम्यगिति** ।। ब्रह्मापरोक्षज्ञानमित्यर्थः ।। एतावता प्रसादा-भावे दोष उक्तः । तत्किमर्थं 'न चायुक्तस्य' इत्येतत्? इत्यत आह– **तदेवेति** ।। 'ध्यानेनैव ज्ञानोत्पादात् कथं 'नास्ति बुद्धिरयुक्तस्य' इत्याशङ्क्य'इति शेषः । **भावना** ध्यानम् । अत एव 'न चाभावयतो ज्ञानम् । नचाज्ञानिनः शान्तिः' इति योज्यम् ।।

**भावबोधः (र.टि.)**– ।। **अनुमिमत इति** ।। युक्तिशब्दस्यानुमाने प्रसिद्धत्वादिति भावः ।। **प्रकृतानुपयुक्तमिति** ।। अपरोक्षज्ञानस्यैव मनःप्रसादसाध्यत्वेन 'प्रसन्नचेतस' इति प्रकृत-त्वादनुपयुक्तं, प्रसादाभावेऽपि घटादिज्ञानस्य जायमानत्वादयुक्तं चेत्यर्थः । **अत एवेति** ।। ज्ञानस्यैव साक्षात् ध्यानजन्यत्वात् शान्तेस्तु ज्ञानद्वारेव तज्जन्यत्वादित्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **उपकृतेनेति** ।। 'तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' (ब्र.सू.३.३.४३) इति सूत्रोक्तदिशा अज्ञानसंशयविपर्ययलक्षणप्रतिबन्धनिरास-रूपोपकारवत्तयोपकृतेनेत्यर्थः ।। युक्तिरनुमेति मत्वा शङ्कते– **नन्विति** ।। **प्रकृतेति** ।। ब्रह्मा-परोक्षज्ञानस्य 'स्थितप्रज्ञस्य' इत्यादिना प्रकृतत्वादिति भावः ।। **अयुक्तमिति** ।। तस्य चित्त-निरोधापेक्षणादिह च तदुक्तेरिति भावः ।। **अत एवेति** ।। भावनासाध्यापरोक्षज्ञानसाध्यतया मोक्षस्य साक्षाद्भावनासाध्यत्वाभावादेवेत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– **वक्तव्यस्योक्तत्वात्** रागद्वेषपरिहारस्येन्द्रियजयः फलं, तस्य च ज्ञानं व्यवहितफलमित्यादिरूपस्य वक्तव्यस्योक्तत्वात् । **श्रवणमननाभ्यामुपकृतेन ध्यानेनैवेति** ।। 'तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' इत्यधिकरणे ध्यानमेवा-परोक्षज्ञानकारणम् । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतेः । 'ध्यानं च यावदीक्षेत' इति स्मृतेश्च । श्रवणमज्ञाननिवृत्तिद्वारा तदङ्गम् । मननं तु संशयविपर्ययरूपप्रतिबन्ध-निरसनद्वारा ।

'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम्'

इति वचनाच्छ्रवणमननोपकृतध्यानस्यैवापरोक्षज्ञानसाधनत्वमिति व्यवस्थापनादिति भावः । **इदम्** अनिष्टम् । **एतत्** प्रसादाभावे दोषमाहेत्येतत् । **प्रकरणप्राप्तम्** इन्द्रियजयप्रकरणप्राप्तम् । युक्तिशब्दस्यानुमानार्थत्वं मत्वा शङ्कते– **नन्विति** ॥ ननु चित्तनिरोधो नाम चित्तस्य विषयान् प्रत्यप्रवृत्तिः । स एव चात्र प्रसादो विवक्षित इति कथं हेतुहेतुमद्भाव इत्यत आह– **एकाग्रतेति** ॥ **प्रकृतेति** ॥ 'तस्य प्रज्ञा प्रतिष्ठिता', 'प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति' इत्यादावपरोक्षज्ञानस्यैव प्रस्तुतत्वादनुपयुक्तम् । चित्तैकाग्र्याभावेऽपि पामरस्य घटादिज्ञान-सद्भावादयुक्तं चेत्यर्थः । सम्यक्त्वस्य याथार्थ्यरूपत्वे पुनरुक्तचोद्यापरिहार एवेत्यतो व्याचष्टे– **ब्रह्मापरोक्षज्ञानमिति** ॥ **एतावता** 'नास्ति बुद्धिरयुक्तस्य' इत्येतावता ग्रन्थेन । **दोषः** अपरोक्षज्ञानाभावरूपः । **तदिति** ॥ यतो दोषोद्भावनोपयुक्तमेव वक्तव्यं तत इत्यर्थः । **ध्यानेनैव** न तु प्रसादेन । श्रवणमननाभ्यामुपकृतेनेत्यपि द्रष्टव्यम् । ध्यानेनैवेत्युक्तशङ्कायाः कथमनेन परिहारः ? किञ्च भावना हि प्रयत्नः । 'भावनैव प्रयत्नात्मा' इत्यभियुक्तोक्तेः । स च चित्तै-काग्रताभावेऽपि भवतीति कथमुच्यते 'न चायुक्तस्य भावना' इति, इत्यत आह– **भावना ध्यानमिति** ॥ ननु न भावना ध्यानमिति युक्तं व्याख्यानम् । 'न चाभावयतः शान्तिः' इति व्यतिरेकमुखेन भावनायाः शान्तिशब्दितमोक्षहेतुत्वावेदनात् । न हि ध्यानेनैव मोक्ष इत्यभ्युपगम इत्याशङ्क्य भावनामोक्षयोर्मध्ये अपरोक्षज्ञानपदमज्ञानिन इति पदं च संयोज्यमिति भावेनाह– **अत एवेति** ॥ भावनासाध्यापरोक्षज्ञानजन्यतया मोक्षस्य साक्षाद् भावनासाध्यत्वाभावादेवेत्यर्थः ।

**भावदीपिका (श्री.टि.)**– ॥ **इदम्** अनिष्टम् ॥ **एतदुक्तमिति** ॥ प्रसादाभावे दोषमाहेति कथमुक्तमित्यर्थः ॥ **प्रकरणादिति** ॥ 'नचायुक्तस्य' इत्याद्यनुवादप्रकरणादत्राप्ययुक्तस्येत्यनु-वादाद् विधेयं पूरयतीत्याशयः । ननु युक्तिर्लिङ्गं व्याप्यमिति पर्यायात् प्रसादाभावेऽनुमानाभाव इत्युक्तं स्यादिति मत्वा शङ्कते– **नन्विति** ॥ निरोधशब्दार्थमाह– **एकाग्रतेति** ॥ **प्रकृता-नुपयुक्तमिति** ॥ अपरोक्षज्ञानस्यैव मनःप्रसादसाध्यत्वेन 'प्रसन्नचेतस' इति प्रकृतत्वादनुपयुक्तम् । मनोहरणेऽपि ज्ञानमात्रस्य जायमानत्वाद् अयुक्तं चेत्यर्थः । नन्वेवं नचायुक्तस्य ध्यानमिति वक्तव्यत्वेन 'नचायुक्तस्य भावना' इति कथमुक्तमित्यत आह– **भावनेति** ॥ ननु 'नचाभावयतः

शान्तिः' इत्ययुक्तम् । ज्ञानेनैव शान्त्युत्पादादित्यत आह– **अत एवेति** ।। भावनाया ध्यानत्वात् तस्यैव ज्ञानसाधनत्वाच्छान्तेस्तु ज्ञानद्वारैव ध्यानसाध्यत्वादेवेत्यर्थः ।।

**भावप्रकाशः (कृ.टि.)– ।। श्रवणमननाभ्यामिति ।।** ध्यानमेवापरोक्षज्ञानकारणम् । 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतेः । श्रवणमनने तु ध्यानोपकारके । तत्र श्रवणमज्ञाननिवृत्तिद्वारा तदङ्गम् । मननं तु संशयविपर्ययनिवृत्तिद्वारा । 'शृणुयाद्यावदज्ञानं मतिर्यावदयुक्तता' इत्युक्तेरिति विवेकः । चाक्षुषसाक्षात्कारे आलोकस्य चक्षुःसहकारित्ववद् ब्रह्मसाक्षात्कारे ध्यानस्य करणत्वेऽपि मनसः सहकारित्वमिति न 'मनसैवेदमाप्तव्यम् ' इत्यादिविरोधः इति बोध्यम् । युक्तिशब्दस्यानुमानार्थत्वं गृहीत्वाऽह– **अनुमिमत इति** ।। ननु चित्तनिराधो नाम चित्तस्य विषयागतिः । तथा च चित्तनिरोधस्य प्रसादरूपत्वात् कथं कार्यकारणभाव इत्यत आह– **एकाग्रतेत्यर्थ इति ।। प्रकृतानुपमुक्तमिति** ।। अपरोक्षज्ञानस्यैव मनःप्रसादसाध्यत्वेन प्रकृतत्वादिति भावः । **अयुक्तमिति** ।। चित्तैकाग्रताभावेऽपि घटादि-ज्ञानोत्पत्तेरिति भावः । ननु भावनैव प्रयत्नात्मेत्याद्यभियुक्तोक्तेः प्रयत्न एव भावना । प्रयत्नश्च चित्तैकाग्रताभावेऽपि भवतीति न चायुक्तस्य भावनेति कथमुक्तमित्यत आह– **भावना ध्यानमिति ।। अत एवेति ।।** ज्ञानस्यैव साक्षात् ध्यानजन्यत्वाच्छान्तेस्तु ज्ञानद्वारैव तज्जन्यत्वादित्यर्थः ।।

## भाष्यम्

**शान्तिः मुक्तिः ।। 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानात् ।। ६६ ।।**

भावप्रदीपिका (प.टी.)– नन्वपरोक्षज्ञानस्य शान्तिसाधनस्य कथं तत्साधनता ? इत्यत आह– **शान्तिरिति** ।। ६६ ।।

प्रमेयदीपिका (ज.टी.)– ननु शान्तिः प्रसादः । तस्य ज्ञानसाधनत्वेनोक्तत्वात् कथं ज्ञानोत्तरत्वमुच्यते? इत्यत आह– **शान्तिरिति** ।। एतच्च न केवलं मुक्तौ सर्वदुःखहानिः । किन्तु संसारिभिरलभ्यं परमं सुखं चेति ज्ञापयितुं प्रसङ्गादुक्तम् । एतदेवापेक्ष्य भाष्यकृता 'ब्रह्मादिपदात्' (२.५०) इत्याद्युक्तम् ।। ६६ ।।

**भावबोधः (र.टि.)– ॥ न केवलमिति ॥** 'प्रसादे सर्वदुःखानां हानिः' इति सर्वदुःखहानेरेव प्राक्ज्ञानसाध्यत्वेनोक्तत्वादिति भावः । **एतदेवाभिप्रेत्येति ॥** गीतायां 'सर्वदुःखहानिः' इति मोक्षस्य दुःखाभावरूपत्वमुक्त्वा पुनः शान्तिपदेन परमसुखरूपत्ववचनमित्यर्थः । अनेन तद्भाष्यं गीतारूढं कृतं भवति ॥ ६६ ॥

**भावदीपः (रा.टि.)– ॥ एतदेवेति ॥** संसारदशायाम् अलभ्यं परमसुखं मुक्तावस्तीत्येतदेवापेक्ष्य ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धमित्युक्तमित्यर्थः ॥ ६६ ॥

**भावरत्नकोशः (सु.टि.)–** उक्तत्वात् 'प्रसन्नचेतसो ह्याशु बुद्धिः' इत्यत्र । ननु ज्ञानिलक्षणस्यासम्भवपरिहाराय ज्ञानस्य महाप्रयत्नसम्पादनीयेन्द्रियजयसाध्यत्वप्रतिपादनावसरे ज्ञानफलकथनमसङ्गतमित्यत आह– **एतच्चेति ॥** 'न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्' इत्येतदित्यर्थः । अनेन 'न चाभावयतः शान्तिः' इत्यत्र व्यतिरेकमुखेन 'प्रसादे सर्वदुःखानां हानिः' इति प्रागुक्तसर्वदुःखहानिरूपमुक्तिमनूद्य 'अशान्तस्य कुतः सुखम्' इति व्यतिरेकमुखेनैव मुक्तौ परमसुखं चास्तीति गीतायामुच्यते । तच्च सुकृतदुष्कृतहानं न ज्ञानफलम् । सुखप्राप्तिदुःखपरिहाररूपत्वाभावाभावादिति कृतचोद्यपरिहारायेति विभावितं भवति । ननु मोक्षस्य परमसुखरूपत्वमपि भाष्यकृता 'ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धम्' इति प्रागेवोक्तत्वान्नेह वक्तव्यमित्यत आह– **एतदेवेति ॥** 'न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्' इति गीतावचनमेव भावि हृदि निधाय भाष्यकृता तथोक्तमिति न दोष इति भावः ॥ ६६ ॥

**गीताक्षरार्थस्तु–** श्रवणमननाद्युपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन ? यदर्थमिन्द्रियनिग्रहोऽपेक्षित इत्याशङ्क्य प्रसादाभावे दोष उच्यते – **नास्तीति ॥** प्रसादाभावे युक्तिशब्दितचित्तनिरोधरूपचित्तैकाग्रता नास्तीति प्रकरणप्राप्तमध्याहर्तव्यम् । ध्यानेनैव ज्ञानोत्पादात् कथं 'नास्ति बुद्धिरयुक्तस्य' इत्याशङ्क्य तदुपपाद्यते – **न चायुक्तस्येति ।** अयुक्तस्य चित्तनिरोधरहितस्य भावना ध्यानं नास्ति न भवति । अभावयतः अध्यायतश्च बुद्धिः ब्रह्मापरोक्षज्ञानं नास्ति । न चाबुद्धेः अपरोक्षज्ञानहीनस्येति शेषः । शान्तिः मुक्तिः नास्ति । अशान्तस्य अमुक्तस्य कुतः सुखम् ? न कुतोऽपि । अबुद्धेः शान्तिर्नास्तीत्येतावत्येव

वक्तव्येऽपि यत् 'अशान्तस्य कुतः सुखम्' इत्युच्यते तत् न केवलं मुक्तौ सर्वदुःखहानिः, किन्तु संसारिभिरप्यलभ्यं परमसुखं चेति ज्ञापयितुं प्रसङ्गादिति ज्ञातव्यम् ॥ ६६ ॥

**भावदीपिका (श्री.टि.)**– ॥ **न केवलमिति** ॥ अनिष्टहानिरेवेत्यर्थः । 'प्रसादे सर्वदुखानां हानिः' इति सर्वदुःखहानेरेव प्राग् ज्ञानसाध्यत्वेनोक्तत्वादिति भावः ॥ **सुखं चेति** ॥ इष्टप्राप्तिश्चास्तीत्यर्थः ॥ **एतदेवेति** ॥ गीतायां सर्वदुःखानां हानिरिति मोक्षस्य दुःखाभावरूपत्वमुक्त्वा पुनः शान्तिपदेन परमसुखरूपत्ववचनमत्रत्यमभिप्रेत्यैव प्राग् ब्रह्मादिपदादन्यदप्यधिकतमं सुखं मोक्ष इति सिद्धमित्युक्तमित्यर्थः । अनेन तद्भाष्यं गीतारूढं कृतं भवतीति ज्ञातव्यम् ॥ ६६ ॥

**भावप्रकाशः (कृ.टि.)**– ननु ज्ञानिलक्षणस्यासम्भवपरिहाराय ज्ञानस्य महाप्रयत्नसाध्येन्द्रियनिग्रहसाध्यत्वप्रतिपादनावसरे ज्ञानफलप्रतिपादनमसङ्गतमित्यत आह– **एतच्चेति** ॥ चशब्देन 'सर्वदुःखानां हानिरस्योपजायते' इत्युक्तसमुच्चयः । तदनेन टीकावाक्येन 'न चाभावयतः शान्तिः' इत्यत्र व्यतिरेकमुखेन प्रागुक्तसर्वदुःखहानिमनूद्याशान्तस्य कुतः सुखमित्यत्र व्यतिरेकमुखेन मुक्तौ परमसुखं चास्तीति गीतायामुच्यत इत्युक्तं भवति । ननु तथाऽपि मोक्षस्य परमसुखरूपत्वं न वक्तव्यम् । भाष्यकृता प्रागेवोक्तत्वादित्याशङ्क्य तद्भाष्यस्यैतद्गीताव्याख्यानत्वान्न दोष इति भावेनाह– **एतदेवेति** ॥ 'न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्' इत्येतदेवेत्यर्थः ॥ ६६ ॥

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

## भाष्यम्

**कथमयुक्तस्य भावना न भवति? आह– इन्द्रियाणामिति ॥ अनुविधीयते क्रियते । ननु ईश्वरेण इन्द्रियाणाम् अनु बुद्धिर्ज्ञानमिति वक्ष्यमाणत्वात् । प्रज्ञां प्रज्ञानम् । उत्पत्स्यदपि निवारयतीत्यर्थः । उत्पन्नस्याप्यभिभवो भवति ॥ ६७ ॥**

भावप्रदीपिका (प.टी.)– **ननु** चित्तनिरोधं विनाऽपि घटादिभावनादर्शनात् कथं नायुक्तस्य भावना ? इत्याशङ्क्य, उत्तरश्लोकमवतारयति–**कथमिति** ॥ 'विधीयते' इत्यस्य कर्तृसापेक्षत्वात् तन्निर्देशपूर्वं श्लोकं व्याचष्टे– **अनुविधीयत इति** ॥ कुतो न जीवः कर्ता इत्यत आह– **बुद्धिरिति** ॥ 'प्रज्ञा'शब्दविवक्षितार्थमाह– **प्रज्ञामिति** ॥ चित्तनिग्रहाभावे ज्ञानमेव नास्ति, कुतो भावना ? इत्यर्थः । ज्ञानानुत्पत्तौ कस्य हरणम्? इत्यत आह– **उत्पत्स्यदिति** ॥ तर्हि उत्पन्नपरोक्षज्ञानानां नापेक्षितश्चित्तनिरोध इत्यत आह– **उत्पन्नस्येति** ॥ ६७ ॥

प्रमेयदीपिका (ज.टी.)– एकेनैव श्लोकेन प्रमेयस्य मुद्रितत्वात् 'श्लोकाभ्याम्' (२.६६.गी.भा.) इति **किमर्थमुक्तम्** ? इत्यत आह– **कथमिति** ॥ कृतश्रवणमननस्य ध्यानोपपत्तेरिति भावः । न भवति 'इत्याशङ्क्य' इति शेषः । अनुविधानं सदृशभवनम् । तदत्रासङ्गतम् । कर्ता चात्र जीव इति प्रतीयते। अत आह– **अनुविधीयत इति** ॥ विपूर्वो दधातिः करोतीत्यर्थे वर्तते । कर्ता चात्रेश्वर एवेत्यर्थः । अत्रानुः पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति **कर्मप्रवचनीयो न भवति** ॥

**'ननु'** इति **सम्प्रतिपत्तिरुक्ता** । सा कुतः? इत्यत आह– **बुद्धिरिति** ॥ ग्रहणशक्तिः प्रज्ञा । तद्ग्रहणमत्रायुक्तमित्यत आह– **प्रज्ञामिति** ॥ परोक्षनिश्चयम् । यस्य प्रज्ञानं नोत्पन्नं तस्य युक्त्यभावः किं करिष्यति? विद्यमानस्य हि हरणमित्यत आह– **उत्पत्स्यदिति** ॥ तर्ह्युत्पन्नापरोक्षज्ञानस्य युक्त्यभावोऽकिञ्चित्कर इत्यत आह– **उत्पन्नस्यापीति** ॥ चित्तनिरोधरहितश्रवणमनने अपि न ध्यानोपयोगिनी तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः ॥ ६७ ॥

भावबोधः (र.टि.)– ॥ **कर्मप्रवचनीयो नेति** ॥ तथा च 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीयाप्राप्तेरभावात् 'इन्द्रियाणि' इति न द्वितीयेति भावः । **अयुक्तमिति** ॥ प्रकृतानुपयोगादिति भावः ॥ ६७ ॥

भावदीपः (रा.टि.)– **मुद्रितत्वात्** पूर्णत्वादित्यर्थः ॥ ननु 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' (पा.सू.१.४.९०) इति सूत्रेण 'अनुर्लक्षणे'(पा.सू.१.४.८६)

श्लोकः ६७

इति सूत्रेण वा लक्षणाद्यर्थस्यानुशब्दस्य कर्मप्रवचनीयसञ्ज्ञायां **'कर्मप्रवचनीययुक्ते द्वितीया'** (पा.सू.२.३.११) इति सूत्रेण **'जपमनु प्रावर्षत्'** इत्यादाविव **'इन्द्रियाण्यनु विधीयते'** इति द्वितीयया भाव्यमित्यत आह– **अत्रानुरिति** ॥ 'ननु' इत्यव्ययशङ्कालिङ्गत्वधीनिरासा-यश्चरेणेन्द्रियाणां पृष्ठभावितया मनः क्रियते । 'ननु' इति अविप्रतिपत्तिरुक्तेत्यर्थः । प्रसिद्धि-वाच्यत्र ननुशब्द इति भावः ॥ **बुद्धिरितीति** ॥ 'बुद्धिर्ज्ञानमसम्मोहः' इत्याद्युक्ताः 'मत्त एव भवन्ति' इति भगवतैव दशमाध्याये बुद्ध्यादेः सर्वस्य स्वाधीनत्वोक्तेरिति भावः ॥ **युक्त्यभाव इति** ॥ चित्तनिरोधाभावः इत्यर्थः॥ **तन्निर्धारणार्थनियम इति** ॥ सूत्रपदयोरेकदेशार्थ-कथनेनानुवादोऽयम् ॥ **तत्वनिश्चयवेदार्थनियमाविति** ॥ अयमस्य वाक्यस्यार्थ इति तत्वनिश्चयः । अयमेवास्यार्थो नान्य इति निश्चयो अर्थनियमः। तावुभौ श्रवणमननफलत्वेन ध्यानोपयोगित्वेन सूत्रोक्तौ श्रवणमनने कुरुत इत्यर्थः ॥ ६७ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ करोत्यर्थ इति** ॥ तत्रैव प्रयोगप्राचुर्यादिति भावः । ननु कर्मप्रवचनीयानुशब्दयोगे 'कर्मप्रवचनीययुक्ते द्वितीया' इति 'वृक्षमनु विद्येतते' इत्यादाविव 'इन्द्रियाण्यनु मनो विधीयते' इति द्वितीययैव भाव्यम् । इन्द्रियाणामन्विति षष्ठी तु कथमित्यत आह– **अत्रेति ॥ न लक्षणाद्यर्थ इति** ॥ आदिपदेनेत्थम्भूताख्यानभागवीप्सानां परिग्रहः । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रति पर्यनवः' (पा.सू.१.४.९०) इति लक्षणाद्यर्थकस्यै-वानोः कर्मप्रवचनीयसंज्ञविधानादित्यर्थः । अत्र लक्ष्यते येन तल्लक्षणं चिह्नं ज्ञापकम् । कञ्चि-त्प्रकारं प्राप्त इत्थम्भूतः, तस्याख्यानम् इत्थम्भूताख्यानं, स्वीक्रियमाणः अंशो भागः, द्रव्यगुणक्रियाभिः पदार्थानां प्रयोक्तुर्व्याप्तुम् इच्छा वीप्सा एतेष्वर्थेषु प्रति परि अनु इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति । एतेषां लक्षणादीनां विभक्तिसमीपादीनाम् अव्ययार्थत्ववत् न प्रत्याद्यर्थत्वम् । किं तर्हि? संज्ञायाः प्रत्यादीनां विषयत्वेन निर्दिष्टत्वमेवेति सूत्रार्थः । ततश्च हरिं प्रति प्रविशते भक्तिः, वृक्षं प्रति विद्योतते विद्युत् इत्यादौ हरिवृक्षादीनां भक्तिविद्योतनादि-लक्षणत्वेन कर्मप्रवचनीयत्वाद् युक्ता द्वितीया ॥ अत्र च हरिः लक्षणं, प्रकाशमाना भक्तिः लक्ष्या । वृक्षो लक्षणम् । विद्योतमाना विद्युत् लक्ष्या । ततश्च हरिं प्राप्य भक्तिः प्रकाशते । वृक्षं प्राप्य विद्योतते विद्युदिति प्राप्तिक्रियाजनितो लक्ष्यलक्षणभावः प्रत्यादिभिः द्योत्यत इति युक्तो लक्ष्यलक्षणभावः ॥

ननु चात्रावश्यमनोर्ग्रहणं कर्तव्यम् । इत्थम्भूताख्यानादिषु यथा स्याल्लक्षणग्रहणं च प्रत्याद्यर्थम्। अतोऽर्थान्तरसंज्ञान्तरसाधारणत्वात् ।अनेनैव लक्षणार्थस्यानोः कर्मप्रवचनीय-संज्ञासिद्धौ 'अनुर्लक्षणे' इति सूत्रवैयर्थ्यादिति चेन्न । हेतुभूतलक्षणार्थस्यानोः कर्मप्रवचनीय-संज्ञाविधानार्थतया सार्थकत्वोपपत्तेः ॥

ननु च तत्रतत्र लक्षणग्रहणमेव क्रियते । तद्यदि हेतुर्लक्षणं न भवति। 'अनुर्लक्षणे' इत्यत्रापि न गृह्येत । अथ भवति लक्षणेत्थभूताख्यानेत्यत्रापि गृह्येतेति पुनरपि नार्थ एनेति चेत् -सत्यम्। लक्ष्यते येन तल्लक्षणं चिह्नं ज्ञापकम् । कारकमपि कार्यविशेषावगतिहेतुत्वात् लक्षणं भवत्येव । उक्तं च भाष्ये लक्षणेन हेतुरपि व्याप्तः । नावश्यं तदेव लक्षणम् । येन पुनर्लक्ष्यते यः सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणम् । किन्तु येन नाप्राप्तिन्यायेन कर्मप्रवचनीययुक्तेपि द्वितीया, षष्ठ्या एवापवादः । ततश्च 'लक्षणेत्थम्भूत' इति अनोर्लक्षणे कर्मप्रवचनीयसंज्ञायाः आवश्यको हेयो हेतुर्न भवति । वृक्षमनु विद्योतते विद्युदिति हेतुतृतीयायाः अवकाशात् । धनेन कुलमिति हेतुभूते तु लक्षणे उभयप्रसङ्गे परत्वात् तृतीया स्यात्। तामपि बाधित्वा द्वितीयैव स्यादित्यर्थवत्सूत्रम् ॥

ततश्चायं निष्कर्षः ॥ जपमनु प्रावर्षदित्यादौ, वृक्षमनु विद्योतते विद्युत् इत्यादौ च यत्र हेतुरूपलक्षणार्थत्वम् । यत्र च भक्तो विष्णुमनु इत्यादौ इत्थम्भूताख्यानार्थत्वम् । लक्ष्मीः हरिमनु इत्यादौ भागार्थत्वम् । भूतं भूतमनु इत्यादौ वीप्सार्थत्वम्। तत्रैवानोः कर्मप्रवचनीय-त्वम्। नतु पृष्टभावित्वार्थस्यापीति न तद्योगे कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीयाप्राप्तिरिति ॥

**भावरत्नकोशः (सु.टि.)– मुद्रितत्वात्** सङ्गृहीतत्वात् । परिपूर्णत्वादित्यर्थः । 'न भवति' इति भाष्यमनूद्य अनन्तरं शेषमाह– **न भवतीति** ॥ **अत्र** मनसोऽनुविधानक्रियायाम् । 'अस्य ' इति जीवस्यैव परामर्शादिति भावः । ननु इन्द्रियाणामन्विति कथम् ? यावता 'लक्षणे-त्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इत्यनुशब्दस्य कर्मप्रवचनीयसञ्ज्ञायां 'कर्मप्रवचनीय-युक्ते द्वितीया' इति द्वितीयाविभक्तिरनुशिष्टेति चेत्, नासौ लक्षणेत्थम्भूताख्यानाद्यर्थकः । येन कर्मप्रवचनीयतया द्वितीया स्यात् । किन्तु पृष्ठभावित्वार्थ इति षष्ठ्युपपत्तिरिति भावेनाह– **अत्रानुरिति ॥ सम्प्रतिपत्तिरिति** ॥ ईश्वरेणेन्द्रियाणां पृष्ठभावि मनः क्रियते नन्विति

श्लोक: ६७

सम्प्रतिपत्तिरित्यर्थः । इन्द्रियाणां विषयैः सन्निकर्षे मनोऽपि तत्पृष्ठगामि यथा स्यात् तथेश्वर एव करोतीति भावः । **'बुद्धिर्ज्ञानमसम्मोहः'** इत्याद्युक्त्वा 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इति भगवतैव बुद्ध्यादेस्तद्धर्मस्य च दशमे स्वाधीनस्य विभावयिष्यमाणत्वादिति भाष्यार्थः स्फुटत्वान्नोक्तः । **अयुक्तमिति॥** यदा बाह्येन्द्रियाणि स्वस्वविषयैस्सन्निकृष्टानि, मनश्च तद्द्वारा तत्र प्रवर्तते तदा मनसो विषयग्रहणशक्तिरेवानुभूयत इति तद्धरणकथनम-युक्तमित्यर्थः ॥

ननु प्रज्ञाशब्दस्यापरोक्षज्ञानार्थत्वे हरणवचनमयुक्तम् । 'नेक्षा क्वचन बाध्यते' इत्युक्तेरित्यत आह– **परोक्षनिश्चयमिति** ॥ उत्पत्स्यत् उत्पत्स्यमानम् । कृतश्रवणमननस्य ध्यानोपपत्ते-रित्याशङ्कायाः परिहाराय भाष्यभावमाह– **चित्तनिरोधेति ॥ तत्त्वनिश्चयवेदार्थनियमाविति ॥** अयमस्य वाक्यस्यार्थ इति निश्चयमुत्पादयच्छ्रवणं ध्यानाङ्गम् । अयमेवास्य वाक्यस्यार्थो नान्य इति वेदार्थनिर्धारणरूपनियममुपजनयन्मननमपि ध्यानोपकारीति स्थितिः । यस्य तु न चित्त-निरोधः तस्य कृते अपि श्रवणमनने ध्यानानुकूले न भवतः । ज्ञानात् पूर्वं कृते ज्ञानमेव ध्यानद्वारा नोत्पादयेताम् । उत्पन्नस्यापि ज्ञानस्याभिभवमापादयेतामित्यर्थः ॥ ६७ ॥

**गीताक्षरार्थस्तु–** यदुक्तमयुक्तस्य भावना न भवतीति तद्युक्तम् । कृतश्रवणमननस्य ध्यानोपपत्तेरित्यत उक्तम्– **इन्द्रियाणामिति** ॥ स्वैरं विषयान् प्रति चरतां गच्छतामिन्द्रिया-णाम् । अनुरत्र पृष्ठभावित्वार्थो न लक्षणाद्यर्थ इति न कर्मप्रवचनीयो भवतीति न द्वितीया । **विधीयते** विपूर्वो दधातिः करोत्यर्थे । इन्द्रियाणां पृष्ठभावितयेश्वरेण क्रियत इति यत् तदिन्द्रियानुसारितया मनसः करणमीश्वरकर्तृकम् । यन्मनोऽनु विधीयते तन्मन इति वा । अस्य पुंसः प्रज्ञाम् अपरोक्षनिश्चयं हरति उत्पत्स्यमानां निवारयति । उत्पन्नामप्यभिभवति । चित्तनिरोधरहितस्य श्रवणमनने अपि न ध्यानोपयोगिनी तत्त्वनिश्चयवेदार्थनियमौ न कुरुत इति भावः ॥ ६७ ॥

**भावदीपिका (श्री.टि.)–** **मुद्रितत्वात्** समाप्तत्वादिति यावत् । साधनाभावादेव ध्यानं न भवतीति चेत्, तत्राऽह **कृतेति** ॥ युक्त्यभावेऽपीति शेषः ॥ **कर्ता चेति** ॥ केनानुविधीयत इति शङ्कायां कर्तृत्वेन जीवः प्रतीयत इत्यर्थः । ननु धाञः पोषणार्थत्वेन क्रियत इति व्याख्यानं

कथमित्यत आह– **विपूर्व इति** ॥ नन्विन्द्रियाणामन्वित्ययुक्तम् । 'अनुर्लक्षणे' इति सूत्रविहितस्य लक्षणार्थकस्यानोः 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनव' इति कर्मप्रवचनीयसञ्ज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीयायाम् 'इन्द्रियाण्यनु' इति स्यादित्यत आह– **अत्रानुरिति** ॥ **पृष्ठभावित्वार्थ इति** ॥ तथाचेन्द्रियाणामनु इन्द्रियाणां पृष्ठतः मन ईश्वरेण विधीयते क्रियत इत्यर्थः । इन्द्रियाणां विषयान् प्रति चरणे तदनु मनोऽपि यथा गच्छेत् तथेश्वरः करोतीति यावत् । **न भवति** तथाचेन्द्रियाणीति कर्मप्रवचनीययुक्त द्वितीया न भवतीत्यर्थः ॥ **बुद्धिरितीति** ॥ 'बुद्धिर्ज्ञानमसम्मोहः' इत्याद्युक्त्वा 'भवन्ति भावा भूतानां मत्त एव पृथग्विधा' इत्युक्तत्वादिन्द्रियाणामनु मनश्चरणरूपव्यापारस्यापीश्वराधीनत्वावगमादिति भावः ॥ **अयुक्तमिति** ॥ प्रकृतानुपयोगादिति भावः ॥

ननु कथमयुक्तस्य भावना न भवति ? श्रवणमननाभ्यां तदुपपत्तेरिति शङ्कितस्य किमुत्तरमनेन जातमित्यत आह– **चित्तेत्यादिना** ॥ श्रवणेन ह्यज्ञाननिवृत्तौ सत्यां तत्त्वनिश्चयः, मननेन तु संशयविपर्ययनिवृत्तौ सत्यामयमेव वेदार्थ इति नियमे, पश्चाद् ध्यानं भवति । यथोक्तम् 'तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्ध फलम्' इति । तथा

> 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
> संशयं च पराणुद्य लभते ब्रह्मदर्शनम्'

इति चोक्तम् । अतश्चित्तनिरोधरहितश्रवणं ध्यानोपयोगिनं तत्त्वनिश्चयं न करोति । तथा चित्तनिरोधरहितमननमपि न ध्यानोपयोगिनं वेदार्थनियमं करोतीति 'नचायुक्तस्य भावना' इत्युक्तं युक्तमिति भावः ॥ ६७ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **लक्षणाद्यर्थ इति** ॥ आदिपदेनेत्थम्भूताख्यानादेः ग्रहणम् । **न भवतीति** ॥ तथा च कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीयाप्राप्तेरभावात् षष्ठ्युपपत्तिरिति भावः । **अयुक्तमिति** ॥ यदा बाह्येन्द्रियाणि विषयसन्निकृष्टानि मनश्च तद्द्वारा तत्र प्रवर्तते तदा मनसो विषयग्रहणशक्त्यनुकूलत्वादिति भावः । **तत्त्वनिश्चयेति** ॥ यथाक्रमं श्रवणमननसाध्यौ ज्ञानविशेषावेतौ ॥ ६७ ॥

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

## भाष्यम्

**तस्मात् सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति– तस्मादिति ॥**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवान्तरोपसंहारतयाऽवतारयति– **तस्मादिति** ॥ ६८ ॥

भावप्रकाशिका (न.टी.)– **सर्वात्मनेति** ॥ निराहारत्वविषयध्यानाभावादिनेत्यर्थः ॥ ६८ ॥

**प्रमेयदीपिका (ज.टी.)– अत्र परमं प्रमेयं ज्ञानिलक्षणं (च) प्रकृतम् । तस्यासम्भव-परिहाराय ज्ञानस्य महाप्रयत्नसाध्येन्द्रियनिग्रहसाध्यत्वं च । तत्र कस्यायमुपसंहार इति न ज्ञायते । अत आह– तस्मादिति ॥ ज्ञानी 'जायते' इति शेषः । यत एवं निगृहीतेन्द्रिय-स्यैव प्रसादः, प्रसादवत एव युक्तिः, युक्तिमत एव श्रवणमननाभ्यां तत्त्वज्ञानम्, तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं ध्यानम्, नान्यथा तस्मादित्यर्थः ॥ ६८ ॥**

**भावदीपः (रा.टि.)– ॥ अत्रेति ॥** 'स्थितप्रज्ञस्य' इत्यारभ्य 'प्रजहाति' इत्यारभ्य वा 'या निशा' इत्यन्तप्रकरण इत्यर्थः ॥ **परमं प्रमेयं** ज्ञानम् ॥ **तस्येति ॥** सर्वकामप्रहाणादि-रूपलक्षणस्येत्यर्थः ॥ **साध्यत्वं च** इत्यत्र 'प्रकृतम्' इत्यनुषज्यते । 'विषया विनिवर्तन्ते' इत्यादिनेति भावः ॥ **प्रसादः** मनःप्रसादः ॥ **युक्तिः** चित्तनिरोधः ॥ **तत्त्वज्ञानम्** अयमेव अस्यार्थ इति तत्त्वनिश्चयः ॥ ६८ ॥

**भावरत्नकोशः (सु.टि.)– ॥ अत्र** 'प्रजहाति' इत्यारभ्य 'तदस्य हरति प्रज्ञाम्' इति ज्ञानिलक्षणकथनप्रकरणे । **असम्भवेति** ॥ यदि ज्ञानं सर्वकामप्रहाणजनकं तर्हि सर्वोऽपि जनः कस्मान्न तत् साधयतीत्युक्तासम्भवेत्यर्थः । 'निगृहीतेन्द्रिय एव ज्ञानी' इति भाष्ये व्याप्तिरेव प्रतीयते । शङ्खः पाण्डुर एवेति यथा । न त्विन्द्रियनिग्रहज्ञानयोर्जन्यजनकभाव इत्यत आह– **ज्ञानी जायत इति शेष इति ॥ प्रसादः** मनःप्रसादः । **युक्तिः** नित्तनिरोधः । **तत्त्वज्ञानं** परोक्ष-निश्चयरूपम् ॥ ६८ ॥

**गीताक्षरार्थस्तु–** एवं 'प्रजहाति' इत्यादिनोक्तज्ञानिलक्षणस्यासम्भवपरिहाराय ज्ञानस्य महाप्रयत्नसाध्येन्द्रियनिग्रहसाध्यत्वं 'विषया विनिवर्तन्ते' इत्यादिना यदुक्तं तदुपसंह्रियते– **तस्मादिति** ।। यत एवं निगृहीतेन्द्रियस्यैव प्रसादः, प्रसादवत एव चित्तनिरोधशब्दितयुक्तिः, युक्तिमत एव श्रवणमनने, ताभ्यां तत्त्वज्ञानम्, तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं ध्यानं नान्यथा, तस्माद् यस्य सर्वशः सर्वाणि इन्द्रियाणि इन्द्रियार्थेभ्यः रूपादिविषयेभ्यः निगृहीतानि तस्य प्रज्ञा ब्रह्मापरोक्षधीः प्रतिष्ठिता सुस्थिरा जायत इति ।। ६८ ।।

**भावदीपिका (श्री.टि.)–** ।। **असम्भवेति** ।। यदि ज्ञानं कामप्रहाण्यादिजनकं तर्हि सर्वोऽपि जनः कस्मान्न तत् साधयति ? किमर्थं कामाद्युपद्रवपरिहाराय दन्दह्यमानशिरा बम्भ्रमीति? अतो नास्त्येवेदं ज्ञानिषु लक्षणमित्यसम्भवशङ्कापरिहारायेत्यर्थः । श्रवण-मननाभ्यामित्यनन्तरम् अज्ञानसंशयविपर्ययनिवृत्तिद्वारा तत्त्वज्ञानं भवति । उपलक्षणमेतत् । वेदार्थनियमश्चेत्यपि ग्राह्यम् ।। ६८ ।।

**भावप्रकाशः (कृ.टि.)–** ननु निगृहीतेन्द्रिय एव ज्ञानीत्यनेन व्याप्तिः प्रतीयते । शङ्खः पाण्डुर एवेतिवत् । न त्विन्द्रियनिग्रहज्ञानयोः जन्यजनकत्वमित्यत आह– **ज्ञानी जायत इति** शेष इति ।। ६८ ।।

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।। ६९ ।।**

## भाष्यम्

**उक्तं लक्षणं पिण्डीकृत्याऽह– या निशेति ।। या सर्वभूतानां निशा परमेश्वरस्वरूपलक्षणा । यस्यां सुप्तानीव न किञ्चिज्जानन्ति तस्याम् इन्द्रिय-संयमयुक्तो ज्ञानी जागर्ति सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः । यस्यां विषयलक्षणायां भूतानि जाग्रति तस्यां निशायामिव सुप्तः प्रायो न जानाति ।।**

श्लोकः ६९

**भावप्रदीपिका (प.टी.)– निगृहीतेन्द्रियतामात्रस्य सुषुप्तावतिव्याप्तिरित्याशङ्कां परिहर्तुमुत्तरश्लोकमवतार्य व्याचष्टे– उक्तमिति ॥**

**भावप्रकाशिका (न.टी.)– प्रकीर्णत्वेनोक्तं स्थितप्रज्ञलक्षणं झटिति बुद्ध्यारोहाय सङ्क्षिप्याहेत्यर्थः । मननयुक्तत्वं भगवद्दर्शनसाधनमाहेत्यर्थः ॥ ६९ ॥**

**प्रमेयदीपिका (ज.टी.)– 'ज्ञानिनः सर्वकर्मपरित्यागप्रतिपादनार्थो 'या निशा' इत्ययं श्लोकः' इति कश्चित्। तन्न । तत्प्रतिपादकाक्षराश्रवणात् प्रमाणविरोधाच्चेत्याशयेन तत्प्रतिपाद्यमाह– उक्तं लक्षणमिति ॥ चतुःश्लोक्यां विक्षिप्योक्तम् ॥ नन्वत्रोक्तं किमपि न प्रतीयते? इत्यत आह– येति ॥ परमेश्वररूपस्य निशासाम्यमुपपादयति– यस्यामिति ॥ विषयत्वमधिकरणत्वं चाविवक्षयित्वा कारकत्वमात्रविवक्षया साम्यमिदमुक्तम् ।**

**'संयमी' इत्यस्याक्षरार्थः– इन्द्रियेति ॥ प्रकरणलभ्योऽर्थः–ज्ञानीति ॥ उत्तरार्धार्थमाह–यस्यामिति ॥ अत्रापि पूर्ववत् साम्यम् ।**

**भावबोधः (र.टि.)–** ननु सर्वभूतनिष्ठाज्ञानं प्रति ईश्वरस्वरूपस्य विषयत्वेन निशारूपकालस्य भूतज्ञानं प्रत्यधिकरणत्वेन वैलक्षण्यात् कथं परमेश्वरस्वरूपनिशाकालयोः साम्यवचनमित्यत आह– **विषयत्वमिति** ॥ **कारकत्वमात्रेति** ॥ कर्मत्वमेव विषयत्वमिति भावः । **अत्रापीति** ॥ विषयाणां ज्ञानिनिष्ठज्ञानाभावरूपाज्ञानं प्रति विषयत्वं तज्ज्ञानविषयत्वाभावमिति यावत् । निशाकालस्य सुप्तनिष्ठाज्ञानं प्रति अधिकरणत्वमविवक्षित्वा कारकत्वमात्रविवक्षया तस्यां निशायामिव सुप्तः प्रायो न जानाति इत्यनेन विषयसमूहनिशाकालयोः साम्यममुक्तमित्यर्थः ।

**भावदीपः (रा.टि.)–** ॥ **प्रमाणविरोधाच्चेति** ॥ 'कुर्वन्नेवेह कर्माणि' इत्यादि प्रमाणेनेति भावः ॥ **चतुःश्लोक्येति** ॥ 'प्रजहाति' इत्यादि 'विषयाः' इत्यन्तचतुःश्लोक्येत्यर्थः ॥ **द्विगोरिति ङीप्** ॥ **पूर्ववत् साम्यमिति** ॥ कारकत्वमात्रेण, न त्वधिकरणत्वमात्रेण इत्यर्थः॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु सर्वभूतनिष्ठाज्ञानं प्रति ईश्वरस्वरूपस्य कर्मत्ववत् तदधिकरणत्वे निशारूपकालस्य तदधिकरणत्ववत् तत्कर्मत्वे वा ईश्वरस्वरूपनिशारूपकालयोरवैलक्षण्यात् दृष्टान्तदार्ष्टान्तिकभावसम्भवेऽपि परमेश्वररूपस्य तत्कर्मत्वेऽपि तदधिकरणत्वाभावेन

निशारूपकालस्य तदधिकरणत्वेऽपि तत्कर्मत्वाभावेन वैषम्यात् कथं दृष्टान्तदार्ष्टान्तिकभावः ? इत्यतः ईश्वरे सतोऽपि कर्मत्वस्याविवक्षया कारकत्वस्यैव च विवक्षया निशायाः सतोऽपि तदधिकरणत्वस्याविवक्षया कारकत्वमात्रविवक्षया ईश्वरस्वरूपनिशाकालयोः कारकत्वेन साम्यात् युक्त एव दृष्टान्तदार्ष्टान्तिकभाव इत्याशयेनाह– **विषयत्वमिति** ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **कश्चिदिति** ॥ तथा चाह शङ्करः 'यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यन्ते सा निशा । अविद्यारूपत्वात् । परमार्थतत्त्वं पश्यतो मुनेरतः कर्माण्यविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायाम्' इति, 'यस्य पुनर्निशेवाऽविद्यामात्रमिदं सर्वं भेदजातमिति बुद्धिः तस्याऽत्मज्ञस्य सर्वकर्मसंन्यास एवात्रोच्यते' इति, 'तस्मान्नाऽत्मविदः कर्मण्यधिकार इति स्थितम्' इति च । **अक्षरेति** ॥ भूतानि विषयलम्पटानि, ज्ञानी तु परमात्मानमापरोक्ष्येण पश्यन्न तथाविध इति श्रवणेन ज्ञानिनः कर्माभावाश्रवणादित्यर्थः । **प्रमाणेति** ॥ 'पश्यन्नपीममात्मानं कुर्यात् कर्माविचारयन्' इत्यादिश्रुतिस्मृतिविरोधाच्चेत्यर्थः । 'प्रजहाति' इत्याद्यया 'विनिवर्तन्ते' इत्यतः प्राक्तन्या चतुःश्लोक्या । 'द्विगोः' इति ङीप् ॥

ननु परमेश्वरस्वरूपस्याज्ञानविषयत्वेऽपि न तदधिकरणत्वम् । निशायास्त्वज्ञानाधिकरणत्वेऽपि न तद्विषयत्वम् । अतः कथं तयोः साम्यमुच्यत इत्यत आह– **विषयत्वमधिकरणत्वं चेति** ॥ **कारकत्वमात्रेति** ॥ विषयरूपकर्मकारके अधिकरणे चानुस्यूतं यत् कारकत्वं तन्मात्रेत्यर्थः । **अक्षरार्थ इति** ॥ रूढ्या संन्यासिवाचित्वस्य प्रसिद्धत्वेऽपि नासावत्र ग्राह्य इति भावः । जागर्तीति जागरणमात्रं प्रतीयन इत्यतस्तत्तात्पर्यमभाषत आचार्यः सम्यगित्यादीनि स्फुटत्वादव्याख्याय 'यस्याम्' इति भाष्यमवतारयति–**उत्तरेति** ॥ **अत्रापि** उत्तरार्धेऽपि । विषयेषु ज्ञानाभावरूपज्ञानिनिष्ठाज्ञानविषयत्वं निशायां तदधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रविवक्षया विषयाणां निशायाश्च साम्यमुक्तं वेदितव्यमित्यर्थः । **पश्यतीति** ॥ 'पश्यतः' इति गीतानुसाराद् भाष्ये जानातीत्येतत् पश्यतीति व्याख्येयमिति भावेनैवमुक्तम् । **एतत्** ज्ञानिनो मत्तादिवदेव प्रवृत्तिः न तु रागादिनेत्येतत् कस्मात् प्रमाणादवगन्तव्यमित्यर्थः ॥

**भावदीपिका (श्री.टि.)**– ॥ **अक्षरेति** ॥ पदवाक्ये तु दूरापास्ते इति भावः ॥ **प्रमाणविरोधाच्चेति** ॥ 'ज्ञानी तु कर्माणि सदोदितानि कुर्यात्' इत्यादिप्रमाणविरोधाच्चेत्यर्थः ।

श्लोकः ६९

**चतुश्लोक्यां** 'प्रजहाति' इत्याद्यायाम् ।। **अत्रोक्तमिति** ।। अत्र 'या निशा' इति श्लोके चतुःश्लोक्यामुक्तं न प्रतीयत इत्यर्थः । ननु परमेश्वरस्वरूपनिशाकालयोः कथं साम्यम् ? सर्वभूतनिष्ठाज्ञानं प्रति ईश्वरस्वरूपस्य विषयत्वेन, निशाकालस्य तु सुप्तभूताज्ञानं प्रत्यधिकरणत्वेन वैलक्षण्यादित्यत आह– **विषयत्वमित्यादि** ।। **विषयत्वं** कर्मत्वम् । यद्यपीश्वरस्वरूपनिशाकालयोर्विषयत्वाधिकरणत्वाभ्यां वैलक्षण्येन न साम्यम्, तथाऽप्यज्ञानं प्रति यत् कारकत्वं तेन साम्यं विवक्षितमित्यर्थः । मूले **'सुप्तानीव'** इत्यस्य सुप्तानि भूतानीव सुप्तजना इवेत्यर्थः । ननु विषयनिशाकालयोः कथं साम्यम् ? विषयाणां ज्ञानिनिष्ठज्ञानाभावरूपाज्ञानं प्रति विषयत्वात्, निशाकालस्य च सुप्तभूतनिष्ठाज्ञानं प्रत्यधिकरणत्वेन वैलक्षण्यादित्यत आह– **अत्रापीति** ।। विषयत्वमधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रविवक्षया साम्यमित्यर्थः ।। मूले निशायां सुप्त इवेत्यन्वयः । सम्प्रज्ञातसमाध्यभिप्रायेण 'प्रायः' इत्युक्तमिति द्रष्टव्यम् ।।

**भावप्रकाशः (कृ.टि.)**– ।। **प्रमाणविरोधाचेति** ।। 'पश्यन्नपीममात्मानं कुर्यात् कर्माविचारयन्' इत्यादि प्रमाणविरोधादित्यर्थः । नन्वीश्वरस्याज्ञानविषयत्वेऽपि न तदधिकरणत्वं निशायास्त्वज्ञानाधिकरणत्वेऽपि न तद्विषयत्वम् । तत् कथं तयोः साम्यमुक्तमित्यत आह– **विषयत्वमिति** ।। **कारकत्वमात्रेति** ।। विषयरूपकर्मणि अधिकरणे चानुगतं यत्कारकत्वसामान्यं तन्मात्रविवक्षयेत्यर्थः । **अत्रापीति** ।। विषयेषु ज्ञानाभावरूपज्ञानिनिष्ठाज्ञानविषयत्वं निशायां तदधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रविवक्षया साम्यमुक्तमित्यर्थः ।

## भाष्यम्

**मत्तादिवद्गमनादिप्रवृत्तिः ।। तदुक्तम्– 'देहं तु तं न चरमम्'** (भाग.३.२९.३६), **'देहोऽपि दैववशगः'** (भाग.३.२९.३७) **इति श्लोकाभ्याम् । मननयुक्तो मुनिः । 'पश्यतः' इति अस्य साधनमाह ।। ६९ ।।**

भावप्रदीपिका (प.टी.)– नन्वेवं ज्ञानिनो बाह्याद्यननुसन्धाने कथं गमनादि ? इत्यत आह– **मत्तादिवदिति** ।। न तु 'मुनि'शब्दादृपिरित्याह– **मननेति** ।। कथं मननयुक्तपरोक्षज्ञानिन्येतल्लक्षणम् ? इत्यत आह– **पश्यत इति** ।। ६९ ।।

भावप्रकाशिका (न.टी.)– मननयुक्तत्वं भगवद्दर्शनसाधनमाहेत्यर्थः ॥ ६९ ॥

प्रमेयदीपिका (ज.टी.)– यदि न किञ्चित् पश्यति कथं तर्हि तस्य गमनादिप्रवृत्तिः? इत्यत आह– **मत्तादिवदिति** ॥ कुत एतत्? इत्यत आह– **तदुक्तमिति** ॥ 'मुनेरित्युक्तत्वाच्चतुर्थाश्रमिण एव ज्ञानम्' इति व्याख्यानम् असदिति भावेन आह– **मननेति** ॥ याज्ञवल्क्यादीनामयतीनामपि ज्ञानश्रवणादिति भावः । मननस्य प्राङ्निवृत्तत्वात् 'पश्यतो मुनेः' इति कथम्? इत्यत आह– **पश्यत इति** ॥ दर्शनसाधनत्वेन मननमिहोक्तम् । न तु तत्समकालीनतयेत्यर्थः । एतच्च प्राङ्मननादेः स्पष्टं दर्शनसाधनत्वानुक्तेः प्रसङ्गादिहोक्तम् ॥

ननु 'स्थितधीः किं प्रभाषेत' (२.५४) इत्यादेरुत्तरमयं श्लोक इति प्रागुक्तम् । तत्कथमिदानीं लक्षणपरतया व्याख्यातः? अन्यपरादपि तल्लाभ इत्याशयेनेति ब्रूमः । अन्यथा 'किं प्रभाषेत इत्यादेरुत्तरमाह' इत्यत्रैवावक्ष्यत् । किं तत्र स्थानप्रदर्शनादिना? इति ॥ ६९ ॥

भावबोधः (र.टि.)– ॥ तदुक्तमितीति ॥

'देहं तु तत्र चरमं स्थितमुज्झितं वा सिद्धोऽभिपश्यति यतोऽध्यगमत्स्वरूपम् ।<br>
दैवादुपेतमथ दैववशादपेतं वासो यथा परिवृतं मदिरामदान्धः ।<br>
देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रति समीक्षत एव सासुः ।<br>
तं सप्रपञ्चमधिरूढसमाधियोगं स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः' ।

इति तृतीयस्कन्धगतावेव श्लोकाविहोदाहृतौ, नैकादशस्कन्धगतौ । अतो 'देहं च नश्वरमिदम्' इति तत्स्कन्धमूलतात्पर्यगतपाठेनैतद्भाष्यस्यैकरूपत्वाभावो न दोष इति ज्ञेयम् । **अन्यपरादपीति** ॥ विक्षिप्तलक्षणसङ्ग्रहपरादपि श्लोकात्, तस्य 'स्थितधीः' इत्यादिप्रश्नोत्तररूपस्य गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका' इत्यस्य लाभः । 'सा निशा पश्यतो मुनेः' इत्यत्रावश्यवक्तव्येन 'प्रायः' इत्यनेन प्राक् 'अतीत'इत्यनेनोक्तस्य 'मत्तादिवद्गमनादिप्रवृत्तिः' इत्यंशस्य लाभादिति भावः ॥ ६९ ॥

भावदीपः (रा.टि.)– ॥ तदुक्तमितीति ॥ इदं तृतीयस्कन्धे एकोनत्रिंशे अध्याये

श्लोकः ६९

देहं तु तं न चरमं स्थितमुज्झितं वा सिद्धोपि पश्यति यतोध्यगमदात्मरूपम् ।
देवादुपेतमथ दैववशादपेतं वासो यथा परिवृतं मदिरामदान्धः ।। इति

देहोपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रति समीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्थानं पुनर्न लभते प्रतिबुद्धवत् सः ।।

इति श्लोकाभ्यामित्यर्थः।। **याज्ञवल्क्येति** ।। प्रसिद्धमेतद् वाजसनेये ।। **इति प्रागुक्त-मिति** ।। 'गमनादि प्रवृत्तिर्नात्यभिसन्धिपूर्विका' इति भाष्ये प्राधान्येन 'व्रजेत किम्' इत्यस्य मुखतः कीर्तनेऽपि आदिपदेनोत्तरार्धोक्तभाषणादेरपि ग्रहणादेवमुक्तम् ।। **लक्षणेति** ।। 'का भाषा' इति भाष्यपदोक्तलक्षणेत्यर्थः।। **अन्यपरादपीति** ।। लक्षणोक्तिपरादपि 'किं प्रभाषेत' इत्यादेरुत्तरलाभ इत्यर्थः ।। **अन्यथेति** ।। उत्तरार्धप्रश्नोत्तरमात्रपरत्व इत्यर्थः ।। **किं तत्रेति** ।। 'प्रजहाति' इति श्लोकावतारिकायामित्यर्थः ।। 'आदिना' इत्यादिपदेन 'प्रारब्धकर्म' इत्यादि श्लोकतात्पर्योक्तिग्रहः ।। ६९ ।।

**भावरत्नकोशः (सु.टि.)**– भाष्ये **श्लोकाभ्याम्** ।

'देहं तु तं न चरमं स्थितमुज्झितं वा सिद्धोऽभिपश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमुत दैववशादपेतं वासो यथा परिवृतं मदिरामदान्धः ।।
देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रति समीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः'

इति तृतीयस्कन्धैकोनविंशाध्यायगतश्लोकाभ्याम् । यतो येन देहेन ज्ञानी सिद्धोऽभूत् प्राप्तसमाधिफलोऽभूत् । येन च स्वरूपं 'परः स्वो हरिरुद्दाम' इति वचनात् स्वः परमात्मा तस्य रूपम् । स्वं जीवं रूपयतीति स्वरूपशब्देन जीवबिम्बरूपं वा ग्राह्यम् । अध्यगमत् आपरोक्ष्येण ज्ञातवान् । तं चरमं देहं नाभिपश्यति मदीयोऽयमिति नाभिमन्यते । किन्तु भगवदीयोऽयमिति पश्यतीति तुशब्दः । अनभिमानसमर्थनायोक्तं यावत् प्रारब्धमवस्थितं तदभावे पतितमिति ।।

यदि नाभिमन्यते कथं तर्हि गमनादिप्रवृत्तिरित्यतस्तत्रोदाहरणं 'दैवादुपेतम्' इत्यादि । मदिरापानोत्पन्नमदान्धः पुमान् उपेतम् अन्वितम् अपेतम् उत्सृष्टं परिकृतं परिष्कृतं कटितटे

वेष्टितं वासो यथा न जानातीत्यनेन वाससः कटौ संवेष्टनादिप्रवृत्तिः पारवश्यादेवेति विभावितं भवति । अभिमन्यमान इवानभिमन्यमानेऽपि देहे सति कथं मुक्तिरित्यत उक्तं– **देहोऽपीति** ॥ यावत् स्वारम्भकं कर्म तावदेव देहोऽपि प्रतिसमीक्षते तिष्ठति । सासुः सेन्द्रियश्च भवति । अचेतनस्य कर्मणो देहस्थापन इन्द्रियवत्तापादने च कथं हेतुत्वमित्यत उक्तं– **दैववशग** इति ॥ कर्मोपधानीकृत्य दैवमेव सर्वं करोतीत्यर्थः । अधिरूढसमाधियोगः प्राप्तसमाधिफलः सप्रपञ्चं इन्द्रियादिप्रपञ्चसहितं तं देहं पुनर्न भजते पूर्वं यथा तथा तद्रक्षणादौ न प्रयतते । तर्हि कथं गमनादिप्रवृत्तिः ? दैववशगो देहः समीहतेऽपि पारवश्यादेव मत्तस्येव समीक्षणाभ्यवहारादि-प्रवृत्तिमांश्च भवतीति श्लोकद्वयार्थः ।

अत्र च पूर्वश्लोकोत्तरार्धे मत्तादिवद् गमनादिप्रवृत्तिः पारवश्यादेवेति स्फुटं प्रतीयते । द्वितीयेऽपि दैववशग एव देहस्सासुः प्राणादिप्रवृत्तिमान् समीक्षतेऽपीति ईक्षणाभ्यवहारादि-प्रवृत्तिमानिति चोच्यत इति प्रकृतार्थसिद्धिः ॥

**चतुर्थाश्रमिण एवेति** ॥ तथा च शङ्करः 'स्थितप्रज्ञस्य यतेरेव । न त्वसंन्यासिनो ज्ञानमोक्षप्राप्तिः' इति ॥ कुतोऽसत् परव्याख्यानमित्यतः रूढमपि शब्दं योगेन व्याकुर्वतो भाष्यकारस्य भावं वर्णयन् हेतुमाह– **याज्ञवल्क्यादीनामिति** ॥ एतच्च वाजसनेये प्रसिद्धम् । **प्राक्** अपरोक्षज्ञानोत्पत्तेः । **इति कथमिति** ॥ सामानाधिकरण्येन प्रतीयमानं दर्शनमननयोः पौर्वापर्यं समानकालीनत्वं वा न युक्तमित्यर्थः । 'दर्शनसाधनत्वेन' इति वदन् 'पश्यतः' इत्यस्य 'पश्यतः' इति पदोक्तदर्शनस्य मननयुक्तार्थकमुनिपदेनोक्तं मननं साधनत्वेन गीतायामाहेति भाष्ययोजनामभिप्रैति ॥

निष्कृष्य ज्ञानिलक्षणोक्तिप्रस्तावे मननस्य दर्शनसाधनत्वोक्तिरसङ्गतेत्यत आह– **एत-च्चेति** ॥ **मननादेरिति** ॥ अनेन गीतायां 'मुनेः' इत्यत्र 'ध्यायतः' इत्यपि संयोज्यम् । यद्वा, 'मौनं तूपासनासिद्धिः' इति बृहदारण्यकभाष्योक्तेर्मुनिशब्देन ध्यानवानुच्यते । मुनेः ध्यायत इत्यर्थः । एवं च मुनिपदेनैव मननध्याने ग्राह्ये इति सूचितं भवति ।

'नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न चाभावयतः' इति पूर्वश्लोक एव ध्यानस्य ज्ञानसाधनत्वमुक्तमिति नात्र तद् वक्तव्यमित्यत उक्तं– **स्पष्टमिति** ॥ 'न चाभावयतो ज्ञानं न चाज्ञानिनः शान्तिः' इति संयोज्य व्याख्यानेन ज्ञानध्यानयोः साध्यसाधनभावप्रतीतावपि

श्लोकः ६९

गीतायां शान्ताविव ज्ञानेऽपि भावनाशब्दितध्यानस्य न स्फुटं साधनत्वमुक्तम् अत्रोच्यत इत्यर्थः। प्रागुक्तं 'गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन्' इति भाष्ये । कथं व्याख्यात इत्यस्योत्तरमाह– **अन्यपरादपीति** ।। लक्षणतात्पर्यकादपीत्यर्थः । **तल्लाभः** 'किं प्रभाषेत' इत्यादिप्रश्नोत्तरलाभः । **अन्यथा** उक्ताशयाभावे । **अत्रैव** एतच्छ्लोकव्याख्यानप्रस्ताव एव । **तत्र** 'प्रजहाति यदा' इति श्लोकव्याख्यानावसरे । आदिपदेन 'प्रारब्धकर्मणेषत्तिरोहित' इत्यादिनोक्ततात्पर्योक्तिग्रहः ॥ ६९ ॥

**गीताक्षरार्थस्तु–** 'प्रजहाति यदा कामान्' इत्यादिचतुःश्लोक्या विक्षिप्योक्तं ज्ञानिलक्षणं बुद्ध्यारोहाय पिण्डीकृत्योच्यते – **या निशेति** ।। या सर्वभूतानां निशेव निशा परमेश्वर-स्वरूपलक्षणा, यस्यां सुप्तानीव न किञ्चिज्जानन्ति, विषयत्वमधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रेण निशाभगवत्स्वरूपयोः साम्यमात्रमभिसंहितम्, तस्यां संयमी इन्द्रियसंयुक्तो ज्ञानी जागर्ति सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः । यस्यां विषयलक्षणायां भूतानि जाग्रति सा मुनेः मननवतः अत एव पश्यतः सम्यगापरोक्ष्येण जानतः निशेव निशा । भगव-त्स्वरूपातिरिक्तं न किञ्चिज्जानातीति यावत्। अत्रापि पूर्ववत् साम्यम् । दर्शनसाधनत्वेन मननमिहोक्तं, न तु तत्समकालीनतया । एतच्च प्राङ्मननादेर्दर्शनसाधनत्वानुक्तेः प्रसङ्गादिहोक्तम् ।।

ननु 'स्थितधीः किं प्रभाषेत' इत्यादेरुत्तरमयं श्लोक इति 'गमनादिप्रवृत्तिर्नात्यभि-सन्धिपूर्विका। मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यँल्लक्षणं प्रथमत आह प्रजहातीति' इत्युक्तं भाष्ये । तत् कथमिदानीं लक्षणपरतया व्याख्यायते? इति शङ्का 'अन्यपरादपि तल्लाभाशयेनेति ब्रूमः' इति टीकायां परिहृता । तव नित्यं भगवदेकचित्ततया तदितरत्र प्रायः कामप्रहाणिर्ज्ञानिलक्षणमित्युक्तं भवति । यद्येवं भगवदितरत्र किञ्चित् पश्यति कथं तर्हि तस्य गमनभाषणादिप्रवृत्तिरिति चेन्न । प्रारब्धकर्मणेषत्तिरोहितब्रह्मस्वरूपस्य वासनया प्रायोऽल्पाभिसन्धिपूर्विकायाः प्रवृत्तेर्ज्ञानिनोऽपि मत्तस्येवोपपत्तेरिति ज्ञानिप्रवृत्त्याक्षेपस्य 'किं प्रभाषेत' इत्यादिना कृतस्यार्थात् परिहार उक्तो भवतीति भावो बोद्धव्यः ।

अयं च श्लोकः सर्वप्रेरकाणां देवानामपि ज्ञानित्वाज्ज्ञानिनां परमात्मेतरादर्शने लोकयात्रो-च्छेदः स्यादित्याशङ्क्य देवेतरज्ञानिविषयतयोत्तरप्रस्थाने व्याख्यातः । यदाहुः–

'देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यत्र दृश्यते ।
निशायामिव सुव्यक्तं यथाऽन्यैर्ब्रह्म नेयते' इत्यादि ॥ ६९ ॥

**भावदीपिका (श्री.टि.)**– ॥ **तदुक्तमितीति** ॥ तृतीयस्कन्धे देवहूतिं प्रति भगवता कपिलेनोक्तमित्यर्थः ।

'देहं तु तं न चरमं स्थितमुज्झितं वा सिद्धोऽभिपश्यति यतोऽध्यगमत् स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं वासो यथा परिवृतं मदिरामदान्धः ॥
देहोऽपि दैववशगः खलु कर्म यावत् स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः ॥'

इति तृतीयस्कन्धगतावेवेमौ श्लोकौ नैकादशस्कन्धगतौ । अतो 'देहं च नश्वरमिदम्' इति तत्स्कन्धमूलतात्पर्यगतपाठेनैतद्भाष्यस्य पाठविसंवाद इति शङ्कानवकाश इति सम्प्रदायविदः ॥

ननु चतुर्थाश्रम्येव मुनिः, तस्यैव ज्ञानमिति कुतो नेत्यत आह– **याज्ञवल्क्यादीनामिति** ॥ 'तथैव याज्ञवल्क्याद्या मुच्यन्ते स्त्रीसहायिन' इति वचनात् ॥ **प्रागिति** ॥ अपरोक्षज्ञानोत्पत्ते-रित्यर्थः ॥ **कथमिति** ॥ 'पश्यतो मुनेः' इति सामानाधिकरण्येन दर्शनमननयोः समान-कालीनत्वं प्रतीयमानं कथमित्यर्थः ॥ **साधनत्वेनेति** ॥ तथाच 'पश्यतः' इत्यस्य = 'पश्यतः' इत्यनेनोक्तस्य साधनमाह– मुनिरित्यनेन' इति भाष्यं योज्यम् । अत्रैतदुक्तौ का सङ्गतिरित्यत आह– **एतच्चेति** ॥ **प्रागुक्तां नेति** ॥ गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका, प्रवृत्तित्वात्, मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन्नित्यनेनेत्यर्थः ॥ **व्याख्यात इति** ॥ 'उक्तं लक्षणं पिण्डीकृत्याऽह' इत्यवतारितत्वादिति भावः ।

उत्तरमाह– **अन्यपरादपीति** ॥ विक्षिप्तलक्षणसङ्ग्रहपरादपि श्लोकात् 'स्थितधीः' इत्यादि-प्रवृत्तिविषयप्रश्नोत्तरलाभ इत्याशयेन पूर्वं गमनादिप्रवृत्तिरित्याद्युक्तमित्यर्थः ॥ **अन्यथेति** ॥ लक्षणपरादस्मात् प्रश्नोत्तरलाभ इत्याशयमनङ्गीकृत्य केवलं प्रश्नोत्तरपरत्वमेवेत्यङ्गीकारे 'प्रजहाति' इत्यादिग्रन्थस्य ज्ञानिनो लक्षणमाहेत्यवतारिकां दत्वा 'या निशा' इत्यस्य 'किं प्रभाषेत' इत्यादिप्रश्नोत्तरमाहेत्यवतारिका कर्तव्या स्यात् । 'या निशा' इत्यादिना दर्शयिष्यन्निति तत्र द्वितीयप्रश्नोत्तरस्थानप्रदर्शनमयुक्तं स्यात् । स्पष्टत्वेनाकर्तव्यत्वात् । तदेवेदं

युक्तं स्याद् यदीदं लक्षणपरं स्यात् । तथात्वे हि द्वितीयप्रश्नोत्तराभावान्न्यूनतायामाशङ्कितायां तन्न्यूनता येन लक्षणपरादपि 'या निशा' इति वाक्यात् द्वितीयप्रश्नोत्तरमपि लभ्यत इत्याशयेन स्थानप्रदर्शनं सङ्गतं स्यात् । अतोऽन्यपरादपि तल्लाभ इत्युक्त एवाऽशय इति भावः ।। ६९ ।।

**भावप्रकाशः (कृ.टि.)– ।। भाष्ये तदुक्तमिति ।**

'देहं तु तत्र चरमं स्थितमुज्झितं वा सिद्धोऽभिपश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं वासो यथा परिवृतं मदिरामदान्धः ।
देहोऽपि कर्मवशगः खलु कर्म यावत् स्वारम्भकं प्रतिसमीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवत् सः'

इति तृतीयस्कन्धश्लोकाभ्यामित्यर्थः । यद्देहेऽपरोक्षज्ञानं जातं तं देहं चरमम् । ज्ञानानन्तरमिति क्रियाविशेषणम् । अध्यगमत्स्वरूपम् । स्वतन्त्रस्य भगवतो रूपं ज्ञातवानित्यर्थः । यद्वा चैतन्यात्मकस्वदेह एवाभिमानवानित्यर्थः । परिवृतं कटितटे परिवेष्टितम् । नन्वेवंविधे देहे सति कथं मुक्तिरित्यत आह– **देहोऽपीति ।। प्रतिसमीक्षते** तिष्ठति । तावदिति शेषः । तेनैवशब्दसम्बन्धः । सासुः इन्द्रियसहितः । एवं श्लोकद्वयं व्याख्येयम् ।।

ननु पिण्डीकृत्य ज्ञानिलक्षणोक्तिकाले मननस्य दर्शनहेतुत्वोक्तेरसाङ्गत्येऽपि तद्वाक्यस्य साक्षाच्छान्तिसाधनत्वेप्युपपत्तेः स्पष्टं दर्शनसाधनत्वेनानुक्तत्वात् तदुक्त्यर्थं मुनिपदं ध्यानमुक्तपरत्वेनापि व्याख्येयमिति सूचयितुमादिपदमिति बोध्यम् । अन्यथाऽनुपपत्त्या दर्शनसाधनत्वलाभेऽपि कण्ठरवेण तदलाभात् स्पष्टमित्युक्तम् । **प्रागुक्तमिति ।।** 'प्रजहाति यदा कामान्' इत्येतद्व्याख्यानावसर उक्तमित्यर्थः । उत्तरमाह– **अन्यपरादपि तल्लाभ इति ।।** 'किं प्रभाषेत' इत्यादिप्रश्नोत्तरलाभ इत्यर्थः । 'सा निशा पश्यतो मुनेः' इत्यत्रावश्यवक्तव्येन 'प्रायः' इत्येनेन मत्तादिवद्गमनादिप्रवृत्तिरित्याशयस्य लाभादिति भावः । **किं तत्रेति ।।** गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विकेत्यादिभाष्येण 'प्रजहाति' इति श्लोकव्याख्यावसरे स्थानप्रदर्शनादिना किं फलमित्यर्थः । आदिपदेनैतत् श्लोकाभिप्रायप्रदर्शनसङ्ग्रहः ।। ६९ ।।

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रवहन्ति यद्वत् ।।**

**तद्वत् कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ॥ ७० ॥**

## भाष्यम्

**तेन विषयानुभवप्रकारमाह– आपूर्यमाणमिति ॥ यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति नोत्सेकं प्राप्नोति नच प्रयत्नं करोति नच अभावे शुष्यति । न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्तवृद्धिशोषौ बहुतरौ प्राप्नोति । प्रयत्नं वा करोति । स मुक्तिं प्राप्नोतीत्यर्थः ॥ ७० ॥**

भावप्रदीपिका (प.टी.)– ननु मत्तादिसदृशस्य 'भूयात्, मा भूत्' इत्यपेक्षाभावात् कथं विषयानुभवः ? इत्याशङ्कां परिहर्तुमुत्तरश्लोकद्वयमवतार्य व्याचष्टे– **तेनेति** ॥ 'अचलप्रतिष्ठः' इत्यनूद्य 'नोत्सेकम्' इत्यादि व्याख्यानम् ॥ ७० ॥

भावप्रकाशिका (न.टी.)– सुप्तवच्चेत्, कथं तेन विषया अनुभूयन्ते ? इत्यत्राह– **तेनेति** ॥ ७० ॥

प्रमेयदीपिका (ज.टी.)– पृष्टस्य समस्तस्योत्तरमुक्तम् । तत् किम् 'आपूर्यमाणम्' इत्यनेन? इत्यत आह– **तेनेति** ॥ 'क्रियमाण' इत्युपस्कर्तव्यम् । नित्यसापेक्षत्वादसामर्थ्याभावः । 'बाह्यानुसन्धानरहितस्य युज्येतापि कथञ्चिद्गमनादिकम् । विषयानुभवस्तु दृश्यमानः कथं स्यात्? तस्य नियतसाधनसाध्यस्य अनुसन्धानेन विनाऽनुदयादित्याशङ्कापरिहारार्थम्' इति शेषः । 'तद्वत्कामा यं प्रविशन्ति' इति सङ्क्षेपेणोक्तम् । तद्विवृणोति– **य इति** ॥ कामशब्दस्यार्थः विषयैरिति। अन्यथा 'विहाय कामान्' इत्युत्तरविरोधात् । 'अचलप्रतिष्ठम्' इत्यस्यैव व्याख्यानं– **नोत्सेकमित्यादि** ॥ कुत एषोऽर्थः? इत्यतः समुद्रदृष्टान्तोपादान-सामर्थ्यादिति भावेनाऽह– **नहीति** ॥ 'स शान्तिमाप्नोति' इत्यस्य अर्थमाह– **स इति** ॥ ज्ञानिप्रशंसार्थमेतत् । एतद् दृष्ट्वा केचित् 'ज्ञानिन एव मुक्तिरित्यनेनाह' इत्याहुः । तदसत् । गतार्थत्वात् ॥ ७० ॥

भावबोधः (र.टि.)– ननु 'तस्य'इति वक्तव्यम् । 'तेन'इत्यनन्वितं कथमुक्तम्?इत्यतः

श्लोकः ७०

तदन्वयार्थमध्याहरति– **क्रियमाणेति** ।। तर्हि 'तेन' इत्येतत्सापेक्षत्वेन क्रियमाणपदस्या-सामर्थ्यात् विषयानुभवपदेन समासो न स्यादित्यत आह– **नित्यसापेक्षत्वादिति ।। अन्यथेति ।।** कामप्राप्तावपीच्छाभावेन नोत्सेकादिकं प्राप्नोतीति विवरणाकरणे यं कामाः प्रविशन्ति, यः कामान् इत्यनयोः परस्परं विरोधादिति भावः । **गतार्थत्वादिति** ।। 'न चाभावयतः शान्तिः' इत्यादिना अस्यार्थस्योक्तत्वादिति भावः ।। ७० ।।

**भावदीपः (रा.टि.)**– ननु 'क्रियमाण' इत्युपस्कृतपदस्यानुभवविशेषणतया समासो न युक्तः । 'साकाङ्क्षमसमर्थम्' इति, 'तेन' इतिपदसाकाङ्क्षतया सामर्थ्याभावादित्यत आह– **नित्येति ।।** देवदत्तस्य गुरुकुलमिति यथेति भावः ।। **कथञ्चिदिति ।।** मत्तादिरिवेति भावः ।। **अन्यथेति ।।** कामपदस्येच्छार्थकत्वे सति, एतद्विवरणपरोत्तरश्लोके विषयार्थककामपदेन विरोधादित्यर्थः ।। तत्रापीच्छार्थत्वसत्वादिति भावः ।। निस्पृहपदेन पुनरुक्तेः, त्रिपाद्यैव विषयानुभवप्रकारस्योक्तत्वाद् व्यर्थोऽयं चतुर्थपाद इत्यत आह– **ज्ञानिप्रशंसार्थमिति ।। गतार्थत्वादिति ।।** न चाभावयतो ज्ञानं, न चाज्ञानिनः शान्तिरिति योजनया तत्रैव सिद्धत्वादिति भावः ।। ७० ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु किमाकाङ्क्षापूरकाभावेन 'तेन' इत्यनेन? । तथा च 'तेन' इत्येतदनन्वितमित्याशङ्काम् आकाङ्क्षापूरकतया परिहरति– **क्रियमाणेत्युपस्कर्तव्य-मिति ।।** 'सोपस्कराणि वाक्यानि भवन्ति' इति न्यायादिति भावः । ननु 'क्रियमाण' इत्यस्य 'तेन' इत्येतत्सापेक्षत्वात् सापेक्षस्य च 'सापेक्षमसमर्थं भवति' न्यायेन वृत्तौ उपसर्जनत्वात् उपसर्जनपदस्य प्रधानार्थाभिधायिना भाव्यत्वेन अप्रधानत्वस्य, स्वविशेषणापेक्षया च प्रधानत्व-स्यावश्यकत्वात् एकस्यैकदा प्रधानत्वाप्रधानत्वयोरसम्भवेनासमर्थत्वात् कथं 'क्रियमाण' इत्यस्य विषयभोगशब्देन समासः । 'समर्थः पदविधिः' इति समासविधौ समर्थाधिकारेण निरपेक्षस्यैव तद्विधानादित्यतः पूर्वकायोराभेः 'देवदत्तस्य गुरुकुलम्' इत्यादौ समासदर्शनेन नित्यसापेक्षस्य तत्सिद्ध्या पूर्वादिशब्दवत् सम्बन्धिशब्दत्वेन क्रियमाणशब्दस्यापि नित्यसापेक्षत्वात् विषयभोग-शब्देन समासो युक्त इत्याह– **निन्यसापेक्षत्वादसामर्थ्याभाव इति ।।**

**भावरत्नकोशः (सु.टि.)**– ननु 'तस्य विषयानुभव' इति वक्तव्यम् । यावता 'कर्तृकर्मणोः कृति' इति कृदन्तपदयोगे षष्ठी विहिता । 'विषयानुभव' इति च कृदन्तम् । अतः तेनेति

तृतीयानुपपत्तिः । तेन ज्ञानिनो 'विषयानुभवप्रकारम्' इत्यनन्वितं चेत्यत आह– **क्रियमाणेतीति ॥** 'क्रियमाण' इत्यत्र शानचः लादेशत्वेन तद्योगे 'न लोकाव्यय' इति षष्ठीप्रतिषेधात् तृतीयैव युक्ता । न षष्ठीति भावः । एतेन 'अनन्वितम्' इति चोद्यं च निरस्तम् ।

ननु क्रियमाणपदस्य 'तेन' इत्यनेन पदेन सापेक्षत्वात् सापेक्षस्य च 'सापेक्षमसमर्थम्' इत्यसमर्थत्वात् समर्थस्यैव 'समर्थः पदविधिः' इति परिभाषासूत्रे 'पदान्तरेण समासः' इति वैयाकरणैरभिधानाद् विषयानुभवपदेन कथं समास इत्यत आह– **नित्यसापेक्षत्वादिति ॥** 'देवदत्तस्य गुरुकुलम्' इत्यादाविवात्रापि समास उपपद्यत इति भावः । तथा च समर्थसूत्रे हरदत्तः 'कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य वृत्तिः?' इत्याक्षिप्य 'नात्र गुरुणा देवदत्तस्य सम्बन्धः । किं तर्हि ? समुदायेन गुरुकुलेन । गुरुद्वारकश्च कुलेन सम्बन्ध इति गुरुणाऽपि योगो भवति । उक्तं च–

'समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृष्टावयवास्तेऽपि युज्यन्ते तद्वता सह' इति ॥

अथवा, परिपूर्णस्वार्थस्यान्येन सहैकार्थीभावः सामर्थ्यम् । स्वार्थपरिपूर्तिश्च सम्बन्धिशब्दस्य प्रतियोगिनेति तदपेक्षस्यापि वृत्तिः । उक्तं च

'सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
स्वार्थवत् सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ॥ इति'

**द्वेधा समाधानमभ्यधत्त ॥** 'क्रियमाणम्' इत्युपस्कारे नैवं समाधानसम्पादनायास इति तु मन्दम् । नहि विषयानुभवप्रकारः पुरुषेण क्रियते । किन्त्वनुभव एवेति 'क्रियमाण' इत्युपस्कार एव युक्तः । **युज्येतापीति ॥** उत्स्वप्रवचनादेर्दर्शनादिति भावः । **नियतेति ॥ नियतं साधनम्** इन्द्रियार्थसन्निकर्षादि । **अन्यथा** 'तद्वत् कामाः' इत्यत्र कामशब्दस्य काम्यन्त इति व्युत्पत्त्या विषयार्थत्वमनङ्गीकृत्य रूढ्येच्छावाचित्वे । **उत्तरेति ॥** एतद्विवरणपरोत्तरश्लोके विषयार्थककामपदेन विरोधादत्रापि तदर्थत्वमेवाभ्युपेयम् । तत्रापीच्छार्थत्वे निःस्पृहपदेन पुनरुक्तेरिति भावः । उक्तिविरोधादिति पाठेऽप्ययमेवार्थः । **अचलप्रतिष्ठमित्यस्यैवेति ॥** एतद्विवरणाभावे अचला प्रतिष्ठा यस्य सोऽचलप्रतिष्ठ इति प्रतिष्ठाशब्दितायाः स्थितेरचलत्वं किंरूपं विवक्षित-

मिति न ज्ञायत इति शङ्का न परिहृता स्यात् । तत्परिहाराय उत्सेकशोषाभावरूपमचलत्वमत्र विवक्षितमिदमिति दर्शयितुं 'नोत्सेकं प्राप्नोति, न च प्रयत्नं करोति', उत्सेकायेति शेषः, 'न चाभावे शुष्यति' इति च अचलप्रतिष्ठत्वं व्याख्यातवानित्यर्थः ॥

**एषोऽर्थः** विषयैरापूर्यमाणोऽपीत्यादिनोक्तोऽर्थः । न हि समुद्रः सरित्प्रवेशनिमित्तां वृद्धिं न प्राप्नोतीत्युक्ते 'अस्ति चेषत् समुद्रेऽपि द्वारि' इति वृद्धेः प्राग् भाष्य एवोक्तत्वात् तद्विरोध इत्यत उक्तं– **भाष्ये बहुतराविति** ॥ ईषद्वृद्धिः प्रागभ्युपगतेति न तद्विरोध इति भाष्यार्थः स्फुटत्वान्नोक्तः । **प्रयत्नम्** उत्सेकाय करोति समुद्रः । 'स मुक्तिम्' इति भाष्यस्य यो विषयैरापूर्यमाणोऽपीत्यन्वयः । त्रिपाद्यैव विषयानुभवप्रकारस्योक्तत्वात् 'स शान्तिमाप्नोति' इति वचनं व्यर्थमित्यत आह– **ज्ञानीति** ॥ 'यं कामाः प्रविशन्ति स शान्तिमाप्नोति । न पुनः कुत्सितविषयासक्तः' इति वाक्येन ज्ञानिनो हि प्रशंसाऽवगम्यते । 'प्रसादे सर्वदुःखानां हानिरस्य' इति प्रागेव ज्ञानिनो मुक्तेरुक्तत्वेन पुनस्तदुक्तेर्नातीव प्रयोजनम् । अतो ज्ञानिस्तवनमित्येव वक्तव्यमिति भावः । **एतदूदृष्ट्वेति** ॥ प्रयोजनशून्यं 'स शान्तिम्' इति वाक्यं दृष्ट्वेत्यर्थः । **ज्ञानिन एवेति** ॥ तथा च शङ्करः 'विदुषस्त्यक्तेषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः' इति ॥ **गतार्थत्वादिति** ॥ 'न चाभावयतः' इत्यत्र 'न चाभावयतो ज्ञानं न चाज्ञानिनः शान्तिः' इति विवक्षितत्वात् तेन गतार्थत्वादित्यर्थः ॥ ७० ॥

**गीताक्षरार्थस्तु–** ज्ञानिनो बाह्यार्थानुसन्धानहीनस्य मत्तस्येव युज्येतापि कथञ्चिद् गमनादिकम् । विषयानुभवस्तु दृश्यमानः कथं स्यात् । तस्य नियतसाधनसाध्यस्यानुसन्धानेन विनाऽनुदयादित्याशङ्क्य ज्ञानिना क्रियमाणविषयानुभवप्रकारकथनपूर्वकं ज्ञानी प्रशस्यते – **आपूर्यमाणमिति** ॥ नानानदीजलैरापूर्यमाणम्, अचला सरित्प्रवेशाद् वृद्धिविशेषहीना प्रतिष्ठा स्थितिः यस्य तं तथा सरितामप्रवेशनिमित्तशोषहीनं च अत एव सरित्प्रवेशार्थं यत्नहीनं च समुद्रम् आपः यद्वत् यथा प्रविशन्ति तद्वत् तथा यं ज्ञानिनं विषयैरापूर्यमाणमपि उत्सेकानुत्सेकहीनं काम्यन्त इति कामा विषयाः प्रविशन्ति, यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति नोत्सेकं प्राप्नोति न चाभावे शुष्यति न च प्रयत्नं करोति, कुत एषोऽर्थो लभ्यत इति चेत् समुद्रदृष्टान्तोपादानसामर्थ्यादिति ब्रूमः । न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्तौ वृद्धिशोषौ बहुतरौ प्राप्नोति प्रयत्नं वा करोति, स शान्तिं मुक्तिमाप्नोति । न तु कामान् कामयितुं

शीलमस्येति कामकामी कुत्सितविषयेच्छाशीलः शान्तिमाप्नोतीति ॥ विषयभोक्ता कामी कथं शान्तिमाप्नुयादित्यत उक्तं– **नेति** ॥ एवं विषयाननुभवन्नपि स ज्ञानी न कामकामी स्यादिति वेति स्वामिनः ॥ ७० ॥

**भावदीपिका (श्री.टि.)–** ननु 'तस्य' इति वक्तव्यम् । 'तेन ज्ञानिना विषयानुभव-प्रकारमाह' इत्यनन्वितमित्यत आह– **क्रियमाणेति** ॥ तथाच तेन ज्ञानिना क्रियमाणो यो विषयानुभवस्तत्प्रकारमाहेत्यर्थः । ननु तर्हि क्रियमाणपदस्य तेनेत्यनेन सापेक्षत्वेनासमर्थत्वाद् विषयानुभवपदेन समासोऽयुक्तः । 'सापेक्षमसमर्थवद् भवति' इति वचनात् । 'समर्थः पदविधिः' इति समर्थस्य सुबन्तस्य समर्थेनैव सुबन्तेन समासविधानात् । अतस्तत्क्रियमाणेति वक्तव्य-मित्यत आह– **नित्यसापेक्षत्वादिति** ॥ क्रियमाणपदस्य विषयानुभवपदेन समासेऽपि पूर्वेण ज्ञानिवाचितच्छब्देनाऽऽकाङ्क्षा न विहन्यते । 'देवदत्तस्य गुरुकुलम्' इत्यादौ दर्शनात् । 'सापेक्षमसमर्थवद् भवति' इति वचनमुत्थाप्याकाङ्क्षारूपानित्यसापेक्षविषयम् । प्रकृते तूत्थिता-काङ्क्षारूपनित्यसापेक्षत्वाङ्गीकाराददोष इत्याशयः । प्रवृत्तेरपि विषयानुसन्धानाभावेऽयोगात् 'कथञ्चित्' इत्युक्तम् ॥ **नियतसाधनेति** ॥ इन्द्रियार्थसन्निकर्षरूपनियतसाधनेत्यर्थः ।

॥ **कामशब्दस्येति** ॥ काम्यन्त इति कर्मव्युत्पत्त्येत्यर्थः ॥ **अन्यथेति** ॥ 'कामनं कामः' इति भावव्युत्पत्त्या इच्छां गृहीत्वा विषयाणां कामशब्देनाग्रहणे 'विहाय' इत्युत्तरश्लोके कामशब्देन विषयाणां गृहीतत्वात् तद्विरोधः स्यादित्यर्थ इत्याहुः । वस्तुतस्तु, अन्यथा 'तद्वत् कामाः' इति शब्दोक्तविषयप्राप्तावपीच्छाभावेन नोत्सेकादिकं प्राप्नोतीति विवरणाकरणे 'तद्वत् कामा यं प्रविशन्ति' 'विहाय कामान्' इत्यनयोः परस्परं विरोधः स्यादिति भावः ॥ **प्रशंसार्थ-मेतदिति** ॥ 'प्रसादे सर्वदुःखानाम्' इत्यादिना ज्ञानिनो मुक्तेः प्रतिपादितत्वेन पुनस्तदुक्तौ प्रयोजनाभावादिति भावः ॥ **एतद् दृष्ट्वेति** ॥ प्रयोजनशून्यं 'स शान्तिमाप्नोति' इति वचनं दृष्ट्वेत्यर्थः ॥ **ज्ञानिन एवेति** ॥ नचाज्ञानिन इत्यर्थः ॥ **गतार्थत्वादिति** ॥ 'नचाभावयतः शान्तिः' इत्यभिप्रेतत्वेन गतार्थत्वादित्यर्थः ॥ ७० ॥

**भावप्रकाशः (कृ.टि.)–** ॥ **अन्यथेति** ॥ अत्रत्यकामशब्दस्य विषयार्थत्वाभाव इत्यर्थः । **उत्तरविरोधादिति** ॥ तत्र 'निःस्पृहः' इति पृथगुक्तेः कामशब्दस्य विषयवाचित्वावश्यम्भावादिति

श्लोकः ७०

भाव: । वैयर्थ्यमाशङ्क्याह– ज्ञानिप्रशंसार्थमिति ।। गतार्थत्वादिति ।। 'नचाभावयतः शान्तिः' इत्यादिनेति शेषः ।। ७० ।।

**विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ।। ७१ ।।**

## भाष्यम्

**तदेव प्रपञ्चयति– विहायेति ।। कामान्=विषयान् । निस्पृहतया विहाय यः चरति भक्षयति । भक्षयामीत्यहङ्कारममकारवर्जितश्च । स हि पुमान् । स एव च मुक्तिमधिगच्छतीत्यर्थः ।। ७१ ।।**

भावप्रदीपिका (प.टी.)– 'स्पृहा'पदात् 'अकाम'पदस्यार्थभेदमाह– **कामानिति** ।। विषयत्यागे कथं भोगः ? इत्यत आह– **निस्पृहतयेति** ।। ७१ ।।

भावप्रकाशिका (न.टी.)– अकामः सर्वथा चेत्, कथं भक्षति ? इत्याद्याशङ्क्य, परिहारत्वेनोत्तरश्लोकमवतार्य व्याचष्टे– **एतदेवेति** ।। ७१ ।।

प्रमेयदीपिका (ज.टी.)– **'विहाय'** इत्यनेनाप्ययमेवार्थ उच्यते । अतः पुनरुक्तिरित्यत आह– **एतदेवेति** ।। यद्यत्र कामा इच्छाविशेषास्तर्हि 'निस्पृहः' इति पुनरुक्तिः । यदि काम्यन्त इति विषयास्तदा चरतिर्यदि भक्षणार्थः तदा व्याघातः । अथ गत्यर्थस्तदा व्यर्थ इत्यतो व्याचष्टे– **कामान् इति** ।। 'निर्ममो निरहङ्कारः' इत्येतदसम्भवपरिहाराय व्याचष्टे– **भक्षयामीति** ।। कर्तृत्वाभिमान एवाहङ्कारः । स्वामित्वाभिमान एव ममता । नत्वहम्प्रत्ययादिमात्रमिति भावः । स हि पुमान् अन्यः पशुरित्यर्थः । कुत एतत्? इत्यत आह– **स एवेति** ।। 'स हि पुमान्' इत्यनेनैवान्वयसमाप्तिं वदता ज्ञानिन एव मुक्तिः इत्येषोऽर्थो नात्र प्रतिपाद्यत इति दर्शितम् । स्त्रीव्यावृत्त्यभावश्च ।। ७१ ।।

भावबोधः (र.टि.)– ।। तदा व्याघात इति ।। विषयहानविषयभक्षणयोः परस्परं विरुद्धत्वादित्यर्थः । **असम्भवपरिहारायेति** ।। ज्ञानिनोऽपि 'अहम्' इत्यात्मबुद्धेः देहादौ

'ममेदम्' इतिबुद्धेश्च सत्त्वादिति भावः । **स्त्रीव्यावृत्त्यभावश्चेति ॥** अपव्याख्याने 'पुमान्' इत्यस्यानुवादत्वात् स्त्रीणां शान्तिर्गतिर्न प्रतिपादिता स्यात् । 'पुमान्' इत्यस्य विधेयत्वे तु स्तुतिपरत्वेन स्त्रीव्यावर्तकत्वाभावात् तासामपि शान्तिर्न निषिद्धा स्यादिति भावः ॥

**भावदीपः (रा.टि.)– ॥ व्याघात इति ॥** 'विहाय कामान्' इत्युक्त्वा विषयान् भक्षयतीत्युक्तेर्व्याहतिरित्यर्थः ॥ **व्यर्थ इति ॥** अतिशयालाभादिति भावः ॥ **असम्भवेति ॥** ज्ञानिनोऽप्यहमिति मम देह इति बुद्धेः सत्वादिति भावः ॥ **इति दर्शितमिति ॥** अन्यथा गतार्थतापत्तेरिति 'स पुमान्' इत्यनूद्य मुक्तिविधौ तु स्त्रीणां मुक्त्यभाव उक्तः स्यात् । 'स पुमान् अन्यः पशुः' इत्युक्तौ स्तुत्यर्थत्वप्रतीत्या स्त्रीव्यावृत्त्यभावश्च दर्शित इत्यर्थः ॥ ७१ ॥

**भावरत्नकोशः (सु.टि.)– ॥ अयमेवार्थ इति ॥** यद्यपि 'निर्ममो निरहङ्कारः' इत्यनुक्तमप्युच्यते । तथाऽपि 'यदा ते मोहकलिलम्' इति तस्यापि प्रागभिधानादुक्त एवोच्यत इति पुनरुक्तिरित्यर्थः । **एतदेव** 'आपूर्यमाणमचलप्रतिष्ठम्' इति श्लोकोक्तमेव ॥ **इति पुनरुक्तिरिति ॥** स्पृहाशब्देनेच्छाविशेषस्यैव ग्राह्यत्वात् कामत्यागो निःस्पृहत्वमित्यैकार्थ्यादिति भावः । **विषया इति ॥** कामा इति वर्तते ॥ तथा च सुधा 'कामकर्मत्वाद्धि विषयाः कामाः । कर्मणि घञो विधानात्' इति ॥ चरगतिभक्षणयोरिति धातोः, 'विषयानिन्द्रियैश्चरन्' इति प्रयोगाच्चाह **– यदि भक्षणार्थ इति ॥ व्याघात इति ॥** विषयत्यागभक्षणयोर्विरुद्धत्वात् 'विहाय कामान् यश्चरति' इत्युक्तिर्विप्रतिषिद्धेत्यर्थः । **व्यर्थ इति ॥** अतिशयालाभादिति भावः । **असम्भवेति ॥** ज्ञानिनोऽपि देहादौ 'ममायम्' इति बुद्धेः 'अहम्' इत्यात्मप्रतीतेश्च सत्त्वान्निर्ममता निरहङ्कारता चासम्भवदुक्तिकेत्यर्थः । भाष्यभावोक्त्या कृतचोद्यं परिहरति**– कर्तृत्वेति ॥**

'ज्ञानलाभेन तु निरस्ता एव पशवो परे' इत्यत्रोक्तं हृदि कृत्वाऽऽह**– अन्यः पशुरिति ॥ कुतः** ? स एव पुमानन्यः पशुरिति कस्मादवगम्यत इत्यर्थः । इत्येषोऽर्थ इति ॥ तथा च शङ्करः 'सः ब्रह्मवित् शान्तिं संसारोपरमलक्षणां प्राप्नोति' इति ॥ **नात्र प्रतिपाद्यत इति ॥** 'स शान्तिमाप्नोति' इति पूर्वश्लोकेन गतार्थत्वात् । न हि 'स शान्तिमधिगच्छति' इत्यत्र पूर्वोक्तादधिकं किमप्यभिधीयत इति भावः । **स्त्रीव्यावृत्त्यभावश्चेति ॥** 'विहाय कामान् यः संन्यासी पुमांश्चरति' इति शङ्कररीत्याऽन्वये 'पुमान्' इत्यस्यानुवादत्वात् स्त्रीणां शान्तिर्न प्रतिपादिता स्यात् । तच्च मैत्रेय्यादिस्त्रीणां मुक्तिश्रावकशास्त्रविप्रतिषिद्धम् । 'स्त्रियो वैश्यास्तथा

श्लोकः ७१

शूद्राः' इति स्ववचनविरुद्धं च । 'स पुमानन्यः पशुः' इत्युक्तौ तु स्तुत्यर्थत्वप्रतीत्या स्त्रीव्यावृत्त्यभावः प्रदर्शितो भवतीति स्त्रीणामपि शान्तिरनुमता स्यात् । 'कुतोऽसावेव पुमान्' इति चोद्यपरिहाराय 'स शान्तिमधिगच्छति' इति वाक्यं प्राप्तव्यनिर्वाणकत्वादिति हेतुसमर्पकं भवतीत्यतो न पुनरुक्तिरित्यास्माकीनमेव व्याख्यानं युक्तमिति भावः ॥ ७१ ॥

**गीताक्षरार्थस्तु–** पूर्वश्लोकोक्तं प्रपञ्च्यते– **विहायेति** ॥ यः कामान् विषयान् निःस्पृहः निषिद्धस्पृहाहीनः निस्पृहया चरति भक्षयत्यनुभवति निर्ममः स्वामित्वाभिमानरहितः निरहङ्कारः भक्षयामीति कर्तृत्वाभिमानहीनः सन् स एव पुमान् । अन्यः पशुः । कुतः ? यतः स शान्तिमधिगच्छतीति ॥ ७१ ॥

**भावदीपिका (श्री.टि.)–** ॥ **कामा इति** ॥ 'विहाय कामान्' इत्यत्र कामा इतिवदेव भावव्युत्पत्त्येत्यर्थः ॥ **निःस्पृह इति** ॥ तेन पदेनापि स्पृहाशब्दोक्तकाम एव निषिद्ध्यत इत्यर्थः । **इति** कर्मव्युत्पत्त्या ॥ **भक्षणार्थ इति** ॥ 'चर गतिभक्षणयोः' इति धातोरित्याशयः ॥ **व्याघात इति** ॥ विषयहानिविषयभक्षणयोः परस्परविरुद्धत्वादिति भावः ॥ **व्यर्थ इति** ॥ चरतेर्गत्यर्थकत्वे विषयान् चरतीत्यस्य विषयाननुभवतीत्यर्थः स्यात् । तथाच वैय्यर्थ्यम् । पूर्वं 'विषयैरापूर्यमाणोऽपि' इति विषयभक्षणस्यैवोक्तत्वेन गतेरनुक्तत्वेन प्रपञ्चकत्वाभावादिति भावः । यद्वा, **विषयान्** विहाय इतस्ततो गच्छतीति कथनस्य व्यर्थत्वादित्यर्थः ॥ **कामा-नितीति** ॥ तथाच काम्यन्त इति कामाः विषयाः । चरतिश्च भक्षणार्थ एव । तत्र च व्याघातपरिहारार्थं निस्पृहतयेत्युक्तमिति भावः ॥ **असम्भवेति** ॥ ज्ञानिनोऽपि 'अहम्' इत्यात्मबुद्धेर्देहादौ 'मम' इति बुद्धेश्च सत्त्वान्निर्ममत्वं निरहङ्कारत्वं चासम्भवीत्यर्थः । 'अहम्प्रत्ययादि' इत्यादिपदेन 'मम' इति प्रत्ययग्रहणम् । येनासम्भवः स्यादित्याशयः ॥

॥ **अन्वयसमाप्तिमिति** ॥ तथाचानेन 'स शान्तिमधिगच्छति' इति ज्ञानिप्रशंसार्थमेत-दित्युक्तं भवति ॥ **दर्शितमिति** ॥ गतार्थत्वादित्याशयः ॥ **स्त्रीव्यावृत्त्यभावश्चेति** ॥ दर्शितः अस्मन्मत इति शेषः । 'स हि पुमान् अन्यः पशुः' इति प्रशंसाकरणेन स्त्रीव्यावृत्त्यभावः स्त्रीणां मुक्तिर्नेति मुक्तिर्न निषिद्धा । अतस्तद्व्यावृत्त्यभावः प्रदर्शितो भवति । समग्रश्लोकस्य एकान्वये स पुमान् शान्तिमधिगच्छति, इति विधौ 'पुमान्' इत्यस्यानुवादत्वेन मुक्त्यधिगन्तुः पुंस्त्व-स्योक्त्या स्त्रीणां मुक्तिगतिर्व्यावर्तिता स्यात् । सा च निषिद्धा, अयुक्ता च । स्त्रीणामपि मैत्रेय्यादीनां मुक्तिश्रवणादिति भावः ॥ ७१ ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु सप्त च तानि जन्मानि चेति विशेषणसमासे सप्तजन्म-स्विति भवितव्यम् । 'सप्तजन्मनि' इत्येकवचनं तु कथम्? इत्यतोऽस्य सप्त जन्मानि समाहृता-नीत्येवं रूप 'तद्धितार्थोत्तरपदसमाहारे च' इत्येतत्सूत्रविहितसमासत्वेन विशेषणसमासत्वा-भावात् तस्य च सङ्ख्यापूर्वतया 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'द्विगुरेकवचनम्' इति तदर्थस्य समाहारे एकवद्भावविधानात् 'सप्तजन्मनि' इति युक्तमेकवचनमित्याह– **सप्तजन्मनीति द्विगुरिति ॥**

**भावरत्नकोशः (सु.टि.)–** सैषा ज्ञाननिष्ठा स्तूयत इति शङ्करभाष्यमर्थतोऽनुवदति– **ज्ञानीति ॥ प्रथमवाक्ये तद्दर्शनादिति ॥** 'आपूर्यमाणम्' इत्यत्र 'स शान्तिमाप्नोति' इति ज्ञानिस्तवनस्य दर्शनादित्यर्थः । 'स शान्तिमाप्नोति' इति वचनं न ज्ञानिनो मुक्तिप्रतिपाद-नार्थम् । 'न चाभावयतः' इति ज्ञानिनो मुक्तेरुक्तत्वात् । किन्तु 'यं कामाः प्रविशन्ति स शान्तिमाप्नोति' इति ज्ञानी प्रशस्यत इत्येव वक्तव्यमिति तत्रैव स्तुतिः प्राप्तेति भावः । अध्यायार्थोपसंहारप्रतीतिव्युदासायाह– **प्रकरणमिति ॥** 'प्रजहाति' इत्यादिप्रकरणमित्यर्थः । **ब्रह्मधर्मभूतेतीति ॥** ब्रह्मण इयं ब्राह्मीत्यत्र षष्ठ्यर्थसम्बन्धो धर्मधर्मिभाव इति प्रतीतिनिरासा-येत्यर्थः ॥

॥ **एवमुच्यते ब्राह्मी** स्थितिरेषेत्येवमुच्यते । '**स्थितिर्नोक्ता**' इत्युक्तदोषं परिहर्तुमाह– **लक्षणमुक्तमिति ॥** लक्षणप्रश्नपरिहारोपसंहारेऽपि भाषणादिप्रश्नपरिहारस्यानुपसंहृतत्वान्न्यूनतेति शङ्कां परिहर्तुमाह– **किं प्रभाषेतेत्यादि ॥ अर्थादिति ॥** 'अन्यपरादपि तल्लाभः' इत्युक्त-प्रकारेणोक्तत्वात् तदुपसंहाराभावो न दोष इत्यर्थः । 'स्थित्वाऽस्यां स्थितौ ब्राह्म्यां यथोक्ताया-मन्तकालेऽन्तेऽपि वयसि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति । किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छति' इति शङ्करभाष्यं सार्धं सङ्क्षिप्यानुवदति– **अन्तकाले चरमे वयस्यपीत्यादिना ॥ अप्रकृतत्वादिति ॥** 'प्रव्रज्य' इति संयोज्य व्याख्यानं तदा युक्तं यदि संन्यास इतः पूर्वं प्रकृतः स्यात् । न चैवम् । तस्मान्नेदं व्याख्यानमित्यर्थः ॥

॥ **उक्ता** 'न चाभावयतः शान्तिः' इत्यादौ । इदं 'स्थित्वाऽस्यामन्तकालेऽपि' इति प्रमेयम् । **अन्यथा** ब्राह्म्यां स्थितावविद्यमानश्चेत् । अन्तकालेऽपि ब्रह्म चेन्नानुसन्दध्यादिति

यावत्। न ब्रह्म गच्छतीति भाषणीयेऽपि 'जन्मान्तरं प्राप्नोति' इति वचनं न ब्रह्म चेद् गच्छेत् किं कुर्यादिति शङ्कापनोदाय वस्तुस्थितिकथनं भाष्य इति स्फुटत्वान्न व्याख्यातम्। 'विद्यैव तु निर्धारणात्' इत्यादौ तथा स्थितेराह – **ज्ञानमेवेति** ॥ **सामग्र्याः** मोक्षे पुष्कलकारणस्य ज्ञानस्य। 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते' इति सूत्रस्यायमर्थः। तुः ज्ञानिनः प्रारब्धभोगे 'उपमर्दं च' इत्युक्तविशेषसूचकः। अथशब्दो नियमार्थः। इतरे प्रस्तुतानारब्धादन्ये प्रारब्धपुण्यपापे भोगेन क्षपयित्वा, अथ प्रारब्धपुण्यपापक्षपणादन्वेव, न तु ज्ञानोत्पत्त्यनन्तरमिव विलम्बेन ब्रह्म सम्पत्स्यते। एवं ब्रह्मद्विट् तम आप्नोतीति ॥ स च क्षयः अभूदित्यन्वयः। जन्मान्तरप्राप्तिपदार्थानुवादः – **शरीरान्तरारम्भ इति** ॥

सप्त च तानि जन्मानीति विगृह्य 'विशेषणं विशेष्येण' इति समासे 'सप्तजन्मसु' इति स्यादित्यत आह– **सप्तेति** ॥ तथा च 'द्विगुरेकवचनम्' इत्येकवचनं युक्तम्। 'ऋन्नेभ्यो ङीप्' इति ङीप् कस्मान्न भवतीति चेन्न। अदन्तत्वाभावेनास्त्रीत्वात्। 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इत्युक्तेः। अत एव 'द्विगोः' इति ङीबपि प्रत्यूढः। 'अनो नलोपश्च वा द्विगुः स्त्रियाम्' इत्यपि न भवति। अन्प्रत्ययान्तत्वाभावात्। 'मन्प्रत्ययान्त एवायं जन्मशब्दः' इति केषाञ्चिद् व्याख्यानममङ्गुलम्। 'पञ्चकर्म पञ्चकर्मि' इत्युदाहरणानुपपत्तेः। 'नलोपश्च वा' इति नलोपस्य वैकल्पिकत्वव्याख्यानं तु 'नलोपस्तु नित्यमेव क्रियते' इति कैयटविरोधा-दनादरणीयम्। अत्र 'अनो नलोपश्च' इति तु छान्दसत्वान्नाश्रितमिति भावेन टीकायां 'सप्तजन्मनि' इत्यनुवाद इति द्रष्टव्यम् ॥

**भावदीपिका (श्री.टि.)**– ननु लक्षणप्रश्नपरिहारोपसंहारे विभाषणादिप्रश्नपरिहारस्यानुप-संहृतत्वान्न्यूनतेत्यत आह– **किं प्रभाषेतेति** ॥ **अर्थादिति** ॥ अन्यपरादपि तल्लाभ इत्युक्त-प्रकारेणेत्यर्थः। साक्षात् कण्ठत उक्त एवार्थो ह्युपसंहार्य इति भावः ॥ **अप्रकृतत्वादिति** ॥ इदंशब्दस्याव्यवहितपूर्वप्रकृतपरामर्शकत्वात्, पूर्वं च संन्यासो न प्रकृत इति भावः ॥ **तद्देहेति** ॥ यस्मिन् देहे ज्ञानमुत्पन्नं तद्देहेत्यर्थः ॥ **अन्यथेति** ॥ जन्मान्तराणि प्राप्य वेत्यर्थः। **इदमुच्यते** 'स्थित्वाऽस्याम्' इत्येतदुच्यते। यस्मिन् देहे ज्ञानमुत्पन्नं तद्देहत्यागसमय एव यदि ब्राह्म्यां स्थितौ स्थितो भवति, सम्यग् ब्रह्मज्ञानवान् भवतीति यावत्, तर्हि तद्देहपातानन्तरमेव ब्रह्म प्राप्नोतीत्यर्थः ॥

॥ **ज्ञानिन इति** ॥ ज्ञानरूपपुष्कलकारणवत इत्यर्थः । मोक्षं विनेति शेषः । **सामग्र्याः** ज्ञानरूपायाः ॥ **क्षीणमिति** ॥ तथाच ज्ञानप्रतिबन्धकं कर्मैव नास्तीति भावः ॥ **भोगेनेति** ॥ इतरे अप्रारब्धादितरे । आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पद्यते । अथेति नियमसूचक इति सूत्रार्थः । तथाच ज्ञानात् सर्वकर्मक्षय इत्याशयः । ननु 'विशेषणं विशेष्येण बहुलम्' इति सूत्रेण सप्त च तानि जन्मानि चेति कर्मधारयसमासे 'सप्तजन्मसु' इति भवेदित्यत आह– **सप्तजन्मनीति** ॥ तथाच सप्तानां जन्मनां समाहार इति द्विगुसमासे 'द्विगुरेकवचनम्' इति एकवचने च सति 'सप्तजन्मनि' इति साधुरित्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– अध्यायार्थोपसंहारप्रतीतिनिरासायाह– **प्रकरणमिति** ॥ **अर्थादिति** ॥ अन्यपरवाक्येन तल्लाभादिति भावः । विशेषणसमासे बहुवचनप्रसङ्गादाह– **द्विगुरिति** ॥ तथा च द्विगुरेकवचनमित्येकवचनं युक्तम् । न च ऋन्नेभ्य इति ङीपूप्राप्तिः । अदन्तत्वाभावेन स्त्रीत्वाभावात् अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इत्युक्तेरिति भावः ॥

## भाष्यम्

**दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम्–**

> 'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रौद्रं पदं ततः ।
> साङ्कर्षणं ततो मुक्तिमगाद् विष्णुप्रसादतः' ॥ इति गारुडे ।
> महादेव परे जन्मंस्तव मुक्तिर्निरूप्यते' इति च नारदीये ।

**निश्चितफलं च ज्ञानम् ॥ 'तस्य तावदेव चिरम्' (छां.उ.६.४.१२) 'यदु च नार्चिषमेवाभिसम्भवति' (छां.उ.४.१५.१५) इत्यादिश्रुतिभ्यः ।**

भावप्रदीपिका (प.टी.)– बहुशरीरफलकर्मसद्भावेप्यन्तशरीरे ज्ञानोदयः किं न स्यात् इत्यत आह– **दृष्टेश्चेति** ॥ ज्ञानिनोपि कर्मभोगे पुनस्तत्कालीनकर्मभोगान्न कदाचन मुक्तिरित्यत आह– **निश्चितेति** ॥ प्रारब्धमात्रस्य भोग्यत्वान्न मोक्षाभाव इत्यर्थः ॥

भावप्रकाशिका (न.टी.)– ननु सन्तु बहुशरीरफलकर्माणि । तथापि ज्ञानोदयः अन्त्यदेह एव किं न स्यात् ? इत्यत आह– **दृष्टेश्चेति** ॥ ननु यद्यपरोक्षज्ञान्यपि

श्लोकः ७२

प्रारब्धकर्म भुङ्क्ते तर्हि तत्काले पुनः कर्मकरणात् सञ्चिन्तान्तकर्मसद्भावात्, तद्भोगो-पीत्येवममुक्तिरेव प्रायः स्यादित्यत आह– **निश्चितफलं चेति** ॥ 'तावदेव चिरम्' इति प्रारब्धभोगातिरिक्तविलम्बकारणाभावावगतेर्भवत्येव मुक्तिर्ज्ञानिनः इत्यर्थः ॥

**प्रमेयदीपिका (ज.टी.)**– इतश्चैतदेवमित्याह– **दृष्टेश्चेति** ॥ 'वहु' इत्यनेकोपलक्षणम् ॥ कथं ज्ञानिनां बहुशरीरप्राप्तिर्दृश्यते? इत्यत आह– **तथा हीति** ॥ ननु ज्ञानिनोऽपि यदि शरीरान्तरप्राप्तिस्तर्हि गर्भवासादिदुःखैर्विलुप्तशक्तिकं ज्ञानं न मोक्षाय पर्याप्तं स्यादित्यत आह– **निश्चितेति** ॥ **तस्य** ज्ञानिनः । **तावदेव चिरम्** तावानेव विलम्बः । **यावन्न विमोक्ष्ये न विमोक्ष्यते** । प्रारब्धेन कर्मणा । **अथ अवसिते कर्मणि** । ब्रह्म सम्पत्स्यत इत्यर्थः ॥ अवसितकर्मणि ज्ञानिनि विषये पुत्रादयो यदि **शव्यं कर्म कुर्वन्ति यदु च यदि वा न न कुर्वन्ति** । सर्वथा **अर्चिषमभिसम्भवति** प्राप्नोत्येवेत्यर्थः । तदिदमुक्तम्– **नैनां प्राप्य विमुह्यतीति** ॥

**भावदीपः (रा.टि.)**– ॥ **इतश्चेति** ॥ दर्शनरूपहेतोश्च ज्ञानिनः शरीरान्तरप्राप्तिरित्येतदेव प्रारब्धकर्माभावे सतीत्याहेत्यर्थः ॥ **विलुप्तशक्तिकं** ज्ञानमिति शेषः ॥ **तदिदमुक्तमिति** ॥ ज्ञानस्य चिरकालीनत्वेपि ज्ञानी मुक्तिमाप्नोत्येवेति तदुक्तं द्वितीयपादेनेत्यर्थः ॥ 'उपमर्दं च' इति ज्ञानपादीयसूत्रादिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ इतश्च दर्शनरूपहेतोश्च । एतत् ज्ञानिनः शरीरान्तरप्राप्ति-रित्येतत् । एवं प्रारब्धसद्भावे सतीत्याहेत्यर्थः । ज्ञानिनामपि बहुशरीरप्राप्तेः 'दृष्टेश्च' इत्यभिधाय तत्र प्रमाणीकृते 'स्थित' इत्यत्र रौद्रं पदं, साङ्कर्षणं शेषपदमिति, 'महादेव परे जन्मन्' इति वचने च ज्ञानिनो जन्मद्वयोक्तेरविसंवादाय भाष्यगतबहुशब्दभावमाह– **बह्वितीति** ॥

गारुडवचने 'ऊर्ध्वः' इत्यूर्ध्वापरनामको रुद्रपदयोग्यो जीव उग्रतपा गृह्यते । रौद्रपदप्राप्तेः पूर्वमुग्रतपा इत्येव तस्य प्रसिद्धं नाम । 'शुभ्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः' इत्यनु-व्याख्यानात् । बृहद्भाष्ये पैङ्गिश्रुतौ 'शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव वा' इति रौद्रावतारत्वेनोक्त ऊर्ध्वोऽन्य एवेति न तद्विरोधः । प्राप्स्यमानरुद्रपद उग्रतपाः अत्र तूर्ध्व-नामोक्त इति ॥ 'ऊर्ध्वः उन्नतः उत्तमः' इत्यर्थ इत्यप्याहुः । **परे जन्मन्** परस्मिन् जन्मनि । शेषपदप्राप्त्यनन्तरमिति यावदिति भाष्यार्थः ।

श्लोकः ७२

॥ **लुप्तशक्तिकं** ज्ञानम् । ज्ञानस्य फलं ब्रह्मप्राप्तिलक्षणम् । कुतो निश्चितमित्यत उक्तं- **भाष्ये तस्येत्यादि ।** प्रकृतोपयोगाय 'यावन्न विमोक्ष्ये अथ सम्पत्स्यते' इति श्रुतिशेषं व्याचष्टे- **तस्य ज्ञानिन इत्यादि ।** मुचेः कर्मणि लृटि स्यप्रत्यये लृटस्तादेशे टेरेत्वे 'लोपस्त आत्मने-पदेषु' इति तकारस्य लोपे 'अतो गुणे' इति पररूपत्वे छन्दसि 'विमोक्ष्ये' इति रूपम् । तदनूद्य प्रतिपदं दर्शयति- **न विमोक्ष्ये न विमोक्ष्यत इति ॥ प्रारब्धेन प्रारब्धप्रतिबन्धात् ॥** यथा ज्ञानानन्तरमपि न मोक्षनियमः तथा कर्मक्षयानन्तरमपीति शङ्का मा भूदिति भावेन श्रुतावथशब्द इति भावेन तदर्थमाह- **अवसित इति ॥ अवसिते** भोगेन । **कर्मणि** प्रारब्धे ।

'यदु च न' इति वाक्यात् 'अथ यदुचैवास्मिन् शव्यं कर्म कुर्वन्ति' इति पूर्ववाक्यम् । तद्व्याचष्टे- **अवसितकर्मणीति । सप्तम्यर्थो विषय इति ॥ शव्यं कर्म** शवस्य कर्तव्यं **संस्कारादि** । भवतेरकर्मकत्वात् 'अर्चिषमर्चिर्लोकम्' इति कथं कर्मोक्तिः? इत्यत आह- **प्राप्नोत्येवेति ॥** 'भू प्राप्तौ' इत्युक्तेः प्राप्त्यर्थस्य भवते रूपम् । छन्दस्त्वान्नात्मनेपदम् । तथा चानुभवतीतिवत् सकर्मकत्वं युक्तमिति भावः । उद्गीतत्वपरिहाराय गीतारूढतामाह- **तदिद-मिति ॥** ज्ञानस्य चिरकालीनत्वेन ज्ञानी मुक्तिमाप्नोत्येवेत्येतत्, गीतायाम् एनां ब्राह्मीं स्थितिं ब्रह्मविषयकज्ञानं प्राप्य प्रकर्षेणाप्त्वा न विमुह्यति अप्रतिबद्धब्रह्मानुसन्धानयुक्तो गर्भवास-दुःखादिना मोहं न प्राप्नोतीत्युक्तमित्यर्थः ॥

**भावदीपिका (श्री.टि.)**- ननु केषाञ्चिच्छरीरद्वयेनापि भोगेन कर्मक्षयसम्भवात् कथं बहुशरीरेत्युक्तमित्यत आह- **बह्विति ॥** भाष्यस्थे प्रमाणे ऊर्ध्वः उन्नतः उत्तमः रुद्रपदयोग्यः, उग्रतपाः, 'शुभ्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः' इति वचनात् । पञ्चाशद्ब्रह्मकल्पानन्तरं रौद्रपदं प्राप्य । 'पञ्चाशद्ब्रह्मणस्तथा । रुद्रस्य' इति वचनात् ॥ **लुप्तशक्तिकमिति** ॥ भर्जितबीजवदिति भावः । 'यदु च न' इत्यस्मात् पूर्ववाक्यम् 'अथ यदुचैवास्मिन् शव्यं कर्म कुर्वन्ति' इति । तद् व्याचष्टे अवसितेति ॥ शव्यं शवसम्बन्धि कर्म संस्कारादिरूपं प्राप्नोति । ज्ञानमहिम्नेत्यर्थः ॥ **नैनां प्राप्येति** ॥ ब्रह्मज्ञानरूपां स्थितिं प्राप्य कर्मवशात् प्राप्तगर्भवासादिदुःखैर्न विमुह्यति । तदीयज्ञानं लुप्तशक्तिकं सन्मोक्षजनने समर्थं न भवतीत्य-तन्नेत्यर्थः ॥

श्लोकः ७२

**भावप्रकाशः (कृ.टि.)–** 'यावन्न विमोक्ष्येऽथ सम्पत्स्यते' इति श्रुतिशेषं व्याचष्टे– **यावदित्यादिना ॥** मुचेः कर्मणि लुट्प्रत्यये विमोक्ष्यत इति रूपं भवति । तत्र 'लोपः त आत्मनेपदेषु' इत्यनेनात्मनेपदेषु यस्तकारः तस्य च्छन्दसि लोपे 'विमोक्ष्ये' इति श्रुतौ प्रयुक्तमिति भावेन तदनूद्य प्रतिपदमाह– **न विमोक्ष्ये न विमोक्ष्यत इति ॥** 'अथ यदु चैवास्मिंश्छव्यं कुर्वन्ति यदु च नार्चिषम्' इत्यादि श्रुतिं व्याचष्टे– **अवसितकर्मणीत्यादिना ॥** ननु भौवादिकस्य भवतेरकर्मकत्वात् कथम्'अर्चिषम्'इति कर्मोक्तिरित्यत आह– **प्राप्नोतीति ॥** तथा चानुभवतीत्यादिवत्सकर्मकत्वम् । सत्तार्थस्यैवाकर्मकत्वादिति भावः । नच प्राप्त्यर्थस्य चौरादिकत्वाण्णिजात्मनेपदयोः प्रसङ्गः 'भूप्राप्तावात्मनेपदी' इति चुरादौ स्मरणादिति वाच्यम् । धातूनामनेकार्थत्वेन भौवादिकस्यैव प्राप्त्यर्थत्वोपपत्तेः । चौरादिकत्वेऽपि 'आधृषाद्वा' इति णिचो विकल्पितत्वेन 'णिच्सन्नियोगेनैवात्मनेपदम्' इत्येकदेशिभिरङ्गीकृतत्वेन भवतीति रूपोपपत्तेश्चेत्याशयात् । ज्ञानिनामपि बहुशरीरप्राप्तिः दृष्टेति प्रतिज्ञायोदाहृते 'महादेव परे जन्मन्' इति वाक्ये ज्ञानिनो जन्मद्वयोक्तेस्तदनुसारेणाह– **अनेकोपलक्षणमिति ॥**

## भाष्यम्

**नच कायव्यूहापेक्षा ॥ 'तद्यथेपीकातूलम्'** (छां.उ.५.२४.३), **'तद्यथा पुष्करपलाशे'** (छां.उ.४.१४), **'ज्ञानाग्निस्सर्वकर्माणि'** (गी.४.३७) **इत्यादि वचनेभ्यः ॥ प्रारब्धे त्वविरोधः । प्रमाणाभावाच्च । नच तच्छास्त्रं प्रमाणम् ॥**

**'अक्षपादकणादानां साङ्ख्ययोगजटाभृताम् ।**
**मतमालम्ब्य ये वेदं दूषयन्त्यल्पचेतसः ॥' इति निन्दनात् ॥**

**यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव न सत्यत्वम् । न हि तेषामपीतर-ग्रन्थविरुद्धार्थे प्रामाण्यम् ।**

भावप्रदीपिका (प.टी.)– सर्वमपि कर्म कायव्यूहेन भुज्यत इति परिहारः किं न स्यात् ? इत्यत आह– **न चेति ॥** 'भोगार्थम्' इति शेषः । किमप्रारब्धभोगार्थं प्रारब्ध-भोगार्थं वा कायव्यूहापेक्षा ? आद्यं दूषयति– **तद्यथेति ॥** द्वितीयं दूषयति– **प्रारब्धे**

**त्विति ॥** कायव्यूहमन्तरेणापि प्रारब्धे भुक्ते न विरोध इत्यर्थः । प्रारब्धमपि कायव्यूहेन भुज्यतामित्यत आह– **प्रमाणेति ॥** काणादादिशास्त्रं प्रमाणमित्यत आह– **न चेति ॥** निन्दनवत् स्तुतिरपि शैवादिपुराणेष्वस्तीत्यत आह– **यत्रेति ॥ सत्यत्वम्** उक्तस्य । ननु पुराणत्वाविशेषात् कुतो निन्दावचनेन स्तुतिवचनबाधः ? इत्यत आह– **न हीति ॥**

भावप्रकाशिका (न.टी.)– उत्तरपूर्वाघयोस्तु ज्ञानप्रभावादेवाश्लेषविनाशोक्तेर्न तद्भोगार्थं काणादाद्युक्तकायव्यूहापेक्षेत्याह– **न चेति ॥** पुण्यमनिष्टं नश्यत्येवेष्टं तूत्तरकालीनं मुक्तावनुप्रविशति पूर्वकालीनं ज्ञानमित्यनवद्यम् । प्रारब्धे तु कर्मणि कतिभिश्चिद्देहैः क्रमेण भुज्यमानेऽपि तदन्ते मुक्तिर्न विरुध्यते परिमितत्वादिति भावेनाह– **प्रारब्धे त्विति ॥** ननु सञ्चितेऽपि कर्मणि बहुभिः कायैः युगपद्भुज्यमाने, न मुक्तिविरोध इत्यत आह– **प्रमाणेति ॥** ननु तपःप्रभावलब्धज्ञानकृतं तच्छास्त्रं प्रमाणं किं न स्यात् ? इत्यत आह– **न चेति ॥** यत्र कचित् श्रूयते पाशुपतादिशास्त्रं शिवपुराणेषु तेषामपि शिवभक्तस्तुतौ तात्पर्यम् । ननु शिवशास्त्रोक्तसत्यत्वे । शिवपुराणानामितरपुराणविरुद्धार्थे प्रामाण्या-सम्भवादित्याह– **यत्र त्विति ॥**

प्रमेयदीपिका (ज.टी.)– पाशुपतवैशेषिकादयस्त्वाहुः– अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात् समाहृत्यानेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वा अपवृज्यते । तत्कुतोऽस्य देहान्तरमिति? तत्राह– **न चेति ॥** 'ज्ञानिनः कर्मक्षयार्थम्' इति शेषः । तथाहि अप्रारब्धकर्मक्षयार्थं वा सा स्यात् । प्रारब्धक्षयार्थं वा? नाऽद्यः । तेषां ज्ञानेनैव क्षीणत्वादिति भावेनाऽह– **तद्यथेति ॥** द्वितीये तु यः कश्चिद् ज्ञानी तथा करोति सर्वो वा । आद्ये सम्प्रतिपत्तिमुत्तरमाह– **प्रारब्धे त्विति ॥** द्वितीयासम्भवे हेतुमाह– **प्रमाणेति ॥** चशब्दात् प्रागुदाहृतप्रमाणविरोधाच्च ॥

पाशुपतादिशास्त्रेषु तथोक्तत्वात् कथं प्रमाणाभावः? इत्यत आह– **नचेति ॥** तच्छिष्या अपि तच्छब्देनोच्यन्त इति बहुवचनम् ॥

> 'उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणस्सुतः ।
> उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ॥' (म.भा.१२.३४९.६७)

श्लोकः ७२

इत्यादौ तत्स्तुतिरपि दृश्यत इत्यत आह— **यत्र त्विति** ।। वैष्णवशास्त्रोक्तप्रकारेण शिवभक्तानाम् । **'लक्षणया'** इति शेषः । सत्यत्वं **'तदुक्तार्थस्य'** इति शेषः । उक्तनिन्दा-विरोधादिति भावः । तर्हि शैवपुराणानि कायव्यूहनिर्माणनियमादौ प्रमाणानीत्यत आह— **न हीति** ।। **'तेषाम्'** इति बुद्धिस्थशैवपुराणपरामर्शः । **इतरग्रन्था इति** ।। उदाहृत-गारुडादयः ।।

**भावदीपः (रा.टि.)–** ।। **प्रागुदाहृतेति** ।। 'स्थितप्रज्ञोपि' इत्यादि प्रमाणेनेत्यर्थः ।। द्विवचनेन भाव्यमित्यत आह– **तच्छिष्या अपीति** ।। **वैष्णवशास्त्रेति** ।। हरिदासत्वादिरूपेण शिवे भक्तिमतामित्यर्थः।। वचनवृत्त्या स्तुतेरप्रतीतेराह– **लक्षणयेति** ।। शिवो हि महानुभावः, अतस्तद्भक्ता अपि श्लाघ्या इत्येवं स्तुतिपरत्वमित्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** इह टीकायां 'न विमोक्ष्ये न विमोक्ष्यते' इत्येव पाठः । तत्र 'विमोक्ष्ये' इति श्रौतपदानुवादेन 'विमोक्ष्यते' इति तदर्थकथनम् । 'तस्य तावदेव चिरम्' इति परोक्षनिर्देशात् । 'अथ सम्पत्स्यते' इति प्रथमपुरुषप्रयोगाच्च । सुप्तिङुपग्रहलिङ्गनराणाम्' इत्यादि सूत्राच्चेति तत्वप्रदीपिकानुसारात् । 'यावन्न विमोक्ष्ये न विमोक्ष्यते' एतत्पुरुषव्यत्ययेन सामर्थ्यात् इति अपभाष्यकारेणापि एवमेव श्रौतपाठाश्रयणाच्च ।। यत्तु 'अथ तदैव सत्सम्पत्स्ये सम्पत्स्यते' इति पूर्ववत् ' इति व्याख्यानं तदपि तथा पाठादर्शनमात्रमूलकं साम्प्रदायिक-मूलपाठाज्ञानमूलकं वेति न तदनुसारेण 'सम्पत्स्ये' इत्येव श्रौतपाट इति भ्रमितव्यम् ।। ननु अक्षपादस्य कणादस्य चैकत्वात् 'अक्षपादकणादानाम्' इति कथं बहुवचनमित्यत आह— **तच्छिष्या अपीति** ।।

**भावरत्नकोशः (सु.टि.)–** ।। **अनियतकालविपाकानि** एतस्मिन्नेव काल एतस्य कर्मणः फलौन्मुख्यमिति नियमशून्यानि । **कायव्यूहनिर्माणेन** योगसामर्थ्यादिति वर्तते । **अपवृज्यते** अपवर्गं प्राप्नोति । **अस्य** ज्ञानोत्पत्तिजन्मन्येव सर्वकर्मक्षपणसमर्थस्य । **सा** कायव्यूहापेक्षा । **तेषाम्** अप्रारब्धकर्मणाम् । 'अग्नौ प्रोतं प्रदूयत एवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते', 'आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते', 'भस्मसात् कुरुते तथा' इति भाष्ये श्रुतिद्वये स्मृतौ च शेषः ।।

'इषीकातूलम्' इत्यत्र 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वत्वं छान्दसत्वान्न कृतम्। **प्रदूयते** विनश्यतीत्यर्थः। अनेन पूर्वाघनाशश्रवणेऽप्युत्तरेषामघानां भावान्मोक्षायोग इति शङ्कापरिहाराय भाष्ये द्वितीयश्रुत्युदाहरणं कृतम्। उत्तरेषामप्यघानां ज्ञानेनैवाश्लेषवचनेन मोक्षविघाताभावस्य सिद्धत्वान्न तैरपि तदयोगशङ्केति हृदयम्। **द्वितीये** प्रारब्धकर्मक्षयार्थमिति पक्षे। **तथा करोति** कायव्यूहनिर्माणेन कर्माणि क्षपयति। **आद्ये** प्रारब्धकर्मविषये। **तत्रापि** यः कोऽपि ज्ञानीति पक्षे। कायव्यूहनिर्माणेनापि प्रारब्धे भुक्ते न विरोधः। ज्ञानिवर्गे कस्यचित् तथाविधस्यापि सम्भवादिति भावः। **द्वितीयासम्भव इति** ॥ सर्वोऽपि ज्ञानी कायव्यूहेन प्रारब्धफलं भुक्तमिति द्वितीयपक्षो न सम्भवतीत्यत्रेत्यर्थः ॥

॥ **'विरोधाच्च'** इति समुच्चिनोतीति शेषः। अक्षपादकणादयोः शास्त्रप्रवर्तकयोर्द्वित्वात् कथं बहुवचनमित्यत आह– **तच्छिष्या अपीति** ॥ **उच्यन्त इति** ॥ लक्षणया प्रतिपाद्यन्त इत्यर्थः। **बहुवचनम्** उपपन्नम्। **ज्ञानं** ज्ञायतेऽनेनेति शास्त्रम्। **अव्यग्रं** सावधानम्। अतस्तत्समीचीन-मिति पाशुपतशास्त्रस्तुतिर्दृश्यत इत्यर्थः। अनेन भाष्ये 'स्तुतिः' इत्यनन्तरं 'दृश्यते' इति शेष इति ज्ञायते। ननु शिवभक्तानां स्तुतिरित्ययुक्तम्। शैवपाषण्डानां 'ब्रह्मणस्सुत उमापतिः' इत्युक्तेरनुचितत्वादित्यत आह– **वैष्णवेति** ॥

> 'लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्रा गिराम्पतिः।
> सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः।
> तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः'

इति वैष्णवशास्त्रोक्तप्रकारेण लक्ष्मीविरिञ्चवाणीभ्योऽवमत्वेन गिरिजेन्द्रादिभ्य उत्तमत्वेन भगवद्भक्तत्वं विज्ञाय तत्र भक्तिसम्पन्नानां या स्तुतिः तत्तात्पर्यत्वमेव 'उमापतिः' इति वचनस्य। न पुनः शास्त्रप्राशस्त्यतात्पर्यकत्वमित्यर्थः। भागवतत्वेन शिवे भक्तिमाचरन्तो भाष्ये शिवभक्तशब्देन ग्राह्याः। ते च 'ब्रह्मणस्सुत उमापतिः', 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय' इति भगवदाज्ञयाऽयोग्यजनव्यामोहनाय पाशुपतं शास्त्रं कृतवानिति शिवं स्तुवन्त्यनेन वचनेन। न पुनः पाशुपतशास्त्रं स्तुवन्तीति भाष्यतात्पर्यमिति भावः ॥

**भावदीपिका (श्री.टि.)**– ॥ **विपाकानि** फलकानि। ज्ञानोत्पत्तिजन्मन्येवेति शेषः। सा कायव्यूहापेक्षा ॥ **प्रागुदाहृतेति** ॥ 'स्थितप्रज्ञोऽपि' इत्यादिप्रमाणे क्रमादनेकजन्मप्राप्त्यनन्तरं

श्लोकः ७२

मुक्तिकथनेन **सर्वेषां कायव्यूहाङ्गीकारेण** तत्प्रमाणविरोधादित्यर्थः । ननु कथं बहुवचनम्? अक्षपादकणादयोरिति वक्तव्यत्वादित्यत आह– **तच्छिष्या अपीति** ॥ तथा चाक्षपादाश्च कणादाश्चेति विग्रहो द्रष्टव्यः । **पाशुपतं** तदाख्यं **ज्ञानं** ज्ञायतेऽनेनेति व्युत्पत्त्या शास्त्रम् । अव्यग्रं यथा स्यात् तथा सावधानेनोक्तवान् । अतस्तत्समीचीनमिति शैवशास्त्रस्तुतिरपि दृश्यत इत्यर्थः ॥

ननु 'उमापति' इत्यत्र पाशुपतशास्त्रस्यैव स्तुतिर्दृश्यते, नतु शिवभक्तानाम् । अत कथमुच्यते शिवभक्तानां स्तुतिपरत्वमिति? तत्राऽह– **लक्षणयेति** ॥ पाशुपतशास्त्रस्य निन्दित-त्वेन मुख्यार्थासम्भवाद् ये पाशुपतशास्त्रस्वीकर्तारः शिवभक्तास्तत्स्तुतिपरत्वमेव लक्षणया वक्तव्यमित्यर्थः ॥

ननु 'उमापतिः' इति श्लोके कस्य पदस्य लक्षणया स्तुतिपरत्वम् ? लक्षणायाः पदधर्मत्वेन वाक्ये तदभावादिति चेत्, उच्यते । अत्र श्लोके 'उक्तवान्' इत्यनन्तरम् 'अतस्तच्छास्त्रं समीचीनम्' इति तद्ग्रन्थ एवोत्तरत्र वाक्यं भविष्यति । तदभावेऽध्याहारोऽपि वा कर्तव्यः । तथाच प्रधानभूतस्य 'समीचीनम्' इति पदस्योक्तार्थलक्षकत्वमिति द्रष्टव्यम् । वाक्य एव लक्षणामङ्गीकृत्येदमित्यन्ये । नन्वेतदप्ययुक्तम् । 'अक्षपादकणादानाम्' इति शिवभक्तानां निन्दितत्वात् कथं तत्स्तुतिरङ्गीक्रियत इत्यत उक्तम्– **वैष्णवशास्त्रोक्तप्रकारेण शिवभक्ता-नामिति** ॥ विष्णुलक्ष्मीब्रह्मवायुसरस्वतीभारत्यपेक्षया नैच्यं ज्ञात्वा विष्णुभक्तत्वादिना रूपेण च शिवं ज्ञात्वा ये तत्र भक्तिं कुर्वन्ति तेषां स्तुतिः क्रियत इत्यर्थः । तथाच पूर्वं शिवभक्तानां निन्दितत्वेन तद्विरोधिशिवभक्तस्तुतिरेवोचिता नतु पाशुपतशास्त्रस्य, असङ्गतेरिति भावः । ननु कुतः पाशुपतशास्त्रोक्तार्थस्य सत्यत्वाभाव इत्यत आह– **उक्तनिन्देति** ॥ तदुक्तार्थस्य यदि सत्यत्वं तर्हि तन्मतावलम्बिनां निन्दा न स्यादित्यर्थः । **शैवपुराणानि** व्यासकृतानीत्यर्थः ॥ **उदाहृतेति** ॥ 'स्थितप्रज्ञोऽपि' इत्याद्युदाहृतेत्यर्थः । तत्र ज्ञानिनः क्रमादनेकजन्मप्राप्त्युक्त्या कायव्यूहनियमप्रतिपादकशैवपुराणस्य तद्विरोध इत्याशयः ।

**भावप्रकाशः (कृ.टि.)**– ॥ **उदाहृतप्रमाणेति** ॥ 'स्थितप्रज्ञोऽपि यस्तूर्ध्वं' इत्याद्युदाहृते-त्यर्थः । ननु 'अक्षपादकणादानाम्' इति बहुवचनमयुक्तम् । अर्थबहुत्वाभावात् । नच 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इत्युक्तेः जातौ बहुवचनमेतदिति वाच्यम् ।

अक्षपादत्वकणादत्वयोरेकव्यक्तिकत्वेन अजातित्वादित्यत आह– **तच्छिष्या अपीति** ॥ ननु शिवभक्तानां स्तुतिपरत्वमित्यनेन 'उमापतिः' इति वाक्यस्य शिवभक्तकर्तृकस्तुतिपरत्वमुक्तम् । तदयुक्तम् । पाषण्डैः शिवभक्तैः शिवस्य ब्रह्मसुतत्वानङ्गीकारादित्याशङ्क्य 'शिवभक्तानाम्' इत्यतः प्रागध्याहार्यं दर्शयति– **लक्षणयेति शेष इति** ॥ **अस्य स्तुतिपरत्वमेवेति** । वाक्यान्त्य-शेषत्वादवध्यप्रदर्शनम् । **नियमादाविति** ॥ आदिपदेन कर्मक्षपणादि सङ्ग्रहः ॥

## भाष्यम्

**तथा ह्युक्तम्–**

**'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ॥**
**त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥**
**अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।**
**प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु'** (व.पु.७०३६) **इति वाराहे** ॥

**'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ।**
**चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः ॥**

**दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु ।**
**चक्रुर्वेदैश्च ब्राह्माणि वैष्णवान् विष्णुवेदतः ॥**

**पञ्चरात्रं भारतं च मूलरामायणं तथा ।**
**तथा पुराणं भागवतं विष्णुवेद इतीरितः ।**
**अतः शैवपुराणानि योज्यान्यन्याविरोधतः ॥' इति नारदीये ।**

**अतो ज्ञानिनां भवत्येव मुक्तिः ॥**

भावप्रदीपिका (प.टी.)– तद्विरोधादेषामप्रामाण्यं किं न स्यात् ? इत्यत आह– **तथा हीति** ॥ शैवपुराणानामतथ्यत्वमूलत्वाद्दौर्बल्यमिति ॥ एषां निर्दोषमूलत्वात् प्राबल्यमिति भावः । निश्चितफलं च इत्याद्युक्तमुपसंहरति– **अत इति** ॥

श्लोकः ७२

भावप्रकाशिका (न.टी.)– ननु पुराणत्वाविशेषात् शिवपुराणानामितरपुराणविरुद्धार्थे कथं न प्रामाण्यम् इत्याशङ्क्य, **मोहनार्थं** प्रणीतशिवागममूलत्वादित्याह– **तथा हीति ॥** स्रष्टृत्वबद्धत्वोपासकत्वादीनि तथ्यानि शर्वादेः अस्रष्टृत्वाबद्धत्वानुपासकत्वादीनि अतथ्यानि। स्रष्टृत्वमोचकत्वोपास्यत्वादीनि **वितथ्यानीति** । एवं सर्वोपास्यत्वादीनि तथ्यानि विष्णोः। अनुपास्यत्वादीन्यतथ्यानि । उपासकत्वादीनि **वितथ्यानि** । दधीच्याद्याः शैवान्युपपुराणानि चक्रुः । निश्चितफलं च इत्याद्युक्तमुपसंहरति– **अत इति** ॥ यत इत्युक्तप्रकारेण **कर्मक्षयसम्भवः** ॥

प्रमेयदीपिका (ज.टी.)– शैवपुराणानां गारुडादिवैष्णवग्रन्थानां च को विशेषः, येन वाध्यबाधकभावः? इत्याशङ्क्य दुर्जनव्यामोहनार्थप्रणीतपाशुपतादिमूलानि शैवपुराणानि, सम्यज्ज्ञानार्थप्रणीतपञ्चरात्राद्यनुसारिणो गारुडादिग्रन्था इत्याशयवान् पाशुपतादिशास्त्राणां च मोहनार्थत्वे तावत् प्रमाणमाह– **तथा हीति ॥** 'कारय' इति स्वार्थे णिच् । **अतथ्यानि** सर्वथाऽपि अविद्यमानानि । **वितथ्यानि** व्यधिकरणानि च । **तेषु** दर्शयस्व । **प्रकाशं** प्रसिद्धम् ॥

इदानीं तन्मूलत्वं शैवपुराणानामितरेषां पञ्चरात्रादिमूलत्वम् इत्यत्र प्रमाणमाह– **कुत्सितानीति ॥** तच्छास्त्रसमयेन तच्छास्त्रसिद्धान्तमनुसृत्य । **वेदैरिति ॥** वेदानामापातप्रतीतिमनुसृत्य । भागवतं भगवद्विषयम् । उक्तमुपसंहरति– **अत इति ॥** ज्ञानिनां मुक्तिः भवतीत्येव । नतु तद्देहपातानन्तरमिति नियम इत्युपसंहारार्थः ॥

भावदीपः (रा.टि.)– ॥ **सर्वथाप्यविद्यमानानीति** ॥ लिङ्गमूलान्वेषणादीनि ॥ **व्यधिकरणानीति** ॥ विष्ण्वादौ विद्यमानस्वातन्त्र्यादीनि रुद्रनिष्ठानीति दर्शयस्वेत्यर्थः ॥ कर्मणि घञन्तत्वमुपेत्याह– **प्रकाशं प्रसिद्धमिति** ॥'**भागवतम्**' इति पुराणविशेषणमिति भावेनाऽह **भगवद्विषयमिति** ॥

वाक्यार्थप्रदीपः (पां.टि.)– रुद्रस्य मोहकशास्त्रकर्तृत्वालाभात् तल्लाभायाह– **कारयेति** ॥ **स्वार्थे णिजिति** ॥ 'बहुलमेतन्निदर्शनम्' इति वचनादिति भावः । हेतुमण्णिजन्तस्याप्युपलक्षणमेतत् । ततश्च त्वं मोहकशास्त्राणि कुरु, दधीच्यादिभिः कारय चेत्यर्थद्वयं सिद्ध्यति !

अवश्यं चैतदेवम् । इह टीकायामुक्तरीत्या रुद्रस्य मोहशास्त्रकर्तृत्वमात्रविवक्षया 'त्वं च मोहशास्त्राणि कुरुष्व अन्यैश्च कारय' इति एतत्प्रमाणव्याख्यानरूपतत्त्वप्रदीपेन ।

'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ॥
चकार शास्त्राणि विभुः ऋषयस्तत्प्रचोदिताः ॥
दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु ॥ चक्रुः'

इत्यत्रैव भाष्यकृदुदाहरिष्यमाणप्रमाणेन 'दधीच्यादिभिः कारय च' इति भाष्यटीका-स्वव्याख्यानेन च विरोधापातात् । अत्रोभयविवक्षयामपि रुद्रस्य मोहशास्त्रकारयितृत्वस्य मुखतः असङ्कीर्तनं तु भाष्यटीकायां तस्य मुखतः सङ्कीर्तनादेवात्रापि तत्सिद्धौ किमत्रापि तस्य पुनः मुखतः सङ्कीर्तनेनेत्यभिप्रेत्यैव । अत एवात्र मुखतः सङ्कीर्तितायाः रुद्रस्य मोहकशास्त्रकर्तृतायाः भाष्यटीकायां मुखतः असङ्कर्तनम् । अत्र मुखतः सङ्कीर्तितायाः मोहकशास्त्रकारयितृताया एव तत्र मुखतः कीर्तनम् । आत्मनः प्रकाशशब्दार्थप्रसिद्धिभवने 'आत्मानं प्रकाशम्' इति समानाधिकरणद्वितीययोरनुपपत्तावपि 'आत्मानं प्रति प्रकाशम्' इति प्रतिशब्दाध्याहारेण वैयधिकरण्येन द्वितीयाद्वयस्यान्वयो नानुपपन्न इति भावेन प्रसिद्धिरूपमुख्यार्थतयैव प्रकाशपदं व्याख्याति– **प्रकाशं प्रसिद्धिमिति** ॥ अत्र च टीकायां 'प्रसिद्धिम्' इत्येव पाठः । 'आत्मानं प्रति प्रकाशं प्रसिद्धिम्' इति भाष्यटीकानुसारात् । युक्तत्वाच्च । 'प्रसिद्धम्' इति पाठस्तु तदननुसारित्वादमुख्यार्थत्वाच्च अयुक्तो व्याख्यातृमतिदोषपरिकल्पित इत्यवधेयम् ॥

**भावरत्नकोशः (सु.टि.)**– श्लोके स्तुतिबोधकपदं न श्रूयत इत्यत आह– **लक्षणयेति** ॥ 'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः' इति वाक्यस्य लक्षणया कान्तावियोग इवास्यापि शिवस्तुतौ तात्पर्यमित्यर्थः । केचित्तु, 'शिवभक्तानाम्' इति कर्मणि षष्ठी । शिवो हि ब्रह्मपुत्र उमापतिर्महानुभावः । अतस्तत्र भागवतत्वबुद्ध्या भक्तिमन्तोऽपि महान्त इति लक्षणया शिवभक्ताः स्तूयन्ते । न तु पाशुपतशास्त्रमिति भाष्यभाव इति तात्पर्यमित्याहुः । **उक्तनिन्देति** ॥ पाशुपतादिशास्त्रोक्तस्य सत्यत्वे 'अक्षपादकणादानाम्' इति वचनं 'अल्पचेतसो दुष्टबुद्धयः' इति स्वीकर्तॄणां निन्दावचनविरोधः स्यादित्यर्थः । ज्ञानिवर्गे कस्यचित् तथाविधस्य सम्भवेन सम्प्रतिपत्तेरुत्तरस्योक्तत्वादाह– **कायव्यूहनिर्माणनियमेति** ॥ सर्वेषां ज्ञानिनां कायव्यूहेनैव फलभोग इति नियमे, कर्मक्षपणे चेत्यर्थः । पूर्वं शैवपुराणानां

श्लोकः ७२

स्वशब्देनानुपात्तत्वादत्र तच्छब्देन कथं परामर्श इत्यत आह– **बुद्धिस्थेति** ॥ 'गारुडादयः' इत्यत्र आदिशब्देन नारदीयवचनं तत्र भाष्ये चशब्दसमुच्चितप्रमाणान्तराणि च गृह्यन्ते । 'शैवान् पाशुपताच्चक्रे' इति वचनादाह– **पाशुपतादिमूलानीति** ॥

'ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते',

'ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः'

इत्यादिप्रमाणानि हृदि निधाय आह– **सम्यग्ज्ञानार्थेत्यादि** ॥ 'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति' इति पूर्ववाक्यपर्यालोचनायां, 'प्रकाशं कुरु चाऽऽत्मानम्' इत्युत्तरवाक्य-पर्यालोचनायां च रुद्रस्य मोहशास्त्रकर्तृत्वं प्रतीयते । अतः कथमत्र णिच्प्रयोग इत्यत आह– **कारयेति स्वार्थे णिजिति** ॥ 'बहुलमेतन्निदर्शनम्' इति तस्य स्वार्थेऽपि विधानात् कुर्वित्यर्थ इति भावः । क्वाप्यविद्यमानं लिङ्गमूलान्वेषणादिकमतथ्यमिति तत्त्वप्रदीपोक्तमाह– **अतथ्यानि सर्वथाऽप्यविद्यमानानीति** ॥ **व्यधिकरणानि** विष्ण्वादौ विद्यमानानि रुद्रादिनिष्ठतयोच्यमानानि स्वातन्त्र्यादीनि । **तेषु** रुद्रादिषु । कर्मणि घञन्तत्वमर्शआद्यजन्तत्वं वाऽभ्युपेत्याऽऽह– **प्रकाशं प्रसिद्धमिति** ॥

तत्त्वप्रकाशिकायां तु 'त्वं च सृज । दधीच्यादिभिः कारय च । आत्मानं मां च प्रति प्रकाशं प्रसिद्धिम् आत्मनः प्रसिद्धिं ममाप्रसिद्धिं च कुरु' इत्यर्थ उक्तः । **तन्मूलत्वं** मोहशास्त्रपाशुपतादिमूलत्वम् । **इतरेषां** गारुडादिग्रन्थानाम् । समयशब्देन शास्त्रप्रतीतिं व्युदसितुं विवक्षितं समयशब्दार्थं वदन् तस्य पुराणकरणं प्रति कारणत्वं द्योतयन् 'शैवदर्शनमालम्ब्य क्वचिच्छैवी कथोदिता' इत्याचार्योक्तिं हृदि कृत्वाऽऽह–**तच्छास्त्रसिद्धान्तमनुसृत्येति** ॥ तथा च शास्त्रसिद्धान्तस्य प्रतिपाद्यतया पुराणकरणं प्रति हेतुत्वात् 'हेतौ' इति तृतीयेति भावः । अप्रतीतार्थानां वेदानां करणत्वायोगादाह– **वेदानामिति** ॥ वेदार्थप्रतीतिमूलत्वेऽप्रामाण्यम-सङ्गतमित्यत उक्तम्– **आपातेति** ॥ तथा चात्र वेदशब्दस्य आपातप्रतीततदर्थलक्षकत्वात् तत्प्रतीतेश्च हेतुत्वमिति तत्र तृतीयेति भावः ॥

ननु भागवतशब्देन प्रसिद्धभागवतग्रहणे पुराणमिति व्यर्थम् । भागवतस्य पुराणत्वा-व्यभिचारित्वात् । 'पुराणं भागवतं च' इति विवक्षायां भागवतमिति व्यर्थम् । पुराणशब्देनैव

तस्यापि ग्रहणसम्भवात्। शैवादिपुराणस्यापि पुराणपदेन ग्रहणेन तस्य विष्णुवेदत्वानुपपत्ते-श्चेत्यतो नेह भागवतपदं योगरूढम्। येनोक्तशङ्का । किन्तु केवलयोगशक्तिमदिति भावेन आह– **भागवतं भगवद्विषयमिति** ॥ 'न वा एकेनाक्षरेण छन्दांसि वियन्ति' इत्यतोऽत्र 'तथा पुराणं भागवतम्' इति प्रयोगो युक्तः । 'भागवतमितीरितो ग्रन्थो विष्णुवेदः' इति भाष्ये सम्बन्धः ॥ ननु ज्ञानिनां तद्देहपातानन्तरमेव मुक्तिरिति नियमो नास्तीत्युपक्रान्तम् । ज्ञानिनां मुक्तिर्भवत्येवेत्युपसंह्रियत इत्युपक्रमोपसंहारयोर्भिन्नार्थत्वप्रसङ्ग इत्यतः ऐक्यार्थाय भाष्यभावमाह– **ज्ञानिनामिति** ॥

**भावदीपिका (श्री.टि.)**– ॥ **स्वार्थे णिजिति** ॥ तथाच कुर्वित्यर्थः ॥ **प्रसिद्धमिति** ॥ तथाचाऽत्मानं मां च प्रतीत्यर्थो द्रष्टव्यः ॥ **सर्वथेति** ॥ लिङ्गमूलान्वेषणादीनि ॥ **व्यधि-करणानि** वस्तुगत्या विष्णुनिष्ठानि सर्वोत्तमत्वादीनि यद् रुद्रे प्रदर्श्यन्ते तानि व्यधिकरणा-नीत्यर्थः ॥ शास्त्रेषु दर्शयस्व प्रतिपाद्यतयेति शेषः ॥ **प्रसिद्धमिति** ॥ तथाचाऽत्मानं प्रति प्रकाशं प्रसिद्धं कुरु । मां च प्रति अप्रकाशमप्रसिद्धं कुर्विति योज्यम् ॥ **तन्मूलत्वम्** पाशुपत-शास्त्रमूलत्वम् ।

ननु पुराणशब्देनैव भागवतस्य गृहीतत्वात् किं विशिष्योच्यते भागवतमिति? तत्राऽह– **भगवद्विषयमिति** ॥ ननु ज्ञानिनां तद्देहपातानन्तरं मुक्तिरुत जन्मान्तरं प्राप्येति शङ्कायामन्त-कालेऽस्यां स्थित्वैव ब्रह्म गच्छति, अन्यथा जन्मान्तरं प्राप्नोतीति प्रमेयस्यैतावत्प्रबन्धेनोपपादि-तत्वात् तस्यैवोपसंहारे कार्ये ज्ञानिनां भवत्येव मुक्तिरित्यसङ्गतं किमुपसंह्रियत इत्यत उपसंहाराभिप्रायमाह– **ज्ञानिनामित्यादिना** ॥

**भावप्रकाशः (कृ.टि.)**– ननु 'प्रकाशं कुरु चात्मानम्' इत्याद्यग्रिमवाक्यपर्यालोचनया रुद्रस्य मोहशास्त्रकर्तृत्वमत्रोच्यत इति प्रतीयते । तत् कथं 'कारय' इति णिच्प्रयोग इत्यत आह– **स्वार्थे णिजिति** ॥ 'बहुलमेतन्निदर्शनम्' इत्यनेन नवगणीपठितेभ्योऽपि स्वार्थे णिजुक्तेरिति भावः । **सर्वथाऽप्यविद्यमानानीति** ॥ लिङ्गमूलान्वेषणादीनीत्यर्थः । **व्यधिकरणा-नीति** ॥ (वाद्याद्यन्य)वाय्वाद्यन्यगतानि रुद्रस्यामर्दितसर्वविषभक्षणादीनीत्यर्थः । प्रकाशोऽ-स्यास्तीति प्रकाश इत्यर्शआद्यजन्तत्वमाश्रित्याह– **प्रसिद्धमिति** ॥ अनेकार्थत्वाद्विवक्षितं समयशब्दार्थं वदन् शास्त्रसमयस्य पुराणं प्रति करणत्वाद्यभावात् तृतीयानुपपत्तिरित्याशङ्कां

श्लोकः ७२

परिहरति– **तच्छास्त्रसिद्धान्तमिति ॥ अनुसृत्येति** ॥ प्रतिपाद्यतयाऽश्रित्येत्यर्थः । तथा च शास्त्रसिद्धान्तस्य प्रतिपाद्यतया पुराणहेतुत्वाद्धेताविति तृतीयेति भावः । वेदानां करणत्वाद्य-भावादाह– **वेदानामिति** ॥ वेदार्थप्रतीतिमूलत्वे प्रामाण्यप्रसङ्ग इत्यत उक्तम्– **आपातेति** ॥ तथा च वेदशब्दस्य तदर्थापातप्रतीतिलक्षकत्वात् तस्याश्च ब्राह्मपुराणहेतुत्वात् तृतीयोपपत्तिरिति भावः ॥

ननु भागवतशब्देन प्रसिद्धभागवतग्रहणे 'पुराणम्' इति व्यर्थम् । भागवतस्य पुराणत्वा-व्यभिचारात् । 'पुराणं भागवतं च' इति व्याख्याने 'भागवतम्' इति व्यर्थं पुराणत्वेनैव तल्लाभात् । पुराणशब्देन स्कान्दादेरपि प्राप्तौ तस्य विष्णुवेदत्वानुपपत्तिश्चेत्यत आह– **भगवद्विषयमिति** ॥ ननु ज्ञानिनां तद्देहपातानन्तरमेव मुक्तिनियमो नास्तीत्युपक्रान्तम् । ज्ञानिनां मुक्तिनियममात्रं तु उपसंह्रियत इत्युपक्रमोपसंहारयोः भिन्नार्थत्वप्रसङ्ग इत्यत आह– **ज्ञानिनामिति** ॥

## भाष्यम्

**भीष्मादीनां तु तत्क्षणे युक्त्यभावः । 'स्मरन् त्यजति' (८.६) इति वर्तमानापदेशो हि कृतः । तचोक्तम्–**

'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा ।
विष्णुमाया तदा तेषां मनो बाह्यं करोति हि ' इति गारुडे ॥

**न चान्येषां तदा स्मृतिर्भवति ।**

'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम् ।
भजन्ति तत्स्मृतिं त्वन्ते देवो याति न चान्यथा' इति ब्रह्मवैवर्ते ।

भावप्रदीपिका (प.टी.)– योगविमुक्तदेहानां भीष्मादीनां मोक्षाभावात् कथमुच्यते 'स्थित्वाऽस्याम्' इति ? तत्राह– **भीष्मादीनामिति** ॥ तत्र क्षणे युक्तिरत्र नोक्तेत्यत आह– **स्मरन्निति** ॥ अस्यापि स एवार्थ इत्यर्थः । कुतो भीष्मादीनां तत्र क्षणे युक्त्यभावो

ज्ञायते ? इत्यत आह– **तच्चेति** ॥ नन्वज्ञानिनामपि मृतिक्षणे **हरिस्मरणदर्शनात्** कथं भीष्मादीनां तदभावः ? इत्यत आह– **न चेति** ॥

**भावप्रकाशिका (न.टी.)**– ननु योगेनैव तनुत्यागिनामपि भीष्मादीनां किमिति तदैव मुक्तिर्नाभूत् ? इत्याशङ्क्य, तनुत्यागकाले योगाभावादित्याह– **भीष्मादीनामिति** ॥ ननु 'स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति' इति ब्रह्मगतेः पूर्वकालीनत्वं योगस्य प्रतीयते । कायान्निर्गतिश्च ब्रह्मगत्यन्तर्गता । अतः कायान्निर्गतेः प्राग् 'अस्यां स्थित्वा' ति प्रतीतेः किं तत्कालयोगेन ? इत्यत आह– **स्मरन्निति** ॥ 'स्मरंस्त्यजति' इति वर्तमानापदेशकरणात्, कायत्यागकालेऽप्यस्यां स्थित्वा ब्रह्म गच्छतीत्येवार्थः । तेषां तत्क्षणे युक्त्यभावे किं मानम् ? इत्यत आह– **तच्चेति** ॥ प्रारब्धकर्मयुक्तानामित्यर्थः । नन्वन्येषामपि मृतिकाले हरिस्मृतिदर्शनात् कथं भीष्मादीनां सा नास्ति ? इत्यत आह– **न चेति** ॥

**प्रमेयदीपिका (ज.टी.)**– ननु भीष्मादयो ज्ञानिनोऽन्तकाले ब्राह्म्यां स्थितौ स्थिताश्च न मुक्ताः । तत्कथमेतदुक्तम्? इत्यत आह– **भीष्मादीनां त्विति** ॥ **साक्षाद्** देहत्याग-**क्षणे** । युक्त्या परमेश्वरे मनोयोगेन भाव्यमित्येतत् कुतः? इत्यत आह– **स्मरन्निति** ॥ 'यं यं वाऽपि' (८.६) इत्यत्र । भीष्मादीनां तस्मिन् क्षणे युक्त्यभाव इत्येतत् कुतः? इत्यत आह– **तच्चेति** ॥ ननु तत्क्षणे युक्त्या मुक्तिश्चेद् अज्ञानिनामपि तत्सम्भवेन मुक्तिप्रसक्तिरित्यत आह– **न चेति** ॥ भक्तिज्ञानेनेति द्वन्द्वैकवद्भावः । भक्तिसहितं ज्ञानं भक्तिज्ञानमिति वा ॥

**भावदीपः (रा.टि.)**– **'कुतः'** इत्यस्य कुत्रेत्याकाङ्क्षायामाह– **यं यं वापीत्यत्रेति** ॥ 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः' इत्यत्रेत्यर्थः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु भक्तिश्च ज्ञानं चेतीतरयोगद्वन्द्वे 'भक्तिज्ञानाभ्याम्' इति द्विवचनेन भवितव्यम् । 'भक्तिज्ञानेन'इत्येकवचनं तु कथम्?इत्यतः 'सर्वो द्वन्द्वो विभाषयैक-वद्भवति' इति तस्य एकवद्भावविधानादेकवचनोपपत्तिरित्याशयेनाह– **भक्तिज्ञानेनेति** ॥ भक्त्या

श्लोकः ७२

सहितं भक्तिसहितमिति तृतीयातत्पुरुषे सति निष्पन्नभक्तिसहितशब्दस्य ज्ञानशब्देन भक्तिसहितं च तत् ज्ञानं चेति विशेषणसमासे 'शाकपार्थिवः' इत्यादेः प्रयोगस्य च सिद्धये 'शाक-पार्थिवादीनामुत्तरपदलोपो वक्तव्यः' इति पूर्वपदस्य यदुत्तरपदं तल्लोपविधानात्, तत्र पूर्वपदस्य शाकप्रियशब्दस्य यदुत्तरपदं प्रियपदं तल्लोपवत् अत्रापि पूर्वपदस्य भक्तिसहितशब्दस्य यदुत्तरपदं सहितपदं तस्य लोपे सति 'भक्तिज्ञानेन' इत्येकवचनमुपपन्नमेवेत्याशयेन पक्षान्तरमाह– **भक्तिसहितं ज्ञानं भक्तिज्ञानमिति चेति ॥**

**भावरत्नकोशः (सु.टि.)– ॥ ब्राह्म्यां स्थितौ स्थिताश्चेति ॥** 'इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि' इत्यादिस्तुतिकरणेन तदवगम इति भावः । **एतत्** 'स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म गच्छति' इत्येतत् । 'तस्मिन् क्षणे युक्त्यभावः' इति भाष्यार्थं वदन्नेवोत्तरभाष्यं सङ्गमयति– **साक्षादित्यादि ॥** भाष्ये शेषं पूरयति– **यं यं वाऽपीत्यत्रेति ॥** 'स्मरन्' इत्यस्य वर्तमानकालार्थकलडादेशशत्रन्तत्वेन तदर्थस्मरणस्य, 'त्यजति' इत्यस्य वर्तमानार्थकलडन्तत्वेन तदुक्तत्यागस्य चैककालत्वस्फोरणाय खल्वेककालार्थप्रत्ययान्तशब्द-प्रयोगो गीतायां कृत इति भाष्यार्थः । **युक्त्यभावः** परमेश्वरे मनःप्रणिधानाभावः । मनसो भगवदविषयत्वोक्तये हेत्वर्थगर्भं विशेषणं– **कर्मयुक्तानां प्रारब्धकर्मवतामिति ॥** स्वतन्त्र-साधनोक्तिः – **विष्णुमायेति ॥** 'अन्येषाम्'इति भाष्यार्थः– **अज्ञानामिति ॥** 'भक्ति-ज्ञानेन' इत्यत्र भक्तिश्च ज्ञानं चेति विग्रहे समासो द्विवचनान्त एव स्यादित्यत आह– **द्वन्द्वैकवद्भाव इति ॥** नायमितरेतरयोगद्वन्द्वः । येन द्विवचनापत्तिः । किन्तु समाहारद्वन्द्वः । समाहारस्य चैकत्वादेकवचनं युक्तम् । यद्वा, 'सर्वो द्वन्द्वो विभाषयैकवद् भवति' इत्येकवद्भावे तत्कार्य-मेकवचनमुचितमिति भावः । **तत्स्मृतिं** तस्य भजतः स्मृतिं देवो भगवान् याति स्मृतिविषयो भवतीति भाष्यार्थः ॥

**भावदीपिका (श्री.टि.)– ॥ भीष्मादय इति ॥** 'इति मतिरुपकल्पिता' इत्यादि-स्तोत्रकरणेन भीष्मादीनामन्तकाले ब्राह्म्यां स्थितौ स्थितत्वं प्रमितमिति भावः । पूर्ववाक्यार्थं वदन्नेवोत्तरवाक्यमवतारयति– **साक्षादिति ॥** 'तत्क्षण' इत्यस्यार्थोऽयम् । भाष्ये– **वर्तमानेति ॥** 'स्मरन्' इत्यत्र वर्तमानार्थकलडादेशस्य शतुर्वर्तमानार्थकत्वेन स्मरणस्य 'त्यजति' इति वर्तमानार्थकलडन्तशब्दोक्तत्यागस्य च समानकालीनत्वं लभ्यत इति भावः ॥

**तत्सम्भवेन** तत्क्षणे युक्तिसम्भवेन । ननु भक्तिज्ञानाभ्यामिति वक्तव्यमित्यत आह– **द्वन्द्वैकवद्भाव इति** ॥ 'स नपुंसकम्' इति च नपुसकत्वं द्रष्टव्यम् । तथाच भक्तिश्च ज्ञानं च भक्तिज्ञानं तेनेत्यर्थः । शाकपार्थिवादिवन्मध्यमपदलोपी समासो वेत्याह– **भक्तीति** ॥

भावप्रकाशः (कृ.टि.)– इतरेतरयोगद्वन्द्वाङ्गीकारे द्विवचनप्रसङ्ग इत्यत आह– **द्वन्द्वैकवद्भाव इति** ॥ समाहारद्वन्द्व इत्यर्थः । समाहारस्यैकत्वादेकवचनमिति भावः ॥

## भाष्यम्

**निर्बाणमशरीरम् । 'कायो बाणं शरीरं च' इत्यभिधानात् । 'एतद्बाण-मवष्टभ्य' इति प्रयोगाच्च । निर्बाणशब्दप्रतिपादनं 'अनिन्द्रियाः' इत्यादिवत् । कथमन्यथा सर्वपुराणादिप्रसिद्धा आकृतिर्भगवत उपपद्यते? न चान्यद्भगवत उत्तमं ब्रह्म ।**

> 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवते(१.२.११)।
> 'भगवन्तं परं ब्रह्म परं ब्रह्म जनार्दनः ।'
> 'परमं यो महद्ब्रह्म' (म.भा.१३.१४९.९),
> 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः'(१५.१६),
> 'योऽसावतीन्द्रियग्राह्यः' (मनु.१.७),
> 'नास्ति नारायणसमं न भूतो न भविष्यति'(म.भा.१.१.१८),
> 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः'(११.४३) इत्यादिभ्यः ॥

भावप्रदीपिका (प.टी.)– ज्ञानिप्राप्यं चेद्ब्रह्म कार्यमेव स्यात् । व्याप्तस्य नित्यप्राप्तत्वादित्यत आह– **निर्वाणमिति** ॥ तर्हि तस्याशरीरस्य नित्याप्राप्तत्वात् कथं प्राप्यत्वोक्तिः ? इत्यत आह– **निर्वाणेति** ॥ सर्वात्मना शरीराभावः किं न स्यात् ? इत्यत आह– **कथमिति** ॥ अस्तु भगवत एवाकृतिर्न तु तदुत्तमब्रह्मण इत्यत आह– **न चेति** ॥

भावप्रकाशिका (न.टी.)– ननु कार्यदेहोपेतस्यापरब्रह्मण एव गम्यत्वोपपत्तेः तदेव ज्ञान्यृच्छतीत्यत आह– **निर्बाणमिति** ॥ न चाशरीरस्याकाशवन्नित्यव्याप्तस्य परब्रह्मणो न

श्लोकः ७२

ज्ञानिगम्यतेत्यत आह– **निर्वाणशब्देति** ॥ जडदेहाभावाद् भिन्नदेहाभावाद्वा निर्वाणं ब्रह्म वासुदेवाख्यम्। यथा नारदसनकादिभिः दृष्टदेहा अपि मुक्ताः 'अनिन्द्रिया अनाहारा अनिष्पन्दाः' इत्युच्यन्ते । स्वरूपभूतापरिमितज्ञानानन्दादिगुणसान्द्रसूक्ष्मतरकरचरणाद्यात्मकदेहाभावोऽपीति (स्यादिति) चेत्, (मैवम्।) तत्प्रतिपादकसर्ववेदपुराणादिविरोधात् इत्याह– **कथमन्यथेति** ॥

प्रमेयदीपिका (ज.टी.)– 'ब्रह्मनिर्वाणं ब्रह्मस्वरूपानन्दम्' इति व्याख्यानं सर्वप्रमाणविरुद्धमित्याशयवान् निर्वाणम् इति भिन्नं पदं व्याचष्टे– **निर्वाणमिति** ॥ कथमेतत्? इत्यत आह– **काय इति** ॥ कार्यब्रह्मव्यावृत्त्यर्थमेतत् ॥ अनेन ब्रह्मणो निराकारत्वं प्राप्तम्। तत्प्रतिषेधार्थम् आह– **निर्वाणेति** ॥ प्रतिपादनं व्याख्यानम्। 'इत्यादिवत्' इत्यादेरिव । प्राकृतादिविग्रह राहित्यार्थत्वेनेत्यर्थः ॥ किमनेन व्याख्यानेन? निराकारमेव ब्रह्म किं न भवेत्? इत्यत आह– **कथमिति** ॥ भगवतो विष्णोः साकारत्वेऽपि ब्रह्मणो निराकारत्वमेव । नच भगवानेव ब्रह्म । तस्य तदुत्तमत्वेन ततोऽन्यत्वात् । अतो न पुराणादिविरोध इत्यत आह– **नचेति** ॥ 'महद् ब्रह्म' इत्यन्तानि वाक्यानि भगवतो ब्रह्मत्वप्रतिपादकानि । 'यस्मात्' इत्यादीनि तस्यैव सर्वोत्तमत्वेन तदुत्तमाभावप्रतिपादकानि ॥ इन्द्रियग्राह्यमतिक्रान्तः तदुत्तमः । सर्वमेव योगीन्द्रियग्राह्यम् ॥

भावबोधः (र.टि.)– ॥ कार्यब्रह्मव्यावृत्त्यर्थमिति ॥ चतुर्मुखेत्यर्थः । 'योऽसावतीन्द्रियग्राह्यः' इत्येतत्प्रकृतोपयोगितया व्याचष्टे– **इन्द्रियग्राह्यमतिक्रान्त इति** ॥ अन्यथा शब्दार्थासम्भव इति भावः । नन्वेतावताऽपि न सर्वोत्तमत्वप्राप्तिः । धर्मादेरपि तत्सम्भवादित्यत आह– **सर्वमेवेति** ॥

भावदीपः (रा.टि.)– भिन्नपदत्वे 'निर्वाणम्' इति विशेषणं व्यर्थमित्यत आह– **कार्यब्रह्मेति** ॥ विरिञ्चव्यावृत्त्यर्थमित्यर्थः ॥ तस्यापि 'कार्यं बादरिः' (ब्र.सू.४.३.७) इति सूत्रोक्तदिशा 'स एनान् ब्रह्म गमयति' (छा.उ.५.१०.२) इत्यादौ नपुंसकब्रह्मशब्दवाच्यत्वदृष्टेरिति भावः ॥ **इत्यादेरिवेति** ॥ 'अनिन्द्रिया अनाहारा अनिष्पन्दाः' इति प्रागुदाहृतवाक्योक्तानि इन्द्रियाणीत्यादेरिवेत्यर्थः ॥ 'योऽसावतीन्द्रियग्राह्यः' इत्यस्य अर्थमाह– **इन्द्रियग्राह्य इति** ॥ अस्मदादीन्द्रियाग्राह्यत्वातीतत्वमात्रेण कथं सर्वोत्तमत्वलाभ इत्यत आह– **सर्वमेवेति** ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– 'अतीन्द्रियग्राह्य' इत्यत्र 'इन्द्रियमतिक्रान्तः अतीन्द्रियः' इत्येतावतैव इन्द्रियाग्राह्यत्वलाभेन तन्मात्रविवक्षायां ग्राह्यपदवैयर्थ्यप्रसङ्गेनायुक्तत्वाद् इन्द्रियग्राह्यातिक्रान्तत्वविवक्षामाश्रित्य तथाविग्रहप्रदर्शनपूर्वकं तल्लब्धमर्थविशेषं दर्शयति– **इन्द्रियग्राह्यमित्यादिना ॥**

**भावरत्नकोशः (सु.टि.)**– 'ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिम्' इति शाङ्करभाष्यमर्थतोऽनुवदति **ब्रह्मस्वरूपानन्दमिति ॥ सर्वप्रमाणेति ॥**

'न ते महित्वमन्वश्नुवन्ति', 'विष्णुमाहात्म्यलेशस्य',
'नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः',
'तस्मान्न मुक्तो न च सा कश्चिद् विष्णुवैभवम् । आप्नुवन्ति',
'लक्षणं परमानन्दो विष्णोरेव'

इत्यादिबहुप्रमाणेत्यर्थः । 'ब्रह्म गच्छति' इत्येतावतैव पूर्तौ 'निर्वाणम्' इति व्यर्थमित्यत आह– **कार्येति ॥ कार्यं ब्रह्म** चतुर्मुखः । नच नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वाभावादेव चतुर्मुखव्यावृत्तिः सेत्स्यतीति वाच्यम् । कोशप्रसिद्ध्या तदभावेऽपि श्रुतिप्रसिद्ध्या तद्वाच्यत्वशङ्कनात् । अत एव 'कार्यं बादरिरस्य गत्युपपत्तेः' इति सूत्रे 'स एनान् ब्रह्म गमयति' इति नपुंसकलिङ्गब्रह्मशब्दघटितश्रुतिरुदाहृता । अस्ति च चतुर्मुखेऽपि नपुंसकब्रह्मशब्दवाच्यत्वम् । 'तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते' इत्यादौ । अत एव तत्र भाष्यम् 'एतद् ब्रह्म चतुर्मुखः' इतीति भावः । 'अहमेतद् बाणमवष्टभ्य' इति षट्प्रश्नोपनिषदि मुख्यप्राणवाक्यम् । **अनेन** अशरीरत्ववाचिनिर्बाणपदेन । **इत्यादेरिति ॥** 'अनिन्द्रिया अनाहारा अनिष्पन्दा सुगन्धिनः', 'अप्रहर्षमनानन्दम्' इत्यादौ यथा लौकिकवैलक्षण्येनाभावशब्द इति व्याख्यानं तथाप्राकृताभौतिकदिव्यमङ्गलाकारसद्भावेऽपि 'निर्वाणम्' इति शरीराभाववाचिशब्दप्रयोग इति व्याख्यानं कर्तव्यमित्यर्थः । अनेन 'कथं प्रथमान्ताद् वतिः' इत्यादिचोद्यानवकाशः । व्याख्यानप्रकारप्रदर्शनम्– **प्राकृतादीति ॥ पुराणादीति ॥**

'पातालमेतस्य हि पादमूलम्',
'सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दशीर्षकः ।
सज्ज्ञानानन्दबाहुश्च सज्ज्ञानानन्दपादवान्',

श्रीरं: ७२

'केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्',
'सर्वतः पाणिपादं तत्', 'आनन्दरूपममृतं यद् विभाति'

इत्यादिपुराणश्रुतिप्रसिद्धेरिति भाष्यार्थः । **तस्य** ब्रह्मणः । **तदुत्तमत्वेन** ऐश्वर्यादिगुणवत्त्वेन भगवच्छब्दवाच्यमायावच्छिन्नविष्णुशब्दितपरमेश्वरोत्तमत्वेन । **न पुराणादिविरोध इति** ।। तेषाम् ईश्वराकृतिप्रतिपादनतत्परतया सावकाशत्वादिति भावः । भगवतो ब्रह्मत्वप्रतिपादनं, तस्यैव भगवतः सर्वोत्तमतया तदुत्तमाभाव इति भाष्यविवक्षितेऽर्थद्वये वाक्यानि विभागेन प्रमाणयित-व्यानीत्याह– **महद् ब्रह्मेत्यन्तानीत्यादि** ।। 'योऽसावतीन्द्रियग्राह्यः' इत्यत्र अतीन्द्रियैः-श्चक्षुरादिभिर्ग्राह्य इत्यर्थाङ्गीकारो न युक्तः । भगवतोऽप्यतीन्द्रियत्वेन तस्य 'नेन्द्रियाणि नानुमानम्' इतीन्द्रियगोचरत्वाभावावेदनात् । अत एवातिशयित इन्द्रियग्राह्यश्चेत्यपि न युक्तमित्यत आह– **इन्द्रियग्राह्यमिति** ।। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इतीन्द्रियग्राह्य-मतिक्रान्त इति विगृह्य समासो विधेय इत्यर्थः । इन्द्रियग्राह्यार्थातिक्रमणमिन्द्रियधर्मादि-साधारणमिति न प्रकृतोपयोग इत्यत आह– **तदुत्तम इति** ।। एवमपीन्द्रियग्राह्यवस्तूत्तमत्वं प्राप्तम् । न पुनः प्रतिपिपादयिषितसर्वोत्तमत्वमित्यत आह– **सर्वमिति** ।। अनेनेन्द्रियधर्मादि-सर्ववस्तूत्तमताऽभिहिता भवतीति भावः ।।

**भावदीपिका (श्री.टि.)**– ।। सर्वप्रमाणेति ।।

'नह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन ।
किमु विष्णोः परानन्दो न ते विष्णविति श्रुतेः ।।'

इत्यादिप्रमाणेत्यर्थः ।। **भिन्नमिति** ।। नात्र ब्रह्मनिर्बाणमित्येकं पदम् । किं नाम ? ब्रह्म निर्बाणमिति भिन्नं पदं कार्यम् । तत्र यद् भिन्नं निर्बाणमिति ब्रह्मविशेषणीभूतं पदं तद् व्याचष्ट इत्यर्थः ।। **कार्यब्रह्मेति** ।। ब्रह्म ऋच्छतीत्युक्ते चतुर्मुखस्यापि प्राप्त्या तद्व्यावृत्त्यर्थम् अशरीर-त्वार्थकनिर्बाणत्वविशेषणमित्यर्थः । 'अहमेतद् बाणमवष्टभ्य' इत्यादिषट्प्रश्नस्थं मुख्यप्राण-वाक्यम् । **अनेन** अशरीरत्वार्थकनिर्बाणपदेन । 'तत्र तस्येव' इति सप्तम्यन्तात् षष्ठ्यन्ताच्चेवार्थे वतिविधानात् प्रकृते च निर्बाणशब्दस्य व्याख्यानम् इत्यादाविवेति सप्तम्यन्ताद् वत्यङ्गीकारेऽ-सङ्गतम् । दृष्टान्तदार्ष्टान्तिकयोः समानविभक्तिकताया अपेक्षितत्वात् । अतः षष्ठ्यन्तादेवात्र

वतिरित्याह– **इत्यादेरिवेति** ॥ **भगवत इति** ॥ ऐश्वर्यादिमतः शबलस्येत्यर्थः । ब्रह्मणः शुद्धस्य । तस्य शुद्धब्रह्मणः । **तदुत्तमत्वेन** तस्माद् भगवत उत्तमत्वेन । **तस्यैव** भगवत एव । 'परमं यो महद् ब्रह्म' इत्यत्र पूर्वं 'यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा' इति प्रकृतं साकारं पुण्डरीकाक्षं भगवन्तं 'यः' इति परामृश्य तस्य महद्ब्रह्मत्वोक्तेरित्यर्थः ॥

ननु 'योऽसौ' इत्यत्र भगवतो ब्रह्मत्वस्य सर्वोत्तमत्वस्य वाऽप्रतिपादनादित्याशङ्कायां सर्वोत्तमत्वं प्रतिपादितमित्याशयेन व्याचष्टे– **इन्द्रियग्राह्यमिति** ॥ नचैतावताऽपि न सर्वोत्तमत्वप्राप्तिः,धर्मादेरपि इन्द्रियग्राह्यमतिक्रान्तत्वादित्यत आह– **सर्वमेवेति** ॥ धर्मादेः सर्वस्यापि योगीन्द्रियग्राह्यत्वेन तदतिक्रान्तत्वाभावाद् भगवत एवेदं सर्वोत्तमत्वप्रतिपादकमिति भावः ॥

**भावप्रकाशः (कृ.टि.)**– ननु ब्रह्म गच्छतीत्यनेनैवालम्, किं निर्वाणपदेन? इत्यत आह– **कार्यब्रह्मेति** ॥ चतुर्मुखेत्यर्थः अन्तकालेऽप्यस्यां स्थितौ स्थित्वैव ब्रह्म ऋच्छतीत्येवोक्तौ चतुर्मुखं प्राप्नोतीति प्रतीयते । तस्यापि ब्रह्मपदवाच्यत्वात् । नच तद्युक्तम् । 'यं यं वाऽपि स्मरन्भावन्त्यजत्यन्ते कलेवरम् । तं तमेवैति' इति वाक्यविरोधात् । अतश्चतुर्मुखव्यावृत्त्यर्थं 'निर्वाणम्'इति विशेषणमिति भावः । नच नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वाभावादेव चतुर्मुखव्यावृत्तिरिति वाच्यम् । कोशप्रसिद्ध्या तदभावेऽपि श्रौतप्रसिद्ध्या तत्सत्त्वात् । अत एव 'कार्यं बादरिः' इति सूत्रे 'स एनान् ब्रह्म गमयति' इति श्रुतिरुदाहृता । नन्वतीन्द्रियैश्चक्षुरादिभिः ग्राह्य इति वा अतिशयितेन्द्रियग्राह्य इति वा नार्थः । भगवतोऽतीन्द्रियत्वेनेन्द्रियग्राह्यत्वाभावात् अतिशयित इन्द्रियग्राह्यो यस्येत्यपि न । योगिसाधारण्यादित्यत आह– **इन्द्रियग्राह्यमिति** ॥ 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समास इति भावः । नन्वेतदतीन्द्रियधर्मादिसाधारणमित्यत आह– **तदुत्तम इति** ॥ तथापि इन्द्रियग्राह्योत्तमत्वमेव प्राप्तं न प्रतिपिपादयिषितसर्वोत्तमत्वमित्यत आह– **सर्वमेवेति** ॥

## भाष्यम्

**न च तद्ब्रह्मणोऽशरीरत्वादेतत् कल्प्यम् । तस्यापि शरीरश्रवणात् 'आनन्दरूपम्' (आथ.२.४.१०), 'सुवर्णज्योतीः' (तै.उ.३.१०) 'दहरोऽस्मिन्नन्तराकाशः' (छां.उ.८.१.१) इत्यादिषु ।**

श्लोकः ७२

**यदि रूपं न स्यादानन्दमित्येव स्यात् । न त्वानन्दरूपमिति । कथं च सुवर्णरूपत्वं स्यादरूपस्य ? कथं च दहरत्वम्? दहरस्थश्च 'केचित् स्वदेह' (भाग २.२.८) इत्यादौ रूपवानुच्यते ।**

'सहस्रशीर्षा पुरुषः' (ऋ.१०.९०.१ ),

'रुग्मवर्णं कर्तारम्' (आथ.३.१.३),

'आदित्यवर्णं तमसः परस्तात्' (गी.८.९),

'सर्वतः पाणिपादं तत्' (म.भा.१२.२३९.२९),

'विश्वतश्चक्षुः(उत)' (म.ना.उ.२.२)

**इत्यादि वचनात्, विश्वरूपाध्यायादेश्च रूपवानवसीयते ॥**

भावप्रदीपिका (प.टी.)– किं शारीराद्भगवतोऽशरीरत्वाद्ब्रह्मण आधिक्यमुच्यते ? किं वा गुणाधिक्यतः ? आद्यं दूषयति– **न चेति** ॥ कथमेतच्छ्रुतिषु रूपं प्रतीयते ? इत्यत आह– **यदीति** ॥ कथं दहरत्वं व्याप्तस्वरूपविवक्षां विना? इत्यर्थः । दहरत्वं दहरस्थत्वम् अशरीरस्यैव किं न स्याद् व्योमवत् ? इत्यत आह– **दहरस्थश्चेति** ॥

प्रमेयदीपिका (ज.टी.)– उत्तमाधमभावेन ब्रह्मेश्वरयोर्भेदो माभूत् । ब्रह्माशरीरम्, ईश्वरस्तु सविग्रह इत्यतो भेदोऽस्तु । अभेदस्यापि सत्त्वाद् ब्रह्मशब्दोपपत्तिरित्यत आह– **नचेति** ॥ 'तस्य' पराभिमतस्य । 'एतत्' भगवतोऽन्यत्वम् । कुतः? इत्यत आह– **तस्यापीति** ॥ 'दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यन्तं वाक्यमिह विवक्षितम् । इत्यादिषु 'ब्रह्मविद्यात्वेन सम्मतेषु' इति शेषः । कथमत्र शरीरश्रवणम्? इत्यत आह– **यदीति** ॥ **रूपं** विग्रहः । 'विज्ञानमानन्दं ब्रह्म' इत्यानन्दशब्दस्य नपुंसकत्वदर्शनात् तथोपादानम्। ज्योतिःशब्दो भास्वररूपस्य वाचकः । अत उक्तम्– **सुवर्णरूपत्वमिति**। दहरत्वं दहरस्थत्वम् । 'अविग्रहस्य' इति वर्तते । दहरस्थत्वं कथमविग्रहस्यानुपपन्नम्? इत्यत आह– **दहरस्थश्चेति** ॥

एवमुपपत्तिसापेक्षाणि वाक्यान्युदाहृत्य स्पष्टान्यप्युदाहरति– **सहस्रशीर्षेति** ॥ अवसीयते परमात्मा ॥

**भावबोधः (र.टि.)– ॥ इत्यन्तमिति ॥** भाष्योदाहृतभागमात्रस्य ब्रह्मशरीरप्रतिपादकत्वाभावादिति भावः । नन्वानन्दशब्दस्य नित्यपुंलिङ्गत्वात् कथम् 'आनन्दम्' इत्युक्तम्? इत्यतः श्रुत्यनुसारित्वादित्याह– **विज्ञानमानन्दमिति ॥**

**भावदीपः (रा.टि.)–** भाष्ये आकाशस्यैव दहरत्वप्रतीत्या ब्रह्मणो दहरस्थत्वप्रतीत्या अर्थमाह– **इत्यन्तमिति ॥** भाष्ये 'आनन्दम् इत्येव' इत्यत्र पुंलिङ्गेन भाव्यमिति चोद्यं निरस्यति **विज्ञानमानन्दमिति ॥ दहरस्थत्वेतीति ॥** भाष्ये 'केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्' इति भागवते श्रवणाद् रूपवानुच्यते इत्युक्तमिति भावः ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** नन्वानन्दशब्दस्य नित्यपुंलिङ्गत्वात् 'यदि रूपं न स्यादानन्द इत्येव स्यात् नतु आनन्दरूपम्' इत्येव भाष्यकृता अनिष्टोपदर्शनस्य कर्तव्यत्वात् 'आनन्दम्' इत्येव स्यादिति नपुंसकप्रयोगोऽनुपपन्न इत्यतः आनन्दशब्दस्य 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादौ पुंलिङ्गप्रयोगवत् 'विज्ञानमानन्दं ब्रह्म' इत्यादौ नपुंसकप्रयोगस्यापि दृष्टत्वेन तन्नित्यपुंलिङ्गत्वासिद्धेः युक्तो भाष्यकारीयः तन्नपुंसुकलिङ्गतया प्रयोग इत्याह– **आनन्दं ब्रह्मेत्यानन्दशब्दस्य नपुंसकत्वदर्शनात् तथोपादानमिति ॥**

**भावरत्नकोशः (सु.टि.)–** उत्तमाधमभावेन ब्रह्मण उत्तमत्वेन भगवतोऽधमत्वेन च शङ्कितो यो ब्रह्मेश्वरयोर्भेदः । स मा भूदित्यर्थः । **इत्यतः** इति हेतोः । **भेदोऽस्त्विति ॥** तथाच न पुराणादिविरोध इति हृदयम् । ननु ब्रह्मभगवतोर्भेदे 'भगवन्तं परं ब्रह्म' इत्यादौ कथं ब्रह्मशब्दप्रयोग इत्यत आह– **अभेदस्यापीति ॥** पारमार्थिकाभेदाभिप्रायेणेत्यर्थः । भाष्योक्तभागमात्रस्य ब्रह्मशरीराप्रतिपादकत्वात् 'दहरस्थश्च' इति भाविभाष्यमनुरुन्धान आह– **इत्यन्तमिति ॥** अत्रोच्यमानं सशरीरत्वमीश्वरस्यास्तु, न ब्रह्मण इत्यतः 'इत्यादिषु' इत्यनूद्य तत्र शेषमाह– **इत्यादिष्विति ॥ सम्मतेष्विति ॥** 'दहर उत्तरेभ्यः' इत्यादौ तथा स्थितेरिति भावः । **विग्रहः** शरीरम् । ननु 'आनन्दम् ' इत्येव स्यदिति कथम्? यावता आङ्पूर्वात्, 'टुनदि समृद्धौ' इत्यतो भावे घञ्प्रत्यये 'घञजबन्ताः' इति लिङ्गानुशासने पुंलिङ्गं विहितमित्यत आह– **विज्ञानमिति ॥** 'षष्ठीयुक्तः' इत्यत्र 'छन्दसि वा' इति योगविभागाश्रयणेन सुप्तिङुपग्रहलिङ्गादीनां व्यत्ययस्य महाभाष्ये स्थितेरिति भावः । श्रुतौ सुवर्णज्योतिष्ट्वस्यैवोक्तेः कथं सुवर्णरूपत्वमिति भाषणम्? इत्यतस्तद् घटयन्नाह– **ज्योतिःशब्द इति ॥ अत इति ॥**

श्लोकः ७२

सुवर्णस्य ज्योतिर्भास्वररूपमिव ज्योतिर्यस्येति विग्रहे अन्यपदार्थस्य विग्रहस्य लाभादित्यर्थः । 'दहरोऽस्मिन्नन्तराकाशः' इत्यत्र 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति वाक्यशेषात् 'दहरस्थश्च' इति भाषणाच्चाह– **दहरत्वं दहरस्थत्वमिति** ॥ 'अरूपस्य' इति भाष्यपदमनुवर्तत इति वक्तव्ये 'अविग्रहस्य' इति वचनं रूपशब्दस्य विग्रहार्थत्वाभिप्रायेणेति ज्ञातव्यम् ।

'केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति'

इत्यादौ भागवते दहराकाशस्थो विग्रहवानुच्यत इति भाष्यार्थः स्फुटः ॥

**भावदीपिका (श्री.टि.)**– ॥ इत्यतः अशरीरत्वसविग्रहत्वरूपधर्मादित्यर्थः । नन्वीश्वरस्य ब्रह्मणो भेदे **'ब्रह्मेति'** इत्यादौ ईश्वरे ब्रह्मशब्दायोग इत्यत आह– **अभेदस्यापीति** ॥ भाष्योदाहृतश्रुतिभागे ब्रह्मप्रतिपादनाप्रतीतेराह– **दहरोऽस्मिन्नित्यादिना** ॥ अन्तःस्थितमन्वेष्टव्यं च ब्रह्मैवेति भावः । नन्वानन्दशब्दस्य नित्यपुंलिङ्गत्वात् कथम्'आनन्दम्' इत्युक्तम्? इत्यतः श्रुत्यनुसारादित्याह– **विज्ञानमानन्दमिति** ॥

ननु भाष्ये **'सुवर्णरूपत्वम्'** इति कथमुक्तम्? 'सुवर्णज्योतीः' इति श्रुतौ सुवर्णज्योतिष्ट्वस्यैवोक्तेरित्यत आह– **ज्योतिःशब्द इति** ॥ **भास्वररूपस्य** भास्वरवर्णविशिष्टदेहस्येत्यर्थः । **वाचकः** 'यतः' इति शेषः । **ततः** तदभिप्रायेण । तथाच सुवर्णवज्ज्योतिर्भास्वरवर्णविशिष्टदेह इति श्रुत्यर्थः । 'अरूपस्येति वर्तते' इति वक्तव्ये तद्व्याख्यानाय 'अविग्रहस्य' इत्युक्तमिति द्रष्टव्यम् । ननु ब्रह्मणो दहरस्थत्वात् कथं दहरत्वम्? इत्युक्तमित्यत आह– **दहरस्थत्वमिति** ॥ भाष्ये **केचिदिति** ॥

'केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति'

इत्यादौ द्वितीयस्कन्धे स्वदेहान्तर्हृदयावकाशस्यैव दहराकाशत्वात् तत्रत्यस्य चतुर्भुजत्वायुक्त्या विग्रहवानुच्यत इत्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– ननूभयोर्भेदे 'भगवन्तं परं ब्रह्म' इत्यादौ कथं भगवति ब्रह्मशब्दप्रयोगः? इत्यत आह– **अभेदस्यापीति** ॥ भाष्योदाहृतभागमात्रस्य ब्रह्मशरीर-

प्रतिपादकत्वाभावादाह– **इत्यन्तमिति** ॥ ननूदाहृतवाक्येषु ईश्वर एव प्रतिपाद्य इति शङ्कापरिहारार्थम् 'इत्यादिषु' इत्यतः परमध्याहरति– **ब्रह्मविद्यात्वेनेति** ॥ ननु 'घञबन्त' इति पुंस्त्वविधानेनानन्दशब्दस्य नित्यपुंलिङ्गत्वात् कथम् 'आनन्दम्'इत्युक्तम्? इत्यत आह– **विज्ञानमिति** ॥ 'दहरस्थश्च' इत्युत्तरवाक्यानुरोधादाह– **दहरस्थत्वमिति** ॥

## भाष्यम्

**अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानन्दश्रीशक्त्यादिमांश्च भगवान् ।**

**पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च** (श्वे.उ. ६.८),
**'यः सर्वज्ञः'** (आथ.१.९), **'आनन्दं ब्रह्मणः'** (तै.उ.२.८),
**'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'** (बृ.उ.४.३.३२)
**'अनादिमध्यान्तमनन्तवीर्यं सहस्रलक्षामितकान्तिकान्तम्'**
**'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'** (भाग.६.४.४८)
**'विज्ञानशक्तिरहमासमनन्तशक्तेः'** (भाग.३.९.२४ ),
**'तुर्यं तत् सर्वदृक् सदा'** (माण्डू.खं २.३),
**'आत्मानमन्यं च स वेद विद्वान्'**,
**'अन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः'** (भाग.१.१८.२१)
**'ऐश्वर्यस्य समग्रस्य'** (वि.पु.),
**'अतीव परिपूर्णं ते सुखं ज्ञानं च सौभगम् ।
यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः परः'** इत्यादिभ्यः ॥

**भावप्रदीपिका** (प.टी.)– परविद्यासूचितब्रह्मणः सदेहत्वं साधयति । द्वितीयं दूषयति– **अतिपरिपूर्णेति** ॥ आदिपदेन वैराग्यादयो गुणाः । भगवतोऽन्यदुत्तममिति व्याहतिरित्यर्थः । प्रवृत्तिनिमित्तशून्येऽपि भगवच्छब्दो हरावुपचारेण किं न स्यात् ? इत्यत

श्लोकः ७२

आह– **पराऽस्येत्यादिना** ॥ आनन्दं ब्रह्मणः इत्यादावानन्दस्य परिपूर्णता **न** प्रतीयत इत्यत आह– **एतस्येति** ॥ श्रीरप्यनन्तेत्यत आह– **आनन्देति** ॥ आदिपदोक्तानन्तगुणत्वे प्रमाणमाह– **मयीति** ॥ **'पराऽस्य'** इति शक्तेरुत्तमत्वमेवोक्तम् । अनन्तत्वं चाह– विज्ञानशक्तिरिति ॥ सर्वज्ञत्वं न केवलं मूलरूपस्येत्याह– **तुर्यमिति** ॥ ईश्वरज्ञानं सविषयमपि नात्मविषयमिति केचित् । तान् प्रत्याह– **आत्मानमिति** ॥ एतद्भगवत्त्वमन्यस्यापि किं न स्यात् ? इत्यत आह– **अन्यतम इति** ॥ भगवच्छब्दस्यायमर्थः कुतः ? इत्यत आह– **ऐश्वर्यस्येति** ॥ एतद्वचनेऽप्यानन्दशक्त्याद्यनन्तगुणोपलक्षणं सर्वोपसंहाररूपं प्रमाणमाह– **अतीवेति** ॥ तस्मान्न भगवतोऽन्यत् परं ब्रह्मेति सिद्धम् ॥

**प्रमेयदीपिका (ज.टी.)**– प्राक् भगवतोऽन्यस्योत्तमत्वं वाक्यविरुद्धमित्युक्तम् । इदानीं व्याहतं च तदिति भावेन आह– **अतिपरिपूर्णतमेति** ॥ अत्यादिशब्दैर्निरतिशयत्वं द्योत्यते । ऐश्वर्यं वशित्वम् । श्रीः कान्तिः ॥ परमेश्वरे भगवच्छब्दस्यौपचारिकत्वपरिहारायैषां गुणानां सद्भावे प्रमाणान्याह– **पराऽस्येति** ॥ 'आनन्दं ब्रह्मणः' इत्यत्र 'यतो वाचः' (तै.उ.२.९) इति पूर्ववाक्यमप्यभिप्रेतम् । अमितशब्दात् परं चन्द्रशब्दोऽध्याहार्यः । द्रष्टृपुरुषयोग्यताभेदात् त्रिधोक्तिः ॥ ऐश्वर्याद्यनन्तगुणत्वे **'मयि'** इति प्रमाणम् । सङ्ख्यापरिमाणाभ्यां गुणानामानन्त्यम् अनेनोच्यते ॥ शक्तेः परत्वं प्रागुक्तम् । तदस्पष्टमित्यतः– **विज्ञानेति** ॥ ज्ञानस्यापरोक्षरूपताप्रतिपादनाय– **तुर्यमिति** ॥ ईश्वरो नात्मानं वेत्ति कर्तृकर्मभावविरोधादित्येतन्निरासाय– **आत्मानमिति** ॥ ईश्वरे भगवच्छब्दस्यौपचारिकत्वासम्भवं प्रदर्शयितुं तदन्यस्य तच्छब्दार्थतानिरासाय– **अन्यतम इति** ॥ अन्य एव अन्यतमः ॥ भगवच्छब्दस्यायमर्थ इत्यत्र **'ऐश्वर्यस्य'** इति प्रमाणम् । अत्र षण्णामित्युपलक्षणम् । षाड्गुण्ये सर्वगुणान्तर्भावो वा । तद्वान् भगवानिति प्रसिद्धमेव । भगवत्त्वात् स एव सर्वोत्तम इति ॥ समग्रार्थे– **अतीवेति** ॥ यत् अन्येन करिष्यामीति स्मर्तुं बुद्धिस्थीकर्तुं वा अयुक्तं तच्च त्वं कर्तुं शक्तः ॥

**भावबोधः (र.टि.)**– 'अतिपरिपूर्णतया' इति भाष्ये ज्ञानादिगुणानामतिशयितत्वम् 'अति' इत्याद्यैकैकेनैव प्रतिपादयितुं शक्यते, पदत्रयोपादानं किमर्थमित्यत आह– **अत्यादिशब्दैरिति** ॥ **पूर्ववाक्यमिति** ॥ तेनानन्दस्य निरतिशयत्वं सिद्ध्यतीति भावः । अमितशब्दार्थे

सहस्रत्वादेरन्तर्भावात् 'सहस्रलक्ष' इति किमर्थमुक्तमित्यत आह– **द्रष्टृपुरुषेति** ।। 'अनन्तगुणः' 'गुणतोऽनन्त' इत्यनयोरर्थभेदमाह– **सङ्ख्यापरिमाणाभ्यामिति** ।। **अविस्पष्टमिति** ।। परशब्दस्यानेकार्थत्वादिति भावः । **ज्ञानस्यापरोक्षरूपतेति** ।। सर्वज्ञपदेन सर्वविषयकज्ञानमात्रलाभादिति भावः । 'आत्मानम्' इति वाक्योदाहरणस्य वैय्यर्थ्यनिरासायाह– **ईश्वरो नात्मनमिति** ।। 'अन्यतमो मुकुन्दात्' इत्यस्य भगवतो गुणवत्त्वाप्रतिपादकत्वात् किमर्थं तदुदाहरणम्? इत्यत आह– **ईश्वरे भगवच्छब्दस्येति** ।। एकत्र मुख्यार्थस्य शब्दस्यान्यत्रौपचारिकत्वमिति भावः । तमपः स्वार्थिकत्वमभिप्रेत्याह– **अन्य एवेति** ।। 'ऐश्वर्यस्य' इति वाक्येन विवक्षितार्थासिद्धेराह– **तद्वानिति** ।। 'अन्यतम' इत्यादिप्रमाणद्वयफलितार्थमाह– **भगवत्त्वादिति** ।। **समग्रार्थ इति** ।। 'अतीव' इति प्रतिज्ञात इत्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **पूर्ववाक्यमपीति**।। तेन वाङ्मनसागोचरत्वोक्त्या निरतिशयत्वसिद्धिरिति भावः ।। 'अनन्तगुणे गुणतोऽनन्ते' इत्यन्वयमुपेत्योभयोरर्थभेदमाह– **सङ्ख्यापरिमाणाभ्यामिति** ।। **तदस्पष्टमिति**।। परशब्दस्यान्यत्वाद्यर्थपरत्वस्यापि सम्भवादिति भावः ।। अन्यतमो न चेत् अन्यस्तु स्यादिति चोद्यनिरासायाह– **अन्य एवान्यतम इति** ।। स्वार्थकोयं 'तमप्' इति भावः ।। **सिद्धमेवेति** ।। अतो भगशब्दार्थ एवोक्तः स्मृतौ नतु मतुबर्थोपीति न प्रकृतासङ्गतिरिति भावः ।। 'अन्यतमः' इत्यादिवचनद्वयतात्पर्यमाह– **भगवत्त्वात् स एव सर्वोत्तम इति** ।। **समग्रार्थ इति** ।। 'अतिपरिपूर्ण' इति वाक्योक्ते सर्वस्मिन्नर्थ इत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– 'मुकुन्दादन्यः को नाम भगवत्पदार्थः न कोऽपि' इत्येतावतैव मुकुन्दादन्यस्य भगवत्पदार्थत्वाभावसिद्ध्या 'अन्यतमः' इति अतिशयार्थकतमपो वैयर्थ्यमित्यतः 'तद्धिताः' इति बहुवचनबललब्ध'विचित्रा तद्धितगतिः' इति वचनात् अतिशयार्थविहितस्य तमपः स्वार्थिकत्वस्यापि सम्भवान्नानुपपत्तिरित्याशयेन अन्यतम इत्येतद्व्याख्याति– **अन्य एवान्यतम इति** ।।

**भावरत्नकोशः (सु.टि.)**– ।। **प्राक्** 'न चान्यद् भगवत उत्तमं ब्रह्म' इत्यत्र । **वाक्यविरुद्धं** 'ब्रह्मेति परमात्मा' इत्याद्युदाहृतवाक्यविरुद्धम् । **तत्** भगवतोऽन्यस्योत्तमत्वम् । निरतिशयैश्वर्यादिशाली हि भगवच्छब्दार्थः। स एव च सर्वोत्तमः । भगवच्छब्दवाच्यत्वमङ्गीकृत्योत्तमत्वानङ्गीकारे व्याहतिः स्यादिति भावः । नन्वत्यादिशब्देष्वन्यतमेनैव विवक्षितार्थ-

श्लोकः ७२

लाभसम्भवाद् 'अति''परि' इत्युपसर्गद्वयं, तमप्प्रत्ययश्च व्यर्थ इत्याशङ्क्य शब्दाधिक्या-दर्थाधिक्यमत्राभिसंहितमित्याह– **अत्यादिशब्दैरिति** ॥

ननु 'अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशत्वं वशित्वं च'

इत्यष्टावैश्वर्याणि प्रसिद्धानि । तत्र तावदणिमादिचतुष्टयमत्रैश्वर्यशब्देन न विवक्षितम् । तस्य संयोगादिवत् सामान्यगुणस्य ज्ञानादिवदात्मविशेषगुणत्वाभावेन तत्समकक्ष्यतया ग्रहणा-योगात् । नापि प्राप्तिः । अन्येन्द्रियैर्दर्शनादिरूपायास्तस्या ज्ञानग्रहणेनैव लाभात् । नापि प्राकाम्यम् । यथेष्टानन्दसम्प्राप्तिरूपस्य वा सर्ववेदादिज्ञानरूपस्य वा तस्य निरतिशयानन्द-ज्ञानोक्त्यैव सिद्धेः । नापीशत्वम् । शक्त्युद्रेकरूपस्य तस्य निरतिशयशक्तिग्रहणेनैव गृहीतत्वा-दित्यत आह– **ऐश्वर्यं वशित्वमिति** ॥ 'असङ्ग एव च वशित्वम्' इत्येकादशतात्पर्यरीत्या 'वशित्वं चाप्यलोलता' इति प्रमाणोक्तमनासक्तिरूपमत्र वशित्वं ग्राह्यम् । स्वातन्त्र्यापरपर्यायं वशित्वमेवात्रैश्वर्यशब्देन विवक्षितमित्यर्थ इत्यप्याहुः ॥

गुणवर्णनप्रस्तावे लक्ष्मीग्रहणमसङ्गतमित्यतः 'सहस्रलक्षामितकान्तिकान्तः' इति वक्ष्यमाणप्रमाणानुसारेण श्रीशब्दार्थमाह– **श्रीः कान्तिरिति** ॥ 'श्रीरिन्दिरायां शोभायां स्यात् सम्पत्तिलवङ्गयोः' इत्यभिधानेन शोभाशब्दिता कान्तिरत्र ग्राह्येति भावः । ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रियेति भाष्यार्थः । 'आनन्दं ब्रह्मणः' इति वाक्ये ब्रह्मण आनन्दं विद्वानभयं मोक्षमाप्नोतीत्युच्यते न पुनर्निरतिशयत्वमानन्दस्येति न प्रकृतोपयोग इत्यत आह– **आनन्दं ब्रह्मण इत्यत्रेति** ॥ तेनावाङ्मनसगोचरत्वोक्त्या निरतिशयत्वसिद्धिरिति भावः ।

'स्मरेत यामिनीनाथसहस्रामितकान्तिमत्',
'स्वनन्तचन्द्राधिककान्तिकान्ते', 'चन्द्रौघकान्तिम्',
'ध्यायेद् रवीन्दुकरमिन्दुसहस्रलक्षकान्तिम्'

इत्यादौ कान्तिवर्णनप्रस्तावे चन्द्रस्यैवोपमानत्वदर्शनादत्रापि स एव प्रतिसम्बन्धितया ग्रहणमर्हतीति भावेन आह– **अमितशब्दात् परश्चन्द्रशब्द इति** ॥ 'श्यामं रवीन्द्वमितदीधिति-कान्तियुक्तम्' इत्यादौ सूर्यग्रहणेऽपि रविशब्दार्थस्य दीधितिशब्दार्थान्वयित्वमेव । इन्दु-

शब्दार्थस्य कान्तिशब्दार्थान्वय इति सूर्यः किमिति नोपात्त इति न चोद्यावकाशः । अमित-शब्दार्थे सहस्रादेरन्तर्भावाद् व्यर्थं सहस्रादिग्रहणम् । सहस्रचन्द्रकान्तेर्लक्षचन्द्रकान्तित्वस्य लक्षचन्द्रकान्तेरमितचन्द्रकान्तित्वस्य दुर्निरूपत्वं चेत्यत आह– **द्रष्टृपुरुषेति** ॥ केचित् सहस्रचन्द्रकान्तित्वदर्शिनः, अन्ये लक्षचन्द्रकान्तित्वदर्शिनः, अपरेऽमितचन्द्रकान्तित्व-दर्शनयोग्या इति भगवदपरोक्षिपुरुषयोग्यताभेदादित्यर्थः ॥

ज्ञानादौ विशिष्य प्रमाणोक्तिवदैश्वर्ये तदनुक्तेस्तल्लाभायाह– **ऐश्वर्याद्यनन्तेति** । 'अनन्त-गुणे', 'गुणतोऽनन्ते' इति पुनरुक्तिरित्याशङ्क्य तयोरर्थभेदमाह– **सङ्ख्यापरिमाणाभ्यामिति** ॥ **परिमाणम्** इयत्ता । अनन्ता असङ्ख्याता गुणा यस्यासावनन्तगुण इति सङ्ख्यया गुणानाम् अन्तवत्त्वाभावः, 'गुणतोऽनन्ते' इति गुणानां प्रत्येकमनवधिकत्वमियत्ताशून्यत्वमभिप्रेयते । तथा च षष्ठस्कन्धतात्पर्ये

'प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते ।
तदानन्त्यं तु गुणतः ते चानन्ता हि सङ्ख्यया ।
अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च' इति ॥

॥**'मयि'** इति षष्ठस्कन्धस्थं भगवद्वाक्यम् । **मयि** मम नाभौ । **अनन्ते गुणतः** इति गुणानां प्रत्येकमानन्त्यमुच्यते । यदासीत् पद्मं ततः 'स्वयम्भूः समभूदजः' इति तत्त्वोद्योत-टीकारीत्या व्याख्येयम् । **प्राक्** 'पराऽस्य शक्तिः' इत्यत्र । **अस्पष्टमिति** ॥ परशब्दस्यानेकार्थ-त्वेन तेन शक्तेरानन्त्यालाभादिति भावः । **विज्ञानेति** ॥

'नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः'

इति तृतीयस्कन्धे ब्रह्मवाक्यं शक्त्यानन्त्ये प्रमाणमिति वर्तते । **ज्ञानस्य** 'यः सर्वज्ञः' इत्युक्तसर्वविषयकज्ञानस्य । **तुर्यमितीति** ॥ 'प्रमाणम्' इत्यनुवर्तते । 'आत्मानम्' इति वाक्योदाहरणस्य सार्थक्याय शङ्कां दर्शयति– **ईश्वर इति** ॥ 'सर्वज्ञः' इति, 'सर्ववित्' इति च यत् सर्वदर्शनमभिप्रेतं तत्र सर्वमध्यपातिनं स्वात्मानमीश्वरो वेत्ति न वा ? नेति पक्षे सर्वापरोक्ष-दृक्त्वं न स्यात् । आद्य एकस्यां क्रियायामेकस्य कर्तृत्वं कर्मत्वं च विप्रतिषेधादयुक्तमित्यर्थः ॥

श्लोकः ७२

ननु 'सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः' इति भागवतवाक्येनेश्वरे गुणवत्त्वाप्रतिपादनात् तदुदाहरणमप्रयोजनमित्यत आह– **ईश्वर इति** ॥ **तच्छब्दार्थतेति** । सिंहादिशब्दस्यैकत्र मुख्यार्थस्यैवान्यत्रौपचारिकत्वदर्शनेन मुकुन्दादन्यस्य भगवच्छब्द-मुख्यार्थस्याप्रामाणिकत्वान्न मुकुन्दे भगवच्छब्दस्यौपचारिकत्वमिति भावः । नन्वन्यतम-निषेधेऽन्यसद्भावः स्यात् । तथा च कथमनेनेश्वरान्यस्य भगवच्छब्दार्थत्वाभावः? कथं च 'मुकुन्दात्' इति पञ्चमी? अन्यतमशब्दयोगे तद्विधायकशास्त्राभावादित्यत आह– **अन्य एवेति** ॥ नायमन्यतमशब्दोऽव्युत्पन्नप्रातिपदिकः । किन्तु स्वार्थिकतमप्प्रत्ययान्तोऽन्यार्थः । तथा च ईश्वरान्यस्य भगवच्छब्दार्थत्वाभावसिद्धिः । 'अन्यारादितरर्ते' इति सूत्रेणान्य-शब्दार्थैकैतद्योगेऽपि पञ्चमीति भावः । न च वाच्यं तमपः स्वार्थिकत्वमप्रामाणिकमिति । 'छान्दसत्त्वाच्छ्रेष्ठतमायेति स्वार्थिकस्तमब् द्रष्टव्यः' इति हरदत्तवचनस्य प्रमाणत्वात्, ज्ञापकसिद्धत्वाच्च । तथा हि । 'द्विवचनविभज्योपपदे तरबीयसुनौ' 'अतिशायने तमबिष्ठनौ' इत्यातिशायनिकप्रकरण एव 'तादी घः' इति वा 'पितौ घः' इति वा क्रियतां लाघवादित्या-शङ्क्य प्रकरणोत्कर्षेणेह सञ्ज्ञाकरणमन्योऽपि तरबस्तीति ज्ञापनार्थम् । स चानिर्दिष्टार्थत्वात् स्वार्थे भवति । तेन 'अल्पाच्तरम्', 'लोपश्च बलवत्तरः' इत्यादि सिद्ध्यतीति समाधानमुक्तं हरदत्तेन । तेन समानन्यायत्वात् तमबपि स्वार्थिकोऽस्तीति ज्ञायते । शब्दकौस्तुभकारेण तु सामान्यापेक्षं ज्ञापकमाश्रित्य ईयसुनोऽपि स्वार्थिकत्वमभ्युपगम्य 'अहो महीयस्तव साहसिक्यम्' इत्यादयः प्रयोगाः समर्थनीया इत्युक्तम् । तेनापि तमपः स्वार्थिकत्वं सिद्ध्यतीति ॥ **अयमर्थ** इत्यत्र भाषितपूर्णतमज्ञानैश्वर्यादिकमभिधेयमित्यत्र ॥

ननु कथमेतत् ? आनन्दशक्त्यादेरनभिधानादित्यत आह– **अत्रेति** ॥ लक्षणां विना पक्षान्तरमाह– **षाड्गुण्य इति** ॥ षड्गुणा एव षाड्गुण्यम् । अन्तर्भावप्रकारस्तु 'यादृशानन्द-कामः स्यात्' इति शास्त्रोक्तेः 'यद्यद्विषयभोगेन यो य आनन्दः प्राप्तव्यः तत्तद्विषयभोगं विनाऽपि तत्तदानन्दकामनायां तत्तदानन्दावाप्तिः प्राकाम्यम्' इत्युक्तलक्षणे 'यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति गीयते' इत्युक्तलक्षणे वा प्राकाम्ये उक्ताष्टैश्वर्यमध्यपातिन्यानन्दोऽन्तर्भवति । 'पूर्णशक्तेः कोटिगुणशक्त्युद्रेकस्तथेशिता' इत्युक्तलक्षणे शक्त्युद्रेकरूपैश्वर्यभेदे ईशितृत्वे शक्तिरन्तर्भवति । प्राकाश्यापरनामकज्ञानविज्ञानशब्दितसार्वज्ञ्ये दूरश्रवणदर्शनं, त्रिकालज्ञत्वं,

परचित्ताद्यभिज्ञत्वं चान्तर्भवति । एवं वीर्यादिशब्दिते आरब्धान्तगमनादावाज्ञाप्रतिहत-गत्यादेरन्तर्भाव इत्येकादशतात्पर्योक्तरीत्या द्रष्टव्यः ।

ननु भगशब्दार्थ एवानेनोक्तो न तु भगवच्छब्दस्यायमर्थ इति प्रकृतोऽर्थ इत्यसङ्गतिरित्यत आह– **तद्वानिति** ॥ भगवतोऽन्यस्योत्तमत्वं मानविरुद्धं व्याहतं चेत्युक्तमुपपाद्योपसंहर्तव्यम् । तच्च न भाष्ये दृश्यत इत्यत आह– **भगवत्त्वात् स एव सर्वोत्तम इति** ॥ अनेन 'अन्यतमः' इत्यादिवचनद्वयतात्पर्यमुक्तं भवति । **समग्रार्थे** 'अतिपरिपूर्णतम' इत्यादिवाक्योक्तसमग्रार्थे । 'भगवत्त्वात् स एव सर्वोत्तमः' इति समग्रार्थ इत्येकमेव वाक्यम् । वाशब्दं घटयितुं संयोजयति– **बुद्धिस्थीकर्तुं वेति** ॥ बुद्धिमागमयितुमित्यर्थः । आवृत्त्या कर्तुं शक्तः अत एव परः सर्वोत्तम इति भाष्यार्थः । यद्वा, अन्येन कर्तुमत्ययुक्तमशक्यं स्मर्तुं वाऽत्ययुक्तमित्यत्र स्मरणशब्देन मानसप्रत्यक्षजा स्मृतिर्नात्र ग्राह्या । पूर्वमननुभूतत्वेन संस्कारायोगात् । किन्तु सङ्कल्प इति भावेन आह– **यदन्येनेति** ॥ तस्यैव विवरणम्– **बुद्धिस्थीकर्तुमिति** ॥

**भावदीपिका (श्री.टि.)– ॥ व्याहतं चेति ॥** सर्वोत्तमत्वाद्यर्थको हि भगवच्छब्दः । तथाच भगवत्त्वमङ्गीकृत्य तस्य सर्वोत्तमत्वानङ्गीकारे व्याहतिरित्यर्थः ॥ ननु ज्ञानादिगुणा-नामतिशयितत्वमतीत्याद्येकैकेन प्रतिपादयितुं शक्यते । 'अतिपरिपूर्णतम' इति पदत्रयोपादानं तु किमर्थम्? इत्यत आह– **अत्यादिशब्दैरिति** ॥ 'सहस्रलक्ष' इति वक्ष्यमाणप्रमाणानुसारे-णाऽह– **श्रीः कान्तिरिति** ॥ ननु 'आनन्दं ब्रह्मण' इत्यत्राऽनन्दमात्रस्य ब्रह्मणि सद्भावः प्रतीयते, नतु तस्याऽनन्दस्य निरतिशयत्वमत आह– **आनन्दं ब्रह्मण इत्यत्रेति** ॥ तथाच 'यतो वाचः' इति पूर्ववाक्ये आनन्दस्य मनोवागगोचरत्वोक्त्या निरतिशयत्वं लभ्यत इति भावः॥

ननु सहस्रलक्षामितचन्द्रकान्तिवत् कान्तत्वं मनोहरत्वमेकमेवाधिकारिणं प्रति कथम् ? अयोग्यत्वादित्यत आह– **द्रष्ट्रिति** ॥ तथाच केषाञ्चित् सहस्रचन्द्रकान्तिकान्तः, अन्येषां लक्षचन्द्रकान्तिकान्तः, परेषाममितचन्द्रकान्तिकान्त इति द्रष्टव्यम् । केचिद् 'अमितशब्दार्थे सहस्रत्वादे-रन्तर्भावात् 'सहस्रलक्ष' इति किमर्थमुक्तमित्यत आह– द्रष्टृपुरुषेति' इत्याहुः ॥ 'अनन्तगुणे' 'गुणतोऽनन्ते' इति पुनरुक्तिरित्यत आह– **सङ्ख्येति** ॥ 'अनन्तगुण' इत्यत्रानन्तशब्देन गुणानामन्तः सङ्ख्या नास्तीत्युच्यते । 'गुणतोऽनन्ते' इत्यत्र तु गुणानामन्तः

परिमाणं परिमितिः सीमा नास्तीत्युच्यते । एकैकोऽपि गुणः प्रत्येकं प्रत्येकमपरिच्छिन्न इत्यर्थः । यथोक्तं षष्ठस्कन्धगतैतच्छ्लोकतात्पर्ये

'प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते ।
तदानन्त्यं हि गुणतस्ते चानन्ता हि सङ्ख्यया' इति ॥

॥ **प्रागुक्तमिति** ॥ 'पराऽस्य शक्तिः' इत्यनेनेत्यर्थः ॥ **तदस्पष्टमिति** ॥ परशब्दस्यानेकार्थत्वेनानन्तत्वलाभादिति भावः ॥ **विज्ञानेतीति** ॥ तृतीयस्कन्धे ब्रह्मवाक्यमिदम् ॥ **अपरोक्षरूपत्वेति** ॥ 'यः **सर्वज्ञ**' इत्यत्र सर्वविषयकज्ञानमात्रलाभेन तस्यापरोक्षत्वालाभादिति भावः ॥ **नाऽत्मानमिति** ॥ तथाच सर्वज्ञत्वं न युक्तमिति भावः ॥ **कर्तृकर्मेति** ॥ कर्तृत्वकर्मत्वयोर्भेदव्याप्तत्वेन तयोरेकत्र समावेशो विरुद्ध इत्यर्थः ॥ **आत्मानमितीति** ॥ तथाच कर्तृकर्मणोर्भेद औत्सर्गिकः । अपवादप्रमाणे सत्यभेदोऽपि भवति । प्रकृते च श्रुत्याऽभेद एवोच्यत इति न विरोध इति भावः । **यथोक्तम्** 'कर्मकर्त्रोरुत्सर्गतो भिदा । अभेदोऽपि विशेषे स्यात्' इति । अत्र विशेषोऽपवादकप्रमाणम् । ननु 'अन्यतमो मुकुन्दात्' इत्यंशस्य भगवतो गुणवत्त्वाप्रतिपादकत्वात् किमर्थं तदुदाहरणम्? इत्यत आह– **ईश्वर इति** ॥

**तच्छब्दार्थतेति** ॥ तच्छब्दमुख्यार्थतेत्यर्थः । तथाचैकत्र मुख्यार्थस्यैव शब्दस्यान्यत्रौपचारिकत्वदर्शनेन मुकुन्दादन्यस्य भगवच्छब्दमुख्यार्थत्वाभावान्न मुकुन्दे भगवच्छब्दस्यौपचारिकत्वं सम्भवतीति भावः । नन्वन्यतमनिषेधेऽन्यसद्भावप्राप्तेस्तथा 'एतेष्वन्यतमः' इत्यादाविव सप्तम्यन्तपदस्यैवापेक्षितत्वेन 'मुकुन्दात्' इति पञ्चम्यन्तावध्युक्त्ययोगात्, अतस्तमपः स्वार्थिकत्वमभिप्रेत्याऽह– **अन्य एवेति** ॥ तत्र चान्यत्वस्यावधिसापेक्षत्वात् 'मुकुन्दात्' इति युक्तमिति भावः ॥ **अयमेवेति** ॥ अतिपरिपूर्णतमेत्यादिनोक्त एवेत्यर्थः ॥

ननु पूर्वं 'शक्त्यादिमांश्च भगवान्' इत्यैश्वर्याद्यनन्तगुणवत्त्वं भगवच्छब्दार्थ इत्यभिप्रेतम् । तत्र कथं 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा'

इति वाक्यं प्रमाणीक्रियते । अत्र गुणषट्कस्यैवाभिधानादित्यत आह– **अत्र षण्णामितीति** ॥ पक्षान्तरमाह– **षाड्गुण्य इति** ॥ अत्र ष्यञ् स्वार्थे । तथाच सुखमेव

सौख्यमितिवत् षड्गुणा एव षाड्गुण्यं, तत्र सर्वगुणानामन्तर्भावाद् षड्गुणानां भगशब्दार्थत्वे सर्वगुणानामपि तदर्थत्वं प्राप्तमेवेत्याशयः । यथोक्तं यादवगिरिमाहात्म्ये

'विश्वान्तर्यामिबालस्य यथा हि जठरे जगत् ।
षाड्गुण्योदरमाश्रित्य वर्तन्ते गुणकोटय' इति ।

तत्प्रकारश्च ब्रह्मणैव वेद्य इति हृदयम् ॥ ननु भगवच्छब्दस्यायमेवार्थ इत्यत्र कथमिदं मानम्? प्रमाणे भगशब्दार्थस्यैवोक्तेरित्यत आह– **तद्वानिति** ॥ 'अन्यतमः', 'ऐश्वर्यस्य' इति प्रमाणद्वयफलितार्थमाह– **भगवत्त्वादिति** ॥ **समग्रार्थ इति** ॥ 'अतिपरिपूर्णतमः' इति प्रतिज्ञाते समग्रार्थ इत्यर्थः । अन्येन स्मर्तुमित्याद्यन्वयः । वाशब्दः समुच्चयमाह– **बुद्धिस्थीकर्तुमिति** ॥ अनुभवेन विषयीकर्तुमित्यर्थः ॥ **शक्त इति** ॥ अतस्त्वं परः सर्वोत्तम इत्यर्थः ॥

**भाष्ये सौभगमिति** ॥ 'यस्मिन् सति जना वशा भवन्ति तत् सौभगं द्वात्रिंशल्लक्षणेष्वेकम्' इति ऋग्भाष्यटीकायां 'को विश्वासो भग' इत्यत्र प्रतिपादितमित्यनुसन्धेयम् ॥

**भावप्रकाशः (कृ.टि.)**– नन्वेकैकेनातिशयप्रतिपादनसम्भवात् पदत्रयोपादानं व्यर्थमित्यत आह– **अत्यादिशब्दैरिति** ॥ अतिपरितमशब्दैरित्यर्थः । उपसर्गाणां द्योतकत्वमङ्गीकृत्येद-मुक्तम् । स्वमते वाचकत्वात् । यथोक्तम् । 'समितिह्युपसर्गेण परमुख्यार्थतोच्यते' इति । नन्वैश्वर्यमष्टधा । अणिमा, महिमा, गरिमा, लघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वं, वशित्वं चेति । तत्र न तावदणिमादिचतुष्टयमैश्वर्यपदेन विवक्षितं तस्य । संयोगादिवत् सामान्यगुणस्य ज्ञानादिवदात्मविशेषगुणत्वाभावेन तत्समकक्षतया ग्रहणायोगात् । नापि प्राप्तिः । अन्येन्द्रियैः दर्शनादिरूपायाः तस्या ज्ञानग्रहेणैव लाभात् । नापि प्राकाम्यम् । यथेष्टानन्दसम्प्राप्तिरूपस्य वा सर्ववेदोदितज्ञानरूपस्य वा तस्य निरतिशयानन्दज्ञानोक्त्यैव लाभात् । नापीशित्वम् । शक्त्युद्रेकरूपस्य तस्य निरतिशयशक्तिग्रहणनैवोक्तत्वादित्यत आह– **ऐश्वर्यं वशित्वमिति** ॥ स्वातन्त्र्यमित्यर्थः । 'प्राप्तिः प्रकाम्यमीशित्वं वशित्वं चाष्टभूतयः' इत्यादिप्रसिद्ध्यानुगुण्याय 'स्वातन्त्र्यम्' इत्यनुक्त्वा 'वशित्वम्'इत्युक्तम् । तस्य च 'स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैः' इति प्रमाणान्तरे ज्ञानादिसमकक्षतया गृहीतत्वान्न काचित् क्षतिरिति बोध्यम् । यद्यपि 'गुणेष्वसङ्गो वशिता वशित्वं चाप्यलोलता' इत्येकादशस्कन्धतात्पर्ययोः 'विषयासक्त्यभावो वशित्वम् इत्युक्तम् । तथाऽपि तस्य दोषाभावत्वान्न ज्ञानादिगुणसमकक्षतया ग्रहणं कृतमिति विवेक्तव्यम् ॥

श्लोकः ७२

ननु गुणप्रकरणे लक्ष्मीग्रहणमसङ्गतम् । अग्रिमप्रमाणाननुगुणं चेत्यत आह– **श्रीः कान्तिरिति** ।। भाष्योदाहृतभागमात्रेण निरतिशयत्वासिद्धेराह– **पूर्ववाक्यमिति** ।।

'अधिदैवे ज्वलत्कर्मा वह्निः सूर्यस्तु तापकः । सोमः कान्तौ वृष्टिकर्मा वासवः' इति बृहद्भाष्ये कान्तेः सोमव्यापारत्वस्योक्तत्वात् कान्तिशब्दस्वारस्यमाह– **चन्द्रशब्द इति** ।। अनेन सूर्यादिशब्दः कुतो नाध्याहृत इत्यपास्तम् । एतेन 'स्मरेत यामिनीनाथसहस्रामितकान्तिमत्' 'चन्द्रौघकान्तिम्' स्वनन्तचन्द्राधिकान्तिकान्तम्' 'श्यामं रविद्धमितदीधितिकान्तियुक्तम्' इत्याद्याचार्यप्रयोगेषु कान्तिचन्द्रशब्दयोः सहप्रयोगो दीधितिपदवैयर्थ्याभावश्च समर्थितो बोध्यः । ननु सहस्रलक्षेति व्यर्थम् । अमितेत्यनेनैवतल्लाभादित्यत आह– **द्रष्टिति** ।। **ऐश्वर्यादिति** ।। यद्यपि प्रमाणानुसारादनन्तगुणत्व इत्येव वक्तव्यम् । तथापि ज्ञानादौ विशिष्यप्रमाणोदाहरणवदैश्वर्ये तदभावदेवमुक्तम् । नन्वनन्तगुणे गुणतोऽनन्त इति पुनरुक्तमित्याशङ्क्य प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते । तदानन्तर्यं तु गुणतस्ते चानन्ता हि सङ्ख्यया । अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव चेति षष्ठस्कन्धतात्पर्यं हृदिकृत्वा तयोरर्थभेदमाह– **सङ्ख्येति** ।। **तदस्पष्टमिति** ।। परशब्दस्यानेकर्थत्वादिति भावः ।

**ज्ञानस्येति** ।। सर्वज्ञपदेन सर्वविषयज्ञानमात्रलाभादिति भावः । 'आत्मानम्' इति वाक्योदाहरणवैयर्थ्यशङ्कां निरस्यति– **ईश्वरो नात्मानमिति** ।। ननु 'अन्यतमो मुकुन्दात्' इत्यनेनेश्वरे गुणवत्वाप्रतिपादनाद् व्यर्थमुदाहरणमित्यत आह– **ईश्वरे भगवच्छब्दस्येति** ।। एकत्र मुख्यस्यैवान्यत्रौपचारिकत्वादिति भावः । ननु 'अन्यतमशब्दोऽव्युत्पन्नः स्वभावादेव बहुविषये निर्धारणे वर्तते' इति कैय्यटादयः । ततश्च 'अन्यतमः' इति वाक्येन कथमीश्वरान्यस्य भगवच्छब्दार्थस्य निरासः कथञ्च मुकुन्दादिति पञ्चमी । तद्विधायकाभावादित्यत आह– **अन्य एवेति** ।। नायमन्यतमशब्दोऽव्युत्पन्नः । किन्तु स्वार्थिकतमप्प्रत्ययान्तः । स चान्यत्वार्थः । तथा च ईश्वरादन्यस्य भगवच्छब्दार्थत्वाभावसिद्धिः? । 'अन्यारात्' इति सूत्रेणान्यत्वार्थकशब्दयोगे पञ्चमीविधानात् तदुपपत्तिश्चेति भावः । नच तमपः स्वार्थिकत्वमप्रामाणिकं ज्ञापकसिद्धत्वात् । तथा हि– 'शतृशानच्प्रकरणे 'तौ सत्' इतिवत् । तरप्तमप्प्रकरण एव 'तादी घ' इति कर्तव्ये प्रकरणान्तरे 'तरप्तमपौ घ' इति संज्ञाकरणमन्योऽपि तरवस्तीति ज्ञापनार्थम् । स चानिर्दिष्टार्थत्वात् स्वार्थे भवति' इत्युक्तं शब्दकौस्तुभादौ । तेन समानन्यायत्वात् तमबपि स्वार्थिकोऽस्तीति सिद्धमिति दिक् ।।

ननु 'ऐश्वर्यस्य' इति वाक्यं कथमुक्तार्थे प्रमाणम्? आनन्दादीनामनुक्तेरित्यत आह– **अत्रेति ॥ सर्वगुणान्तर्भावो वेति** ॥ तथा हि– ऐश्वर्यमणिमादिभेदेनाष्टविधम् । तत्र यथेष्टानन्दसम्प्राप्तिरूपप्राकम्ये आनन्दोऽन्तर्भवति । शक्त्युद्रेकेशित्वे च शक्तिः । एवमन्यस्याप्यन्तर्भावो बोध्य इत्यर्थः । ननु भगशब्दार्थ एवानेनोक्तो न तु भगवच्छब्दार्थ इत्यत आह– **तद्वानिति** ॥ ननु भगवतोऽन्यस्योत्तमत्वं प्रमाणविरुद्धं व्याहतं चेत्युपपाद्योपसंहर्तव्यम्। न च तद्भाष्येस्तीत्यत आह– **भगवत्त्वादिति ॥ समग्रार्थ इति** ॥ अतिपरिपूर्णतमेत्याद्युक्तार्थ इत्यर्थः ॥

## भाष्यम्

**तानि च सर्वाण्यन्योन्यस्वरूपाणि । 'विज्ञानमानन्दं ब्रह्म' (बृ.उ.३.९.२८), 'आनन्दो ब्रह्मेति व्यजानात्' (तै.उ.३३), 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२.२), 'यस्य ज्ञानमयं तपः' (मुं.१.१.९), 'स मा भग प्रविश स्वाहा' (तै.उ.१.११),**

'न तस्य प्राकृता मूर्तिः मांसमेदोऽस्थिसम्भवा ॥
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः ॥'

'सदेहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ॥
ज्ञानज्ञानः सुखसुःखः स विष्णुः परमोऽक्षरः' इति पैङ्गिखिलेषु ॥

'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ॥' इत्यादि ब्रह्मवैवर्ते ॥

भावप्रदीपिका (प.टी.)– मा भूदन्यद्ब्रह्मैव, गुणविषये यदवशिष्यते तदेव ब्रह्मेत्यत आह– **तानि चेति** ॥ तदेव प्रमाणैः साधयति– **विज्ञानमिति** ॥ तस्य देहित्वेऽन्तवत्त्वादीत्यत आह– **न तस्येति** ॥

भावप्रकाशिका (न.टी.)– ननु भवतु सर्वपुराणादिप्रसिद्धा... स्युरेवेत्यत आह– **न तस्येत्यादि** ॥ अप्राकृतविग्रहत्वान्न तत्प्रयुक्ता दोषा भगवतः । न चैतद्ध्यानयोगादि-

श्लोकः ७२
परितुष्टेश्वरप्रसादात् किन्तु ईश्वरत्वात्, अतः सत्यम् । 'सच्छब्द उत्तमं ब्रूयादानन्दंतिति वै वदेत् । येति ज्ञानं समुद्दिष्टम्' इत्युक्तेः सान्द्रपूर्णानन्दानुभवात्मक एव तद्देहः । एतदेव विवृणोति– **सद्देह इति** ॥ अत्र सच्छब्दोक्तसाधुभावापरपर्यायसर्वोत्तमत्वे सर्वे गुणाः अन्तर्भूताः । सर्वदोपराहित्यं चैवंविधदेहत्वात् । परमोऽक्षरः तद्देहतद्गुणादेः न किञ्चित् क्षरणमित्यर्थः । नित्यनिर्दोषः सन्नित्युच्यते । निर्दोषत्वात् सर्वगुणत्वाच्च सर्वगुणपूर्णो नारायण इत्यर्थः ॥

**प्रमेयदीपिका (ज.टी.)**– मतुपा ज्ञानादीनां भगवतो भेदः प्रतीतः । **'षण्णाम्'** इत्यादिना **परस्परं** च । तथा **'आकृतिर्भगवतः'** इत्युक्त्याऽकृतेश्च। तन्निरासार्थमाह– **तानीति** ॥ तत्र प्रमाणान्याह– **विज्ञानमिति** ॥ **तपः** आलोचनक्रिया । ज्ञानमयं ज्ञानात्मकमिति **धर्माणां परस्परभेदोक्तिः** ॥ **'प्राकृत'** इति ङीबभावः छान्दसः । अणञ्भ्यामन्यो वा प्रत्ययः ॥ **मांसमेदोऽस्थिभिः सम्भवो यस्याः सा तथोक्ता** । एतच्च **न योगित्वात्** । **किन्तु? ईश्वरत्वात्** । **अत एव विभुः** । **निर्दोषगुणात्मकविग्रहाद् अच्युतः** ॥ **'ज्ञानज्ञानः'** इत्यादेरतिशयितज्ञानादिरित्यर्थः । **तेन निर्दोषत्वादिना** ॥

**भावबोधः (र.टि.)**– ॥ **अणञ्भ्यामिति** ॥ ततश्च ङीपः प्राप्तिरेव नेति भावः । **न योगित्वादिति** ॥ नञः ईश्वरत्वादित्यत्रापि सम्बन्धभ्रमं निवारयति– **किन्त्वीश्वरत्वादिति** ॥ **अत एवेति** ॥ प्राकृतमूर्तिरहितत्वादेव, ईश्वरत्वादेवेत्यर्थः । 'सत्यरूप' इत्यस्य बुद्ध्या विवेकेनार्थमाह– **निर्दोषगुणात्मकविग्रहादिति** ॥ 'सत्यरूपादच्युतः' इति विग्रहमभिप्रेत्याह– **निर्दोषत्वादिनेति** ॥ 'नायं प्रकृतिनिर्मितः' इत्यनेन निर्दोषत्वलाभः । 'परिपूर्ण' इत्यनेनादि-शब्दोक्तगुणपूर्णत्वस्य लाभ इति भावः ॥

**भावदीपः (रा.टि.)**– 'आकृतिर्भगवतः इत्युक्तेः' इत्यत्र 'भगवदाकृतेर्भेदः प्रतीयते' इत्यनुषज्यते ॥ ननु प्रकृतेरियम् इत्यर्थे 'तस्येदम् '(पा.सू.४.३.१२०) इति सूत्रेणाणप्रत्यये 'टिड्ढाणञ्' (पा.सू.४.१.१५) इत्यादिना ङीप्प्रत्यये 'प्राकृती' इति भाव्यमित्यत आह– **ङीबभाव इति** ॥ 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्युक्तेरिति भावः ॥ 'अणञ्भ्यामन्यो वा' इति ॥ 'तद्धिताः' सूत्रेणाणप्रत्यये 'अजाद्यतष्टाप्'(पा.सू.४.१.४) इति टाप्प्रत्यय इति भावः ॥ 'सत्यरूपः' इति हेतुगर्भमिति भावेनार्थमाह– **निर्दोषेत्यादि** ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु प्रकृतेरियमिति वा विकार इति वा षष्ठ्यन्तात् प्रकृति-शब्दात् इदमर्थे विकारार्थे वा अणि वा अञि वा तद्धिते सति ञिति णिति तद्धिते परतः 'तद्धितेष्वचामादेः' इति आद्यचो वृद्धौ 'यस्येति च' इति इकारलोपे निष्पन्नप्राकृतशब्दस्य अणन्तत्वात् वा अञन्तत्वाद्वा स्त्रियां 'टिड्ढाणञ्' इति ङीपि 'यस्य' इत्यवर्णलोपे 'प्राकृती' इत्येव भवितव्यम् । 'प्राकृता' इति तु कथम्? इत्यतः 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति सर्वविधीनां छन्दसि वैकल्पिकत्वसिद्धेः 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति पुराणस्यापि छन्दस्तुल्यत्वाद्युक्तः स्त्रियामपि ङीबभावेन टाबित्याशयेनाह– **प्राकृतेति ङीबभावः छन्दस इति** ।। अत्र पक्षे छान्दसत्वं कल्पनीयं भवतीत्यपरितोषात् पक्षान्तरमाह– **अणञ्भ्यामन्यो वेति** ।। 'तद्धिताः' इति बहुवचनज्ञापिततद्धितगतिरिति वचनेन विकारार्थे णप्रत्यये णित्वादादि वृद्धौ पूर्ववदिवर्णलोपे निष्पन्नप्राकृतशब्दस्य अदन्ततया 'अजाद्यतष्टाप्' इति स्त्रियां टापि युक्तैव 'प्राकृता' इति रूपसिद्धिरिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** ।। **भेद इति** ।। 'तदस्यास्त्यस्मिन्' इति मतुपो विधानादिति भावः । युक्तिसमुच्चये तथाशब्दः । **इत्युक्तेरिति** ।। 'कथमन्यथा सर्वपुराणादिप्रसिद्धाऽऽकृति-र्भगवत उपपद्यते' इति भाष्यकारोक्तेराकृतेर्भगवतो भेदः प्रतीयत इत्यनुवर्त्य व्याख्येयम् । तानि सुखज्ञानादीनि । **अन्योन्यस्वरूपाणि** धर्मिभगवत्स्वरूपत्वं, सुखस्य ज्ञानस्वरूपत्वं, ज्ञानस्य सुखस्वरूपत्वमित्येवंरूपेणेति भाष्यार्थः स्फुटः । ननु 'तपः कृच्छ्रादिकर्म च' इति कोशात् कृच्छ्रचान्द्रायणाद्यनुष्ठानरूपकायक्लेशस्य कथं ज्ञानात्मकत्वमुच्यत इत्यत आह– **तप इति** ।। 'आलोचनम्' इति वक्तव्येऽपि यत् 'क्रिया' इत्याह– तत्तु 'स तपस्तप्त्वा । इद१ँसर्वमसृजत' इति श्रुतौ कथं तपस ईश्वरीयस्य सदातनस्य कादाचित्कत्वमुच्यते? इति शङ्कां सर्जनादिक्रिया-वदेतस्यापि क्रियात्वाद् व्यक्त्यव्यक्तिशालितया व्यक्त्यपेक्षया कादाचित्कत्वोक्तिरिति न्युदसितुम् । तस्माद् 'यस्य तपो ज्ञानस्वरूपं न त्वालोचनात्मकम्' इति कर्मनिर्णयटीकाविरोधस्तु प्राक् परिहृतोऽस्माभिः । **धर्माणां** क्रियाज्ञानादीनाम् ।। 'स मा भग' इत्यत्रैश्वर्यादिवाचिभगशब्देन भगवतः सम्बोधनादैश्वर्यादिगुणैर्भगवतोऽभेदः स्फुट इति भाष्यार्थः ।।

ननु 'तस्य विकारः' इत्यण्प्रत्ययान्तोऽयं प्राकृतशब्दः । अण्प्रत्ययान्तश्च 'टिड्ढाणञ्' इत्यादि शास्त्रविहितं ङीपमुत्पादयेदिति 'प्राकृती' इति वक्तव्यम् । तत् कथमाबन्तत्वमिति?

श्लोकः ७२

तत्राऽह– **ङीबभाव इति** ॥ भाषायां नित्योऽप्ययं ङीप् छन्दसि विकल्प्यते । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वैयाकरणोक्तेरिति भावः । छान्दसत्वव्याख्यानाननुशयादाह– **अणञ्भ्यामन्य इति** ॥ 'तद्धिताः' इति बहुवचनज्ञापितो णप्रत्यय उत्पाद्यः । स्त्रीत्वे च 'अजाद्यतष्टाप्' इति टापि 'प्राकृता' इति रूपमिति भावः । यद्यपि प्रकृतिशब्दादञ्प्रत्ययो नोत्पादयितुं शक्यः । यावता क्तिन्प्रत्ययान्तस्य तस्य नित्स्वरेणाऽद्युदात्ततया 'अनुदात्तादेश्च' इत्यञ्प्रत्ययविधायकं शास्त्रं न प्राप्नोति । तथाऽपि पलाशादित्वेन वा रजतादित्वेन वा 'ओरञ्' इत्यनुवर्तमाने 'पलाशादिभ्यो वा' इति सूत्रेण 'प्राणिरजतादिभ्योऽञ्' इति सूत्रेण वाऽञः प्राप्तिः सम्भवतीति शङ्कां निवर्तयितुमञो ग्रहणम् । अत एव काशिकायां 'पलाशादीनामनुदात्तादित्वात् प्राप्ते पलाशादिभ्योऽन्येषामप्राप्ते विभाषेयम्' इत्युक्तमित्याहुः ॥

वस्तुतस्तु पलाशादिगणे रजतादिगणे वा प्रकृतिशब्दस्य पाठाभावादञ्प्रत्ययो न प्राप्नोति । तथाऽपि अणञ्प्रत्यययोरुत्पादितयोर्हि ङीप् प्रसज्यते । येनोत्पादितेन ङीप् न वर्तते, प्रवर्तते च आदिवृद्धिस्स प्रत्यय उत्पाद्यः । स च 'तद्धिताः' इति णप्रत्यय एव । नान्यः । येन ङीप् स्यादिति ॥

मांसमेदोऽस्थीनि सम्भवन्ति यस्या इति व्युत्पत्तिभ्रमं वारयितुमाह– **मांसेति** ॥ 'समानाधिकरणानां बहुव्रीहिः' इति तु छन्दस्त्वान्न भवति । सम्यग् भवो यस्या इति वा **सम्भवा** । उत्पन्नेत्यर्थः । **एतच्च** अप्राकृतविग्रहयोगित्वम् । **न योगित्वात्** योगप्रभावलब्धातिशयत्वादित्यत्रैव नञः 'ईश्वरत्वात्' इत्यनेनाऽप्यन्वयभ्रमं वारयितुमाह– **किन्त्वीश्वरत्वादिति** ॥ योगित्वादप्राकृतविग्रहत्वमिति न भवति । किन्तु स्वाभाविकैश्वर्यबलादित्यर्थः । 'न योगित्वात् किन्त्वीश्वरत्वात्' इति प्राग् व्याख्यातमपीदं वचनमनुजिघृक्षयाऽविस्मरणाय पुनरिह व्याख्यातम् । **अत एव** ईश्वरत्वादेव । ननु 'सत्यमबाध्यस्वरूपं रूपं विग्रहो यस्य' इति विग्रहे यद् विग्रहस्य गुणात्मकत्वं वक्तव्यं न तदनेन प्रमाणेन लभ्यते । बहुव्रीहिणा विग्रहतद्वतोर्भेदः, विग्रहवत्त्वाद् देवदत्तवद् विनाशश्च प्रतीयते । अतो नेदं प्रकृतार्थे प्रमाणमित्याशङ्क्य 'सत्यरूपः' इति हेत्वर्थगर्भविशेषणमिति भावेन आह– **निर्दोषेति** ॥ 'सत्' इति निर्दोषत्वं, 'त्' इत्यानन्दः, 'या प्रापणे' इत्यतो 'यम् ' इत्यनेन ज्ञानं चोच्यते । तेन सर्वगुणोपलक्षणम् । 'रूपम्' इति तन्त्रम् । निर्दोषगुणात्मकविग्रहस्वरूपत्वं लभ्यते । 'आनन्दं तिति वै वदेत्'

इत्यादिवचनात् देवदत्तादेरेतादृशविग्रहाभावाच्युतिसम्भवेऽपि न भगवति तच्छङ्का। गुणात्मक-विग्रहस्वरूपत्वावेदकत्वात् प्रकृतार्थे प्रमाणत्वं चेति भावः । 'सत्यरूपाच्युतः' इति क्वचिद् भाष्यपाठः ॥

॥ **अतिशयितज्ञानादिरिति** ॥ जानन्तीति ज्ञानाः जानन्तः । नन्द्यादित्वात् कर्तरि ल्युः । 'कृत्यल्युटो बहुलम्' इति तत्र ल्युड् वा । ततः परस्याश्च पञ्चम्याः 'पञ्चमी भयेन' इत्यत्र 'पञ्चमी' इति योगविभागाङ्गीकारादुत्तरज्ञानशब्देनैवं निष्पन्नेन समासः । तेन 'ज्ञानज्ञानः' इत्यतिशयितज्ञानशालिता फलिता । आदिशब्देनातिशयितसुखता गृह्यते । अर्शआद्यजन्तं ज्ञानपदद्वयम् । तत्र ज्ञानेषु ज्ञान इति निर्धारणसप्तम्या 'सप्तमी' इति योगविभागात् समासः । तेन ज्ञानसुखातिशययोगित्वं पर्यवस्यतीत्यप्याहुः ॥

यत्तु दुर्घटवृत्तौ 'भीतभीत इव शीतमयूखः' इति भारविप्रयोगनिर्वाहः 'आधिक्ये द्वे भवतः' इति वार्तिकेनात्र द्वित्वम् । भीतत्वाधिक्यं द्वित्वेनोच्यते' इति वदता शरणदेवेन यथा कृतः तथाऽत्राप्याधिक्ये 'ज्ञानज्ञानः' इति द्विर्वचनम् । तदर्थोक्तिरतिशयितज्ञानादिरितीति व्याख्यानं तत्तु वार्तिकस्यैवाभावाद् दुर्घटवृत्तिकारादिभिरुक्तमतिरभसादिति मनोरमायां दूषितत्वा-दनादरणीयम् । अत एव तत्र 'भीतेभ्यो भीत इति व्याख्यानादतिभीत इति फलितम्' इति भारविप्रयोगः प्रकारान्तरेण निर्व्यूढः ॥

सन् निर्दोषो देहो यस्य तथोक्तः । सुखगन्धः सुखकरगन्धः । ज्ञानभाः न तु तैजसप्रकाश इति भाष्यशेषार्थः । यद्वा, सन् देहो विष्णुः सुखगन्धो विष्णुः ज्ञानभाः विष्णुः सन् पराक्रमो विष्णुः ज्ञानज्ञानः विष्णुः सुखसुखो विष्णुरिति योजनीयम् । तेन देहस्य गन्धगुणस्य च भगवदात्मकत्वं भासो ज्ञानात्मकत्वं पराक्रमस्य तद्रूपत्वं 'ज्ञानज्ञानः सुखसुखः' इत्यति-शयितसुखरूपत्वं च सिद्ध्यतीत्याहुः ॥

भाष्यपदमनूद्यार्थमाह– **तेन निर्दोषत्वादिनेति** ॥ 'नायं प्रकृतिनिर्मितः' इति प्रकृतिकृत-दोषराहित्यम्, आदिशब्देन 'परिपूर्णश्च' इत्युक्तगुणपूर्णत्वं च लभ्यत इति भावः । सदानन्द-देहत्वस्य नारायणपदेनालाभात्र तच्छब्देन तत्परामर्शः कृतः । तत्राऽनन्दस्य सत्त्वं सान्तत्व-सातिशयत्वादिराहित्यम् । निर्दोषत्वं गुणपूर्णत्वं च नारायणपदार्थ इति 'नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम्' इत्यादौ स्फुटमावेदितम् ।

श्लोकः ७२

**भावदीपिका (श्री.टि.)– ॥ मतुपेति ॥** अतीतवाक्ये भगवानिति मतुपेत्यर्थः ॥ **षण्णामिति ॥** बहुत्वसङ्ख्याया भेदाविनाभूतत्वादिति भावः । यथोक्तम् 'बहुत्वेनाविनाभावाद् भिन्नता नियमाद् भवेत्' इति ॥ **आकृतिर्भगवत इत्युक्त्येति ॥** 'कथमन्यथा सर्वपुराणादि-प्रसिद्धाऽऽकृतिर्भगवत उपपद्यते' इति वाक्य इत्यर्थः । आकृतेर्देहाद् भगवतो भेदः प्रतीत इति वर्तते । कायक्लेशादिरूपतपःप्रतीतिवारणायाऽह– **आलोचनक्रियेति ॥ धर्माणामिति ॥** तथाचात्र क्रियाया ज्ञानरूपत्वोक्त्या धर्माणां परस्परमभेद इत्यवधेयम् । 'स मा भग' इत्यत्र ऐश्वर्यादिवाचिभगशब्देनैव विशेषणाद् गुणानां भगवताऽभेद उक्त इति ज्ञेयम् । ननु प्रकृति-शब्दात् तद्धितेऽणूप्रत्ययेऽञ्प्रत्यये वा णकारस्य ञकारस्य वा लोपे भसञ्ज्ञकस्य इकारस्य 'यस्येति च' इति लोपे, 'अचो ञ्णिति' इति णित्त्वात् ञित्त्वाद् वा अकारस्य आकार-रूपवृद्धौ सत्यां 'प्राकृत' इति जाते 'टिड्ढाणञ्द्वयसच्' इत्यादिसूत्रेण ञित्त्वाद् वा णित्त्वाद् वा ङीपि ईकारमात्रं विहाय सर्वस्यापि लोपे प्राकृत्+ई ='प्राकृती' इति स्यात् । 'प्राकृता' इति तु कथम्? इत्यत आह– **प्राकृतेति ङीबभाव इति ॥** तथाच 'टिड्ढाण्' इत्यादिसूत्र-प्राप्तङीपोऽभावश्छान्दस इत्यर्थः ॥

समाधानान्तरमाह– **अणञ्भ्यामिति ॥** यदि प्रकृतिशब्दादणुप्रत्ययोऽञ्प्रत्ययो वा स्यात् तदोक्तसूत्रेण ङीपः प्राप्त्या 'प्राकृती' इति भवेत् । नचैवम् । किं नाम? अणुप्रत्ययाञ्-प्रत्ययाभ्यामन्य एव कश्चित् प्रत्यय आनीयते । स च णप्रत्ययः । तथाच प्रकृतिशब्दात् णप्रत्यये णकारलोपेनाकारमात्रे उर्वरिते सति भसञ्ज्ञकेकारलोपे णित्त्वादादिवृद्धौ प्राकृत्+अ 'प्राकृत' इति प्रातिपदिके सति पश्चात् स्त्रीत्वे विवक्षिते स्वाद्युत्पत्तौ 'प्राकृता' इति रूपमित्यर्थः । तथाचास्मिन् पक्षेऽणञ्भ्यामन्यस्यैव णप्रत्ययस्याङ्गीकारान्नोक्तसूत्रेण ङीपः प्राप्तिरित्यवधेयम् ॥

यद्वा, अणञ्भ्यामन्यः प्रत्ययः अक्प्रत्यय आनेयः । तथाच प्रकृतिशब्दादक्प्रत्यये ककारलोपे, 'किति च' इत्यत्र 'तद्धितेष्वचामादेः' इत्यनुवर्तते । तथाच किति प्रत्यये परे अचां मध्ये आदेरचो वृद्धिः स्यादिति सूत्रार्थः । तथाचाक्प्रत्ययस्य कित्त्वात् 'किति च' इति वृद्धौ भसञ्ज्ञकेकारलोपे प्राकृत्+अ 'प्राकृत' इति प्रातिपदिके स्त्रीत्वे विवक्षिते सति स्वाद्युत्पत्तौ 'प्राकृता' इति भवति । नचात्र 'किति च' इति कथं वृद्धिः? 'क्ङिति च' किति ङिति च प्रत्यये वृद्धिर्न स्यादिति निषेधादिति चेत्, सत्यम् । 'क्ङिति च' सूत्रस्याचां मध्ये आद्याचो

वृद्धिव्यतिरिक्तवृद्धिनिषेधकत्वेनाऽदिवृद्ध्यनिषेधकत्वात् । प्रकृते च 'किति च' इति आदिवृद्धेरुक्तत्वेन दोषाभावादिति । अत एव 'अचामादेः' इति विशिष्योक्तिरिति ज्ञेयम् ॥

नञः 'योगित्वात्' इत्यत्रेव 'ईश्वरत्वात्' इत्यत्रापि सम्बन्धभ्रमं वारयति– **किन्त्विति** ॥ योगित्वान्न भवतीति चेत्, तर्ह्यन्यत्राविद्यमानोऽयं महिमा तस्यैव कुतः? इत्याशयेन किन्त्विति प्रश्नः । उत्तरमाह– **ईश्वरत्वादिति** ॥ अघटितघटकसामर्थ्योपेतत्वात् 'न तस्य' इत्यादिमहिमा युज्यत इति भावः ॥ **अत एवेति** ॥ प्राकृतमूर्तिरहितत्वादेव, ईश्वरत्वादेवेति वेत्यर्थः। 'सत्यरूपादच्युतः' इति विग्रहमभिप्रेत्याऽह– **निर्दोषेति** ॥ 'निर्दोषपूर्णानन्दत्वाद् यमाहुः सत्यमच्युतम्' इति वचनाद् गुणशब्द आनन्दपरो द्रष्टव्यः । तथाच विभोर्भगवतो निर्दोषगुणात्मकविग्रहादच्युतत्वे ईश्वरत्वादिकं हेतुरिति भावः ॥ **इत्यादेरिति** ॥ 'सुखसुख' इत्यस्याप्यतिशयितसुख इत्यर्थो ज्ञातव्यः । सुखगन्धः सुखकरगन्धः, ज्ञानभाः नतु तैजसभा इति सुखगन्धज्ञानभाशब्दयोरर्थोऽवगन्तव्यः ॥ **निर्दोषत्वादिनेति** ॥ 'नायं प्रकृतिनिर्मितः' इत्यनेन निर्दोषत्वलाभः । आदिपदेन 'परिपूर्ण' इत्युक्तगुणपूर्णत्वस्य सङ्ग्रहः ॥

**भावप्रकाशः (कृ.टि.)**– ननु 'तपः कृच्छ्रादिकर्म च' इत्यमरोक्तेः कृच्छ्रचान्द्रायणादिकं तपः । तस्य कथं ज्ञानात्मकत्वम्? इत्यत आह– **आलोचनक्रियेति** ॥ ननु 'यस्य ज्ञानमयं तपः' इति वाक्यं 'स तपस्तप्त्वा' इत्येतद्व्याख्यानरूपम्। तथैव कर्मनिर्णयटीकायामुक्तत्वात् । तथा चालोचनस्येश्वरीयतया सदातनत्वात् । तपेति श्रुतौ तपसः कादाचित्कत्वोक्त्ययोग इत्यत उक्तम्– **क्रियेति** ॥ तथा च क्रियात्वात् सर्जनादिवद्व्यक्त्यव्यक्तियुक्तत्वेन व्यक्त्यपेक्षया कादाचित्कत्वोक्तिरुपपन्नेति भावः ।

ननु तस्य विकार इत्यणन्तोऽयं प्राकृतशब्दः । तस्मात् 'टिड्ढाण्' इति ङीपि 'प्राकृती' इति स्यात् । आबन्तत्वं कथम्? इत्यत आह– **ङीबभाव इति** ॥ भाषायां नित्योऽप्ययं ङीप् छन्दसि विकल्प्यते । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्युक्तेरिति भावः । **अणञ्भ्यामिति** ॥ प्रकृतिशब्दाद्विकारार्थेणप्रत्ययः । तद्धिताः इति बहुवचनस्यानुक्ततद्धितसङ्ग्रहार्थत्वादिति भावः । 'यद्यपि प्रकृतिशब्दादञः प्रसङ्ग एव नास्ति । तस्य नित्स्वरेणाद्युदात्ततया 'अनुदात्तादेश्च' इति लक्षणाभावात् । तथाऽपि 'पलाशादित्वेन रजतादित्वेन वा पलाशादिभ्यो वा' 'प्राणिरजतादिभ्योऽञ् इति सूत्राभ्यां कथञ्चित् प्राप्तिरिति मन्दाशङ्कानिवृत्तयेऽञो ग्रहणम् ।

पलाशादौ रजतादौ चानुदात्तादि भिन्नेभ्योऽप्यञ्' इति काशिकोक्तेः ॥ यद्यपि च प्रकृति-शब्दादञि सति नाण् । अञोऽणपवादत्वात् । तथा चोभयग्रहणमनुपपन्नम् । तथाऽप्यन्यतर-निर्धारणस्य नायमवसरः । सम्भवना तु विकारार्थे द्वयोरपीति भावेन 'अणञ्भ्याम्' इत्युक्तम् । अस्मिन् पक्षे श्रुतहानिरश्रुतकल्पना चेत्यतोऽनास्थासूचनाय वाशब्दः ।

'ईश्वरत्वात्' इत्यत्रान्वयभ्रान्तिनिरासायाह– **किन्त्वीश्वरत्वादिति** ॥ **अत एवेति** ॥ ईश्वरत्वादेवेत्यर्थः । नन्वबाध्यस्वरूपत्वं सत्यरूपत्वम् । तथा च विवक्षितं यद्विग्रहस्य गुणात्म-कत्वं तदलाभः । तथा 'सत्यरूप' इत्यत्र बहुव्रीहौ तद्वत्वलाभाद् विवक्षितविग्रहाभेदा-प्राप्तिरित्यत आह– **निर्दोषेति** ॥ **ज्ञानज्ञान इत्यादेरिति** ॥ 'कृत्यल्युटो बहुलम्' इत्युक्तेः कर्तरि ल्युडन्तत्वेन वा अर्शआद्यजन्तत्वेन वा ज्ञानशब्दो ज्ञातृपरः । ततो ज्ञानेषु ज्ञान इति निर्धारणे सप्तम्याः सप्तमीति योगविभागात् समासः । तेनातिशयितज्ञान इत्यर्थः पर्यवस्यति । एवं 'सुखसुखः' इत्यत्रापीति भावः । 'न चाधिक्ये द्वे स्तः' इति द्वित्वम्, तद्वार्तिक-स्यैवाभावात्' इति मनोरमोक्तेरिति बोध्यम्। सदानन्ददेहवत्वस्य नारायणपदेनालाभान्न तत्परामर्शः किं त्ववशिष्टस्यैवेति भावेनाह– **निर्दोषत्वादित्यादिनेति** ॥ आदिपदेन गुणपूर्णत्व-ग्रहः । 'नायं प्रकृतिनिर्मितः' 'परिपूर्णश्च' इति विशेषणाभ्यां तदुक्तेरिति भावः । अरा दोषास्तदयनो नेत्याद्यर्थे व्युत्पत्तिः । अराः दोषाः तद्विरुद्धाः नाराः गुणा इति द्वितीयार्थ इति विवेकः ॥

## भाष्यम्

**तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्शयति मायया ।**

**'न च गर्भेऽवसद्देव्या न चापि वसुदेवतः ।**
**न चापि राघवाज्जातो नचापि जमदग्नितः ।**
**नित्यानन्दोऽव्ययोऽप्येवं क्रीडते(ऽ)मोघदर्शनः'** इति पाद्मे ।

**'न वै स आत्माऽऽत्मवतामधीश्वरो**
**भुङ्क्ते हि दुःखं भगवान् वासुदेवः ।'** (भाग.५.१९.५ )

'सर्गादिरीशिताऽजःपरमसुखनिधिर्बोधरूपोऽप्यबोधं
लोकानां दर्शयन् यो मुनिसुतहृतात्मप्रियार्थे जगाम'
'स ब्रह्मवन्द्यचरणो जनमोहनाय
स्त्रीसंगिनामिति रतिं प्रथयंश्चचार ।' (म.भा.ता.नि.उ.२१३३)
'पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् ।
रुद्रवाक्यमृतं कर्तुमजितो जितवत्स्थितः ।
योऽजितो विजितो भक्त्या गाङ्गेयं न जघान ह ।
न चाम्बां ग्राहयामास करुणः कोऽपरस्ततः ॥' इत्यादि स्कान्दे ।

भावप्रदीपिका (प.टी.)– कथं तर्हि रामकृष्णादिरूपे हरौ परिच्छेदपराजयादि-संसारधर्माः ? इत्यत आह– **तदेवेति ॥ तदेव** शरीरम् । **मुनिसुतो** रावणः । 'यदा हरिर्जितः स्यात् तदैव वध्यसे' इति रुद्रवाक्यम् । तदेव लोकतावरं यच्छता ब्रह्मणाऽनूदितमेव । अतो न विरोधः ॥

भावप्रकाशिका (न.टी.)– कथं तर्हि कृष्णरामादिरूपे भगवति देशकालपरिच्छेदः क्वचिद्गर्भवासाज्ञानादिसंसारधर्माः? इत्यत आह– **तदेवेति ॥ मायया** स्वेच्छया परमाच्छादिकया च ॥ न च नटानामिव स्वरूपगूहनादौ तस्य क्लेश इत्याह– **लीलयेति** ॥ स्वयम् अमोघदर्शनः । मोघदर्शन इति वा । अयोग्यानां मोघं दर्शयतीति ॥ तथैव ह्युत्तरत्र 'बोधरूपोऽप्यबोधं लोकानां दर्शयन्' इति ॥ रावणाहृतसीताकृतौ प्रविष्ट इन्द्रोऽपि भगवत्प्रिय एव ॥

**पूर्णत्वाद्योऽचिन्त्यवीर्यो** भगवान् भार्गवरामः, यतश्च **स्वयमेव दाशरथी** रामः, स कथं दाशरथिना पराभूतः?, किन्त्वजित एव जितवत् स्थितः । **रुद्रवाक्यमृतं कर्तुम्** । यदा हरिर्जितः तदैव तद्बहिर्गतः सन् वध्यसेऽन्यथा रुद्रवाक्यं मृषा भवतीति ब्रह्मवाक्यमतुलं प्रति । अतोऽन्यदाऽपि तं निस्सारयितुं भगवान् समर्थो जितवत् भूत्वैव तं निस्सारयामासेत्यविरोधः । अचिन्त्यवीर्यत्वादेव स भगवान् भीष्मेणापि शक्त्या न जितः। किन्तु तद्भक्त्यैव । अतो भगवदवतारेषु न कश्चित्संसारधर्माः ॥

श्लोकः ७२

**प्रमेयदीपिका (ज.टी.)–** भगवद्रूपस्यैवम्भावे कथं परिच्छिन्नत्वगर्भवासादिसंसारिधर्माश्च तत्र दृश्यन्ते? इत्यत आह– **तदेवेति** ॥ किमर्थम्? इत्यत उक्तम्– **लीलयेति** ॥ **मायया** व्यामोहकशक्त्या ॥ अत्र प्रमाणमाह– **नचेति** ॥ **देव्याः** देवक्याः। **एवं** गर्भवासादिप्रदर्शनेन । मोघं दर्शनं यस्मिन् विषये स तथा ॥ **आत्मवतां** भागवतानाम् **आत्मा** निरुपाधिकप्रिय इति यावत्॥ **मुनिसुतो** रावणः । ब्रह्मवाक्यवद् रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो **रुद्रवाक्यम्** इत्युक्तम्। **करुणः** करुणावान् । अर्शआदित्वादच् ॥

**भावबोधः (र.टि.)–** 'अमोघदर्शन' इति पदच्छेदसम्भवेऽपि प्रकृतोपयोगाय अकारप्रश्लेषं विनैव व्याचष्टे– **मोघमिति** ॥ गर्भवासादिविषयकं भ्रमरूपमित्यर्थः । **निरुपाधिकप्रियेति** ॥ ततश्चाधीश्वरपदस्य न पुनरुक्तित्वमिति भावः । 'पुरातुलो नाम महासुरोऽभवद्वरात्स तु ब्रह्मण आप लोकताम्' इति भारततात्पर्याविरोधायाह– **ब्रह्मवाक्यवदिति** ॥ ७२ ॥

॥ इति श्रीमज्जयतीर्थभिक्षुविरचितगीताभाष्यटीकाभावबोधे
श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते द्वितीयोऽध्यायः ॥

**भावदीपः (रा.टि.)–** ॥ **यस्मिन् विषय इति** ॥ गर्भवासादिविषय इत्यर्थः ॥ 'आत्मा' इत्यस्य स्वामीत्यर्थकत्वे 'अधीश्वरः' इत्यनेन पौनरुक्त्यापत्तेरर्थान्तरमाह– **निरुपाधिप्रिय इति** ॥ 'ममात्मा भद्रसेनः' इत्यादावात्मपदस्य तादृशार्थदर्शनादिति भावः ॥ **मुनिसुतो रावण इति** ॥ विश्रवसःपुत्रत्वात् तस्येति भावः ॥ 'पुरातुलो नाम महासुरोभवद्वरात् स तु ब्रह्मण आप लोकताम्' इति भारततात्पर्याविरोधायाह– **ब्रह्मवाक्यवदिति** ॥ **अर्श आदित्वादिति** ॥ 'अर्श आदिभ्यो अच्' इति सूत्रे मत्वर्थाचूप्रत्ययोक्तेः अर्शआदेराकृतिगणत्वेन तन्मध्ये अस्यापि ग्राह्यत्वादित्यर्थः ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु करुणाशब्दात् करुणा विद्यतेऽस्येति अस्यास्तीत्यस्मिन्नर्थे तदस्यास्त्यस्मिन्निति मतुपि मतुपो मस्य 'मादुपधायाः' इति वत्वे निष्पन्नं 'करुणावत्' इति प्रातिपादिकस्य 'करुणावान्' इति प्रथमैकवचनेन भवितव्यम् । 'करुणः' इति तु कथम्? इत्यतः मतुप्पक्षे तथारूपसम्भवेऽपि 'अर्शोऽस्यास्तीत्यर्शसः' इत्यादाविव अस्यास्तीत्यर्थे करुणाशब्दात् 'अर्शआदिभ्योऽच्' इति तद्धितेऽच्प्रत्यये 'यस्येति च' इति अवर्णलोपे निष्पन्नकरुणशब्दस्य युक्तमेव 'करुणः' इति प्रथमैकवचनमित्याशयेनाह–**अर्शआदित्वादजिति** ॥

**भावरत्नकोशः (सु.टि.)– ॥ एवम्भावे निर्दोषत्वे परिपूर्णत्वे च । परिच्छिन्नत्वं** देशतः कालतश्च । तदानीन्तनपुरुषप्रत्यक्षेण तथाऽवगाहनादिति भावः । उपसंहारभाष्ये 'संसारिधर्माः' इति श्रवणादाह– **गर्भवासादिसंसारिधर्माश्चेति** ॥ प्रत्यासत्त्या देहशब्देनोपस्थितस्यापि रूपस्य 'तस्यापि शरीरश्रवणात्' इत्युपक्रमे शरीरशब्देनोपादानात् 'तदेव' इति भाष्ये नपुंसकलिङ्ग-प्रयोगः । तथा च भावप्रदीपिका– 'तदेव शरीरम्' इति ॥ आदिशब्देन **गर्भवासादिधर्मपरिग्रहः** । तथा प्रदर्शने कारणमुक्तं भाष्ये– **माययेति** ॥ तदैन्द्रजालिकाद्यर्थप्रतीतिनिरासाय व्याचष्टे– **व्यामोहकशक्त्येति** ॥ अत्र लीलयैव स्वशक्त्याऽज्ञजनव्यामोहनाय स्वशरीरमन्यथा दर्शयतीत्यत्र पूर्वमदितित्वाद् वसुदेवशब्दसन्निधानाच्च देवक्या एव देवीशब्देन ग्रहणं युक्तमिति भावेन आह– **देवक्या इति** ॥ **वसुदेवतः** 'आद्यादिभ्य उपसङ्ख्यानम्' इत्यसर्वनाम्नोऽपि वसुदेवशब्दात् तसिः । जात इत्याकृष्यते । **राघवात्** दशरथात् । 'एवम्' इति भाष्यपदमनूद्य तदर्थमाह– **एवं गर्भवासादिप्रदर्शनेनेति** ॥

ननु मोघं दर्शनं यस्यासौ मोघदर्शन ईश इति व्याख्यानं बहुमानविरोधान्मोघदर्शनस्य क्रीडायामनुपयोगाच्चायुक्तम् । न चामोघं दर्शनं यस्य स इति व्याख्येयम् । अवश्यवक्तव्यस्य गर्भवासादिदर्शनभ्रान्तित्वस्यालाभेनानुपयुक्तत्वादित्यत आह– **मोघं दर्शनं यस्मिन्निति** ॥ गर्भवासादेरसत्यतया तद्विषयकं दर्शनं लोकस्य मोघं वितथं भ्रान्तिरूपं यस्मिन् विषये भगवति स भगवान् मोघदर्शन इत्युच्यत इत्यर्थः । येन भगवता लोकस्य भ्रान्तिदर्शनमुत्पद्यते स इति यावत् ॥

ननु 'आत्मवतां मनस्विनामधीश्वरः इति न युक्तम् । सर्वाधीश्वरस्य भगवत आत्मवन्मात्रा-धीश्वरत्वोक्तेर्विशेषहेत्वभावेनायोगात् । अत एव 'आत्मवतां देहिनामधीश्वर स्वामी' इत्यप्य-युक्तम् । मुक्ताधीश्वरत्वाभावप्रसङ्गाच्च । आत्मपदेन पुनरुक्त्यापत्तेश्चेत्यत आह– **आत्मवता-मिति** ॥ अत्र आत्मशब्दो भगवद्वाची । तेन तद्वतां भागवतानामिति लभ्यते । आत्मेत्यत्र आत्मशब्देन स्वात्मवाचिना गौण्या वृत्त्या निरुपाधिकप्रिय इति गम्यते । एकान्तभागवतान् प्रति च भगवानेव निरुपाधिकप्रियः । यदाहुः 'यन्तेष्टो नो रमापतिः' इतीति भावेनैवमुक्तम् । 'ममाऽत्मा भद्रसेनः' इत्यादौ आत्मशब्दस्य निरुपाधिकप्रियार्थत्वदर्शनादत्रापि तदर्थत्व-मित्यप्याहुः ॥

श्लोकः ७२

मुनिसुतमात्रस्य रामभार्यानपहर्तृत्वाद् विवक्षितमर्थमाह– **मुनिसुतो रावण इति** ॥ विश्रवसो मुनेरात्मजो हि रावणः । तदपहृता च छलजानकी । तत्प्रियोद्देशेन जगामेति श्लोकार्थः । **'मुनिसुतहृत'** इत्यत्र छान्दस एकवर्णलोपः ।

'पुराऽतुलो नाम महासुरोऽभवत् वरात् स तु ब्रह्मण आप लोकताम् ।
पुनश्च तं प्राह जगद्गुरुर्यदा हरिर्जितः स्याद्धि तदैव वध्यसे'

इति महाभारततात्पर्यनिर्णयविरोधो 'रुद्रवाक्यमृतं कर्तुम्' इति वचनस्य । तत्रातुलं प्रति ब्रह्मवाक्यमस्तीत्यभिधानादित्यत आह– **ब्रह्मवाक्यवदिति** ॥ ब्रह्मणो वाक्यमिव रुद्रस्यापि वाक्यमतुलनामकदैत्यं प्रत्यस्तीत्येतत् प्रमाणबलादेवावगन्तव्यमिति न तद्वाक्यविरोध इति भावः । 'यदा हरिर्जितः स्याद्धि तदैव वध्यसे' इति रुद्रवाक्यमेव ब्रह्मणाऽनूदितमित्यतो न विरोध इति तु भावप्रदीपिका ॥

ननु तथाऽपि 'रुद्रवाक्यमृतं कर्तुम्' इत्ययुक्तम् । 'अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा' इति वचनविरोधादिति चेन्न । तस्य वचनस्य केवलं रुद्रवाक्यं मृषा कुरुत इत्येवम्परत्वात् । प्रकृतं च वरदानरूपं वाक्यं ब्रह्मवाक्यसहितमित्येतद्विषयत्वादिति ॥

यः परशुरामोऽचिन्त्यपराक्रमः । कुतः ? **पूर्तेः** पूर्णत्वात् । यश्च दाशरथिः स स्वयं परशुराम एव । **अजितोऽपि** परशुरामो जित इवावर्तत । किमर्थम् ? **रुद्रवाक्यमृतं कर्तुमिति** ॥ यः पूर्तेरचिन्त्यवीर्यो यश्च दाशरथी रामो भक्तवाक्यं सत्यं कर्तुमजितोऽपि जित इवाऽसीत् । यश्चाजितोऽपि भक्त्या विजितः गाङ्गेयं भीष्मं न जघान अम्बां न ग्राहयामास च ततोऽपरः कः करुणः ? इति वा भाष्यवचनं योजनीयम् ॥ तत्र करुणपदस्य 'करुणो रसवृक्षयोः' इति कोशप्रसिद्धार्थग्रहणे प्रकृतासङ्गतिरित्यत आह– **करुण इति** ॥ अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्यय इति शेषः ।

**भावदीपिका (श्री.टि.)**– ॥ **एवम्भावे** 'देहोऽयं मे सदानन्द' इत्युक्तरीत्या सदानन्दात्मकत्वे ॥ **तदेवेतीति** ॥ सदानन्दात्मकं शरीरमेवेत्यर्थः । भाष्योदाहृते प्रमाणे 'राघवात्' इत्यस्य रघुकुलोत्पन्नाद् दशरथादित्यर्थः । 'अमोघदर्शन' इति पदच्छेदसम्भवेऽपि भगवद्रूपे गर्भवासादिसंसारिधर्मदर्शनस्य भ्रमत्वलाभायाकारप्रश्लेषं विनैव व्याचष्टे– **मोघमिति** ॥ यस्मिन्

विषये भगवद्रूपविषये दर्शनं गर्भवासादिविषयकं लोकानां ज्ञानं मोघं व्यर्थं भ्रमरूपमित्यर्थः। लोककर्तृकमोघदर्शनविषय इति यावत्। आत्मशब्दोदितपरमात्मवत्त्वस्य सर्वसाधारण्यादाह– **भागवतानामिति** ॥ नन्वात्मशब्देनैव स्वामित्वस्योक्तत्वादधीश्वर इति पुनरुक्तमित्यत आह– **निरुपाधिकेति** ॥ **'मुनिसुतः'** इत्यत्र मुनिर्विश्रवाः। 'कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीरपत्नीम्' इति वचनादिति भावः ॥

ननु 'पुराऽतुलो नाम महासुरोऽभवद् वरात् स तु ब्रह्मण आप लोकताम्।
पुनश्च तं प्राह जगद्गुरुर्यदा हरिर्जितः स्याद्धि तदैव वध्यसे'

इति महाभारततात्पर्यनिर्णये अतुलं प्रति ब्रह्मणो वरदानस्योक्तत्वाद् 'ब्रह्मवाक्यमृतं कर्तुम्' इति वक्तव्यम्। रुद्रवाक्यमृतं कर्तुमिति कथमुक्तम्? इत्यत आह– **ब्रह्मवाक्यवदिति** ॥ यः परशुरामः **पूर्तेः** पूर्णत्वात् **अचिन्त्यवीर्यः यश्च दाशरथिः स स्वयं** परशुराम एवेत्यर्थः। तथाच दाशरथिनाऽभिन्नोऽपि परशुरामः **अजितोऽपि** दाशरथिना **जितवत् स्थितः**। किमर्थम्? इत्यतो 'रुद्रवाक्यमृतं कर्तुम्' इत्युक्तमिति योज्यम्। **अजितोऽपि** यः परशुरामः गाङ्गेयेन भक्त्या तदीयभक्त्या तदीयां भक्तिमपेक्ष्य तस्य यशोऽर्थं **अजितः** एव **विजितः**, नतु तं जघानेत्यर्थः ॥ **अर्शआदिभ्योऽजिति** ॥ तथाच करुणशब्दाद् अर्शआदित्वान्मत्वर्थीयाच्प्रत्यये चकारलोपे भसञ्ज्ञकस्य णकारस्थस्याकारस्य लोपे 'करुण' इति भवतीत्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– तथा प्रदर्शने कारणमुक्तं भाष्ये– **माययेति** ॥ तदैन्द्रजालिकाद्यर्थत्वप्रतीतिनिरासाय व्याचष्टे– **व्यामोहकशक्त्येति** ॥ देवीशब्देन देवक्येव ग्राह्या। तस्याः पूर्वमदितित्वेन देवत्वात्। 'देवक्यां देवरूपिण्याम्' इत्युक्तेश्च। वसुदेवशब्दसाहचर्याच्च। न तु कौसल्या मनुष्यत्वात्। नापि जमदग्निभार्या ऋषित्वादिति भावेनाह– **देवक्या इति** ॥ ननु 'अमोघदर्शन' इति व्याख्यानमनुपयुक्तम्। विवक्षितस्य गर्भवासादिदर्शनभ्रान्तित्वस्यालाभात्। 'मोघदर्शन' इति योजनायामपि षष्ठ्यर्थबहुव्रिहिरनुपपन्नः। ईश्वरकर्तृकदर्शनस्य मोघत्वप्राप्तेः। गर्भवासादिदर्शनस्य भ्रान्तित्वालाभाच्चेत्यत आह– **मोघमिति** ॥ **दर्शनमिति** ॥ गर्भवासादिविषयमित्यर्थः ॥ ननु 'आत्मवतामधीश्वरः' इति सम्बन्धो न युज्यते। भगवतः सर्वोत्तमत्वेन 'आत्मवताम्' इति विशेषणवैयर्थ्यात्। 'आत्मवतामात्मा' इत्यन्वयेऽपि देहभृतां स्वामीति यद्यर्थस्तदा पूर्वोक्त एव दोष इत्यत आह– **आत्मवतां भागवतानामात्मा निरुपाधिकप्रिय**

इति ।। आत्मवच्छब्दान्तर्गतात्मशब्दस्य भगवद्वाचित्वात् । तेन भागवतानामिति लभ्यते । द्वितीयात्मशब्दस्य स्वात्मवाचिनो गौण्या वृत्त्या निरुपाधिकप्रियार्थत्वम् । स्वात्मनो निरुपाधिकप्रियत्वादिति भावः । मुनिसुतमात्रस्य रामभार्यापहर्तृत्वाभावादाह– **रावण इति** ।।

ननु 'पुनश्च तं प्राह जगद्गुरुर्यदा हरिर्जितः स्याद्धि तदैव वध्यसे' इति भारततात्पर्य-निर्णयविरोधः । तत्रातुलं प्रति ब्रह्मवाक्यमस्तीत्युक्तत्वादित्यत आह– **ब्रह्मवाक्यवदिति** ।। अतुलं प्रति द्वे ब्रह्मवाक्ये । एकं लोकप्रवेशविषयम् । अपरं च 'हरिः यदा जितः स्यात् तदैव वध्यसे' इति । तत्र यद्यपि द्वितीयं ब्रह्मवाक्यमादाय तद्ग्रन्थविरोधः प्रतीयते । तथाऽपि द्वितीय-ब्रह्मवाक्यवत् तादृशरुद्रवाक्यमप्यतुलस्यास्ति । एतत्प्रमाणबलादित्यविरोध इति भावः ।। ननु तथाऽपि 'रुद्रवाक्यमृतं कर्तुम्' इत्ययुक्तम् । 'अयोग्येषु तु रुद्रादिवाक्यं तौ कुरुतो मृषा' इत्यनेन विरोधादिति चेन्न । तस्य केवलं रुद्रवाक्यं मृषा कुरुत इत्येवंपरत्वात् । प्रकृतं च ब्रह्मवाक्यसहितमिति विरोधाभावात् । ननु 'करुणो रसवृक्षयोः' इति कोशप्रसिद्धार्थग्रहणेऽ-सङ्गतिरित्यत आह– **करुणावानिति** ।। अर्शआद्यजिति भावः ।।

## भाष्यम्

**न तत्र संसारधर्मा निरूप्याः । यत्र च परावरभेदोऽवगम्यते तत्राज्ञ-बुद्धिमपेक्ष्यावरत्वं विश्वरूपमपेक्ष्यान्यत्र । तच्चोक्तम्–**

**'परिपूर्णानि रूपाणि समान्यखिलरूपतः ।**
**तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि हि ।**
**परावरं वदन्त्येवं ह्यभक्तानां विमोहनम् ।।' इति गारुडे ।।**

**नचात्र किञ्चिदुपचारादिति वाच्यम् । अचिन्त्यशक्तेः । पदार्थवैचित्र्या-च्चेत्युक्तम् ।**

**'कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।**
**न चाणुमात्रं भिन्नानि तथाऽप्यस्मान् विमोहसि'**

**इत्यादेश्च नारदीये ।।**

**तस्मात् सर्वदा सर्वरूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञान्यृच्छतीति सिद्धम् ॥ ७२ ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः ॥

भावप्रदीपिका (प.टी.)– तदेव लीलया इत्युक्तमुपसंहरति– **न तत्रेति** ॥ ननु विश्वरूपमपेक्ष्य कृष्णादिरूपस्यावरत्वमुच्यते पुराणादौ । अतः कथं तस्यापरिच्छेदादि ? इत्यत आह– **यत्रेति** ॥ तत्र प्रमाणमाह– **तच्चेति** । ननु कृष्णादिरूपस्य परिच्छेदादि प्रत्यक्षसिद्धम् । अत एव तद्वाक्यमुपचरितार्थम्, अन्यथार्थं वेत्यत आह– **न चेति** ॥ प्रत्यक्षस्य का गतिः ? इत्यत आह– **कृष्णेति** ॥ 'एषा ब्राह्मी' इति श्लोकार्थमुपसंहरति– **तस्मादिति** ॥ ७२ ॥

॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां द्वितीयोऽध्यायः ॥

भावप्रकाशिका (न.टी.)– ननु विश्वरूपापेक्षयाऽवरत्वात् कृष्णादिरूपस्य, तत्र सत्यपि संसारधर्मे को विरोधः? इत्यत आह– **यत्र चेति** ॥ स्कान्दात् अन्यत्र यत्र ग्रन्थान्तरे भगवद्रूपेष्वेव परावरादिभेदोऽवगम्यते, तत्र यदि विश्वरूपमपेक्ष्यावरत्वं कृष्णादिरूपस्य तदज्ञबुद्धिमपेक्ष्यैवेत्यर्थः । तत्र प्रमाणमाह– **तच्चेति** ॥ ननु द्विभुजचतुर्भुज-दाशरथिवासुदेवादिरूपस्य देशकालादिभिः परिपूर्त्यभिधानमौपचारिकं किं न स्यात् ? इत्यत आह– **न चात्रेति** ॥ तर्हि कथं तेषु परिच्छेदादिदर्शनम् ? इत्याशङ्क्य, तदयोग्यानां मोहनार्थमिति भावेनाह– **कृष्णरामादीति** ॥ अध्यायार्थमुपसंहरति– **तस्मादिति** ॥

॥ इति श्रीमद्भगवद्गीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां द्वितीयोऽध्यायः ॥

प्रमेयदीपिका (ज.टी.)– 'तदेव' इत्याद्युक्तमुपसंहरति– **न तत्रेति** ॥ 'अतः' इत्युपस्कर्तव्यम् । यद्येवं तर्हि विश्वरूपं परं तदपेक्षया कृष्णादिरूपाण्यपराणीति कथं ग्रन्थेषूच्यते? इत्यत आह– **यत्र चेति** ॥ **यत्र** ग्रन्थे । तत्र विश्वरूपमपेक्ष्यान्यत्र कृष्णादाववरत्वम् अज्ञबुद्धिमपेक्ष्योक्तं ज्ञातव्यमित्यर्थः ॥ कुत एतत्? इत्यत आह– **तच्चेति** ॥ **अखिलरूपतः** अखिलधर्मैः । **विमोहनं कर्तुम्** ॥ नन्वयमुपचारो वा स्तुतिर्वा किं न

श्लोकः ७२

स्यात्? इत्यत आह– **न चेति ।। असम्भवे ह्येषा कल्पना । अचिन्त्यशक्त्या चैकस्यैवानेक परिमाणत्वादिकं सम्भवति । अन्यत्रादर्शनेन त्वपलापेऽतिप्रसङ्ग इत्यर्थः ।। अत्रैव प्रमाण-माह– कृष्णेति ।। विमोहसि विमोहयसि । श्लोकार्थमुपसंहरति– तस्मादिति ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वितीयोऽध्यायः ।। २ ।।

**भावदीपः (रा.टि.)**– 'रूपाणि' इत्यनेनापौनरुक्त्याय रूपपदं धर्मपरम् इत्युपेत्य अर्थमाह– **अखिलरूपतः अखिलधर्मैरिति ।। श्लोकार्थमिति ।।** 'एषा ब्राह्मी स्थितिः' इति श्लोकार्थमिति भावः ।। ७२ ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते द्वितीयोऽध्यायः ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– 'तस्यादित उदात्तम्' इति सौत्रसूचित 'आद्यादिभ्य उपसङ्ख्यानम्' इति उपसङ्ख्यानात् तृतीयार्थे तसिरित्यशयेनाह– **अखिलरूपतो अखिल-धर्मैरिति** ।। अनेन मूले रूपशब्दो धर्मपर इत्युक्तं भवति ।।

ननु अस्मान्विमोहसि इत्यत्र परनिष्ठविमोहं प्रति भगवतः प्रयोजकत्वेन विपूर्वात् मुहेः 'हेतुमति च' इति हेतुमण्णिचि लघूपधे च घत्वात् 'पुगन्तलघूपधस्य' इति गुणे निष्पन्न-विमोहशब्दस्य णिजन्ततया 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लट्मध्यमपुरुषे सिपि 'कर्तरि शप्' इति शपि 'सार्वधातुकार्धधातुकयोः'इति गुणे अयादेशे च 'विमोहयसि' इत्येव रूपेण भवितव्यम् । 'अस्मान् प्रति त्वं विमोहसि' इति कथञ्चिद्योजनायामपि मुहेः श्यन्विकरणतया शब्विकरणत्वाभावेन 'विमुह्यसि' इत्येव वक्तव्यतया 'विमोहसि' इति यथाश्रुतानुपपत्तिरेवेत्यत आह– **विमोहसि विमोहयसीति** ।।

।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे द्वितीयोऽध्यायः ।।

**भावरत्नकोशः (सु.टि.)**– स्वकृतगमनिकायाः भाष्याविसंवादाय आह– **अत** इतीति ।। एवं परिच्छिन्नत्वादिदर्शनं मृषेत्यङ्गीकारः । 'यत्र' इत्यनुवादः, 'ग्रन्थे' इति व्याख्या ।। 'तत्र'

इत्यादिभाष्ये व्यवहितत्वात् पदानामन्वयं दर्शयति– **तत्रेत्यादि** ॥ 'अखिलरूपतः सकलै- रवतारैः' इति व्याख्याने 'रूपाणि' इति व्यर्थं स्यादित्यत आह– **अखिलैर्धर्मैरिति** ॥ तृतीयान्तात् तसिः । गुणक्रियाजातिपूर्वैर्धर्मैरित्यर्थः। भाष्यपदमनूद्य तत्र शेषमाह– **विमोहनं कर्तुमिति** ॥ उपचारशब्दापेक्षया 'अयम्' इति पुंलिङ्गम् । परिपूर्णानि रूपाणीति वचनमित्यर्थः । कृष्णादिरूपेषु परिच्छेदस्य प्रत्यक्षसिद्धत्वादिति भावः । **एषा कल्पना** उपचारः स्तुतिर्वेति कल्पना । 'पदार्थवैचित्र्याच्च' इति भाष्यभावमाह– **अन्यत्रेति** ॥ **अतिप्रसङ्गः** भूतचतुष्टयस्य पृथिवीत्वादृष्टेः पृथिव्या अपि पृथिवीत्वं न स्यादित्यादिरूपातिप्रसङ्गः । **इत्युक्तं** धर्मवैचित्र्यात् पदार्थानामिति प्रागुक्तमिति भाष्यार्थः । **अत्रैव** एकस्यैवानेकपरिमाणादौ । 'विमोहसि' इत्युक्त्या परिच्छेदादिप्रत्यक्षं मोह इत्युक्तं भवति । ननु 'मुह वैचित्र्ये' इति धातोः श्यन्वि- करणत्वेन कथं 'विमोहसि' इति रूपम् । व्यत्ययेन शब्विकरणत्वाङ्गीकारस्त्वगतिका गतिः । तस्याकर्मत्वेन 'अस्मान्' इति कर्मोक्त्यनुपपत्तिश्चेत्याशङ्क्य णिजर्थान्तर्भावमभिसन्धाय व्याचष्टे– **विमोहयसीति** ॥ **श्लोकार्थम्** 'एषा ब्राह्मी' इति श्लोकार्थम् ॥ इदं चाध्यायार्थोप- संहारक्रमं व्युदसितुमुक्तम् ॥

**गीताक्षरार्थस्तु–** 'प्रजहाति' इत्यादिप्रकरणार्थो ज्ञानिलक्षणमुपसंह्रियते एषेति । एषा 'प्रजहाति' इत्यादौ प्रक्रान्ता 'या निशा' इत्यादौ पिण्डीकृत्योक्त्या ब्राह्मी ब्रह्मविषया स्थितिः सर्वकामप्रहाणनित्यभगवदनुस्मृत्यादिरूपं ब्रह्मविषयकज्ञानवतो लक्षणम् । उक्तस्थितेः फल- मुच्यते– **नैनामिति** ॥ एनाम् उक्तरूपां स्थितिं प्राप्य न मुह्यति भववेदनानुभववान्न भवति । ब्रह्मापरोक्षज्ञानी मुच्यत इति पूर्वार्धे निर्गलितम् । सा च ज्ञानिनो ब्रह्मप्राप्तिरूपा मुक्तिः किं तद्देहपातानन्तरमेव उतान्यथेत्यपेक्षायामुक्तं – **स्थित्वाऽस्यामन्तकालेऽपीति** ॥ देहावसान- समयेऽपि भगवदनुग्रहयोगादस्यां भगवदनुस्मृत्यादिरूपायां स्थित्वा तत्कालेऽप्यनन्यमानसश्चेद् ब्रह्म ऋच्छति प्राप्नोति । प्रारब्धकर्माभावे यद्देहे ज्ञानोदयस्तद्देहावसान एव । तत्सद्भावे तु देहान्तरं प्राप्य तत्र प्रारब्धभोगानन्तरमेव ब्रह्म प्रतिपद्यते । तथा च सूत्रम् 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते' इति ॥ कार्यब्रह्मव्यावृत्तये विशिष्यते– **निर्वाणं प्राकृतशरीररहित- मिति** ॥ अप्राकृतदिव्यमङ्गलविग्रहपरब्रह्मप्राप्तेरेवाखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्ति- रूपमोक्षत्वादिति ॥ ७२ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोश- समाख्यायां श्रीमत्सूरीन्द्रपूज्यपादशिष्यसुमतीन्द्रयतिविरचितायां द्वितीयाध्यायः समाप्तः ॥**

श्लोकः ७२

**भावदीपिका (श्री.टि.)**– ॥ **परम्** उत्तमम् । **अपराणि** अवराणि । रूपशब्दो धर्मपर इत्याह– **धर्मैरिति** ॥ तसेः सार्वविभक्तिकत्वात् तृतीयान्तादियं तसिरित्याशयेन 'धर्मैः' इत्युक्तमिति द्रष्टव्यम् ॥ **कर्तुमिति** ॥ अभक्तानां विमोहनं कर्तुं परावरं वदन्तीत्यन्वयः । **अयं** 'परिपूर्णानि' इति प्रमाणोक्तार्थः । भाष्यस्थादिशब्दार्थमाह– **स्तुतिर्वेति** ॥ सर्वरूपाणां परिपूर्णत्वेनाभेदाभिप्राये **सर्वधर्मैः समत्वोक्तिरयुक्ता** । विश्वरूपे महत्परिमाणदर्शनात्, तदन्यत्र रामकृष्णादावल्पपरिमाणदर्शनात् । अभेदे चैकस्मिन्नेव विरुद्धानेकपरिमाणस्य लोकेऽदर्शने-नेश्वरेऽप्यसम्भवादतः **सर्वधर्मैः** समत्वरूपोऽयमर्थ उपचरितो वा स्तुतिर्वाऽस्त्वित्यर्थः। पदार्थ-वैचित्र्याच्चेत्यस्य तात्पर्यमाह– **अन्यत्रेति** ॥ **अतिप्रसङ्गः** महिष्यादावदर्शनेन गोरपि सास्नादि-मत्त्वं न **स्यादित्यतिप्रसङ्ग** इत्यर्थः । तथाच लोके पदार्थानां वैचित्र्यदर्शनेन दृष्टान्तेनान्यत्रा-विद्यमानमपि **लोकविलक्षणे हरौ** नासम्भावितमिति भावः । मूले **इत्युक्तमिति** ॥ 'धर्मवैचित्र्या-दर्थानाम्' इति पूर्वमुक्तमित्यर्थः ॥ **अत्रैवेति** ॥ बाधकाभावादुपरिचरितादि न कल्प्य-मित्युक्तम् । इदानीमत्रैव प्रमाणमाहेत्यर्थः ॥

'विमोहसि' इत्यत्र 'त्वं विमुह्यसि'इत्यन्यथाप्रतीतिवारणाय णिजन्तोऽयमित्याशयेनाऽह **विमोहयसीति** ॥ गीतायाम् 'ऋच्छति' इति कथम्? 'ऋ गतौ' इत्यस्य रूपमिति चेत्, उच्यते । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीय-सीदाः' । पादीनां क्रमात् पिबादय आदेशा स्युरिति सूत्रार्थः । उदाहरणानि पा पाने, तस्य पिबादेशे पिबतीति भवति । घ्रा गन्धोपादाने, तस्य जिघ्रादेशे जिघ्रति । ध्मा शब्दाग्निसंयोगे, तस्य धमादेशे धमति । ष्ठा गतिनिवृत्तौ, तस्य तिष्ठादेशे तिष्ठति । म्ना अभ्यासे, तस्य मनादेशे मनति । दाण् दाने, तस्य यच्छादेशे यच्छति । दृशिर् प्रेक्षणे, तस्य पश्यादेशे पश्यति । अर्ति, ऋ गतौ, तस्य ऋच्छादेशे ऋच्छति । सृ गतौ, तस्य धौ इत्यादेशे धावति । षद स्वप्ने, तस्य शीयादेशे शीयति । षद्लृ विशरणगत्यवसादनेषु, तस्य सीद इत्यादेशे सीदतीति । एवञ्च अर्तेः ऋ गताविति धातोः ऋच्छादेशे लटि परस्मैपदिनि तिबादेशे पकारलोपे ऋच्छतीति भवति । प्राप्नोतीत्यर्थः । भाष्ये 'ज्ञान्यृच्छति' इत्यत्र ज्ञानी ऋच्छतीति स्थिते 'इको यणचि' इतीकारस्य यणादेशे सति ज्ञान्यृच्छतीति सन्धिर्भवतीति द्रष्टव्यम् ।

इति यदुवरगीताभाष्यटीकासुयुक्ता
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराद्धाऽत्र चीर्णा
समगमदयमध्यायोऽन्तमस्यां विवृत्याम् ॥ ७२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित श्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावदीपिकायां विदरहळ्ळिश्रीनिवासविरचितायां द्वितीयोऽध्यायः समाप्तः ॥

**भावप्रकाशः** (कृ.टि.)– 'अखिलरूपतः' इत्यनेनाखिलावतारग्रहणे 'रूपाणि' इति व्यर्थमित्यत आह– **अखिलैर्धर्मैरिति** ॥ ननु 'विमुह्यसि' इति युक्तम् । मुहधातोः श्यन्विकरणत्वात् । तत् कथं 'विमोहसि' इति । व्यत्ययेन गणकार्यानित्यत्वेन वा । शब्विकरणत्वेऽप्यस्मानिति कर्मोक्तिरनुपपन्ना अकर्मकत्वादित्याङ्क्ष्य ण्यर्थान्तर्भावमभिप्रेत्य व्याचष्टे– **विमोहयसीति** ॥ अध्यायार्थोपसंहारप्रतीतिं निरस्यति– **श्लोकार्थमिति** ॥ ७२ ॥

॥ इति श्रीमत्तिर्मलाचार्यसूरिसूनुविरचिते प्रमेयदीपिकाभावप्रकाशे द्वितीयोऽध्यायः समाप्तः ॥

# तृतीयाध्यायः

अर्जुन उवाच–

**ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

## भाष्यम्

**आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र । ज्ञानसाधनत्वेनाकर्म विनिन्द्य कर्म विधीयत उत्तराध्याये ॥**

भावप्रदीपिका (प.टी.)– पूर्वाध्यायसङ्गतितश्चोत्तराध्यायार्थमाह– **आत्मेति** ॥ आत्मपदात् जीवेश्वरौ । **अकर्म** कर्माकरणम् । 'तस्मादसक्तः' इतिपर्यन्तं विनिन्द्य, ततः 'एवं' ('एवम् इत्यन्तम्' इति स्यात्) कर्म विधीयते ॥

भावप्रकाशिका (न.टी.)– तृतीयाध्यायार्थं वदन् सङ्गतिप्रसङ्गेन पूर्वाध्यायार्थं चाह– **आत्मस्वरूपमिति** ॥ परमात्मस्वरूपम् । तज्ज्ञानस्यैव पुरुषार्थहेतुत्वात् । अत एव 'ज्ञानं हि जैवमुक्तम्' इत्यत्र जीवाश्रितज्ञानं परमात्मविषयमिति ज्ञातव्यम् । तदुपायस्यैवोपर्यभिधानाच्च । 'न त्वेवाहम्' इति दृष्टान्तमुखेन शास्त्रप्रतिपाद्यमेवोन्मुखीचकार । उपरि च 'नाभावो विद्यते सतः', 'अप्रमेयस्य', 'अजो नित्यः,' 'सर्वगतस्थाणुः' इति परमात्मस्वरूपस्यैव प्रतिपादकत्वात्, न च तस्यान्यार्थता । विम्बपरिज्ञानार्थत्वदर्शनात् प्रतिविम्बावलोकस्य । अतो 'न त्वेवाहम्' इत्यारभ्य प्राधान्यतः परमात्मा परमात्मस्वरूपम्, तज्ज्ञानसाधनं च सयोगकर्म 'योगस्थः' इत्यादावुक्तं पूर्वाध्याये ॥

उत्तराध्याये यदि बन्धभयात् कर्मसंयोगः क्रियते, तर्ह्यकरणेऽपि वन्धो न स्यात् । कृतानां तु कर्मणां भोगेन क्षयात्, किं कर्मणा तत्साध्येन वा ज्ञानेन ? इत्याशङ्क्य, अनन्तत्वात् कर्मणां भोगतः साकल्येन क्षयासम्भवात्, पुनरकर्तुमशक्यत्वात्, कर्मेन्द्रियसंयमनेऽपि मानसदुष्कर्मोत्पत्त्या मिथ्याचारत्वप्रसङ्गात्, प्रजापतिवचनलङ्घनप्रसङ्गात्,

स्वोपकारिदेवायजनेन कृतघ्नत्वापत्तेः, स्वविहितयज्ञद्वारा चक्राप्रवर्तनेन विश्वहननदोष-प्रसङ्गाच्च, न कर्माकरणं मुक्तिसाधनमिति **अकर्म विनिन्द्य,** ज्ञानमेव मुक्तिसाधनमिति ज्ञानसाधनत्वेन **कर्म विधीयते** 'तस्मादसक्तः' इत्यादिनेति भावः ।

प्रमेयदीपिका (ज.टी.)– पूर्वोत्तराध्यायेभ्योऽस्य तृतीयाध्यायस्य भेदं स्वस्मिन्नेकतां च दर्शयन् एतदध्यायप्रतिपाद्यमर्थं पूर्वाध्यायार्थसङ्गतत्वेन विवक्षुस्तत्प्रतिपाद्यं तावदाह– **आत्मेति** ॥ जीवेश्वरस्वरूपं साङ्ख्याख्यमित्यर्थः । **ज्ञानसाधनम्** आत्मज्ञानसाधनं योगाख्यम् । **पूर्वत्र** पूर्वस्मिन्नध्याये । न चैवं द्वितीयाध्यायस्यैक्यानुपपत्तिः । साधनस्यैव प्राचुर्यात्, प्रचुरेण च व्यपदेशात् । तथाच सप्तमादौ वक्ष्यति 'साधनं प्राधान्येनोक्तमतीतैरध्यायैः' (७.१) इति । 'आत्मस्वरूपम्' इत्यादि तु प्रकरणभेदप्रदर्शनायोक्तमिति ॥

एतत्सङ्गतत्वेन तृतीयाध्यायार्थमाह– **ज्ञानेति** ॥ योगो द्विविधः । कर्मसमाधिभेदात्। तत्र तावज्ज्ञानसाधनत्वेन कर्म विधीयते कर्तव्यमेवेति ज्ञाप्यते कैश्चन वाक्यैः । **अकर्म** कर्माकरणम् । **विनिन्द्य** अस्मिन्नध्याये । अकर्मनिन्दाऽपि कर्मविध्यर्था इत्येकार्थता । तथाऽपि प्रकरणभेदार्थमेवमुक्तम् ॥

**'ज्ञानसाधनत्वेन'** इति वदता मोक्षसाधनता निरस्ता । तेन प्रश्नप्रतिवचनाप-व्याख्यानमप्यपहस्तितम् ॥ आनन्दवृद्ध्यर्थता त्वनुज्ञायत एव ॥

भाववोधः (र.टि.)– ॥ **जीवेश्वरस्वरूपमिति** ॥ 'न त्वेवाहम्' इत्यादिनोभय-स्वरूपोक्तेरात्मशब्द उभयपर इति भावः । 'एषा तेऽभिहिता साङ्ख्ये' इत्युक्तत्वादाह– **साङ्ख्याख्यमिति** ॥ **योगाख्यमिति** ॥ 'योगे त्विमां शृणु' इत्युक्तत्वादिति भावः । 'तत्र तावत्' इति षष्ठे समाधिर्विधीयत इति भावः । सन्ध्यामुपासीतेत्यादिवद्विधानाभावात् कथं 'विधीयते' इत्युक्तमित्यत उक्तम् । **कर्तव्यमेवेतीति** ।

भावदीपः (रा.टि.)– ॥ **स्वस्मिन्नेकतामिति** ॥ अर्थैकत्वनिबन्धनत्वादेकवाक्यताया इति भावः ॥ **विवक्षुरिति** ॥ 'ज्ञान' इत्यादिना । **जीवेश्वरस्वरूपमिति** ॥ 'नत्वेवाहम्' (२.१२) इत्यादिना प्राधान्येन जीवस्य तादर्थ्येनेश्वरस्य च स्वरूपमित्यर्थः ॥ 'एषा तेऽभिहिता साङ्ख्ये' (२.३९) इत्युक्तम्– **साङ्ख्याख्यमिति** ॥ **आत्मज्ञानेति** ॥ ईश्वरज्ञानेत्यर्थः ॥

श्लोकः १

**योगाख्यमिति** ।। निवृत्तिकर्मरूपं समाधिरूपं चेत्यर्थः ।। **अपव्याख्यानमिति** ।। ज्ञानकर्मणोः मोक्षहेतुत्वेन समुच्चयतया यदपव्याख्यानं तदित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– तृतीयाध्यायस्य द्वितीयाध्यायशेषत्वं चतुर्थाध्यायशेषत्वं वा किं न स्यात् ? न स्यात् । तेभ्यो भिन्नार्थप्रतिपादकत्वात् । एवं विलक्षणार्थप्रतिपादकत्वे स्वयं नानार्थप्रतिपादनपरो नैकं वाक्यं स्याद् इत्यपि न । स्वयं ज्ञानसाधनकर्मकर्तव्यत्वरूपम् एकमर्थं प्रतिपादयत एकार्थत्वेनैकवाक्यत्वात् । तथाच आहुः 'अर्थैकत्वादेकं वाक्यम्' इति । अस्तु ततो विलक्षणार्थत्वम् एकवाक्यत्वं च । तथाऽपि द्वितीयानन्तर्यमस्य कुतः? सङ्गतिसद्भावादित्येव अर्थ उत्तरभाष्येणोच्यत इति भावेन तदवतारयति– **पूर्वोत्तरेति** ।।

**एतदध्यायप्रतिपाद्यं** व्याचिख्यासिततृतीयाध्यायार्थम् । अबुद्धिस्थेन सङ्गतेर्दर्शयितुमशक्यत्वादुक्तं– **तत्प्रतिपाद्यमिति** ।। पूर्वाध्यायप्रतिपाद्यमित्यर्थः । तेन 'ज्ञानसाधनत्वेन' इति भाष्येणैव प्रतिपाद्योक्तिलाभात् किम् 'आत्मस्वरूपम्' इति भाष्येण ? इति शङ्का निरस्ता । 'न त्वेवाहम्' (२.१२) इत्यादिना जीवेश्वरस्वरूपस्योक्तत्वादाह– **जीवेश्वरस्वरूपमिति** । आत्मशब्दस्तूभयसाधारण इति भावः । नन्वेतदयुक्तम् । 'एषा तेऽभिहिता साङ्ख्ये' (२.३९) इति साङ्ख्यस्यैवाभिधानावेदनादित्यत उक्तं– **साङ्ख्याख्यमिति** ।। **आत्मज्ञानसाधनं** परमात्मज्ञानसाधनम् । तत् किं रूपमिति न ज्ञायते, 'योगे त्विमां शृणु' (२.३९) इति योग एवोक्तश्चेत्यत उक्तं– **योगाख्यमिति** ।। समनन्तरातीतश्लोक आत्मस्वरूपज्ञानयोरनुक्तेराह– **पूर्वस्मिन्नध्याय इति** ।। तेन 'पूर्वयोरध्याययोरिति भाष्यार्थवर्णनं प्रथमे जीवादिस्वरूपानुक्तेरयुक्तम्' इति चोद्यं निरस्तम् ।

एवं जीवेश्वरस्वरूपस्य योगाख्यज्ञानसाधनस्याभिधानाङ्गीकारे, प्रतिपाद्यभेदस्य वाक्यभेदप्रयोजकत्वं हि न्यायप्राप्तमिति भावः । **प्राचुर्यात्** प्राधान्यात् । ज्ञानसाधनं हि योगाख्यं प्रायेण प्रतिपादितमिति तत् प्रधानम् । अन्यत् प्रतिपादितमपि क्वचित् तदपि तदर्थमिति भावः । तावताऽप्येतस्य साधनपरत्वव्यपदेशः कुत इत्यत आह– **प्रचुरेण इति** ।। अल्पनीरमिश्रक्षीरे क्षीरव्यपदेश इवेति इति भावः । तथा च तत्त्वप्रकाशिकायां 'योऽर्थो यत्र प्रायेणोच्यते सोऽध्यायादिस्तदर्थ इति व्यवस्थोपपत्तेः' (ब्र.सू.भा.४.१.१) इति । **सप्तमादौ** सप्तमाध्यायोपक्रमे ।।

नन्वेकवाक्यताज्ञापनार्थं प्रधानप्रतिपाद्यं निरूपणीयम् । तच्च साधनमेव । तत् किम् 'आत्मस्वरूपम्' इति भाष्यप्रयोजनम् ? इत्यत आह– **आत्मस्वरूपमित्यादि त्विति** ॥ 'एषा तेऽभिहिता साङ्ख्ये' (२३९) इत्यन्तेनात्मस्वरूपरूपज्ञेयमुक्तम् । ततः आध्यायपरिसमाप्तेर्ज्ञान-साधनं योगलक्षणमुच्यत इति प्रकरणभेदप्रदर्शनाय अभिहितमित्यर्थः । प्रकरणभेदाप्रदर्शने तु कुत्र किमुच्यते? इति शिष्याणां मनो व्याकुलं स्यादिति भावः । ननु 'योगे त्विमां शृणु' (२.३९) इति प्रतिज्ञानुसारेण योग एव वाच्यो न तु कर्म, तदुक्तेरसङ्गतत्वादित्यत आह– **योग इति** ॥ कर्मणोऽपि योगत्वाद् ज्ञानसाधनत्वेन तद्वचनं नासङ्गतमिति भावः । 'समाधिर्ध्यानम्' इति न्यायदीपिकायां व्यक्तम् । स च षष्ठे वक्ष्यत इति 'तावत्' इत्युक्तम् । **कर्म विधीयत इति** ॥ तथा च तात्पर्यनिर्णये 'तत्र कर्मयोगं विशेषतः प्रपञ्चयत्यनेनाध्यायेन' (गी.ता.३.१) इति । विपूर्वस्य दधातेः करणार्थत्वादत्र कर्म क्रियत इति न युज्यते । कृष्णेन कर्म क्रियत इत्यसङ्गतेरित्याशङ्क्य 'विधीयते' इत्यस्यार्थमाह– **कर्तव्यमेवेति ज्ञाप्यत** इति ॥ 'तस्मादसक्तः सततं कार्यं कर्म समाचर' (३.१९) इति विधिदर्शनादिति भावः ॥

**कैश्चन** 'तस्मादसक्तः' (३.१९) इत्यन्तैः । अकर्मेत्यस्यार्थः– **कर्माकरणमिति** ॥ युक्तिभिः कर्माकरणस्यैव मोक्षाङ्गत्वान्नावश्यं कर्मानुष्ठेयमिति कर्माकरणपक्षं 'कर्मणामकर्तु-मशक्यत्वात्, कर्मेन्द्रियसंयमेऽपि मानसदुष्कर्मादिमिथ्याचारत्वप्रसङ्गात्, प्रजापतिवाक्याना-लम्बनप्रसङ्गात्, स्वोपकारिदेवायजनेऽकृतज्ञत्वापत्तेः, स्वविहितयज्ञद्वारा चक्राप्रवर्तने विश्वहनन-दोषप्रसङ्गाच्च, न कर्माकरणं मुक्तिसाधनम्' इति प्राचीनटीकोक्तरीत्या **विनिन्द्य** इत्यर्थः ।

नन्वकर्मनिन्दनं कर्मविधानं चेत्येवम् अनेकार्थकत्वादेतदध्यायस्यैकवाक्यता न स्यादित्यत आह– **अकर्मेति** ॥ प्रयाजादिविधिसमभिव्याहृतस्य ज्योतिष्टोमादिवाक्यस्य तदेकवाक्यता यथा तथेहापीति भावः । एवमेकवाक्यत्वाभिप्रायेण **'अकर्म विनिन्द्य'** इति भाषणं नातीव प्रयोजनवदित्यत आह– **तथाऽपीति** ॥ यद्यपि 'कैश्चन श्लोकैरकर्म विनिन्द्यते कर्मविधानार्थम्' इति व्याख्याने सुकरमेवैकवाक्यत्वपरिज्ञानम् । तथाऽपि प्राधान्येन कर्मकरणं विधीयत इति ज्ञापनार्थम् 'अकर्म विनिन्द्य' इत्युक्तमित्यर्थः ।

॥ **तेन** मोक्षसाधनतानिरासेन । **अपव्याख्यानं** 'बुद्धिः कर्मापेक्षया चेत् ज्यायसी तव मता तर्हि क्रूरे युद्धकर्मणि किमिति मां नियोजयसि ? ज्ञानमेव सम्पादयिष्यामि । न तूभयम्'

श्लोकः १
इत्यादिरूपं प्रश्नवाक्यापव्याख्यानं, 'यतः कर्मणामनारम्भात् मोक्षं नाश्नुतेऽतो ज्ञानकर्मणी समुच्चिते एव मोक्षसाधने' इति प्रवचनवाक्यापव्याख्यानम् । **अपहस्तितमिति** ॥ 'कर्तृकरणाद् धात्वर्थे' इत्यपासितुः करणवाचकाद् हस्तशब्दाद् धात्वर्थे निरसने णिच्प्रत्यये हस्तेनापास्यति अपहस्तयतीत्यतः कर्मणि निष्ठायाम् अपहस्तितमिति रूपम् । वामेन पाणिनाऽपास्तमित्यर्थः । यद्वा, 'अप अपवर्जनवियोग आलेखनचौर्यनिर्देशवैकृतविधिविपर्ययऋणग्रहणअवयवपूजा-निह्नवसव्यावृत्तिषु' इत्युपसर्गनिघण्टौ 'अप' इत्युपसर्गस्य विधिविपर्ययार्थकत्वाभिधानात् साधुकर्मविवक्षितदक्षिणपाणिविपरीते सव्यपाणावपहस्तशब्दः । अपशब्द इति यथा । सोऽस्य निरासकत्वेन प्राप्त इत्यत्र 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच्प्रत्यये अपहस्तेन सव्यहस्तेन निरस्तम्, अतितुच्छमित्यर्थः ।

ननु कर्मणां मोक्षसाधकत्वनिराकरणं स्वव्याहतम् । स्वयमपि तदङ्गीकारात् । 'सुकृतमप्रियं मानुष्यादिफलं जहाति । न बृहत्फलमुपासनादिनिमित्तम्'इति भाष्ये (गी.भा.२.५०), टीकायां च, मुक्तेर्ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते । अतः कथं मुक्तौ कर्मणोऽनुप्रवेशाभाव-प्रतिपादनम् ? इति चेत्, अत्र वक्तव्यम् । किं कर्मणां ज्ञानवत् प्राधान्येन मोक्षसाधनत्वं किंवा ज्ञानफलमुक्तावतिशयाधायकतयाऽऽरादुपकारकत्वरूपतच्छेषत्वेन । नाऽद्यः, 'कर्मणा ज्ञानमा-तनोति, ज्ञानेनामृतीभवति', 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' (४.३३) इत्यादि-श्रुतिस्मृतिविरोधात् । तदिदमाह– **ज्ञानसाधनत्वेनेति** ॥ न द्वितीयः । इष्टापत्तेरिति भावेनाऽह– **आनन्दवृद्ध्यर्थता त्विति** ॥ केचित्तु, यदि कर्म मोक्षसाधनतया भगवतोऽभिप्रेतं न स्यात् कथं तर्हि 'कुरु कर्मैव' (४.१५) इत्यादिना तद्विधानम् ? इत्याशङ्क्य कर्मणः साक्षान्मोक्षाननु-प्रवेशेऽपि मोक्षगतातिशयाधायकत्वमस्तीत्याह– आनन्दवृद्ध्यर्थता तु इत्यवतारयन्ति । ज्ञानात् पूर्वमनुष्ठितानि निवृत्तकर्माणि ज्ञानमापादयन्ति । ज्ञानानन्तरमनुष्ठितानि तु ज्ञानकार्ये मोक्षेऽतिशयमादधतीति न कोऽपि दोष इति भावः ॥

**भावदीपिका (श्री.टि.)–**

**प्रणम्य यादवाचार्यगुरूणां पादपङ्कजे ।**
**क्रियते तृतीयाध्यायटीका भावप्रदीपिका ॥**

स्वस्मिन्निति तृतीयाध्याय इत्यर्थः । **एकवाक्यताम्** एकार्थप्रतिपादकत्वेनैकवाक्यताम् । 'अर्थैकत्वादेकं वाक्यम्' इति जैमिनिवचनात् । **तत्प्रतिपाद्यम्** पूर्वाध्यायप्रतिपाद्यम् । आत्मशब्दार्थमाह– **जीवेश्वरेति** ॥ 'न त्वेवाहम्' इत्यादिनोभयस्वरूपोक्तेरात्मशब्द उभयपर इति भावः । ननु 'एषा तेऽभिहिता साङ्ख्ये' इति पूर्वं साङ्ख्यस्योक्तत्वेन कथं 'जीवेश्वरस्वरूपमुक्तं पूर्वत्र' इत्युक्तम्? इत्यत आह– **साङ्ख्येति** ॥ **योगाख्यमिति** ॥ 'पूर्वत्र काले' इत्यन्यथाप्रतीतेर्व्याचष्टे - **पूर्वस्मिन्नध्याय इति** ॥ केचित्तु पूर्वशब्देनाव्यवहितपूर्वाध्यायस्यैव विवक्षितत्वान्न प्रथमाध्यायप्रसक्तिरित्याशयेनाऽह– **पूर्वस्मिन्नध्याय इति** ॥ **इत्याहुः** । **एवमिति** ॥ पूर्वाध्यायस्याऽत्मस्वरूपज्ञानसाधनोभयप्रतिपादकत्व इत्यर्थः । **ऐक्यानुपपत्तिः** अर्थैक्याभावेनैकवाक्यताऽनुपपत्तिरित्यर्थः । कुतो न? इत्यत आह– **साधनस्यैवेति** ॥ **प्राचुर्यात्** प्राधान्यात् । तथा च प्राधान्येन साधनप्रतिपादकत्वाद् एकवाक्यत्वव्यपदेशो युक्त इत्यर्थः ।

ननु प्राधान्येन साधनप्रतिपादकत्वेऽपि अप्राधान्येनाऽत्मस्वरूपस्यापि प्रतिपादनात् तदपेक्षयैक्यव्यपदेशः कस्मान्न स्यात्? इत्यत आह– **प्रचुरेणेति** ॥ योऽर्थो यत्र प्राधान्येनोच्यते सोऽध्यायस्तदर्थो यथा फलाध्याय इति भावः । अस्त्वेवम्, अथाप्यत्रोभयोरपि प्रतिपादनात् साधनमेव प्राधान्येनोक्तमित्यत्र किं ज्ञापकम्? इत्यत आह– **तथा चेति** ॥ **सप्तमादौ** सप्तमाध्यायस्याऽदौ । ननु साधनस्यैव प्राधान्येन 'ज्ञानसाधनमुक्तं पूर्वत्र' इत्येतावदेव वक्तव्यं 'आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र' इति वाक्यविन्यासः कुतः? इत्यत आह– **आत्मेति** ॥ ज्ञानसाधनं केन भागेनोक्तम्? इति शङ्कापरिहाराय गीतायाम् 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु' (२.३९) इति प्रकरणभेदस्य प्रदर्शितत्वात् तदनुसारेण भाष्यकारैरपि प्रकरणभेदप्रदर्शनार्थम् 'आत्मस्वरूपम्' इत्यादिकमुक्तमित्याशयः ।

॥ **एतदिति** ॥ पूर्वाध्यायेत्यर्थः । **तावदिति** ॥ समाधियोगस्तु षष्ठाध्याये निरूप्यत इति भावः । विपूर्वकस्य दधातेः करोत्यर्थकत्वेन कर्म विधीयते क्रियते इत्यसङ्गतार्थत्वपरिहाराय व्याचष्टे– **कर्तव्यमेवेति** ॥ केचित्तु 'सन्ध्यामुपासीत' इत्यादिवद् विधानाभावात् कथं 'विधीयते' इत्युक्तम्? इत्यत उक्तम्– कर्तव्यमेवेति' इत्याहुः । 'अकर्म कर्मान्यज्ञानादिकं विनिन्द्य' इत्यन्यथाप्रतीतेर्व्याचष्टे - **कर्माकरणमिति** ॥ 'सर्वथाऽहं कर्मैव न करिष्यामि' इति पक्षं पूर्वत्र विनिन्द्य' इत्यन्यथाप्रतीतिवारणायाऽह– **विनिन्द्यस्मिन्नध्याय इति** ॥ 'न हि

श्लोकः १

कश्चित्' (३.५) इत्यादिनेत्यर्थः । अनेन उत्तराध्याय इत्येतदपि व्याख्यातं भवति । अन्यथै-तदपेक्षयाऽप्युत्तरध्याये चतुर्थ इत्यन्यथाप्रतीतिः स्यादिति भावः । नन्वेतदध्यायस्याकर्म-निन्दाकर्मविधिरूपार्थ-द्वयप्रतिपादकत्वेनैकार्थत्वाभावाद् एकवाक्यता न स्यादित्यत आह– **अकर्मनिन्देति ॥** अकर्मणि निन्दिते सति कर्मविधौ प्रवर्तत इति कर्मविध्यनुकूलत्वेनैवाकर्मणो निन्दितत्वात् कर्मविधिरूपैकार्थत्वस्य प्राधान्यतः प्रतिपादनात् तदपेक्षयैकवाक्यतोपपन्नेति भावः ।

नन्वेवमेकार्थत्वाभिप्राये 'ज्ञानसाधनं कर्म विधीयत उत्तराध्याये' इत्येव कस्मान्नोक्तम्? 'अकर्म विनिन्द्य' इत्यंशः कुतः? इत्यत आह– **तथाऽपीति ॥** यद्यप्येवमेकार्थता, तथाऽपीत्यर्थः । ननु **'न हि कश्चित्'** (३-५) इत्याद्यैः कर्मविधानाभावात् कथं समस्ताध्यायेनापि कर्मैव विधीयत इत्युच्यते? इति शङ्कापरिहाराय प्रकरणभेदज्ञापनाय 'अकर्म विनिन्द्य' इत्युक्तमिति भावः ॥ **इति वदतेति ॥** कर्मणो ज्ञानसाधनत्वं वदतेत्यर्थः । ननु कर्मणो मोक्षसाधनत्वनिरासस्य का प्रकृतसङ्गतिः? इत्यत आह– **तेनेति ॥** कर्मणः सकाशद् बुद्धि-र्ज्यायसी चेत् कर्मणि कस्मान्नियोजयसि? तस्य मोक्षसाधनत्वाभावाद् बुद्धेरेव तद्भावात् । मोक्षसाधनस्यैवाधिकारिणा सम्पाद्यत्वाद् इत्यर्जुनप्रश्नाशयवर्णनं, तथा 'लोकेऽस्मिन्' इत्यत्र 'कर्मयोगेन योगिनाम्' इत्यधिकारिविशेषाणां कर्मणैव मुक्तिरिति कर्मणो मोक्षसाधनत्वं भगवतोऽभिप्रेतमिति प्रतिवचनव्याख्यानं च यद् भास्करेण कृतम्, तद् ज्ञानात् पूर्वं कृतस्य कर्मणो ज्ञानेनैव कृतार्थत्वम्, न लिङ्गभङ्गरूपमोक्षसाधनत्वमिति, 'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इत्यनुगीतोपक्रमे भगवतैव प्रतिपादितत्वेनापहस्तितमित्यर्थः । नन्वथापि ज्ञानोत्तरकृतकर्मण आनन्दाभिवृद्धिरूपसाधनत्वस्यापि 'स हि धर्मः' इति भगवतैवोक्तत्वेनाऽऽनन्दवृद्धिरूपमुक्तिसाधनत्वं ज्ञानोत्तरकृतकर्मणो नास्तीति प्रश्नाशयः । तदस्तीति प्रतिवचनाभि-प्राय इति व्याख्यायत इति चेत् तर्हि अनुज्ञया वर्तामह इत्यभिप्रेत्याऽह– **आनन्दवृद्धर्थता त्विति ॥** अर्जुनादीनां ज्ञानोत्तरकृतयुद्धादिकर्मण आनन्दवृद्ध्यर्थताया अस्माभिरङ्गीकारादिति भावः ।

**भावप्रकाशः (कृ.टि.)**– ननु 'योगे त्विमां श्रुणु' इति प्रतिज्ञातत्वाद्यावत्प्रतिज्ञान्तरं करिष्यते तावत् तदेव प्रतिपाद्यमिति ज्ञास्यते । तत् किं पुनः प्रतिपाद्यवर्णनेन ? किञ्च 'ज्ञानसाधनत्वेन' इत्यादिनैव प्रतिपाद्योक्तिलाभात् किम्' आत्मस्वरूपम्' इति वाक्येनेत्यत

आह– **पूर्वेति ॥ तत्प्रतिपाद्यमिति ॥** अबुद्धिस्थेन सङ्गतेः दर्शयितुमशक्यत्वात् पूर्वाध्याय-प्रतिपाद्यमाहेत्यर्थः । 'नत्वेवाहम्' इत्यादिना जीवेश्वरयोरुक्तत्वादाह– **जीवेश्वरस्वरूपमिति ॥** ननु 'जीवेश्वरस्वरूपमुक्तम् ' इत्ययुक्तम् । 'एषा तेऽभिहिता साङ्ख्ये' इति वाक्यात् पूर्वाध्याये साङ्ख्यस्यैवोक्तत्वावगमादित्यत उक्तम्– **साङ्ख्याख्यमिति ॥** अव्यवहितपूर्वश्लोके आत्मस्वरूप-ज्ञानसाधनयोरनुक्तेराह– **पूर्वस्मिन्नध्याय इति ॥ प्राचुर्यात्** प्राधान्यात् **सप्तमादौ** सप्तमोपक्रमे ।

ननु योगे त्विमां शृण्विति प्रतिज्ञातत्वात् ज्ञानसाधनत्वेन योग एव वाच्यो न तु कर्मेत्यत आह– **योगो द्विविध इति ॥** तथा च कर्मणोऽपि योगत्वात् ज्ञानसाधनत्वेन तत्कथनं युक्तमिति भावः । समाधिर्ध्यानम् । तथैव न्यायदीपिकोक्तेः । षष्ठे समाधिर्वक्ष्यत इति सूचयितुं 'तावत्' इत्युक्तम् । ननु कर्मकर्तव्यत्वबोधके 'लोकेऽस्मिन् ' इत्यादौ विधिप्रत्यय एव न दृश्यते । यत्र च दृश्यते 'नियतं कुरु कर्म' इत्यादौ तत्रापि कर्मकरणस्यैव सन्ध्योपासन-वद्विधेयत्वं न तु कर्मणः । यत्रापि 'युध्यस्व विगतज्वरः' इति विधेयत्वं प्रतीयते तत्रापि युद्धस्यैव न तु कर्ममात्रस्य । तत्कथं कर्म विधीयते इत्युक्तम्? इत्याशङ्क्य सर्वसङ्ग्रहायाह– **कर्तव्यमेवेति ज्ञाप्यत इति ॥** नन्वर्थैक्याभावादध्यायस्यैकवाक्यता न स्यादित्यत आह– **अकर्मनिन्दाऽपीति ॥**

॥ **एवमुक्तमिति ॥** 'अकर्म विनिन्द्य' इत्याद्युक्तमित्यर्थः । **तेनेति ॥** मोक्षसाधनता-निरासेनेत्यर्थः । **प्रश्नेति ॥** बुद्धिः कर्मापेक्षया ज्यायसी चेत् मता तर्हि घोरे युद्धाख्ये कर्मणि किमर्थं मां नियोजसि ज्ञानमेव सम्पादयिष्यामि नतु उभयमित्यादिरूपेण प्रश्नापव्याख्यानं, 'कर्मणामनारम्भात्, मोक्षं नाश्नुते, अतो ज्ञानकर्मणी समुच्चिते एव मोक्षसाधने' इति प्रतिवचनापव्याख्यानं चेत्यर्थ इत्याहुः ॥ कर्मणो मोक्षसाधनत्वं किं ज्ञानवत् प्राधान्येन उत आनन्दविवृद्ध्यर्थत्वेन । आद्यो भाष्यकृतैव 'ज्ञानसाधनत्वेन' इत्यादिना निरस्तः । द्वितीये त्विष्टापत्तिरित्याह– **आनन्दवृद्ध्यर्थतात्विति ॥**

## भाष्यम्

**कर्मणो ज्ञानमत्युत्तममित्यभिहितं भगवता 'दूरेण ह्यवरं कर्म'** (२.४९.) **इत्यादौ । एवं चेत् किमिति कर्मणि घोरे युद्धाख्ये नियोजयसि निवृत्तधर्मान् विनेत्याह– ज्यायसीति ॥**

श्लोकः १

भावप्रदीपिका (प.टी.)– तत्राद्यश्लोकं साभिप्रायमवतारयति । 'दूरेण' इति काम्य-कर्मणो ज्ञानमुत्तममित्युक्तम् । तर्हि तत्साधनेपु निवृत्तिधर्मेष्वेव नियोजय न प्रवृत्तिधर्मे युद्धे । युद्धमपि निवृत्तिधर्मश्चेत् तर्हि तव वाक्यस्य व्यामिश्रता स्यात् । 'स्वर्गद्वारं' 'प्राप्स्यसे स्वर्गम्' इति वचनादिति । श्लोकार्थमाह– **कर्मण इति** ।। १,२ ।।

भावप्रकाशिका (न.टी.)– तत्र तावज्ज्ञानस्य मुक्तिसाधनत्वम्, तत्साधनत्वं च कर्मणोऽङ्गीकारेऽपि न घोररूपं युद्धादिकं मुक्तिहेतुज्ञानसाधनम्, 'शान्तो दान्तः' इत्यादि-विरोधात् । 'स्वर्गद्वारमपावृतम्' इत्यादिनाऽन्यार्थतावगतेश्च । अतः स्वर्गादिफलकर्मणः सकाशात् बुद्धिर्जायसी चेत् बुद्धिहेतुशान्त्यादिनिवृत्तिधर्मेष्वेव नियोजय माम्, किमिति पुनः स्वर्गादिहेतुयुद्धादौ नियोजयसि ? इति प्रश्नाभिप्रायं प्रकटयन् तद्वाक्यमवतारयति– **कर्मण इति** ।।

प्रमेयदीपिका (ज.टी.)– बीजं प्रदर्शयन् प्रश्नवाक्यतात्पर्यमाह– **कर्मण इति** ।। आदिपदेन 'कृपणाः फलहेतवः' (२.४९) इत्यादेर्ग्रहणम् । घोरे रागद्वेषाद्युपेते । अत्रो-भयत्र कर्मशब्देन काम्यं कर्माभिप्रेतम् । निवृत्तधर्मान् निष्कामधर्मान् । यत्याश्रम-विहिताञ्छमदमादीन् । अत्र कर्मणि किमिति नियोजयसि? इत्येकः प्रश्नः घोरे इति द्वितीय इत्यवधेयम् ।।

इदमुक्तं भवति । आश्रमत्रयविहितानि यज्ञादीनि, युद्धादीनि च कर्माणि काम्यान्येव । फलश्रवणात् 'सर्व एते पुण्यलोका भवन्ति' (छा.२.२.१६) इत्यादि । तथाऽत्रापि– 'हतो वा प्राप्स्यसि स्वर्गम्' (२.३७) इत्यादि । चतुर्थाश्रमविहितानि शमदमादीन्य-काम्यानि। फलाश्रवणात् । 'शान्तो दान्तः' इत्युपक्रम्य 'आत्मानं पश्येत्' (बृ.६.४.२४) इति ज्ञानार्थत्वश्रवणाच्च । ज्ञानं च काम्यात् कर्मणोऽत्युत्तममित्यभिहितम् । ततश्च काम्ये कर्मणि युद्धे 'युद्ध्यस्व भारत' (२.१८) इति नियोजनमयुक्तम् । किन्तु 'चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भव' इति नियोक्तव्यम् ।।

भावबोधः (र.टि.)– ।। उभयत्रेति ।। गीतायां भाष्ये चेत्यर्थः । 'घोरे' इत्यस्य 'श्रेयान्' इति पृथक् परिहारदर्शनादिति भावः ।।

**भावदीपः (रा.टि.)– ॥ बीजमिति ॥** 'प्रश्नस्य' इति योज्यम् ॥ **अत्रोभयत्रेति ॥** प्रश्नपरे गीतावाक्ये तद्भाष्ये चेत्यर्थः । यद्वा **अत्र** भाष्ये **'उभयत्र कर्म'** इत्यत्र कर्मणीत्यत्र चेत्यर्थः ॥ **एकः प्रश्न इति ॥** सच 'लोकेऽस्मिन्' (३.३) इत्यत्र, द्वितीयस्तु 'श्रेयान् स्वधर्मः' (३.३५) इत्यत्र निरसिष्यत इति तत्रैव व्यक्तीभविष्यतीति भावः ॥ ननु सर्वकर्मणां काम्यत्वात् कथं 'निवृत्तधर्मान् विना' इत्युक्तिः? मुक्त्यर्थानां निवृत्तधर्मत्वे तु– 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' (२.३९) इति युद्धकर्मणोऽपि मुक्त्यर्थत्वेन निवृत्तत्वात् 'निवृत्तधर्मान् विना' इत्युक्तमयुक्तमित्यतः प्रश्नपरश्लोकद्वयतात्पर्यमाह– **इदमुक्तमिति ॥**

**भावरत्नकोशः (सु.टि.)– ॥ बीजं प्रश्नबीजम् ॥ 'इत्यादेः'** इत्यादिपदेन 'बुद्धियुक्तो जहातीह' (२.५०) इत्यादेर्ग्रहणम्। 'घोरं भीमं भयानकम्' इति (अमर) कोशरीत्या घोरशब्दस्य भयहेतुत्वार्थकत्वं न प्रकृते घटते । 'सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्' (२.३२) इति युद्धस्यापेक्षितत्वावेदनेन तत्र विरोधादित्यत आह– **घोरे रागेति ॥** अत्र भाष्ये। **उभयत्र** 'कर्मणः' इत्यत्र, 'कर्माणि' इत्यत्र **च** । 'अतीतधर्मान्' इति प्रतीतिं वारयन् 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते' (म.स्मृ. १२.८९) इति प्रमाणप्रसिद्ध्यनुसारेण तदर्थमाह– **निवृत्तेति ॥ श्रुतफलाभिसन्धिरहितान्** भगवदर्पणबुद्ध्याऽनुष्ठितधर्मानित्यर्थः । के ते तथविधा धर्माः? किंरूपाश्च? इत्यत उक्तम्– **यत्याश्रमेति ॥ शमः** भगवन्निष्ठबुद्धित्वम् । **दमः** इन्द्रियनिग्रहः । आदिपदेनोपरतितितिक्षादयो ग्राह्याः ॥ ननु कर्मणि किमिति नियोजयसि ? इति प्रश्ने 'ज्यायसी' इत्यनेन हेतोरभिधानात् 'घोरे' इति विशेषणं व्यर्थमित्याशङ्क्य, 'लोकेऽस्मिन्' (३.३) इति श्लोके, 'श्रेयान्' (३.३५) इति श्लोके च पृथक् परिहारदर्शनात् तदनुरोधेन प्रश्नद्वयमत्रेत्याह– **अत्र कर्मणि किमितीत्यादि ॥** 'तत् किं घोरे कर्मणि माम्' इति विशेषणं पूर्वं निपात्यापि शक्ये वचने यत् परतो निपात्य प्रश्नकरणं तत् किमपि प्रयोजनं सूचयति । तच्च प्रश्नद्वयकरणोपस्थापनमेवेति भावः ।

कर्मणां बुद्ध्यवरत्वेन तत्र नियोजनं त्वदीयं नोपपद्यत इति प्रश्नतात्पर्ये 'निवृत्तधर्मान् विना' इति भाषणमयुक्तम् । तेषामपि कर्मत्वाद् इत्यतो भाष्यभावमाह– **इदमुक्तमिति ॥** यद्वा सबीजं प्रश्नवाक्यतात्पर्यमाहेत्युक्तम् । तदेव तात्पर्यं व्यनक्ति– **इदमुक्तमिति ॥**

श्लोकः १

॥ **यज्ञादीनि** यज्ञदानव्रततपांसि । एतानि च त्रैवर्णिकसाधारणधर्माः । असाधारणधर्मा-नाह– **युद्धादीनि चेति** । कृषिगोरक्षादिकं वैश्यासाधारणधर्मः, याजनमध्यापनं प्रतिग्रहश्च विप्रासाधारणधर्म आदिपदेन ग्राह्यः । विप्रधर्माणामादौ वक्तव्यत्वेऽपि 'युद्धादीनि' इति क्षत्रियधर्माभिधानं प्रस्तावात् । यज्ञादीनां फलश्रवणं दर्शयति– **सर्व एत इति** । युद्धादीनां तद् दर्शयति– **तथेति** ।

'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥' (२.३७)

इति गीतायामप्यस्ति फलश्रवणमित्यर्थः । **इत्यादि** इति क्रियाविशेषणम् । विश्वजिन्न्यायेन स्वर्गफलकल्पनायां फलाश्रवणमसिद्धमित्यत आह– **शान्त इति** ॥ युक्तं विश्वजिदादौ सर्वथा फलाश्रवणात् कामिनियोज्यान्वयाय 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' (मी.सू. ४.३.१३) इति स्वर्ग एव फलतया कल्प्यत इति । प्रकृते तु न तथा । ज्ञानलक्षणदृष्ट-फलश्रवणादित्यर्थः । **अयुक्तमिति** ॥ 'इमं लोकं हीनतरं वा विशन्ति' (आथ. १.२.१०) इत्यादिना तस्य क्लेशशिरस्कत्वावेदनादिति भावः । **तद्धर्मनिष्ठः** चतुर्थाश्रमविहितधर्माचरण-निष्ठावान् । तस्य च निवृत्तधर्मतया तदनुष्ठानस्य 'कर्मणा ज्ञानमातनोति' इति ज्ञानार्थत्वाव-गमादिति भावः ।

**भावदीपिका (श्री.टि.)– ॥ वीजम्** प्रश्नबीजम् । **इत्यादेरिति** ॥ 'बुद्धियुक्तो जहातीह' (२.५०) इत्यादिना ज्ञानफलस्य कर्मफलाद् वैलक्षण्यकथनेन कर्मापेक्षयाऽप्युत्तमत्वमभिप्रेत-मिति भावः ॥ ननु गीतायां भाष्ये च कर्मशब्देन यदि सामान्यतः कर्ममात्रं विवक्षितम्, तदपेक्षया ज्ञानस्योत्तमत्वमित्यर्थः, तर्हि निवृत्तधर्माणामपि कर्मान्तर्गतत्वेन कर्मणि कस्मा-न्नियोजसीत्येव वक्तव्यम् । 'निवृत्तधर्मान् विना' इत्येतदसङ्गतमित्यत आह– **अत्रोभयत्रेति** ॥ गीतायां भाष्ये चेत्यर्थः । 'निवृत्तधर्मान् ध्वस्तधर्मान्' इत्यन्यथाप्रतीतिनिरासायाऽह– **निष्कामेति** ॥ 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते' (म.स्मृ.१२-८९) इति वचनादिति भावः । ननु 'घोरे' इति विशेषणं व्यर्थमित्यत आह– **अत्रेति** ॥ **द्वितीय इति** ॥ अस्य 'श्रेयान् स्वधर्मो विगुणः' (३.३५) इति पृथक् परिहारदर्शनादित्याशयः । ननु च युद्धादिकर्मणां ज्ञानद्वारा मोक्षसाधनत्वस्योक्तत्वेन 'तत् किं कर्मणि' इति कथमाक्षेपः

सङ्गच्छते? इत्यत आह– **इदमुक्तं भवति ॥ आश्रमत्रयेति ॥** ब्रह्मचारि-गृहस्थ-वानप्रस्थे-त्यर्थः। **ब्रह्मचारिणाऽप्यश्वत्थाम्ना युद्धादेः कृतत्वादस्ति ब्रह्मचारिणोऽपि युद्धकृतिरिति ज्ञेयम्। फलश्रवणादिति ॥** ज्ञानेतरक्षयिफलश्रवणादित्यर्थः। तदेव श्रवणं दर्शयति– **सर्व एत इति ॥** पूर्वं प्रकृताः सर्वे यज्ञादिकर्तारः स्वर्गादिपुण्यलोकवन्तो भवन्तीत्यर्थः। **फलाश्रवणादिति ॥** ज्ञानेतरक्षयिफलाश्रवणादित्यर्थः। ननु 'आत्मानं पश्येत्' इति श्रुतौ कथं शमादीनां ज्ञानार्थत्वं श्रूयत इत्यत उक्तम् – **शान्त इति ॥** 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽ-त्मन्येवाऽत्मानं पश्येत्' (बृ. ६.४.२४) इत्यत्र शान्तादिर्भूत्वा पश्येदित्युक्त्या शमादीनां ज्ञानफलकत्वं लब्धमिति भावः। गीताभाष्ययोरर्थमनुवदति – **ज्ञानं चेति ॥** यत्याश्रमविहित-शमादिसाध्यं ज्ञानं चेत्यर्थः। **अभिहितम्** 'दूरेण ह्यवरं कर्म' (२-४९) इत्यादौ। 'निवृत्त-धर्मान् विना' इति भाष्याभिप्रायमाह– **किन्त्विति ॥ चतुर्थाश्रमम्** यत्याश्रमम्। **तद्धर्मेति ॥** चतुर्थाश्रमविहितशमादिधर्मेत्यर्थः।

**भावप्रकाशः (कृ.टि.)– ॥ बीजमिति ॥** प्रश्नबीजमित्यर्थः। **इत्यादेरिति ॥** आदिपदेन 'बुद्धियुक्तः' इत्यादेः ग्रहणम्। ननु 'घोरं भीमं भयानकम्' इत्यमरोक्तेर्घोरत्वं भयहेतुत्वम्। न च युद्धस्य तदस्ति। 'सुखिनः पार्थ लभन्ते युद्धमीदृशम्' इति वीरक्षत्रियाणां भयाभावावगमा-दित्यत आह– **रागेति उभयत्रेति ॥** गीतायां भाष्ये चेत्यर्थः। अतीतधर्मानित्यन्यथाप्रतीति-निरासायाह– **निष्कामधर्मानिति ॥** नन्वनुपलम्भादुक्तधर्मा एव न सन्तीत्यत आह– **यत्या-श्रमेति ॥** ननु कर्मणि नियोजनमयुक्तमित्यत्र 'ज्यायसी' इत्यनेन हेतोरुक्तत्वाद् 'घोरे' इति विशेषणं व्यर्थमित्याशङ्क्य 'लोकेऽस्मिन्' इति 'श्रेयान्' इति च पृथक् परिहारद्वयदर्शनानु-रोधेनाह– **अवेति ॥ यज्ञादीनीति ॥** यज्ञदानतपांसीत्यर्थः। एतेषां च त्रैवर्णिकसाधारण-धर्मत्वात् क्षत्रियाद्यसाधारणधर्मेभ्यो युद्धादिभ्यः पृथक् कीर्तनम्। **युद्धादीनीति ॥** अत्र युद्धमैश्वर्यं च क्षत्रियस्यासाधारणधर्मौ। कृषिगोरक्षादिकं वैश्यस्य। जीवनार्थं याजनमध्यापनं प्रतिग्रहश्च विप्रस्य। एते धर्मा युद्धादिपदेन विवक्षिता इति बोध्यम्। यज्ञादीनां फलश्रवणं दर्शयति– **सर्व एत इति ॥**

श्लोकः १

# भाष्यम्

**कर्मणः सकाशाद् बुद्धिर्ज्यायसी चेत्, ते तव मता, तत् तर्हि ॥ १ ॥**

भावप्रकाशिका (न.टी.)– 'ज्यायसी' इत्यादि 'तत्' इत्यन्तं वाक्यं योजयति– **कर्मणः सकाशादिति** ॥ 'हतो वा प्राप्स्यसे(प्राप्स्यसि-पां) स्वर्गम्' इत्युक्त्वा 'कर्मण्येवाधिकारस्ते मा फलेषु' इत्याद्युक्तेः व्यामिश्रवाक्यम् ॥ १,२ ॥

प्रमेयदीपिका (ज.टी.)– ननु युद्धमपि 'कर्मबन्धं प्रहास्यसि' (२.३९) इत्युक्तत्वाज्ज्ञानार्थं भवतीति मतम्, तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमेवापद्यते । अथैवं मतम् । युद्धादीनि कर्माणि काम्यान्यकाम्यानि च । तत्र यः सकामः तं प्रति 'हतो वा' (२.३७) इत्याद्युक्तम् । यः पुनर्ज्ञानार्थी तमुद्दिश्य 'कर्मण्येवाधिकारः' (२.४७) इत्युक्तम् । तत्र का व्यामिश्रता? इति । तथाऽपि शुद्धेषु निवृत्तलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावात् । अत्र तद्भावादिति ॥

किञ्च कामक्रोधादीनां नरकफलत्वमुक्तम् । युद्धे च कामादयोऽवर्जनीयाः । ततोऽपि तत्र नियोजनमयुक्तम् ॥ नन्वस्योत्तरं 'सुखदुःखे समे कृत्वा' (२.३८) इत्युक्तम् । सत्यम् । तथाऽपि रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्स्वशक्यानुष्ठेये युद्धे नियोजनमयुक्तमेवेति ॥

प्रथमश्लोके पदानां व्यवहितत्वादन्वयं दर्शयन् किञ्चिद्व्याचष्टे– **कर्मण इति** ॥ षष्ठीभ्रान्तिनिरासाय **सकाशात्** इत्युक्तम् । **बुद्धिः** आत्मज्ञानम् । **ज्यायसी** प्रशस्ततरा ॥ १ ॥

भावबोधः (र.टि.)– ॥ **व्यामिश्रेणेति** ॥ युद्धस्य स्वर्गाद्यर्थत्वप्रतिपादक'हतो वा' इति ज्ञानार्थत्वप्रतिपादक'कर्मबन्धम्' इति विरुद्धार्थप्रतिपादकरूपव्यामिश्रेणेत्यर्थः ॥ **का व्यामिश्रतेतीति** ॥ अत एव प्राक् 'इव' इत्युक्तम् । **वैकल्पिकेष्विति** ॥ अधिकारिभेदेन काम्याकाम्यरूपेष्वित्यर्थः । **किञ्चिदिति** ॥ 'तत्' इत्यस्य 'तर्हि' इति व्याख्यानादिति भावः ॥ २ ॥

भावदीपः (रा.टि.)– ॥ **का व्यामिश्रतेति** ॥ हतो वेत्यस्य अधिकारिभेदेन व्यवस्थितत्वादिति भावः ॥ **वैकल्पिकेषु** व्यवस्थितविकल्पवत्स्वित्यर्थः ॥ **नरकफलत्वमुक्तमिति** ॥

'विषयान् ध्यायतः'(२.६२) इत्यादाविति भावः ॥ 'ज्यायसी' इत्यस्य वृद्धतमा इति भ्रमनिरासायाह- **प्रशस्यतरेति** ॥ १ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– प्रशस्यशब्दादतिशयार्थे 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति ईयसुन्प्रत्यये 'ज्य च' इति तस्य ज्यादेशे 'ज्यादादीयसः' इति ज्यात्परस्य ईयसुनः ईकारस्य आदादेशे निष्पन्नज्यायःशब्दात् स्त्रियाम् ' उगितश्च' इति ङीपि ज्यायसीशब्द-निष्पत्तिरिति भावेन तं व्याचष्टे – **ज्यायसी प्रशस्यतरेति** ॥

**भावरत्नकोशः (सु.टि.)**– **तदा** युद्धादिकर्मणोऽपि ज्ञानार्थत्वेन ज्ञानान्तर्भावे । 'दूरेण ह्यवरं कर्म' (२.४९) इति ज्ञानबहिर्भाववचनेन त्वदीयेन विरुद्धार्थप्रतिपादकेन बुद्धेर्मोहनम् अनवस्थानम् एकार्थनिष्ठत्वाभाव आपद्यत इत्यर्थः । 'हतो वा' (२.३७) इत्यनेन युद्धस्य स्वर्गाद्यर्थत्वप्रतिपादनात्, 'कर्मबन्धं प्रहास्यसि' (२.३९) इति च ज्ञानार्थत्वप्रतिपादनाद् इति भावः । परमकारुणिकस्य तव न सर्वथा मोहनार्थवचनमस्ति । मम तु वाक्यद्वयं शृण्वत एवं प्रतिभातीति मोहनमिवेति 'इव'शब्दः । वचनद्वयस्य मोहनार्थत्वं परिहर्तुं शङ्कते– **अथैवमिति** ॥ **वैकल्पिकेषु** अधिकारिभेदेन काम्याकाम्यरूपेषु ।

॥ **तत्र** यत्याश्रमविहितधर्मेषु । **अत्र** युद्धादिषु । 'घोरे रागद्वेषाद्युपेते' इति कर्म विशेषितम् । तद् द्वितीयप्रश्नतात्पर्यमाह– **किञ्चेति** ॥ **उक्तम्** 'ध्यायतो विषयान्' (२.६२) इत्यत्र । ततोऽपि न केवलं काम्ये विक्षेपभावात्, किन्तु कामक्रोधाभिभूतत्वेन नरकफलत्वादपि । **अशक्यानुष्ठाने** रागक्रोधादिदोषविनिर्मोकेणाशक्यानुष्ठाने । **पदानां** 'कर्मणः', 'बुद्धिः', 'ज्यायसी' इति पदानाम् । **व्यवहितत्वात्** अन्वयबोधानुकूलसन्निधिशून्यत्वात् । 'सकाशात्' इति शेषपूरणात् 'तत्' इत्यस्यानुवादेन 'तर्हि' इति व्याख्यानाच्च आह– **किञ्चिदिति** ॥

'एषा तेऽभिहिता साङ्ख्ये बुद्धिः' (२.३९) इत्यत्र बुद्धिशब्दस्य वागर्थकत्वं भाषितमिति अत्रापि तद्ग्रहणे तस्याः कर्मणो ज्यायस्त्वानुवादोऽनुपपन्न इत्यतो भावे क्तिन्नन्तत्वमभ्युपेत्य 'शुद्धात्मतत्त्वविज्ञानम्' (व्या.स्मृ.) इति प्रमाणसिद्धं भगवद्विषयं ज्ञानमत्र ग्राह्यमित्याह– **आत्मज्ञानमिति** ॥ 'ज्यायसी' इत्यस्य वृद्धशब्दप्रकृतिकत्वे वयःपरिपाकादिरूपाया वृद्धेर्बुद्धा-वसम्भवात्, प्रशस्यशब्दप्रकृतिकत्वमभिप्रेत्य व्याचष्टे– **ज्यायसी प्रशस्ततरेति** ॥ बुद्धिकर्मणो-

मध्ये वृद्धिरतिशयेन प्रशस्येत्यर्थः । प्रशस्तवाचिप्रशस्यशब्दाद् आतिशायनिके ईयसुन् प्रत्यये 'ज्य च' इति ज्यादेशो 'ज्यादादीयसः' इत्यात्त्वे 'उगितश्च' इति ङीपि 'ज्यायसी' इति रूपे तेनोक्तार्थलाभ इति भावः । ईयसुन्प्रत्ययस्य अजादित्वात् तस्य च 'अजादी गुणवचनादेव' इति नियमितत्वात् प्रश्नस्यानुवचननिमित्तत्वात् ततः कथमीयसुनुत्पत्तिः? इति शङ्का 'आदेश-विधानादेवैतद्विषये 'अजादी गुणवचनादेव' इति नियमो न प्रवर्तते' इति काशिकायां परिहृता । 'प्रशस्यतरा' इत्यपि क्वचित् पाठः ॥ १-२ ॥

**भावदीपिका (श्री.टि.)**– 'व्यामिश्रेणैव' इति श्लोकनिवर्त्याशङ्कामाह– **नन्विति** ॥ **ज्ञानार्थमिति** ॥ '**बुद्ध्या** युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' (२.३९) इति ज्ञानद्वारा युद्धादिकर्मणो मोक्षसाधनत्वोक्त्या ज्ञानार्थत्वमुक्तमित्यर्थः । तथा च 'तत् किम्' इत्याक्षेपो युक्त इति भावः । **व्यामिश्रेणेति** ॥ 'हतो वा' (२.३७) इति ज्ञानार्थत्वं चोक्तम् । तथा च विरुद्धार्थप्रतिपादकरूपव्यामिश्रेण वाक्येनेत्यर्थः । ननु नास्ति वाक्यस्य व्यामिश्रता । युद्धादेरधिकारिभेदेन स्वर्गज्ञानार्थत्वयोरुपपत्त्या विरोधाभावादित्याशङ्कते– **अथैवं मतमिति** ॥ **शुद्धेष्विति** ॥ मनोविक्षेपकारित्वाभावादधिकारिभेदेन काम्याकाम्योभयरूपत्वाख्यवैकल्पिकत्वा-भावाच्च शुद्धत्वमिति द्रष्टव्यम् । **निवृत्तलक्षणेषु** निष्कामेषु । **वैकल्पिकेषु** अधिकारिभेदेन काम्याकाम्यरूपेषु । **अत्रेति** ॥ तथा च मनोविक्षेपकारित्वाद् युद्धादिकं न करोमीति भावः ।

'घोरे' इति द्वितीयप्रश्नं विवृणोति – **किञ्चेति** ॥ **नरकेति** ॥ 'सङ्गात् सञ्जयते कामः' (२-६२) इत्याद्युक्त्वा 'विनश्यति' इति नरकफलकत्वोक्तेः । **नियोजनमयुक्तममिति** ॥ तथा च नरकहेतुभूतकामाद्युपेते युद्धादौ नियोजनमयुक्तम् । तथात्वे तव मां प्रत्याप्तत्वं न स्यादिति भावः । ननु रागाद्युपेतमपि युद्धं कर्तव्यम् । नरकफलप्राप्त्या जायमानस्य दुःखस्य चेह राज्य-लाभेन जायमानसुखेन समीकर्तव्यत्वादित्याशङ्कते– **नन्वस्येति** ॥ 'घोरे' इत्यनेनोक्तद्वितीय-प्रश्नस्येत्यर्थः । **अशक्येति** ॥ जीवेच्छुनाऽल्पबलेन युद्धादेः कर्तुमशक्यत्वादित्याशयः । यद्वा, रागादिकं विनाऽशक्यानुष्ठानेष्वित्यर्थः । **अयुक्तमिति** ॥ तथात्वे मम नरकाद्यनर्थप्राप्तेरित्या-शयः । **किञ्चिदिति** ॥ ते इत्यस्य तवेति, 'तत्' इत्यस्य 'तर्हि' इत्येव व्याख्यानादिति भावः । **आत्मेति** ॥ जीवेश्वरेत्यर्थः ।

ननु 'वृद्धस्य च' वृद्धशब्दस्यापि ज्यादेशः स्याद् इष्ठेयसुनोः परयोः । अतिशयेन वृद्धो ज्येष्ठः, ज्यायान् । एवं च प्रकृते वृद्धशब्दस्य ज्यादेशे सति 'ज्यायसी' इति रूपम् । तर्हि कर्मणः सकाशाद् बुद्धिः ज्यायसी अतिशयेन वृद्धेत्यर्थप्राप्त्या प्रकृतासङ्गतिरित्यत आह– **ज्यायसी प्रशस्ततरेति** ॥ अतिशयेन प्रशस्तेत्यर्थः । तथा च नात्र वृद्धशब्दस्य ज्यादेशे सतीदं रूपम्, येनासङ्गतिः । किन्तु प्रशस्यशब्दस्य ज्यादेशे सति । तथा हि । 'ज्य च' इति सूत्रम् । अत्र 'प्रशस्यस्य श्रः' इति पूर्वसूत्रात् 'प्रशस्यस्य' इत्यनुवर्तते । तथा च प्रशस्यशब्दस्य ज्यादेशः स्यादिष्ठेयसुनोः परयोः । अतिशयेन प्रशस्यो ज्येष्ठः, ज्यायान् । एवं च प्रशस्यशब्दस्य ईयसुनि परे ज्यादेशे 'उन्' इत्यस्य लोपे, ज्य ईयस् इति जाते, 'ज्यादादीयसः' ज्यात् परस्य ईयस ईकारस्य आत् आकारादेशः स्यादित्याकारे, ज्य आयस् इति जाते सवर्णदीर्घे ज्यायस् इति प्रातिपदिकनिष्पत्त्यनन्तरं सुप्रत्यये 'उगितश्च' इति ईयसुन उगित्त्वात् ङीपि, ङकारपकारयोर्लोपे 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' इति ङ्यन्तात् परस्य सोर्लोपे ज्यायस् ई 'ज्यायसी' इति रूपम् । तत्र प्रशस्यशब्दादेशभूत 'ज्य' इत्यस्य 'प्रशस्त' इति व्याख्यानम् । तरपा ईयसुनो व्याख्यानम् । 'द्विवचनविभज्योपपदे तरबीयसुनौ' । अत्र 'अतिशायने तमबिष्ठनौ' इति पूर्वसूत्रात् अतिशायने इत्यनुवर्तते । तथा च 'अतिशायने तरबीयसुनोर्विधानाद् अयम् अनयोरतिशयेन लघुः 'लघुतरः' 'लघीयान्' चेति प्रयोगदर्शनात् तरबीयसुनोरतिशयरूपैकार्थवाचित्वाद् इत्यवधेयम् । अत एवोक्तम् अमरकोशे– 'वृद्ध-प्रशस्ययोर्ज्यायान्' इति ॥ १-२ ॥

**भावप्रकाशः (कृ.टि.)**– युद्धादीनां तद्दर्शयति– **तदेति व्यामिश्रेणेति** ॥ विरुद्धार्थ-प्रतिपादकेनेत्यर्थः । 'हतो वा' इत्यनेन युद्धस्य स्वर्गाद्यर्थत्वप्रतिपादनात् 'कर्मबन्धम्' इत्यनेन च ज्ञानार्थत्वप्रतिपादनादिति भावः । **मोहनमिवेति** । परमकारुणिकस्य तव मोहकत्वं नास्त्येव । तथापि ममैवं प्रतिभाति इति द्योतयितुमिवशब्दः । **वैकल्पिकेष्विति** ॥ अधिकारिभेदेन काम्या-काम्यरूपेष्वित्यर्थः । **उक्तमिति** ॥ 'ध्यायतो विषयान् ' इत्यत्रेति शेषः । **किञ्चिदिति** ॥ 'कर्मणः' इत्यस्य पञ्चम्यन्तत्वसूचनाय 'सकाशात्' इत्युक्तत्वात् 'तत्' इत्यस्य 'तर्हि' इति व्याख्यातत्वाच्चेति भावः । 'एषा तेऽभिहिता साङ्ख्ये बुद्धिः' इतिवद् बुद्धिशब्दस्य बोधकवाक्यपरत्वे तस्य कर्मणो ज्यायस्त्वानुवादोऽयुक्त इत्यत आह– **आत्मज्ञानमिति** ॥ ननु

श्लोकः १
'ज्यायसी' इत्यस्यातिशयेन वृद्धेत्यर्थः । तस्य वृद्धशब्दप्रकृतिकत्वात् । न चासौ युक्तः । वृद्धेरवस्थाविशेषरूपवृद्धत्वाभावादित्यत आह– **प्रशस्ततरेति** ।। नायं वृद्धशब्दप्रकृतिकः, किन्तु प्रशस्तवाचिप्रशस्यशब्दादतिशयार्थे ईयसुनि 'ज्य च' इति ज्यादेशे 'ज्यादादीयसः' इति ईयसुन ईकारस्यात्वे 'उगितश्च' इति ङीपि च निष्पन्नः । अत उक्तार्थलाभ इति भावः ।। १ ।।

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ।। २ ।।**

श्रीभगवानुवाच-

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ।। ३ ।।**

## भाष्यम्

**ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात् त्वं कर्मण्यप्यधिकृत इति तत्र नियोक्ष्यामीत्याशयवान् भगवानाह– लोक इति ।।**

भावप्रदीपिका (प.टी.)– साभिप्रायं परिहारवाक्यमवतारयति– **ज्यायस्त्वेऽपीति** ।। सत्यम्, प्रवृत्तकर्मणो बुद्धिर्ज्यायसीति । तथाऽपि **तत्र त्वां नियोक्ष्यामि** । यत आधिकारिकत्वात् **त्वं कर्मण्यधिकृतः** । प्रवृत्तिकर्मणैव स्वर्गो ज्ञानं च भवति तवेत्यर्थः ।।

भावप्रकाशिका (न.टी.)– सत्यम्, बुद्धिरभ्यधिका स्वर्गादिफलकर्मणः । तथाऽप्यधिकारिभेदाद्युद्धादेरपि बुद्धिहेतुत्वं बुद्धिमद्युद्धादेर्मुक्तावानन्दवृद्धिहेतुत्वं चाविरुद्धमिति परिहाराभिप्रायं प्रकटयन् तद्वाक्यमवतारयति– **ज्यायस्त्वेऽपीति** ।। न च 'हतो वा' इत्यादिनाऽन्यार्थतो मुक्तिविरोधत्वं युद्धादेः, उत्तमाधिकारिज्ञानिकर्मणः स्वर्गाद्यतिशयजनकत्वेऽपि मुक्तावानन्दवृद्धिकरत्वाविरोधात् । अधिकारिणां च यावदधिकारमवस्थितेरपेक्षितत्वात् स्वर्गादाविति भावः । अधिकारिशब्दो न ज्ञानाधिकारिमात्रमाचष्टे किन्तु कांश्चिदेव । तथा ह्युक्तम्—

'प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ।
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ताः अनधीकारिणः परे ॥' इति ब्रह्माण्डे ।

प्रमेयदीपिका (ज.टी.)– एवं चेत् प्रश्नः, तर्हि कथं परिहारवाक्यं सङ्गच्छते? तत्र निष्ठाद्वैविध्यकथनादित्यतस्तदभिप्रायं वदन्नवतारयति– **ज्यायस्त्वेऽपीति** ॥ 'बुद्धिः काम्यकर्मभ्यो ज्यायसी' इति यदुक्तं तत्तथैव इत्यर्थः । तथाऽपि त्वां **तत्र** वैकल्पिके युद्धादिकर्मणि प्रेरयामि । कुतः? आधिकारिकत्वात् । त्वं **कर्मण्यपि** विक्षेपकारिण्यपि वैकल्पिकेऽधिकृत इति कृत्वा ॥

अयमत्रोत्तरक्रमः । आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च न शुद्धकाम्यानि। किन्तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानाद्यर्थानि च भवन्ति । अतो बुद्धेः काम्यकर्मणो ज्यायस्त्वेऽपि युद्धस्य बुद्ध्यर्थत्वसम्भवात् तत्र नियोगो नानुपपन्नः । यतिधर्मान् विना किमेतेन नियोगेन? इति चेद् अनधिकारिकाणामेव यत्याश्रमस्वीकारो नाधिकारिकाणाम् । तैर्गृहस्थाद्याश्रम-मपरित्यज्यैव तद्विहितानि कर्माणि निष्कामतयाऽनुष्ठेयानि इति ईश्वरनियमात् तव चाधिकारिकत्वादिति ॥

'स्वराद्यन्तोपसृष्टाच्च' इति कात्यायनवचनमनित्यम् । अत एव न पाणिनिरभाणीत् ॥

भावबोधः (र.टि.)– ॥ **वाक्यं सङ्गच्छत इति** ॥ स्वविधेययुद्धादिकर्मणः निष्कामतया ज्ञानद्वारा मोक्षहेतुत्वादेरकथनादिति भावः । ननु 'प्रोपाभ्यां युजेः' इत्यात्मनेपदविधायकसूत्रे वार्तिककृता 'स्वराद्यन्त' इति स्वराद्यन्तोपसर्गाणामुपसङ्ख्यानात् 'नि' इत्युपसर्गस्य स्वरान्त-त्वात् 'नियोक्ष्ये' इत्यात्मनेपदं भवेत् । कथं परस्मैपदप्रयोगः? इत्यत आह– **स्वरेति** ॥ **अत एवेति** ॥ अनित्यत्वादेवेत्यर्थः । अन्यथा 'प्रोपाभ्याम्' इत्यनुक्त्वा । 'स्वराद्यन्ताभ्याम्' इत्येवावक्ष्यदिति भावः ।

भावदीपः (रा.टि.)– ननु 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' (पा.सू.१.३.६४) इत्यात्मनेपद-विधिसूत्रे 'स्वराद्यन्तोपसृष्टाच्च इति वक्तव्यम् इति वार्त्तिके स्वरशब्दिताजन्तोपसर्गयुक्ताद्

श्लोकः २,३

'युजिर् योगे' (पा.धा.१४४४) इति धातोरात्मनेपदोक्तेः 'नियोक्ष्ये' इति प्रयोक्तव्यम्। कथं 'नियोक्ष्यामि' इति प्रयुक्तम्? इत्यत आह– **स्वराद्यन्तेति** ॥ स्वरः अच् आदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बद्धस्य युजेः अस्माद्धातोरात्मनेपदं वक्तव्यमिति वार्तिकार्थः ॥ कात्यायनवाक्यस्य अनित्यत्वे ज्ञापकमाह– **अत एवेति** ॥ अनित्यत्वादेवेत्यर्थः। अन्यथा 'प्रोपाभ्याम्' इत्यनुक्त्वा 'स्वराद्यन्तोपसृष्टाद्युजेः' इत्यवक्ष्यत्। अतो वार्त्तिककृन्मते तथात्वेऽपि पाणिनिमते परस्मैपदमेवेति भावः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु चात्र 'नियोक्ष्ये' इत्यात्मनेपदप्रयोगो युक्तः। 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति स्वरितेभ्यो धातुभ्यः आत्मनेपदविधानात् युजिरश्च स्वरितेत्वात् तस्मादात्मनेपदस्यैव प्राप्तेः। अथ यदर्थमसौ क्रियते तस्य फलस्य कर्तृगामिताया-मेव 'स्वरितञित' इति आत्मनेपदविधानम्। न सर्वत्र। अन्यथा 'कर्त्रभिप्राये क्रियाफले' इत्यस्य वैयर्थ्यप्रसङ्गात्। न चात्र क्रियाफलस्य कर्तृगामिता अस्तीति कथमात्मनेपदप्रसङ्गः? इति साम्प्रतम्। अकर्त्रभिप्रायेऽपि 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इति आत्मनेपदस्यैव नियमात्।

ननु चात्र प्रोपसृष्टयुजेरात्मनेपदं नियम्यते। न चात्र युजेः प्रोपसृष्टत्वमस्ति। तत्कथ-मात्मनेपदप्रसङ्गः? इति चेत् – न। 'उद्युङ्क्ते नियुङ्क्ते' इत्याद्यभियुक्तप्रयोगसंरक्षणार्थं प्रवृत्तैतत् सूत्रीयस्वराद्यन्तोपसृष्टाच्चेति वक्तव्यमिति वार्तिके प्रोपसृष्टत्वाभावेऽपि उपसर्गान्तरयुक्तादपि युजेस्तद्विधानात्। अयमस्यार्थः। स्वरः अच् आदिः अन्त्यो वा यस्य स स्वराद्यन्तः, तेनैवोपसर्गेण सम्बद्धः स्वराद्यन्तोपसृष्टः तस्माद्युजेरात्मनेपदं भवतीति। अनेन च 'सन्निनुदुर् सत्' इत्येतान् वर्जयित्वा सर्वोपसर्गसम्बन्धात् युजेरात्मनेपदनियमात् 'नि' इत्यस्यापि स्वराद्यन्ततया तत्पूर्वकादपि आत्मनेपदस्यैव युक्तत्वात्। तत्कथं नियोक्ष्यामीति परस्मैपदप्रयोग इत्यत आह– **स्वराद्यन्तोपसृष्टाच्चेति कात्यायनवचनमनित्यमिति** ॥ तत्रैव ज्ञापकमाह– **अत एवेति** ॥ अनित्यत्वादेवेत्यर्थः। अन्यथा 'प्रोपाभ्याम्' इत्यनुक्त्वा 'स्वराद्यन्तोपसृष्टात्' इत्येवावक्ष्यदिति भावः। उपलक्षणमेतत्। 'स्वराद्युपसृष्टाच्च' इति वार्तिकान्तरविरुद्धत्वाच्चेति तस्यानित्यत्वमवधातव्यम्। अत एव महाभाष्ये अपर आह– 'स्वराद्यन्तोपसृष्टाच्चेति वक्तव्यमिति परमतत्वेन तस्योक्तिरिति ध्येयम्'।

**भावरत्नकोशः (सु.टि.)–** ननु 'यतिधर्मेषु सत्सु युद्धे नियोजनमयुक्तम्' इति पृष्टम् । तत्र 'युद्धे नियोजनमयुक्तम्' इत्यस्यैव परिहारः प्रतीयते । न तु यतिधर्मानुष्ठाने हेतुरुच्यत इत्यत आह– **अयमत्र इति** ॥ 'काम्यान्येव, फलश्रवणात्' इति प्राक् चोदितत्वात् निषेधति– **न शुद्धेति** ॥ अविरोधं घटयितुं 'कर्तुरिच्छया' इत्युक्तम् । **तत्र** युद्धे ॥ **नियोगः** प्रेरणा ॥ **अनधिकारिकाणाम्** आधिकारिकेतरेषाम् ॥ **तैः** आधिकारिकैः ॥ तेषामपि यत्याश्रमविहित-शमदमादिभिरेव ज्ञानसम्पादनसम्भवात् किं कर्मानुष्ठानेन ? इति चोद्यं परिहर्तुम्–'**ईश्वर-नियमात्**' इत्युक्तम् ।

ननु 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यात्मनेपदविधिपरे सूत्रे 'स्वराद्यन्तोपसृष्टाच्चेति वक्तव्यम्' इति वार्तिककृताऽऽत्मनेपदविधानाद् भाष्ये 'नियोक्ष्ये' इति प्रयोक्तव्यम् । कथं 'नियोक्ष्यामि' इति प्रयुक्तम् ? इत्यत आह– **स्वरादीति** ॥ स्वरः अच्, आदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बद्धात् 'युजिर् योगे' इत्यस्माद् धातोरात्मनेपदं वक्तव्यमिति वार्तिकार्थः । **कात्यायनवाक्यं** वार्तिकम् । अनित्यत्वे ज्ञापकम्– **अत एवेति** ॥ अनित्यत्वादेवेत्यर्थः । **अन्यथा** 'प्रोपाभ्याम्' इत्यनुक्त्वा 'स्वराद्यन्तोपसृष्टाद् युजेः' इत्येवावक्ष्यत् । अतो वार्तिककारमते परस्मैपदं न साधु इति भावः । उपलक्षणं चैतत् । 'युज पृच संयमन' इति चुरादौ पठितस्य विकल्पितणिच्कस्य युजेर्ग्रहणे लृटि णिचि 'नियोजयिष्यामि' इति रूपमिव णिजभावपक्षे 'नियोक्ष्यामि' इति निष्प्रत्यूहं रूपम् ।

न चोक्तकात्यायनवचनेनास्मादपि धातोरात्मनेपदं स्यादेवेति वाच्यम् । 'प्रोपाभ्याम्' इति सूत्रे 'युजेरितीकारो विवक्षितः' इति हरदत्तवचनात् । चौरादिकस्तु अकारान्त इति न तस्यात्मनेपदप्राप्तिरित्यपि द्रष्टव्यम् । श्रूयते च बह्वृचब्राह्मणे सप्तमपञ्चिके षोडशे खण्डे 'तस्य ह विश्वामित्रो होताऽसीत्' इत्युपक्रम्य 'शतं दत्त्वाऽहमेनं नियोक्ष्यामि' इति । स्मर्यते चात्रैव गीतायामष्टादशाध्याये 'मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति' (१८.५९) इति ।

**भावदीपिका (श्री.टि.)–** ॥ **एवं चेदिति** ॥ उक्ताभिप्रायकश्चेदित्यर्थः । **सङ्गच्छत इति** ॥ भगवता स्वविधेययुद्धादिकर्मणो निष्कामतया ज्ञानद्वारा मोक्षहेतुत्वादेरकथनादिति भावः । '**आधिकारिक'** इति पुरुषविशेषाणां सञ्ज्ञा । ननु तथाऽपि 'रागादिप्रसक्तिर्हानेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्सु अशक्यानुष्ठाने युद्धे नियोजनमयुक्तम्' इति परिचोदनायाः

श्लोकः ३,३

किमुत्तरं जातम्? इत्यत आह– **अयमत्रोत्तरक्रम इति ॥ शुद्धकाम्यानीति ॥** सर्वान् प्रत्यपि नियमेन ज्ञानेतरस्वर्गादिफलकान्येवेत्येवं केवलकाम्यानीत्यर्थः । **स्वर्गाद्यर्थानीत्यादि** काम्यान्यकाम्यानि चेत्यर्थः । **काम्यकर्मणः** सकाशात् । **सम्भवात्** 'ज्ञानार्थिनं प्रति' इति शेषः । **यतिधर्मान्** रागादिप्रसक्तिहीनान्, शक्यानुष्ठानांश्च । **एतेन** रागादिमतेत्यर्थः । **तद्विहितानि कर्माणि** गृहस्थाश्रमविहितानि युद्धादिकर्माणि **॥ निष्कामतयेति ॥** प्रसक्तमपि रागादिकं परित्यज्येत्यर्थः ।

नन्वस्त्वाधिकारिकाणामेवम्भावः । मम त्वनाधिकारिकत्वाद् इत्थं नियोजनमनुपपन्नमित्यत आह– **तव चेति ॥**

'प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः ।
ऋष्यशीतिस्तथा सप्त पितरोऽप्सरसां शतम् ॥
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधीकारिणः परे ॥'

इति पञ्चमस्कन्धतात्पर्ये (भाग.ता.५-६-५) उदाहृतब्रह्माण्डपुराणवचनेन देवानामाधिकारिकत्वावगमात्, तवापीन्द्रावतारतया देवत्वेनाऽधिकारिकत्वादित्यर्थः ।

ननु 'प्रोपाभ्यां युजेरयज्ञपात्रेषु ।' 'प्र' 'उप' इत्युपसर्गाभ्यां परस्य युजेर्धातोरात्मनेपदं स्यात् । प्रयुङ्क्ते उपयुङ्क्ते । अयज्ञापात्रेष्विति किम्? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । अत्र सूत्रे वार्तिकम्– 'स्वराद्यन्तोपसृष्टाच्च' इति । तस्यार्थः– स्वराक्षरमेवाऽदावन्ते च यस्योपसर्गस्य स स्वराद्यन्तोपसर्गः । स उपसर्गो यस्य युजेः स स्वराद्यन्तोपसृष्टः । तस्माद् युजेर्धातोरात्मनेपदं स्यात्। यद्वा उपसृष्टमुपसर्गः । भावे क्तः । तस्मात् परस्य युजेरात्मनेपदं स्यादिति शेषः । उद्युङ्क्ते । उकारस्य स्वरत्वेन 'उद्' इत्युपसर्गस्य स्वरादित्वात् स्वराद्युपसर्गसंयुक्तोऽयं युजिः । नियुङ्क्ते । इकारस्य स्वरत्वेन 'नि' इत्युपसर्गस्य स्वरान्तत्वात् तदन्तोपसर्गसंयुक्तोऽयं युजिः । तथा च 'नियोक्ष्यामि' इत्यत्रापि युजेः स्वरान्त'नि' इत्युपसर्गसंयुक्तत्वेनाऽत्मनेपदित्वात् 'नियोक्ष्ये' इति स्यात्, 'भजिष्ये' इतिवत् ।

तथा हि । निपूर्वकाद् युजधातोः लृट्प्रत्यये तस्याऽत्मनेपदिनि उत्तमपुरुषैकवचने इडादेशे टकारलोपे 'नियुज् इ' इति जाते, 'स्यतासी लृलुटोः' लृ इति लृङ्लृटोर्ग्रहणम् । 'धातोः

स्यतासी प्रत्ययौ स्तः लृलुटोः परयोः' इति स्यप्रत्यये 'युज् स्य इ' इति जाते, 'चोः कुः' इति जकारस्य कुत्वे 'युग्' इति जाते 'खरि च' इति सकाररूपे खरि परे झलो गकारस्य ककाररूपे चरि सति 'युक्' इति जाते, 'पुगन्तलघूपधस्य च' इति लघूपधत्वाद् उकारस्य ओकाररूपगुणे 'योक्' इति जाते, 'आदेशप्रत्यययोः' इति कवर्गात् परस्य स्यप्रत्ययस्य सकारस्य षकाररूपे मूर्धन्यादेशे कषयोगे 'क्ष' इति जाते, 'नियोक्ष्य इ' इति जाते 'टित आत्मनेपदानां टेरे' लट् लिट् लुट् लृट् एते टितः । एतदात्मनेपदानाम् आत्मनेपदिनि लादेशभूतानाम्, त - आतां - झ - थास् - आथां - ध्वम् - इड् - वहि - महिङ् इत्येतेषां टेरेत्वं स्यादिति टिभूतस्य इकारस्य एकारादेशे 'नियोक्ष्य ए' इति जाते, 'अतो गुणे' 'अपदान्ताद् अतः गुणे परतः अकारस्य पररूपम् एकादेशः स्यात्' इत्यनेन 'क्ष्य' इत्यत्रत्यस्य अकारस्य परस्य एकारस्य च पररूपे जाते, 'नियोक्ष्ये' इति रूपं भवेत्, न तु 'नियोक्ष्यामि' इति लृटः परस्मैपदिनि रूपमित्यत आह– **स्वराद्यन्तोपसृष्टाच्चेति कात्यायनवचनमनित्यमिति ।।** 'अनित्यम्' इत्यस्य क्वचित् स्यात्, क्वचिन्न स्यादित्यर्थः । तथा च युजूधातोः स्वरान्तोपसर्गसंयुक्तत्वेऽपि 'नियोक्ष्यामि' इति परस्मैपदित्वमेव जातमित्यर्थः ।

साधनप्रकारस्तु निपूर्वकाद् 'युज्' अस्माल्लृटि परस्मैपदिनि उत्तमपुरुषैकवचने मिप् इत्यादेशे पकारलोपे, 'स्यतासी लृलुटोः' इति स्यप्रत्यये 'नियुज् स्य मि' इति जाते 'चोः कुः' इति चवर्गान्तर्गतस्य जकारस्य कवर्गान्तर्गतगकाररूपे कुत्वे 'नियुग्' इति जाते, 'खरि च' इति गकारस्य ककाररूपे चर्त्वे लधूपधगुणे, 'नियोक्' इति जाते, 'आदेशप्रत्यययोः' इति सस्य षत्वे कषयागे 'क्ष' इति जाते, 'नियोक्ष्य मि' इति स्थिते 'अतो दीर्घो यञि' अदन्ताङ्गस्य दीर्घः स्याद् यञादौ सार्वधातुके परे इति मकारस्य यञ्प्रत्याहारान्तर्गतत्वेन मिप्प्रत्ययो यञादिः । 'तिङ्शित् सार्वधातुकम्' इति सार्वधातुकश्च भवति । तिपमारभ्य महिङ्पर्यन्तास्तिङो भवन्ति । तिङ्-प्रत्याहाररूपत्वात् । एवं सार्वधातुके यञादौ मिपि परे 'क्ष्य' इत्यत्रस्थाकारस्य दीर्घे 'नियोक्ष्यामि' इति लृटः परस्मैपदिनि रूपं भवति 'भविष्यमि' इतिवदिति द्रष्टव्यम् ।

कात्यायनवचनस्यानित्यत्वे ज्ञापकमाह– **अत एव न पाणिनिरभाणीदिति ।।** कात्यायनवचनस्यानित्यत्वादेवेत्यर्थः । तथा हि । यदि 'स्वराद्यन्तोपसृष्टाच्च' इति कात्यायनवचनं नित्यं स्यात् तर्हि पाणिनिः 'प्रोपाभ्याम्' इति सूत्रे 'प्रोपाभ्याम्' इत्यनुक्त्वा स्वराद्यन्ताभ्यां

श्लोकः २,३

युजेरयज्ञपात्रेषु इति ब्रूयात् । एवं वचनेऽपि प्रोपेत्युपसर्गयोरपि 'स्वरान्तस्वराद्युपसर्गत्वेन सङ्गृहीतत्वात् तत्परस्य युजेरात्मनेपदित्वोक्तिलाभात् । न ह्येवमभाणीत् । किन्तु 'प्रोपाभ्याम्' इत्येव । तेनेत्थं तदभिप्रायोऽवगम्यते । स्वरान्तस्वराद्युपसर्गा एव सर्वे 'प्र' 'परा' इत्याद्याः । तन्मध्ये प्रोपाभ्यां परस्य युजेरात्मनेपदित्वं नियतम् । इतरोपसर्गात् परस्य युजेस्त्वात्मनेपदित्व-मनियतमिति । एवं युजेः स्वरान्तोपसर्गसंयुक्तत्वेऽपि परस्मैपदित्वमेवेति ध्येयम् । अत एवैतत्सूत्रव्याख्यानावसरे फणिभणितभाष्ये 'स्वराद्युपसृष्टत्वाच्च इति वक्तव्यम्' इत्युक्त्वा 'स्वरान्तोपसृष्टाच्च इत्यपरे' इत्युक्तेः तत्र स्वराद्युपसृष्टयुजेरात्मनेपदित्वं नियतमिति स्वाभिप्रायः । 'अपरे' इत्युक्त्या च स्वरान्तोपसर्गसंयुक्तयुजेरपि आत्मनेपदित्वं नियतमिति यत् कात्यायनेनोक्तं तद् अनित्यम् इत्यस्वरससूचनादिति न किञ्चिदत्रानुपपन्नमित्यालोचनीयं व्याकरणशौण्डैरिति ।

**भावप्रकाशः (कृ.टि.)**– ननु यतिधर्मेषु सत्सु युद्धे नियोजनमयुक्तमिति पृष्टम् । तत्र युद्धे नियोजनमयुक्तमित्यस्यैव परिहारः प्रतीयते न तु यतिधर्माननुष्ठाने हेतुरित्यत आह– **अयमत्रेति** ॥ ननु प्रोपाभ्यां युजेरयज्ञपात्रेष्विति सूत्रे स्वराद्यन्तोपसृष्टाच्चेति वक्तव्यमिति वार्तिककृता आत्मनेपदविधानात् नियोक्ष्ये इति वक्तव्यम् । नियोक्ष्यामीति तु कथमित्यत आह– **स्वरेति** ॥ स्वरोऽच्आदिरन्तो वा यस्य तादृशेनोपसर्गेण सम्बन्धाद्युजेरात्मनेपदं वक्तव्यमिति वार्तिकार्थः । **अत एवेति** ॥ अनित्यत्वादेवेत्यर्थः । अन्यथा 'प्रोपाभ्याम्' इत्यनुक्त्वा 'स्वराद्यन्ताभ्याम्' इत्येवावक्ष्यत् । न हि सूत्रानुक्तं वार्तिककृतोच्यते । 'सूत्र एव तु तत्सर्वं यद्वृत्तौ यच्च वार्तिके' इति शाब्दिकोक्तेरिति भावः ।

## भाष्यम्

**द्विविधा अपि जनास्सन्ति । गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादि-वत् । तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत् । मद्धर्मस्था एवेत्यर्थः । साङ्ख्यानां ज्ञानिनां सनकादीनाम् । योगिनाम् उपायिनां जनकादीनाम् ॥**

भावप्रदीपिका (प.टी.)– श्लोकार्थं सोदाहरणमाह– **द्विविधा इति** । एवं न केवलं शमदमादिमन्त एव ज्ञाननिष्ठाः, किन्तु कर्मिणोऽपि ज्ञाननिष्ठाः सन्ति । तेऽपि तत्स्था एव, **मद्धर्मस्था एव न मार्गान्तरस्था** इत्यर्थः ।

भावप्रकाशिका (न.टी.)– श्लोकतात्पर्यं तावत् सोदाहरणमाह– **द्विविधा इति** ॥ कर्मयोगप्रतियोगित्वेनोक्ते ज्ञानयोगे, कर्मत्यागोऽवगम्यमानो गृहस्थादिकर्मत्यागः, न ज्ञानान्तरं शमादिपारमहंसस्य कर्मत्यागः । ज्ञानस्य निष्ठा येषां ते **ज्ञाननिष्ठाः** । स्थितप्रज्ञा इत्यर्थः । ज्ञाने निष्ठा येषामिति वा । योग्यत्वेनात्र ज्ञानपदं प्रतिष्ठितम् । ज्ञाननिष्ठाश्चेत् भगवद्धर्मस्थिता एव । निवृत्तिधर्मान् विना इत्यस्यायं परिहारः । भगवद्धर्मो हि निवृत्तिधर्मः । तथाहि तल्लक्षणं 'निष्कामं ज्ञानपूर्वं च' इति ।

'स्वोचितेनैव धर्मेण विष्णुपूजामृते कचित् ।
नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ॥' इति ।

'साङ्ख्य' 'योग'पदयोरत्र विवक्षितार्थं सोदाहरणमाह– **साङ्ख्यानामिति** ॥

प्रमेयदीपिका (ज.टी.)– अयमाशयः श्लोकात् कथं लभ्यते? इत्यतो व्याचष्टे– **द्विविधा अपीति** ॥ निष्ठा द्विविधा इति व्याख्याने क्रमेणैकस्यैव पुरुषस्य तत्सम्भवान्नोक्तोऽभिप्रायो लभ्यत इत्येवं व्याख्यातम्। न केवलमेकविधाः साङ्ख्या एवेत्यपेरर्थः । द्वैविध्यमेव सोदाहरणमाह– **गृहस्थादीति** ॥ यत्याश्रमपरिग्रहेणेत्यपि ग्राह्यम् । ज्ञाननिष्ठाः यत्याश्रमविहितैरेव कर्मभिर्ज्ञानसाधनैः युक्ताः । सनकादिभिस्तुल्यं वर्तन्त इति **सनकादिवत्** । एवं जनकादिवदित्यपि ॥

**तत्स्था एव** गृहस्थाद्याश्रमस्था एव । तद्धर्मैः युद्धादिभिर्ज्ञानसाधनैः युक्ताः । द्विविधा अपि जनाः सन्ति इत्युक्ते कर्ममार्गस्था ज्ञानमार्गस्थाश्चेति द्वैविध्यं प्रतीयते । तन्निवृत्त्यर्थमाह– **मद्धर्मेति** ॥ ज्ञानमार्गस्था एव । ततश्च 'मद्धर्मस्था एव जना द्विविधा अपि सन्ति' इत्यन्वयः। ततः कथम्? इत्याकाङ्क्षायामुत्तरं वाक्यद्वयम् ॥

'साङ्ख्यानाम्' 'योगिनाम्' इति पदद्वयम् अन्यथाप्रतीतिनिरासाय व्याचष्टे– **साङ्ख्यानामिति** ॥ सम्यक् ख्यातिर्ज्ञानं सङ्ख्या । तत्र भवाः साङ्ख्याः । तेषाम्, ज्ञानिनां ज्ञाननिष्ठानामित्यर्थः ॥

भावबोधः (र.टि.)– ॥ क्रमेणैकस्येति ॥ एकस्यैव पुरुषस्य गृहस्थाद्याश्रमविहितकर्मानुष्ठानानन्तरं यत्याश्रमस्वीकारेण निष्ठाद्वैविध्योपपत्तौ 'गृहस्थादिकर्मत्यागेन' इति 'तत्स्था एव'

इत्युक्ताभिप्रायो न लभ्यत इत्यर्थः । **साङ्ख्या एवेति** ॥ ज्ञाननिष्ठाः साङ्ख्यरूपा एवेति एकविधा न । किन्तु योगिनोऽपीत्यपेरर्थ इत्यर्थः ।

**भावदीपः (रा.टि.)–** ॥ **क्रमेणेति** ॥ पूर्वं गार्हस्थ्यं पश्चाद्यत्याश्रमनिष्ठेत्येवं पौर्वापर्य-क्रमेणेत्यर्थः ॥ **नोक्ताभिप्राय इति** ॥ 'इत्याशयवान्' इति भाष्योक्ताभिप्राय इत्यर्थः । 'तेन तुल्यं क्रिया चेद् वतिः' (पा.सू.५.१.११५) इति वतिप्रत्यय इति भावेनाऽह– **सनकादिभि-रिति** ॥ '**मद्धर्मस्था एव**' इत्यत्र विशेष्याकाङ्क्षायामाह– **ज्ञानमार्गस्था एवेति** ॥ तेषां प्रागपि भगवद्धर्मस्थत्वोक्तौ फलमाह– **ततश्चेति** ॥ साङ्ख्यानामपि भगवद्धर्मस्थत्वोक्तौ सत्यामित्यर्थः ॥ **अन्यथा** प्रतीतार्थं निन्दितसाङ्ख्ययोगे धीनिरासायेत्यर्थः ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ॥ **सनकादिभिस्तुल्यं वर्तत इति सनकादिवदिति** ॥ 'तेन तुल्यं क्रिया चेद्वति'रिति तृतीयान्तात् क्रियारूपे तुल्येऽर्थे वतिप्रत्ययविधानादिति भावः । **तत्र भवाः साङ्ख्या इति** ॥ 'तत्र भवः' इति सप्तम्यन्तात् सङ्ख्याशब्दात् भवार्थे 'तत्र भवः' इति सूत्रेण अणि णित्वादादिवृद्धौ 'यस्येति च' इत्यकारलोपे साङ्ख्यशब्दनिष्पत्तिरिति भावः ॥

**भावरत्नकोशः (सु.टि.)–** ॥ **अयमाशय इति** ॥ 'इत्याशयवान् भगवान्' इति भाष्योक्तोऽभिप्राय इत्यर्थः । स्फुटप्रतीतिकमप्यक्षरार्थम् अनादृत्य भावभङ्ग्या व्याकुर्वतो भाष्यकारस्य भावमाह– **निष्ठेति** ॥ **क्रमेणेति** ॥ एकस्यैव स्वीकृतगार्हस्थ्यस्य पुरुषस्य गृहस्थाश्रमविहितकर्मानुष्ठानानन्तरं यत्याश्रमं स्वीकृत्य शमदमादिसम्पादनेन निष्ठाद्वैविध्योपपत्तौ 'गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः, तत्स्था एव ज्ञाननिष्ठाः' इति भाष्योक्तोऽभिप्रायो न लभ्यत इत्यर्थः । एवंविधान् दर्शयति– **साङ्ख्या एवेति** ॥ ननु गृहस्थादिसर्वकर्म एव त्यागे ज्ञान-निष्ठैवायुक्ता । 'कर्मणा ज्ञानमातनोति' इति श्रुत्या कर्मण एव ज्ञानसाधनत्वावेदनाद् इत्यतः भाष्ये गृहस्थादिपदस्वारस्यलब्धमर्थं संयोजयति– **यत्याश्रमेति** ॥ यत्याश्रमस्वीकारे पुनर्ज्ञान-निष्ठा न युज्यते । तस्य निष्क्रियत्वपर्यायनैष्कर्म्यरूपत्वाद् इत्यतः गृहस्थादिकर्माभावेन नैष्कर्म्यशब्दसम्भवेऽपि तदाश्रमोक्तकर्मभिर्ज्ञानापादनं भवतीति । 'ज्ञाननिष्ठाः' इति भाष्यार्थ-माह– **ज्ञानेति** ॥ **कर्मभिः**

'..........यतेः स्वीयवित्तेन तु विना सदा ।
मूलमन्त्रैः सदा स्नानं विष्णोरेव च तर्पणम् ।
विशेषो निष्क्रिययतेरजलाञ्जलिना तथा'

इत्यादिशास्त्रविहितकर्मभिरित्यर्थः । **ज्ञानसाधने** ज्ञाननिष्पादने । **अभियुक्ताः** आग्रहयुक्ताः । अनेन 'ज्ञानजनकनिष्ठा ज्ञाननिष्ठाः' इति मध्यमपदलोपी समास इत्युक्तं भवति ।

'तत्र तस्येव' इति सूत्रेण सप्तमीसमर्थात् षष्ठीसमर्थाद् वा इवार्थे वतिप्रत्यय इति प्रक्रियास्वीकारे 'ज्ञाननिष्ठाः' इति प्रथमाविभक्त्यनन्वय इत्यतः नात्रोक्तसूत्रेण प्रत्ययः । किन्तु 'तेन तुल्यं क्रिया चेद् वतिः' इति वतिप्रत्यये रूपमिति भावेन आह– **सनकादिभिरिति** ॥ **एवमिति** ॥ यथा 'सनकादिवत्' इति पदम्, तथा जनकादिभिस्तुल्यं वर्तत इति 'जनकादिवत्' इति पदं व्याख्येयमित्यर्थः । 'गृहस्थादि' इति भाष्ये सन्निहितगृहस्थवानप्रस्थाद्याश्रम एव तच्छब्देन गृह्यत इति व्याख्याति– **तत्स्था एवेति** ॥ 'तत्स्था एव ज्ञाननिष्ठाः' इति भाष्ये गृहस्थादिधर्मज्ञानयोर्हेतुहेतुमद्भावं प्रकटयितुमाह– **तद्धर्मैरिति** । **द्वैविध्यं प्रतीयत इति** ॥ तथात्वे च ज्ञानकर्मणोः समुच्चयेन विकल्पेन वा निष्ठाशब्दितमोक्षहेतुत्वापत्त्या 'कर्मणा ज्ञानमातनोति' इति श्रुतिव्याकोपः स्यादिति भावः ॥

ननु 'मद्धर्मस्था एव' इत्यनेनापि स्वविवक्षितभागवतधर्मानुष्ठानतत्परमेव प्रतीयते । तथा च नोक्तद्वैविध्यप्रतीतिनिरास इत्यतोऽर्थमाह– **ज्ञानमार्गस्था एवेति** ॥ समानाधिकरणयोर्ज्ञानकर्मणोर्मध्ये सनकादिषु ज्ञानं प्रचुरम्, जनकादिषु कर्म प्रचुरमिति तु वेदितव्यमिति भावः । तथा च तात्पर्यनिर्णये 'ज्ञानप्रचुरो योगो ज्ञानयोगः, कर्मप्रचुरोऽन्यः' (गी.ता. ३.३) इति ॥ **ततः** अन्वयानन्तरम् । 'तत् कथम्' इत्यपि क्वचित् पाठः । **उत्तरं वाक्यद्वयं** 'द्विविधा अपि जनास्सन्ति' इति भाष्यवाक्यादुपरितनं 'गृहस्थादि' इत्यादिभाष्यवाक्यद्वयम् । उक्ताकाङ्क्षाशान्तये प्रवृत्तमित्यर्थः । **अन्यथाप्रतीतिः** कापिलपातञ्जलार्थत्वेन प्रतीतिः ।

'ज्ञानिनाम्' इति भाष्यं घटयितुं 'साङ्ख्यानाम्' इति गीतापदं व्युत्पादयति– **सम्यगिति** ॥ 'ख्यातिर्ज्ञानम्' इति वदन् 'दर्शनकर्मा चायम्' इति शाब्दिकवचनम् अनुसन्दधानः सम्पूर्वाच्चक्षिङः 'चक्षिङः ख्याञ्' इति ख्याञादेशे 'आतश्चोपसर्गे' इत्यङ्प्रत्यये 'सङ्ख्या' इति

श्लोकः २,३

रूपमित्यभिप्रैति । इममर्थं घटयितुमाह– **तत्रेति** ॥ 'तत्र भवः' इति सूत्रेण भवेऽर्थेऽणूप्रत्यये आदिवृद्धौ 'यस्येति च' इत्याकारलोपे रूपसिद्धिः । तत्र भवत्वं च तद्वत्त्वं विवक्षितमिति 'ज्ञानिनाम्' इति भाषणं युक्तमिति भावेन तदर्थमाह– **ज्ञाननिष्ठानामिति** ॥

**भावदीपिका (श्री.टि.)–** ननु गीतानुसारेण 'निष्ठा द्विविधा' इति व्याख्यातत्वे 'द्विविधा अपि जनाः सन्ति' इति जनानां द्वैविध्यं कुतो व्याख्यायते? इत्यत आह– **निष्ठा द्विविधेति** ॥ गीतानुसारेण निष्ठाद्वैविध्यस्यैव व्याख्याने एकस्यैव पुरुषस्य गृहस्थाद्याश्रमस्वीकारेण तद्विहितधर्मैर्ज्ञाननिष्ठाऽनन्तरं यत्याश्रमस्वीकारेण पुनस्तदुक्तैर्धर्मैर्ज्ञानसाधनस्य सम्भवात् । कैश्चिदाधिकारिकपुरुषविशेषैरेव गृहस्थाश्रममपरित्यज्यैव तद्विहितकर्माणि निष्कामतयाऽनुष्ठेयानीत्येवंरूप उक्ताभिप्रायः श्लोकान्न लभ्यत इति, तदर्थं जनानां द्वैविध्यं व्याख्यातमित्यर्थः । **न केवलमिति** ॥ ज्ञाननिष्ठाः साङ्ख्यरूपा एवेति एकविधा न । किन्तु योगिनोऽपीत्यपेरर्थ इत्यर्थः ।

ननु 'तत्र तस्येव' सप्तम्यन्तात् षष्ठ्यन्ताच्च वतिः स्याद् इवार्थे । स्रुघ्ने प्राकारो मधुरावत् । मधुरायामिवेत्यर्थः । मैत्रस्य गावश्चैत्रवत् । एवं चानेन सूत्रेण 'सनकादिवत्' इत्यादौ यदि वतिरङ्गीक्रियते तर्हि 'सनकादाविव' 'सनकादेरिव' इत्यर्थप्राप्त्याऽसङ्गत्यापत्तेः । अतः कथमनेन सूत्रेणात्र इवार्थे वतिः? इत्यत आह– **सनकादिभिस्तुल्यमिति** ॥ नात्र 'तत्र तस्येव' इति सूत्रेणेवार्थे वतिर्व्याख्यायते । किं नाम? 'तेन तुल्यं क्रिया चेद् वतिः' इति सूत्रेण क्रियातौल्ये एव । सूत्रार्थस्तु– तृतीयान्ताद् वतिः स्यात् तौल्यार्थे, यत् तौल्यं सा क्रिया चेत्, क्रियया तौल्यं विवक्षितं चेत् । ब्राह्मणो द्रोणः क्षत्रियवत् । ब्राह्मणस्य द्रोणस्य क्षत्रियेण क्रियातौल्यमस्तीति तदर्थे विवक्षिते सति तृतीयान्तक्षत्रियशब्दाद् वतिर्जातः । क्रियातौल्ये किम्? गुणतौल्ये मा भूत् । स्थूलः कश्चित् पुत्रेण तुल्यः । अत्र कस्यचित् पुत्रेण स्थूलत्वरूपगुणेनैव तौल्यं विवक्षितम्, न क्रिययेति 'पुत्रवत्' इति न जातम् । किन्तु 'पुत्रेण तुल्यः' इत्येव । एवं च प्रकृते जनानां सनकादिभिः क्रियातौल्यस्य विवक्षितत्वात् 'तेन तुल्यम्' इति सूत्रेण वतिरङ्गीक्रियत इत्यर्थः । इममेव वत्यर्थं 'जनकादिवत्' इत्यत्राप्यतिदिशति– **एवमिति** ॥ ज्ञानमार्गस्य मत्प्रीतिसाधनीभूतधर्मत्वान्मद्धर्मत्वम् इत्याशयेन मद्धर्मपदार्थ उक्तः–

**ज्ञानमार्गेति ॥ उत्तरमिति ॥** 'गृहस्थादि' इति, 'तत्स्था एव' इति च वाक्यद्वयमित्यर्थः । यद्यपि 'मद्धर्मस्थाः' इत्येतद्वाक्यापेक्षयाऽनयोर्वाक्ययोः पूर्वत्वमेव, नोत्तरत्वम् । तथाऽपि 'मद्धर्मस्थाः' इत्यस्य 'द्विविधा अपि' इति पूर्वेणान्वये सत्यनयोरुत्तरत्वमेवेति द्रष्टव्यम् ॥ **अन्यथाप्रतीतीति** ॥ कापिलपातञ्जलशास्त्रपरतया प्रतीतिरित्यर्थः ॥ **तत्र भवा इति** ॥ स्थिताः आसक्ता इत्यर्थः । तथा च सङ्ख्याशब्दात् 'तत्र भवः' इति सूत्रेण भवार्थे तद्धिताण्प्रत्यये णित्त्वाद् 'तद्धितेष्वचामादेः' इति आदिवृद्धौ 'साङ्ख्या अ' इति जाते, भसञ्ज्ञकस्य आकारस्य 'यस्येति च' इति सूत्रेण लोपे, साङ्ख्य् अ 'साङ्ख्य' इति प्रातिपदिकनिष्पत्ति-र्द्रष्टव्या । ज्ञाननिष्ठाः ततश्च तेऽपि साङ्ख्या एवेति भावः ॥

**भावप्रकाशः (कृ.टि.)– क्रमेणैकस्यैवेति** ॥ एकस्यैव पुरुषस्य गृहस्थाद्याश्रमविहित-कर्मानुष्ठानानन्तरं यत्याश्रमस्वीकारेण निष्ठाद्वैविध्योपपत्तौ 'गृहस्थादिकर्मत्यागेन' इति 'तत्स्था एव' इति स्वोक्ताभिप्रायो न लभ्यत इत्यर्थः । एकविधाः के ? इत्यतस्तान् शृङ्गग्राहिकया दर्शयति– **साङ्ख्या इति** ॥ सर्वकर्मत्यागे ज्ञानमेव न स्यात् । कर्मणः ज्ञानसाधनत्वादित्यत आह– **यत्याश्रमपरिग्रहेणेति** । योगिनामपि ज्ञाननिष्ठत्वात् तत्प्रतीतिं निरस्यति– **यत्याश्रम-विहितैरिति** ॥ यद्वा गृहस्थादिकर्मत्यागयत्याश्रमपरिग्रहाभ्यां कथं ज्ञाननिष्ठत्वं ज्ञानसाधनकर्मा-भावादित्यत आह– **यत्याश्रमविहितैरेवेति** ॥ 'तत्र तस्यैव' इति सूत्रेण षष्ठ्यन्तात् सप्त-म्यन्तादिवाऽर्थे वतिरित्यङ्गीकारे 'ज्ञाननिष्ठाः' इति प्रथमाविभक्त्यनन्वय इत्याङ्क्य 'तेन तुल्यं क्रिया चेद्वतिः' इत्यनेनात्र वतिरित्याशयेनाह– **सनकादिभिरिति ॥ उत्तरं वाक्यद्वयमिति** ॥ 'द्विविधा अपि जनाः सन्ति' इति वाक्यादुत्तरं भाष्यवाक्यद्वयमित्यर्थः । **अन्यथाप्रतीतीति** ॥ कापिलपान्तजलार्थत्वप्रतीतीत्यर्थः । **सम्यक्ख्यातिरिति** ॥ सम्पूर्वाच्चक्षिङः 'चक्षिङः ख्याञ्' इति ख्याञादेशे 'आतश्चोपसर्गे' इत्यङ्प्रत्यये 'सङ्ख्या' इति रूपसिद्धिरिति भावः । **तत्र भवा इति** ॥ 'तत्र भवः' इति सूत्रेण भवार्थेऽण्प्रत्यये आदिवृद्धौ 'यस्येति च' इत्याकारलोपे च रूपसिद्धिरिति भावः ।

## भाष्यम्

**ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसङ्ग्रहार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः । निष्ठा स्थितिः । त्वं तु जनकादिवत्**

**सकर्मैव ज्ञानयोग्यः, न तु सनकादिवत् तत्त्यागेनेत्यर्थः । सन्ति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिन एव । तथा ह्युक्तम्– 'ईश्वरेच्छया विनिवेशितकर्माधिकारः' इति (भाग.५.१.२३) ॥ ३ ॥**

भावप्रदीपिका (प.टी.)– यदि जनकादयो ज्ञाननिष्ठाः, तर्हि कथमुपायिनः ? इत्यत आह– **ज्ञाननिष्ठा अपीति** ॥ 'किं कर्मणि मां नियोजयसि' इत्यस्य कः परिहारः ? इत्यतः श्लोकाभिप्रेतमाह– **त्वं त्विति** ॥ 'ततो नियोक्ष्यामि' इति शेषः । ज्ञानिनां कर्माधिकारः क्व दृष्टो येन जनकादीनामसौ भवेत् ? इत्यत आह– **सन्तीति** ॥ ३ ॥

भावप्रकाशिका (न.टी.)– ननु यैरितःपरं ज्ञानमुपेयं त उपायिनः स्युः । ये तु ज्ञाननिष्ठाः उपेतज्ञानास्तेषां किमुपायेन? इत्यत आह– **ज्ञाननिष्ठा अपीति** ॥ ज्ञाना-ख्योपायलाभेऽपि मुक्तावानन्दवृद्ध्यर्थं ये पुनर्ज्ञानोपायमनुतिष्ठन्ति तेऽपि योगिन इत्यर्थः । 'निष्ठा'पदस्य स्थितिवाचित्वात् स्थितप्रज्ञानाचष्ट इति भावेनाह– **निष्ठेति** ॥ अनेनैवंविधः श्लोकान्वयः सूच्यते– द्विविधाः जनाः साङ्ख्याः योगिनश्च । तत्र साङ्ख्यानां समाधिजप-कथादीनां ज्ञानयोगाख्येन करणेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च ज्ञानयोगाख्येन करणेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च ज्ञानयोगेन सह ज्ञाननिष्ठा वर्तन्ते । योगि-नामपि कर्मयोगेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च तेन सह वर्तन्त इति भगवता पुर्वं प्रोक्तं 'कर्मण्येवाधिकारः' इत्यादौ । भवन्त्वेवंविधाः जनाः । कोऽहमेषाम् ? इत्याकाङ्क्षायां श्लोकफलितार्थमाह– **त्वं त्विति** ॥ ज्ञाननिष्ठानामपि कर्मानुष्ठेयमित्यत्र सदाचारं सप्रमाणकमाह– **सन्ति हीति** ॥ ३ ॥

प्रमेयदीपिका (ज.टी.)– ननु जनकादयोऽपि ज्ञाननिष्ठाः । तत् कथं योगिनः? इत्यत आह– **ज्ञाननिष्ठा अपीति** ॥ कर्मयोग्याः गृहस्थादिकर्मयोग्याः । साङ्ख्ययोगशब्दौ प्रसिद्धार्थौ किं न स्याताम्? इत्यतो मुक्तिवचनादिति भावेनाऽह– **निष्ठेति** ॥ स्थितिः 'स्वरूपेण' इति शेषः ॥

अस्त्वेवं श्लोकार्थः । तथाप्याधिकारिकत्वादित्यादिकमत्र न श्रूयत इत्यतोऽ-ध्याहृत्याऽह– **त्वं त्विति** ॥ सकर्मा गृहस्थादिकर्मवान् । भवेदिदं व्याख्यानं यदि ते

**जनाः प्रमिताः स्युर्येषां ज्ञाननिष्ठानामपि गृहस्थादिकर्मस्वेवाधिकारो न यत्याश्रमकर्मसु । जनकादयस्तु यत्याश्रमं नानुष्ठितवन्त इत्येव प्रमितम् । न तु तत्रानधिकारिण** इति तत्राह– **सन्ति हीति ।। विनिवेशितः कर्माधिकारो गृहस्थकर्माधिकारो यस्मिन् स** तथोक्तः । **प्रियव्रतो हि यत्याश्रमं स्वीचिकीर्षुराधिकारिकत्वयुक्त्या हिरण्यगर्भेण** निवारित **इत्यनेनोच्यते ।। ३ ।।**

**भावबोधः (र.टि.)–** ननु स्थितिः कथं मुक्तिः?इत्यत आह– **स्वरूपेणेति** ।। ३ ।।

**भावदीपः (रा.टि.)–** ।। 'निष्ठा स्थितिः' इत्युक्तावपि मुक्त्यर्थत्वलाभायाऽह– **स्वरूपेणेति ।। विशेष इति।।** 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इत्युक्तेरिति भावः ।। **इत्यादिकमिति** ।। अवतारिकायामुक्त्या कृतमित्यर्थः ।। **इत्यनेनोच्यत** इति ।। 'ईश्वरेच्छया' इत्यादि भाष्योक्तपञ्चमस्कन्धवाक्येनेत्यर्थः ।। ३ ।।

**भावरत्नकोशः (सु.टि.)–** यत्याश्रमविहितकर्मयोग्यत्वं साङ्ख्यानामप्यस्ति, इत्यतोऽत्राभिप्रेतमाह– **गृहस्थादिकर्मयोग्या इति ।। प्रसिद्धार्थौ** कापिलपातञ्जलार्थकौ । 'स्थितिः' इत्युक्तावपि कथं मुक्तिवचनत्वम् ? तस्याः साधारणत्वादित्यत आह– **स्वरूपेणेति शेष** इति ।। 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' (भाग. २.१०.६) इति वचनाद् अत्र स्वरूपेण स्थितिर्मुक्तिरेवेति भावः । 'कर्मणा सहितः सकर्मा' इति साधारणतया प्रतीयमानं सकर्मपदं व्याख्याति गृहस्थादिकर्मवानिति । ननु जनकादीनामेव यत्याश्रमकर्मस्वनधिकारः प्रसिद्ध इत्यत आह– **जनकादयस्त्विति** ।। 'न तु' इत्यनन्तरं 'तेषाम्' इति योज्यम् । ईश्वरेच्छयैव कर्मकृतः स्वविहितानि कर्माणि निष्कामतयाऽनुष्ठेयानीति ईश्वरनियमात् कर्मकारिण इति भाष्यार्थः स्फुटः । ननु भाष्योदाहृतपञ्चमस्कन्धगद्ये प्रियव्रतराजस्य गृहस्थकर्माधिकारमात्रं प्रतीयते । नतु यत्याश्रमविहितकर्मानधिकार इत्यतस्तद्वाक्यतात्पर्यमाह– **प्रियव्रतो हीति** ।। अनेन 'ईश्वरेच्छया विनिवेशितकर्माधिकारः' इति भाष्यगृहीतभागवतपञ्चमस्कन्धाद्याध्यायवाक्यपूर्वोत्तरसन्दर्भेणेत्यर्थः। **कर्मसाध्यत्वमिति** ।। 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इति तद्व्यतिरेकेण तद्व्यतिरेकोक्तेर्मोक्षस्य कर्मकार्यत्वमवगम्यत इत्यर्थः ।। ३ ।।

**गीताक्षरार्थस्तु–** पूर्वाध्याये आत्मस्वरूपं साङ्ख्याख्यमुक्तम् । तज्ज्ञानोपायश्च 'योगे त्विमां शृणु' (२.३९) इति प्रतिज्ञाय 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भव' (२.४५)

इत्यादिनोक्त्वा 'कर्मजं बुद्धियुक्ता हि' (२.५१) इत्यादिना किञ्चिद् विवृतश्च । अत्र पुनस्तृतीयाध्याये स एव कर्मयोगः प्राधान्येन कर्तव्यतया ज्ञाप्यत इति पूर्वोत्तराध्याययोः सङ्गतिर्भाष्यटीकयोः सप्रपञ्चमुक्ता। 'दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय' (२.४९), 'कृपणाः फलहेतवः' (२.४९) इत्यादिना कर्मणो बुद्धेरवरत्वमिति भगवतोक्तौ लब्धावसरेणार्जुनेन पृच्छ्यत इत्युच्यते **अर्जुन उवाच– ज्यायसी चेदिति ॥** कर्मणः सकाशाद् बुद्धिः आत्मज्ञानं ज्यायसी चेत् प्रशस्ततरा यदि जनार्दन ! 'न जायतेऽर्दयति च संसारम्' (गी.भा. १०.१८) इति दशमे वक्ष्यमाणरीत्या जनार्दनशब्दार्थः । ते तव मता, तत् तर्हि कर्मणि किमर्थं मां नियोजयसि? इत्येकः प्रश्नः । तत्रापि घोरे रागद्वेषाद्युपेते युद्धाख्ये कर्मणि किमर्थं नियोजयसि ? इत्येकः प्रश्नः । तत्रापि घोरे रागद्वेषाद्युपेते युद्धाख्ये कर्मणि किमर्थं नियोजयसि? इत्यन्यः ।

इदमुक्तं भवति– 'सर्व एते पुण्यलोका भवन्ति' इत्यादौ फलश्रवणेन सर्वकर्मणां काम्यत्वावगमात्, काम्यानां च बुद्धियोगादवरत्वस्य त्वया प्रागभिधानात्, 'हतो वा प्राप्स्यसि स्वर्गम्' इति युद्धस्य स्वर्गफलत्वेन काम्यत्वात्, यत्याश्रमविहितानां शमादीनां फलाश्रवणेनाकाम्यत्वात्, 'शान्तो दान्तः' इत्युपक्रम्य 'आत्मानं पश्येत्' इति ज्ञानार्थत्वश्रवणाच्च, यत्याश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यम् । न तु काम्यकर्मणि 'युद्ध्यस्व भारत' इति नियोजनं युक्तम् ।

ननु 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' (२.३९) इति बुद्धिपदोक्त्युद्धाख्यकर्मणोऽपि ज्ञानार्थत्वमुक्तमिति मतम्, तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमिवाऽपाद्यते । अथैवं मतं कामिनो युद्धं स्वर्गाद्यर्थकम्, अकामिनस्तु ज्ञानार्थमिति का व्यामिश्रता ? इति । तथाऽपि शुद्धेषु निवृत्तलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावादत्र तद्भावादिति ।

किञ्च कामक्रोधादीनां नरकफलत्वं सर्वसिद्धम् । युद्धे च कामादयोऽवर्जनीयाः । ततोऽपि तत्र नियोजनमयुक्तम् । नन्वस्योत्तरं 'सुखदुःखे समे कृत्वा' (२.३८) इत्युक्तम् । सत्यम् । तथाऽपि, रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्सु अशक्यानुष्ठाने युद्धे नियोजनमयुक्तमेवेति । उत्तरार्धस्तु स्पष्टः ।

यद्यप्याश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च सर्वकर्माणि काम्याकाम्यभेदेन काम्यानि, अकाम्यानि चेति वैकल्पिकानि । यतिधर्माः शमादयस्तु केवलमकाम्याः, युद्धमिव नरकाद्यनर्थ-हेतुरागद्वेषाद्युपेताश्च न भवन्ति । तथाऽपि तेषामनधिकारिकविषयत्वात्, तव च जनकप्रिय-व्रतादेरिव आधिकारिकत्वात् 'सुखदुःखे समे कृत्वा' (२.३८) इत्युक्तदिशा भगवद्भक्त्या स्वधर्मत्वेनानुष्ठाने पापानवाप्तेः, वैकल्पिकेऽपि युद्धकर्मण्येव त्वं नियोज्य इति भावेन 'श्रेयान् स्वधर्मो विगुणः' (३.३५) इति द्वितीयप्रश्नं प्रतिवक्ष्यता आद्यप्रश्नप्रतिवचनं भगवतोच्यते 'लोकेऽस्मिन् द्विविधा निष्ठा' इति । अस्मिन् लोके साधकवर्गे निष्ठा स्वरूपेणावस्थितिः मुक्तिरिति यावत् द्विविधा द्विप्रकारसाधनसाध्या । 'पुरा पूर्वम् 'कर्मण्येवाधिकारः' (२.४७) इत्यादौ' इति प्राचीनटीका । मया प्रोक्ता । कथम् ? साङ्ख्यानां सम्यक् ख्यातिः ज्ञानं सङ्ख्या। तत्र भवाः साङ्ख्यास्तेषां ज्ञाननिष्ठानां देवानां सनकादियतीनां च ज्ञानयोगेन ज्ञानप्रचुरोपायेन स्थितिः । योगिनां कर्मरूपोपायवतां कर्मयोगेन कर्मप्रचुरोपायेन निष्ठा । 'योगिनाम्' इत्यनन्तरम् 'इति'शब्दोऽध्याहार्यः ।

इदमुक्तं भवति— भगवज्ज्ञानिनामपि न ज्ञानमात्रेण स्वयोग्ययावदानन्दानुभवरूपमुक्तिः । अपितु कर्मसहकृतेनैव । तत्र केचन सनकादयो यतयः यज्ज्ञानकर्मणोर्मध्ये ज्ञानप्रचुराः सन्तो मुक्तिभाजः । केचिज्जनकप्रियव्रतादयो गृहस्थाः स्वगतज्ञानकर्मणोर्मध्ये प्रचुरकर्मणा एव मुक्तिभाजो भवन्ति । आधिकारिकतया तथैव भगवता क्लृप्तत्वात् । त्वमप्याधिकारिकतया कर्माणि नियोज्य एवेति ॥ ३ ॥

**भावदीपिका (श्री.टि.)– ॥ तत् कथमिति ॥** तथाच जनकादीनामपि साङ्ख्यशब्देनैव गृहीतत्वाद् 'योगिनः' इति पृथक् तद्ग्रहणमयुक्तमिति भावः । **ज्ञाननिष्ठा अपीति** ॥ तथा च ज्ञाननिष्ठा अपि साङ्ख्यरूपा अपि आधिकारिकत्वाद् इत्युक्तप्रकारेण ये कर्मयोग्यास्ते योगिनोऽपि भवन्तीति ज्ञापनाय 'योगिनः' इति पृथग् ग्रहणमिति भाष्यार्थः ॥ **मुक्तीति** ॥ 'अत्रोक्तसाङ्ख्ययोगानुष्ठानेन' इति शेषः । न हि प्रसिद्धकापिलपातञ्जलशास्त्रोक्तानुष्ठानवतां मुक्तिरस्तीति भावः । **आहेति** ॥ 'लोकेऽस्मिन् द्विविधा निष्ठा' इत्यत्रत्यनिष्ठाशब्दार्थमाहेत्यर्थः । स्थितिः कथं मुक्तिः इत्यत आह– **स्वरूपेणेति** ॥ 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' (भाग. २.१०६) इति वचनात् स्वरूपेण व्यवस्थितिरेव मुक्तिरिति भावः । अत्र

श्लोकः ३
अस्मिन् श्लोके । जनकादय एव तादृशाः सन्तीति चेत् तत्राऽह– **जनकादयस्त्विति** ॥ **विनिवेशितः** स्थापितः ॥ **अनेनेति** ॥ 'ईश्वरेच्छया' (भाग. ५.१.२३) इति पञ्चमस्कन्ध-भागवतवाक्येनेत्यर्थः ॥ ३ ॥

**भावप्रकाशः** (कृ.टि.)– स्थितिमात्रकथनात् मुक्तिवचनमेतत् कथमित्यत आह– **स्वरूपेणेति शेष इति** ॥ 'मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः' इत्युक्तेरिति भावः । ननु उदाहृतपञ्चमस्कन्धवाक्यात् प्रियव्रतस्य गृहस्थकर्माधिकारमात्रं प्रतीयते, न तु यतिकर्मानधिकार इत्यत आह– **प्रियव्रतो हीति** ॥ 'निवारित' इत्यतः परं 'गृहस्थकर्मपृथिवी-पालनं चकार' इति पूरणीयम् । तेन हिरण्यगर्भकृतनिवारणस्य किञ्चिद्व्यवहितवाक्यस्थत्वात् कथमेतदिति निरस्तम् । **अनेनेति** ॥ पञ्चमस्कन्धाद्याध्यायस्थेनोदाहृतवाक्यपूर्वोत्तरप्रबन्धे-नेत्यर्थः । तेनोदाहृतवाक्येत्येवमात्रोक्तावपि न दोषः ॥ ३ ॥

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

## भाष्यम्

**इतश्च नियोक्ष्यामीत्याह– न कर्मणामिति ॥ कर्मणां युद्धादीना-मनारम्भेण नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं, न तु कर्माकरणमित्यर्थः ॥**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतारयति– **इतश्चेति** ॥ किं युद्धादेर्ज्ञान-साधनत्वाभावे तत्राप्रवृत्तिः ? किं वा ज्ञानं न मोक्षसाधनम्, किन्तु कर्माकरणमेव, मोक्षस्य नैष्कर्म्यरूपत्वात् ? नाद्यः । युद्धादेरधिकारिभेदेन ज्ञानसाधनत्वस्योक्तत्वात् । द्वितीयं दूषयति– **कर्मणामिति** ॥

भावप्रकाशिका (न.टी.)– कर्माकरणमात्रेण मुक्त्यनुपपत्तेरपि त्वया स्ववर्णाश्रमोचितं नित्यकर्मानुष्ठेयमिति भावेनोत्तरमर्धमवतारयति– **इतश्चेति** ॥

प्रमेयदीपिका (ज.टी.)– 'न कर्मणाम्' इति मोक्षस्य कर्मसाध्यत्वमुच्यते' इत्यन्यथा-प्रतीतिनिरासायाऽह– **इतश्चेति** ॥ 'स्ववर्णाश्रमोचिते युद्धादौ' इति शेषः । प्राक् 'आधिकारिकत्वात् त्वया कर्म कर्तव्यम्' इत्युक्तम् । इदानीं कोऽपरो हेतुरुच्यते? इत्यतो व्याचष्टे– **कर्मणामिति** ॥

अयमभिप्रायः । कर्माणि न कार्याणीति वदन् प्रष्टव्यः । किं ज्ञानं न मोक्षसाधनम्? अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यन्ते? उत ज्ञानं मोक्षसाधनं भवत्येव? किन्तु 'कर्मणा बद्ध्यते जन्तुः' इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा ? आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येदमुच्यते? अथवा क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम्, अकरणे च बीजाभावात् संसारो न भविष्यतीति युक्तिमाश्रित्य? आद्यस्य इदं दूषणम्– **न कर्मणामिति** ॥ नैष्कर्म्यशब्दस्यान्यथापि व्याख्यानान्नाद्य इत्यर्थः । ततः किम्? इत्यत आह– **ज्ञानमेवेति** ॥

भावबोधः (र.टि.)– ॥ **नैष्कर्म्यशब्दवाच्यत्वमात्रमिति** ॥ निष्कर्म कर्माभावः । जन्यतया तत्सम्बन्धि नैष्कर्म्यमिति योगेन नैष्कर्म्यशब्दवाच्यत्वान्यथानुपपत्तिरूपप्रमाण-माश्रित्येत्यर्थः ॥

**भावरत्नकोशः** (सु.टि.)– किञ्च त्वदभिप्रेतं कर्माकरणं न श्रेयःप्राप्तिहेतुः, विकल्पा-सहत्वादिति युक्त्यन्तरेणापि कर्म कार्यमिति वक्तुं 'न कर्मणाम्' इति श्लोक इति भावेन भाष्ये **'इतश्च'** इत्युक्तम् । तत्र विकल्पासहत्वं स्फुटीकर्तुमाह– **अयमभिप्राय इति** ॥ 'नैष्कर्म्य-शब्दवाच्यत्वमात्रम्' इत्यत्र निष्क्रान्तः कर्मभ्यो निष्कर्मा । कर्मपरित्यागीति यावत् । तस्य भावो नैष्कर्म्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति भावे ष्यञ् । 'ये चाभावकर्मणोः' इति टिलोपः । अनेन च नैष्कर्म्यशब्देन कर्मत्यागप्राप्यो मोक्षो लक्ष्यते । तस्य निष्कर्मता-प्राप्यत्वाद् विवक्षितार्थसिद्धिरिति भावः । 'बीजाभावात्' इति वक्ष्यमाणयुक्तिव्यावृत्तये मात्रपदम् । **क्रियेति** ॥ **क्रियाः** गत्यादयः । **कारकाणि** इन्द्रियाणि । **फलं** सुखादीत्यर्थः ॥ **अन्यथाऽपि व्याख्यानादिति** ॥ नैष्कर्म्यशब्दान्तर्गतकर्मशब्दस्य काम्यकर्मपरत्वेन व्याख्यान-सम्भवेनान्यथोपपत्तेर्मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वान्यथाऽनुपपत्त्या न कर्मत्यागः शक्यः शङ्कितु-मिति भावः । ततः कर्माकरणस्य मोक्षसाधनत्वनिराकरणात् ॥

श्लोकः ४

**भावदीपिका (श्री.टि.)– ॥ कर्मसाध्यत्वमिति ॥** 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इत्युक्त्या कर्मणामारम्भादेव नैष्कर्म्याख्यमोक्षप्राप्तिरिति कर्मसाध्यत्वमुच्यत इत्यर्थः ॥ **प्रागिति ॥** युद्धादीनि कर्माणि न करिष्यामीत्याशयेन कृतस्य 'तत् किं कर्मणि' (३-१) इत्यर्जुनप्रश्नस्येति शेषः । इत्युक्तम् इत्युत्तरमुक्तम् । **व्याचष्ट इति ॥** अकरणे प्रत्यवायः स्यादित्यभिप्रेत्येत्यर्थः । **कर्माणि** युद्धादिकर्माणि न कार्याणीति वदन् । **तत्प्रतिबन्धकानि** मोक्षप्रतिबन्धकानि इति मत्वा कर्माणि त्यज्यन्त इत्यन्वयः । **नैष्कर्म्यशब्दवाच्यत्वमात्रमिति ॥** 'कर्माभावः निष्कर्म । जन्यतया तत्सम्बन्धि नैष्कर्म्यम्' इत्येवं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वान्यथाऽनुपपत्तिरूपप्रमाणमाश्रित्य कर्माकरणमेव मोक्षसाधनमित्युच्यत इत्यर्थः । 'बीजाभावात्' इति वक्ष्यमाणयुक्तिव्यावृत्त्यर्थं 'मात्रम्' इत्युक्तम् । **क्रिया** यागादिरूपा । **कारकम्** आत्मादि । **फलम्** स्वर्गादि । **अकरणे** कर्माकरणे । **बीजाभावात्** संसारबीजस्य कर्मणोऽभावात् । **इति युक्तिमिति ॥** मोक्षः कर्माकरणसाध्यः कर्मजन्यसंसाराभावरूपत्वात् । यद् यज्जन्याभावरूपं तत् तदभावसाध्यम् । यथा दुःखाभावः सुखमिति मते सुखं पापजन्यदुःखाभावरूपमिति पापाभावसाध्यमित्यनुमानमिह द्रष्टव्यमित्याहुः । **अन्यथाऽपीति ॥** काम्यकर्मपरित्यागेन प्राप्यत इति नैष्कर्म्यशब्दवाच्यत्वस्यान्यथाऽनुपपत्त्याऽर्थापत्तिरुक्तेत्याशयः । भाष्ये 'काम्यकर्मपरित्यागेन प्राप्यते इति निष्कर्मतां मोक्षम्' इत्यन्वयो द्रष्टव्यः ।

**भावप्रकाशः (कृ.टि.)–** नन्वेवमपि 'कर्म कर्तव्यम्' इत्यत्र हेत्वलाभ इत्यत आह– **अयमभिप्राय इति ॥** कर्माकरणे साधकाभाव एव कर्मकर्तव्यत्वे हेतुः, स च 'न कर्मणाम्' इत्यारभ्य 'सह यज्ञाः' इत्यतः प्राक्तनेनोच्यत इति भावः । **नैष्कर्म्यशब्देति ॥** कर्माभावो निष्कर्मम् 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः । 'नपुंसकादन्यतरस्याम्' इति टच् । तज्जन्यं नैष्कर्म्यम् । 'विचित्रा तद्धितगतिः' इति वचनाज्जन्यत्वार्थे ष्यञ् । ततश्च नैष्कर्म्यशब्दादुक्तार्थलाभ इति भावः । बीजाभावादिति वक्ष्यमाणयुक्तिव्यावृत्यर्थं मात्रपदम् ॥ **अन्यथापिव्याख्यानादिति ॥** नैष्कर्म्यशब्दान्तर्गतकर्मपदस्य काम्यकर्मपरत्वे उक्तव्युत्पत्तिबलादेवान्यथाव्याख्यानलाभः इति भावः ॥

## भाष्यम्

**कुतः? पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः । यदि कर्माकरणेन मुक्तिः, स्यात् स्थावराणाम् ॥**

भावप्रदीपिका (प.टी.)– कुतः कर्माकरणे न मुक्तिः ? इत्याशङ्क्याह– **कुत इति** ॥ ननु सर्वदा पुरुषत्वे कुतो न कर्माकरणेन मोक्षः ? इत्यत आह– **यदीति** । यदि कर्माकरणेन मुक्तिः, तर्हि जीवस्यानादिसिद्धं पुरुषत्वं न स्यात् । स्थावरशरीरे कर्माकरणसम्भवादित्यर्थः ॥

भावप्रकाशिका (न.टी.)– यद्यपि 'निष्कर्मतया प्राप्यत इति नैष्कर्म्यम्' इति नैकर्म्य-शब्दबलात् कर्माकरणेन मोक्षः शक्यते । तथाऽपि 'काम्यकर्मपरित्यागेन स प्राप्यते' इति युद्धादिनित्यकर्मणामनारम्भेण मोक्षं न प्राप्नोति । तेषामन्तःकरणशोधकत्वेन ज्ञानहेतु-वैराग्यजनकत्वात्, तस्यैव मुक्तिहेतुत्वादिति भावेन तं व्याचष्टे– **कर्मणामिति** ॥ कर्मा-करणमात्रेण मुक्तिः कुतो न? इत्याकाङ्क्षापूर्वकं पुरुषपदं तदुत्तरत्वेनावतार्य व्याचष्टे– कुत **इत्यादिना** ॥ एतावन्तं कालं स्थावरजङ्गमात्मकस्थूलदेहप्रवाहान्वितत्वात्, सततं लिङ्ग-देहान्वितत्वाद्वा, न कर्माकरणं मुक्तिहेतुरिति भावः । नन्वेतावन्तं कालममुमुक्षुत्वात् तदन्यभोगाय कर्मकरणाद् अमुक्तिरित्याशङ्क्य, मुमुक्षुत्वेऽपि स्थावराणां कर्माकरण-सम्भवात् तेषां मुक्तिः स्यादिति भावेनाह– **यदीति** ॥ 'स्यात्' इत्युभयतः सम्बद्ध्यते । ततो न ज्ञानं विना मुक्तिरिति भावः ॥

प्रमेयदीपिका (ज.टी.)– उक्तमाक्षिप्य समाधत्ते– **कुत इति** ॥ नैष्कर्म्यशब्दस्या-न्यार्थतामङ्गीकृत्य कर्माकरणस्य मोक्षसाधनत्वनिराकरणे को हेतुरित्यर्थः? कथमस्य हेतुत्वम्? इत्यतो व्याचष्टे– **सर्वदेति** ॥

प्रलयेऽपि सम्भवार्थं 'स्थूलेन सूक्ष्मेण वा' इत्युक्तम् । तथाऽपि कथं हेतुत्वम्? इत्यत आह– **यदीति** ॥ 'स्यात्' इत्यस्य पूर्वोत्तराभ्यां सम्बन्धः । **स्थावराणाम्** इत्यनधिकृतोप-लक्षणम् । ततश्चानादौ संसारेऽनधिकृतदेहस्य सम्भवेन मुक्तिप्रसङ्गादधुनापि दृश्यमानस्य पुरुषत्वं न स्यादिति भावः ॥

श्लोकः ४

**भावदीपः (रा.टि.)**– ॥ **कथमस्येति** ॥ 'पुरुषत्वात्' इत्यस्येत्यर्थः ॥ 'स्थावराणां च' इत्यस्यान्वयप्रतीत्यर्थमाह– **स्यादित्यस्येति** ॥ **अनधिकृतेति** ॥ कर्माधिकारशून्यदेहवन्मात्रोपलक्षणमिति, तेषामपि कर्माकरणसत्वेनापादनसम्भवादिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **अस्य** पुरुषत्वस्य । प्रलयकाले जीवस्य स्थूलशरीराभावात् कथं 'सर्वदा' इति भाषणम् ? इत्यत आह– **प्रलयेऽपीति** ॥ **सम्भवार्थं** देहसद्भावसम्भवार्थम् । 'स्थूलेन' इत्यनन्तरम् 'इत्युक्तावसम्भवादिति' इति शेषः । **सूक्ष्मेण** लिङ्गशरीरेण । **हेतुत्वं** पुरुषत्वस्य ॥ **पूर्वोत्तराभ्यामिति** ॥ 'मुक्तिः स्यात्' 'तदा स्यात् स्थावराणां च' इति पूर्वोत्तरभाष्याभ्यां काकाक्षिन्यायेनान्वय इत्यर्थः । तेनोत्तरभाष्यस्यानन्वितत्वशङ्कानिरास इति भावः ।

ननु पश्वादिजङ्गमदेहेष्वपि कर्माकरणरूपमुक्तिसाधनसम्पादनसम्भवात् किं विशिष्याभिधीयते 'स्थावराणाम्' इति ? इत्यत आह– **स्थावराणामित्यनधिकृतोपलक्षणमिति** ॥ अनधिकृतदेहेषु स्थावरदेहस्य प्रधानत्वाद् उपलक्ष्यतावच्छेदकम् अनधिकृतत्वमिति सूचनाय 'स्थावराणाम्' इति स्थावरपदं इतरोपलक्षकमुपात्तमित्यर्थः । 'स्यात् स्थावरणाम्' इत्यनधिकृतदेहस्य मुक्त्यापादनमिष्टमेवेत्यतः पुरुषपदसूचितम् आपादनतात्पर्यमाह– **ततश्चेति** ॥

**भावदीपिका (श्री.टि.)**– ॥ **उक्तम्** 'ज्ञानमेव' इति वाक्येनोक्तम् । **अन्यार्थतां** काम्यकर्मासाध्यताम् । **अस्य** पुरुषत्वस्य । **व्याचष्ट इति** ॥ यदा पुरुषत्वं प्राप्तं तदा कर्माकरणमेव नास्तीत्याशयेन व्याचष्ट इत्यर्थः । **सम्भवार्थं** पुरुषत्वस्योपपत्त्यर्थम् । जीवः कर्माकरणेन नाश्नुते पुरुषत्वात् इत्युक्ते प्रलयकालीने जीवे स्थूलशरीरयुक्तत्वाभावेन पुरुषत्वस्य स्वरूपासिद्धत्वात् तदा कर्माकरणेन मुक्तिः सम्भवतीत्याशङ्कापरिहारायेति वाक्यशेषः । **पूर्वोत्तराभ्याम्** मुक्तिस्थावरपदाभ्याम् । ननु पश्वादिजङ्गमदेहेष्वपि पराभिमतकर्माकरणरूपमुक्तिसाधनसम्भवात् किं विशिष्याभिधीयते 'स्थावराणाम्' इति? इत्यत आह– **स्थावरणामितीति** ॥ **अनधिकृतेति** ॥ कर्मकरणे येषामधिकारो नास्ति तेऽनधिकृताः, तदुपलक्षणं स्थावरपदमित्यर्थः । अनधिकृतदेहेषु स्थावरदेहस्य प्राधान्याद् उपलक्षकतया तद्ग्रहणमिति द्रष्टव्यम् ॥ **अनधिकृतदेहस्येति** ॥ कर्मानधिकृतदेहस्येत्यर्थः । ततश्च कर्माकरणस्य प्राप्तत्वात् तदा मुक्तिप्रसङ्ग इति भावः । **पुरुषत्वं** देहयुक्तत्वम् ।

**भावप्रकाशः (कृ.टि.)**– ननु कर्माकरणं मोक्षसाधनं न भवति । तथा सति सर्वेषामपि स्थावरदेहप्राप्तौ तत्र कर्माकरणसम्भवेन मोक्षप्रसङ्गादिति ह्यत्राभिप्रेतम् । नच सर्वेषामपि स्थावरदेहो भवतीत्यत्रनिश्चायकमस्ति । तस्मादुक्तापादनमयुक्तमित्यत आह– **स्थावराणामितीति** ॥ उपलक्ष्यतावच्छेदकसूचनाय 'अनधिकृत' इत्युक्तम् । अनधिकृतदेहेषु स्थावरदेहस्य प्राधान्यादुपलक्षकत्वेन तदुक्तिः युक्तेति भावः ।

## भाष्यम्

**नचाकरणे कर्माभावान्मुक्तिर्भवति । प्रतिजन्म कृतानाम् अनन्तकर्मणां भावात् । नच सर्वाणि भुक्तानि । एकस्मिन् शरीरे बहूनि हि कर्माणि करोति। तानि चैकैकानि बहुजन्मफलानि कानिचित् । तत्र चैकैकानि कर्माणि भुञ्जन् प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च बहुशरीरफलानि कर्माणीत्यसमाप्तिः ॥**

भावप्रदीपिका (प.टी.)– स्यादेव स्थावराणां मोक्षः, अकरणे बन्धकाभावादित्यत आह– **न चेति** ॥ पूर्वकर्माणि स्थावरशरीरे भुक्तानीत्यत आह– **न चेति** ॥ बहून्यपि स्थावरशरीरे भुक्तानीत्यत आह– **तानि चेति** ॥ बहुशरीरफलकर्माण्यपि बहुस्थावरशरीरैर्भुक्त्वा मुक्तिरित्यत आह– **तत्र चेति** ॥ मानुष्यकर्माकरणे मुक्तिः स्यादित्यत आह– **ततश्चेति** ॥

भावप्रकाशिका (न.टी.)– नन्वतीतजन्मादृष्टं भोगेन क्षपयतां पुनरकरणे, कर्माभावात् मुक्तिः स्यादेव स्थावराणामपि, को दोषः ? इत्यत आह– **न चेति** ॥ नन्वतीतातीतजन्मादृष्टस्योत्तरोत्तरजन्मन एव क्षपणात्, कथमनन्तकर्मसम्भवः ? इत्यत आह– **न च सर्वाणीति** ॥ ननु करोत्येकेनैव देहेन बहुकर्माणि । तेषामेकेनैव जन्मना भोगः किं न स्यात् ? इत्यत आह– **तानि चेति** ॥ 'कानिचित् ' इति विशेषणादेकैकजन्मफलान्यपि कानिचिदिति भावः । ननु यदि कथञ्चित् तिर्यगादिफलान्येव तानि सर्वाणि तत्तर्हि तत्र पुण्यपापाभावात्, तद्भोगावसाने मुक्तिः स्यादित्यत आह– **तत्र चेति** ॥ चशब्दात् मानुष्यफलान्येव कानिचित् कर्माणीत्यर्थः । ननु भवतु दोषेण प्राधान्येन मानुष्यम्,

श्लोकः ४
तत्राकरणे पुण्यपापयोस्तदन्ते मुक्तिः किं न स्यात् ? इत्यत आह– **ततश्चेति** ।। तत्रावश्यं वहुशरीरफलकर्माणि करोति, अतो न ज्ञानं विना मुक्तिरिति भावः ।।

**प्रमेयदीपिका** (ज.टी.)– द्वितीयनिरासेऽप्यस्यैवार्थस्य तात्पर्यमाह– **न चेति** ।। कर्माभावात् संसारवीजाभावात्। अत्र नैष्कर्म्यम् इति मुक्तिनामैव । नतु परप्रमाणानुवादः । कुतो न भवति? इत्यतोऽत्रापि पुरुषत्वात् इति हेतुमभिप्रेत्याऽह– **प्रतीति** ।। जन्मनि-जन्मनि कृतानामित्यर्थः । पुरुषत्वेनानादौ संसारेऽधिकृतानन्तजन्मसम्भवात् तत्र कृतानाम् अनन्तकर्मणां भावात् किमद्याकरणमात्रेण भवति? इत्यर्थः ।।

ननु पूर्वपूर्वशरीरकृतानि कर्माण्युत्तरोत्तरशरीरे भुक्तानि । तत्कुतोऽनन्तकर्मणां भावः? इत्यत आह– **न चेति** ।। कुतो न? इत्यत आह– **एकस्मिन्निति** ।। हिशब्दो हेतौ ।। वहून्यपि भुज्यन्तां को दोषः? इत्यत आह– **तानि चेति** ।। तानि च कानिचिदिति सम्वन्धः ।। **एकैकानीति** ।। प्रत्येकमित्यर्थः ।। ननु तथाविधान्यप्यनधिकृतजन्मभि-र्भुक्तानीत्यत आह– **तत्र चेति** ।। **तेषु**=कर्मसु । **भुञ्जन्**=भुञ्जानः । **शेषेण**=कर्मशेषेण । मानुष्ये चाकरणमसम्भावितमित्याह– **ततश्चेति** ।। असमाप्तिः 'भोगेन कर्मणाम्' इति शेषः ।।

भाववोधः (र.टि.)– ।। **वीजाभावादिति** । वक्ष्यमाणयुक्तिव्यावृत्त्यर्थं मात्रमित्युक्तम् । **अन्यथाऽपि व्याख्यानादिति** ।। अनेन काम्यकर्मपरित्यागेन प्राप्यते इति निष्कर्मतां मोक्ष-मित्यन्वयसूचनपूर्वकं भाष्यमुक्ततात्पर्यकं भवति । ननु पश्वादिजङ्गमदेहेष्वपि पराभिमत-कर्माकरणरूपमुक्तिसाधनसम्पादनसम्भवात् किं विशिष्य 'स्थावराणाम्' इत्युक्तिः? इत्यत आह– **स्थावराणामितीति** ।। अनधिकृतदेहेषु स्थावरदेहस्य प्राधान्यादुपलक्षकत्वेनोक्तमिति भावः । **तानि च कानिचिदिति सम्वन्ध इति** ।। तेषां मध्ये कानिचिदिति भावः । ननु 'भुजोऽनवने' इत्यात्मनेपदविधानात् शानचा भवितव्यम् । कथं 'भुञ्जन्' इति शत्रन्तता? इत्यत आह– **भुञ्जान इति** ।।

भावदीपः (रा.टि.)– ।। **अस्यैवार्थस्येति** ।। 'न कर्मणाम्' इत्यर्धस्येत्यर्थः ।। अत्र **नैष्कर्म्यमितीति** ।। अस्मिन् द्वितीयपक्षे गीतायां 'नैष्कर्म्यम्' इति मुक्तेर्नाममात्रम्, नतु

नैष्कर्म्यशब्दवाच्यत्वान्यथानुपपत्तिरूपपूर्वपक्ष्यभिमतप्रमाणानुवाद इत्यर्थः । 'वीप्सायामव्ययी-भावः' इति भावेनाऽह– **जन्मनि जन्मनीति ॥ पुरुपत्वेनेति ॥** शरीरयुक्ततया सदा सत्वेनेत्यर्थः ॥ **अधिकृतेति**अधिकारयुक्तेत्यर्थः ॥ 'भुञ्जन्' इत्यस्य 'अवन्' इत्यर्थप्रतीति-निरासायाऽह– **भुञ्जान इति ॥** 'भुजोऽनवने' (पा.सू.१.३.६६) इत्युक्तात्मनेपदस्याभावः छान्दस इति भावः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु 'भुजोऽनवने' इति अपालने वर्तमानात् भुजः आत्मने-पदस्यैव विधानात् शानचा भवितव्यम् । कथं 'भुञ्जन्' इति शत्रन्तत्वम्? इत्यतः छन्दस्तुल्य-त्वात् पुराणस्य 'व्यत्ययो बहुलम्' इत्यात्मनेपदिनः परस्मैपदत्वसिद्धया युक्तो लिडादेशः शत्रन्तप्रयोग इति भावेन स्वयं यथास्थितमात्मनेपदिप्रतिपदमाह– **भुञ्जन् भुञ्जन इति ॥**

**भावरत्नकोशः (सु.टि.)**– ॥ **द्वितीयेति** । संसारस्य कर्म बीजम् । अकरणे च बीजाभावाद् संसारो न भविष्यतीति युक्तिमाश्रित्येति आद्यद्वितीयपक्षनिरासेऽपि, **अस्यैवार्थस्य** 'न कर्मणामनारम्भात्' इत्यर्धस्यैवेत्यर्थः। कर्माभावे मुक्तिः कथं स्याद् ? इत्यतो द्वितीय-विकल्पनिरासरूपत्वस्फोरणायार्थमाह– **कर्मेति ॥** नैष्कर्म्यशब्दस्य पूर्ववद् व्युत्पत्तिग्रहणेऽत्र पक्षे वैयर्थ्यप्रसङ्गादाह– **अत्रेति** ॥ द्वितीयपक्ष इत्यर्थः। गीतायां 'नैष्कर्म्यम्' इति मुक्तेर्नाममात्रम् । काम्यकर्माभावप्राप्यत्वात् । ननु नैष्कर्म्यशब्दवाच्यत्वान्यथाऽनुपपत्तिरूप-पूर्वपक्ष्यभिमतप्रमाणानुवाद इति भावेन भाष्ये 'नैष्कर्म्यं भवति' इति वक्तव्येऽपि 'मुक्तिः' इत्येवोक्तमिति भावः । **कुतो न भवतीति** ॥ 'कर्माभावान्मुक्तिर्भवतीति न' इत्येतत् कुतो हेतोः प्रतिपत्तव्यमित्यर्थः । 'प्रतिजन्म' इति वीप्सायामव्ययीभाव इति भावेन आह– **जन्मनि-जन्मनीति** ॥**अधिकृतेति** ॥ कर्माधिकारयुक्तेत्यर्थः । **अद्य** एतस्मिन् जन्मनि । अर्थः वाक्यार्थः। 'कुतः' इत्यवतारितत्वादाह– **हेताविति** ॥ **यस्माद्** बहूनि कर्माणि करोतीति तस्मान्न भुक्तानीति भाष्ये अन्वयः ।

> 'पिपीलिकावधादीनि क्षुद्रपापोदितानि च । (धर्मविवेकः)',
> मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम् ॥ (धर्मतत्त्वम्)'

इति वचनेन क्षुद्रपापकर्मणां स्वल्पफलत्वावेदनात् कथं तानि बहुजन्मफलानि ? इत्यत आह– **तानि च कानिचिदिति** ॥ तेषां मध्ये कानिचित् कर्माणि तु तथाविधानीत्यर्थः । 'एकं

श्लोकः ४

बहुव्रीहिवत्' इति द्विर्वचने बहुव्रीहिवद्भावे सुब्लोपे एकैकम् एकैकम् एकैकम् इत्येवं सरूपैकशेषे एकैकानीति निष्पन्नस्य भाष्यस्यार्थमाह– **प्रत्येकमिति ॥ तथाविधान्यपि** बहुजन्मफलान्यपि । बहुकर्मभोगघटनाय **'अनधिकृतजन्मभिः'** इति बहुवचनम् । तत्रेत्यस्यार्थः– **तेष्विति** ॥ ननु भाष्ये 'भुञ्जन्' इति कथं शत्रन्तम्? यावता 'भुजोऽनवने' इति पालनान्यार्थे भुजेरात्मनेपदे शानजेव प्राप्नोति । सत्यम् । 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इति वैयाकरणवचनादिह भाष्ये शत्रन्तं युक्तमिति भावेन तदर्थमाह– **भुञ्जन् भुञ्जान इति । अकरणं** कर्माकरणम् । भाष्ये 'कर्माणि' इत्यनन्तरं 'कुर्वाणो भवति' इति शेषः ॥

**भावदीपिका (श्री.टि.)**– प्रथमपक्षवदत्रापि नैष्कर्म्यशब्दोऽन्यथाऽनुपपत्तिरूपपरोक्तप्रमाणानुवाद इति प्रतीतिं वारयितुमाह– **अत्रेति ॥ मुक्तिनामैवेति** ॥ मुक्तौ रूढ एव, न तु पूर्ववत् यौगिको विवक्षित इत्यर्थः । योगलब्धनैष्कर्म्यशब्दवाच्यत्वान्यथाऽनुपपत्तिरूपप्रमाणस्यान्यथाऽप्युपपत्त्या निराकृतत्वेन द्वितीयपक्षे उपयोगाभावादिति भावः । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्वनवः' इति सूत्राद् वीप्सायाम् अयं प्रतिरित्याशयेनाऽह– **जन्मनिजन्मनीति ॥ पुरुषत्वेन** देहयुक्तत्वेन ॥ **हेताविति** ॥ यस्मादेकस्मिन् शरीरे बहूनि कर्माणि करोति, तस्मात् सर्वाणि कर्माणि न भुक्तानीति हेतावित्यर्थः ॥ **तानि च कानिचिदिति** ॥ तेषां मध्ये कानिचिदिति यावत् । 'तानि च कानिचिद् बहु-जन्मफलानि; इत्युक्त्या पूर्णत्वेन 'एकैकानि' इति व्यर्थमित्यत 'एकैकानि' इत्यस्य तात्पर्यमाह– **प्रत्येकमिति** ॥ तेषां मध्ये कानिचित् कर्माणि प्रत्येकं प्रत्येकं बहुजन्मफलानि सन्तीत्यर्थः । तथाविधानि प्रत्येकं बहुजन्मसाधनान्यपि ।

ननु 'भुजोऽनवने' भुज पालनाभ्यवहारयोरिति धातोः पालनापरपर्यायावनाविवक्षयाऽभ्यवहारे विवक्षिते आत्मनेपदं स्यात् । पालनार्थतायां तु परस्मैपदित्वमेव । प्रकृते च पालनार्थत्वाभावाद् अभ्यवहारार्थत्वमेव । तथा च 'भुज्' अस्मादात्मनेपदिनि लटः शानचादेशे शकारचकारयोर्लोपे 'भुज् आन' इति जाते 'रुधादिभ्यः श्नम्' रुधादिभ्यो धातुभ्यः कर्त्रर्थे सार्वधातुके परे श्नम् स्यादित्यनेनास्यापि रुधादिधातुपाठान्तर्गतत्वात् श्नमि शकारमकारयोर्लोपे मित्त्वाद् उकारात् परं जाते 'भुनज् आन' इति जाते, 'श्नसोरल्लोपः' इति श्नमः अकारलोपे, 'नश्चापदान्तस्य झलि' इति नकारस्य अनुस्वारे जाते, 'अनुस्वारस्य ययि परसवर्णः' इति

अनुस्वारस्य परसवर्णे ञकारे सति 'भुञ्जान' इति भवेत् 'भुञ्जन्' इति तु कथम्? तथात्वे परस्मैपदिताऽऽपत्तेः । तथा हि । 'भुज्' अस्मात् परस्मैपदिनि लटः शत्रादेशे शकारऋवर्णयोर्लोपे, 'भुज् अत्' इति जाते श्नमि नकारस्यानुस्वारे च 'भुञ्जत्' इति जाते, 'उगिदचां सर्वनामस्थानेऽधातोः' इति शतृप्रत्ययान्तर्गतऋवर्णस्येत्त्वेन शतृप्रत्ययस्य उगित्त्वात् नुमागमेन नकारे 'भुञ्जन् त्' इति जाते 'संयोगान्तस्य लोपः' इति तकारलोपे 'भुञ्जन्' इति भवति । अतः कथमेतद्? इत्यतो 'व्यत्ययो बहुलम्' इत्यात्मनेपदिनोऽपि धातोर्व्यत्ययेन परस्मैपदित्वमाश्रित्य भाष्यकारैः 'भुञ्जन्' इति प्रयुक्तम् इत्याशयेन शानजन्तमेव प्रतिपदमाह– **भुञ्जान इति ॥ कर्मशेषेणेति ॥** यथोक्तम्– 'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्' (ब्र.सू. ३.१.८) इति । ननु मानुष्यप्राप्तौ तत्र कर्माकरणसम्भवान्मुक्त्युपपत्तिरित्यत आह– **मानुष्ये चेति ॥** 'ततश्च' इत्यस्य भाष्यस्य ततश्च मानुष्यदेहप्राप्त्यनन्तरं पुनर्बहुशरीफलकर्माणि करोतीत्यसमाप्तिरित्यर्थो द्रष्टव्यः ।

**भावप्रकाशः (कृ.टि.)–** कर्माणि तत्प्रतिबन्धकानीति विकल्पितपक्षाद्भेदप्रदर्शनाय व्याचष्टे - **संसारबीजाभावादिति ॥** नैष्कर्म्यशब्दस्य पूर्ववद्यौगिकत्वे वैयर्थ्यप्रसङ्गादाह– **अत्र नैष्कर्म्यमितीति ॥** ननु 'प्रतिजन्म'इत्ययं शब्दो 'जन्मनिजन्मनि' इति वीप्सायामव्ययीभावः । तस्य च 'भावात्' इत्यनेन नान्वयः । वैय्यर्थ्यात् । अद्य कर्माकरणमात्रेण मोक्षो न भवति । अनन्तकर्मणां भावादिति ह्यत्र विवक्षितम् । न च तत्र प्रतिजन्मेति विशेषणप्रयोजनमस्तीत्याशङ्क्य 'प्रतिजन्म' इत्यस्य 'कृतानाम्' इत्यनेनान्वयः । तत्र च कर्मानन्त्यसम्भावनार्थं विशेषणं सार्थकमेवेति भावेन व्याचष्टे– **जन्मनि जन्मनीति ॥** ननु–

> 'पिपीलिकावधादीनि क्षुद्रपापोदितानि च ।
> मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम्' ॥

इति वचनेन क्षुद्रपापकर्मणां स्वल्पफलत्वावेदनात् कथं तानि चेत्यनेन बहुजन्मफलमुक्तम् ? इत्यत आह– **तानि च कानिचिदिति ॥** तेषां मध्ये कानिचिदित्यर्थः । नन्वेकशब्दो नित्यैकवचनान्तः एकत्वसङ्ख्यावाचित्वेन प्रातिपदिकार्थस्यैकत्वात् । तस्य च द्विर्वचने एकैकमिति स्यात् । नच द्विर्वचनान्तरं बहूनां भावाद्बहुवचनम् । बहूनां भानेऽपि बहुत्वसङ्ख्याया अभानात् । अन्तरङ्गभूत-प्रत्येकनिष्ठैकत्वसङ्ख्याभावेन प्रतिबन्धात् । अत एव 'वृक्षं वृक्षं

सिञ्चति' इत्यादौ प्रत्येकं विधेयसम्बन्धप्रतीतिः । तस्मात् 'एकैकानि' इति बहुवचनमयुक्तमित्याशङ्क्य च्छन्दसं प्रथमैकवचनस्य बहुवचनमिति भावेन तदर्थमाह– **प्रत्येकमित्यर्थ इति** ॥ ननु 'भुजोऽनवने' इति पालनभिन्नार्थे भुजेरात्मनेपदविधानात् 'भुञ्जानः' इति शानजन्तेन भाव्यम् । कथं 'भुञ्जन्' इति शत्रन्तता' इत्यत आह– **भुञ्जान इति** ॥

## भाष्यम्

**तच्चोक्तम्–**

> जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
> स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जते ॥
> चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।
> अतोऽवित्त्वा परं देवं मोक्षाशा का महामुने ॥' इति ब्राह्मे ।

**यदि सादिः स्यात् संसारः पूर्वकर्माभावादतत्प्राप्तिः । अबन्धकत्वं त्वकामेनैव भवति । तच्च वक्ष्यते– 'अनिष्टमिष्टम्' (१८.१२) इति ॥**

भावप्रदीपिका (प.टी.)– तत्र प्रमाणमाह– **तच्चेति** ॥ संसारानादित्वं च युक्त्या साधयति– यदीति । ननु ज्ञानान्मोक्षपक्षेऽपि बन्धनिवृत्त्यर्थं कर्म त्याज्यमेवेत्यत आह– **अबन्धकत्वमिति** ॥ काम्यमेव त्याज्यं न विहितमित्यर्थः ॥

भावप्रकाशिका (न.टी.)– तत्र प्रमाणमाह– **तच्चेति** ॥ संसारस्यादिमत्त्वे द्वित्र्यादिवर्षजीवानां कतिपयजन्मभिः पूर्वकर्मक्षये पुनः कर्माकरणादेव कथञ्चिन्मुक्तिशङ्का स्यादिति तन्निवृत्तये तत्कर्म बाधितं चेत्याह– **यदि चेति** ॥ ननु भवतु नाम मुमुक्षोः तज्जन्मनि कर्माकरणेऽपि जन्मान्तरकृतानन्तकर्मबद्धत्वात् तन्निवृत्तिर्ज्ञानादेवेति तदर्थं प्रयत्नः । तथाऽपि पुनरबन्धाय कर्मणां युद्धादीनामनारम्भ एव स्यादित्यत आह– **अबन्धकत्वं त्विति** ॥ अतः कामत्याग एव मुमुक्षुभिः कार्यो न कर्मत्यागः ।

प्रमेयदीपिका (ज.टी.)– सम्भावनामात्रेणेदमुक्तं न तु प्रमितमित्यत आह– **तच्चोक्तमिति** ॥ **चतुर्दशाद्** वर्षात् । अनूनो दशको यस्येति विग्रहः । ह्रस्वदीर्घव्यत्ययेन

**'चतुर्दशोर्ध्वजीविनी' इति स्त्रिया विशेषणम् । संसारश्च इति कर्मणामनन्तत्वोपपादनम् । अतः भोगेन क्षयासम्भवात् । अवित्त्वा अविदित्वा । पुरुषशब्देनानादिदेहसम्बन्ध उक्तः ॥ सोऽसिद्ध इत्यत आह— यदीति ॥ अतत्प्राप्तिः आकस्मिकस्य संसारस्याप्राप्तिः स्यात् । अतः पुरुषत्वं सिद्धमिति ॥ ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि । तथाऽपि बन्धकानि कथं प्रेक्षावता क्रियेरन्? न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येतावताऽद्य क्रियन्त इत्यत आह— अबन्धकत्वं त्विति ॥ कर्मणां बन्धाहेतुत्वं त्वकामादिनैव भवति । न त्वकरणेन । प्रत्यवायस्यैव प्राप्तेरित्यर्थः । अकामे अबन्धकत्वं भगवत्सम्मतमिति भावेनाऽह— तच्चेति ॥**

**भावदीपः (रा.टि.)**– ॥ **पुरुषत्वमिति** ॥ पुरुषब्दितानेकदेहयुतत्वं सिद्धमित्यर्थः ॥ **तच्चेतीति** ॥ 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां पार्थ नतु सन्न्यासिनां क्वचित्' (१८.१२) इत्याष्टादशेऽध्याये उक्तमिति भाष्यार्थो ज्ञेयः । तृतीयपक्ष-निरासस्तु 'यज्ञार्थात् कर्मणोऽन्यत्र' (३.९) इति श्लोके भविष्यतीति भावः ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु च वेत्तेः क्त्वाप्रत्यये तस्य चार्धधातुकत्वात् 'आर्धधातु-कस्येड्वलादेः' इति इडागमे 'अविदित्वा' इति भवितव्यम् । 'अवित्त्वा' इति कथम्? इत्यतोऽत्र इडभावः छान्दस इति भावेन स्वयमिडमाश्रित्य प्रतिपदमाह– **अवित्त्वा अविदित्वेति** ॥

**भावरत्नकोशः (सु.टि.)**– इदं कर्मणामकरणासम्भावनम् असमाप्त्यभिधानं च । 'चतुर्दशात्' इत्यत्र विशेष्यं पूरयति– **चतुर्दशाद् वर्षादिति** ॥ तथा च स्मृत्यन्तरम् 'आ-चतुर्दशमाद् वर्षात्' इति । दशकशब्दो हि दश परिमाणमस्येत्यस्मिन्नर्थे व्युत्पन्नः । 'पञ्चद्दशतौ वर्गे वा' इति स्मरणात् । तस्य चानूनशब्देन कर्मधारये दशतोऽप्यधिकदेहप्रापकमानविरोधः । स्मर्यते हि 'मृताऽहं समतिक्रम्य चण्डालः कोटिजन्मसु', 'सप्तजन्मनि विप्रः स्यात्', 'श्वानयोनिशतं प्राप्य' इत्यादीत्यत आह– **अनून इति** ॥ यस्य देहस्य दशकोऽन्यूनो न भवतीत्युक्तौ दशत्वावरसङ्ख्या न । किन्तु तदधिकैवेति प्रतीयत इति नोक्तप्रमाणविसंवाद इति भावः । 'चतुर्दशोर्ध्वजीवीनि' इति न पुरुषस्य स्त्रिया वा विशेषणम् । क्लीबबहुवचनान्त-त्वादित्यत आह– **ह्रस्वदीर्घेति** ॥ नकारोपरितनस्य इकारस्य दीर्घतया, वकारादुपरितनस्य ईकारस्य ह्रस्वतया व्यत्यस्य योजने 'जीविनी' इति शब्दः स्त्रिया विशेषणं व्याख्यातव्यम् इत्यर्थः । 'स्त्रियो विशेषणम्' इत्यलाक्षणिकः पाठश्चेत् पुराणप्रयोगानुवादः ॥

'चतुर्दशोर्ध्वजीवीनि भूतानि' इति यथाश्रुतव्याख्यानमयुक्तम् । पुरुषं स्त्रियं वा विनाऽन्यस्य पश्चादेर्दशाधिकमानुषदेहसम्पादककर्मसद्भावे मानाभावात् । विधिनिषेधागोचरत्वेनानधिकारित्वाच्चेति । संसारस्यानादित्वोक्तिः प्रकृतासङ्गतेत्यत आह– **संसारश्चेति ॥** देहयोगादिरूपस्य तस्य कर्मापाद्यत्वेन तदनुकूलकर्मणामनन्तत्वं भवतीति भावः । चतुर्दशोर्ध्वजीवित्वादेरेतच्छब्देन परामर्शे प्रकृतासङ्गतेराह– **अतः भोगेनेति** ॥ ज्ञानार्थकस्य विदेः सेट्त्वाद् 'अवित्त्वा' इति प्रयोगश्छान्दस इति भावेन व्याचष्टे– **अविदित्वेति ॥** 'विद विचारणे' इत्यस्यानिट्त्वेऽपि तेनापरोक्षज्ञानाप्राप्तेः ज्ञानेनैव मोक्षो न कर्माकरणेनेति प्रकृतार्थलाभाय 'विद ज्ञाने' इत्यस्यैवेदं रूपमिति भावेनैवं व्याख्यातम् । भाष्ये 'आशा आशासनं का कुतस्त्या' इति योजने त्त्वाप्रत्यय उपपन्नः । **पुरुषशब्देनेति ॥** 'सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तः' इति भाष्ये तथैव पुरुषशब्दार्थोक्तेरिति भावः ।

॥ **'आकस्मिकस्य'** इति हेत्वर्थगर्भम् । 'स्यात्' इत्यनन्तरं 'अस्ति च तत्प्राप्तिः' इति शेषः । **कथमिति ॥** युद्धादीनामपि कर्मत्वात् कर्ममात्रस्य च 'कर्मणा बध्यते' इति बन्धकत्वावगमात् तदनुष्ठानेन स्वात्मानं बन्धयन् कथं नाम प्रेक्षावान् भवेदित्यर्थः । अप्रेक्षावत्त्वं व्यनक्ति– **न हीति** ॥ प्राक्तनानि बहूनि बन्धकानि सन्तीत्यद्यापि बन्धकान्यनुतिष्ठन् मूर्ख एव स्यादिति भावः । **कर्मणां** विहितानां युद्धादीनाम् ॥

अत्रेयं प्राचीनटीका– 'भवतु नाम मुमुक्षोः तज्जन्मनि कर्माकरणेऽपि जन्मान्तरकृतानन्तकर्मबद्धत्वात् तन्निवृत्तिर्ज्ञानादेवेति तदर्थः प्रयत्नः । तथाऽपि पुनः स्वात्मबन्धकानां युद्धादीनामनारम्भ एव युक्त इत्यत आह– **अबन्धकत्वं त्विति** ॥ अतः कामत्याग एव मुमुक्षुभिः कार्यः, न पुनः कर्मस्वरूपत्यागोऽपि इति ।'

॥ **कर्मणां** विहितयुद्धादिकर्मणाम् । 'अकामादिना' इत्यत्र आदिपदेन भगवदर्पणादिग्रहः । एतेन भाष्येऽकामपदमुपलक्षणार्थमित्युक्तं भवति । भाष्योक्तैवकारव्यावर्त्यं सहेतुकमाह– **न त्विति ॥** कर्मत्वाविशेषे फलकामनाऽभावमात्रेण कुतस्तेषां बन्धाहेतुत्वम्? इति चोद्योत्तरत्वेनोत्तरं भाष्यमवतारयति– **अकाम इति ॥** फलकामनाऽभाव इत्यर्थः । 'अकामेन' इत्यपि क्वचित्पाठः । **अबन्धकत्वं** कर्मणाम् । **तच्चेतीति ॥**

'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥' (१८.१२)

इत्यष्टादशेऽध्याये निरयत्रिदिवमानुष्यरूपत्रिविधकर्मफलाभावोऽकामिनां भवतीत्यभिधास्यते। तेन संन्यासिपदोक्तफलकामनारहितानाम् उक्तत्रिविधफलाभावेन तत्कृतकर्मणाम् अबन्धकत्वं विज्ञायत इति भाष्यार्थः ।

**भावदीपिका (श्री.टि.)**– **इदमुक्तम्** 'एकस्मिन् शरीरे' इत्यादिकम् । 'चतुर्दशाद् दिनात्' इत्यन्यथाप्रतीतेराह – **वर्षादिति ॥ दशक इति ॥** दशैव दशकः । स्वार्थे कः । दशसङ्ख्याकं देहमित्यर्थः । यद्यपि दशदेहापेक्षयाऽप्यधिकदेहसम्पादकं कर्म करोति । तथाऽपि नीचपक्षे दशमानुषदेहापादककर्म सम्पादयति न तदपेक्षया न्यूनमिति भावः । इदं तु ऋषिपुत्रततूस्त्र्यादिविषयं मन्तव्यम् । ननु 'चतुर्दशोर्ध्वजीवीनि' इत्यस्य नपुंसकलिङ्गबहुवचनान्तस्य कथं स्त्रीविशेषणत्वम्? इत्यत उक्तम् – **ह्रस्वदीर्घव्यत्ययेनेति ॥** 'नि' इत्यत्रत्यस्य ह्रस्वस्य पूर्वत्र, 'वी' इत्यत्रत्यस्य दीर्घस्य चोत्तरत्र सम्बन्धे सति 'जीविनी' इति स्त्रीविशेषणत्वं युक्तमिति भावः । भाष्ये - **मानुषं देहमार्जते ॥** मानुषदेहापादकं कर्म साम्पादयतीत्यर्थः । तथा च कर्मणामनन्तत्वं प्राप्तमिति भावः । कुतः? इत्यत उक्तम् – **संसार इति ॥ उपपादनमिति ॥** संसारस्य सादित्वे तन्मूलकर्मणामपि सादित्वेनाल्पतापत्त्या भोगेन समाप्तिः स्यात् । न चैवम् । संसारस्यानादित्वात् । तथा च तन्मूलकर्मणामनादित्वेनानन्तत्वम् अङ्गीकार्यम् । ततश्च भोगेनासमाप्तिरित्युपपादनं द्रष्टव्यम् ।

॥ **सोऽसिद्ध इति ॥** देहसम्बन्धे सत्यपि तत्रानादित्वमसिद्धमित्यर्थः । **संसारः** देहसम्बन्धः । **पुरुषत्वम्** अनादिदेहसम्बन्धः । **अनन्तकर्माणि** 'बन्धकानि' इति शेषः । 'तथाऽपि' इत्यनन्तरं 'तादृशकर्माणि सन्तीत्येतावता' इति शेषः । **बन्धकानि** उत्तरत्र जन्मापादकानि । **क्रियेरन्** 'अद्यतनेऽपि जन्मनि' इति शेषः । यद्येतादृशान्यपि कर्माणि क्रियन्ते तर्हि प्रेक्षावत्त्वं व्याहन्येत । तथा चैतज्जन्मनि बन्धहेतुभूतकर्माकरणेन मुक्तिर्युक्तैवेति भावः । ननु प्राक्तनकर्मसदृशान्येव कर्माण्यद्यतने जन्मन्यपि कस्मात् न क्रियन्ते? इत्यत आह– **न हीति ॥** 'अकामादिनैव' इत्यादिपदेन ज्ञानपूर्वकत्वासङ्ग्रहः । **प्रत्यवायस्येति ॥** 'कुर्वन्नेवेह कर्माणि'इति

श्रुतौ कर्माकरणे प्रत्यवायश्रवणादिति भावः ॥ **तच्चेतीति** ॥ 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' (१८-११) इति त्यागस्तुतिः।

'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्॥' (१८-१२)

इति श्लोके कर्म कृत्वा कामनात्यागमकुर्वताम् अनिष्टादिबन्धमुक्त्वा 'न तु सन्न्यासिनाम्' इति फलकामनात्यागेन कर्म कुर्वताम् अनिष्टादिबन्धाभाव उक्तोऽष्टादशाध्याय इत्यर्थः।

**भावप्रकाशः (कृ.टि.)–** 'दिवसात्' इति विशेष्ये उक्ते 'आचतुर्दशमाद्वर्षात्' इति मानान्तरविरोध इत्यत आह– **वर्षादिति** ॥ ननु दशानां सङ्घो दशकः। तस्यानूनशब्देन कर्मधारये दशतोऽप्यधिकदेह-प्रापककर्मप्रतिपादकपुराणादिविरोध इत्यत आह– **अनून इति** ॥ ज्ञानार्थस्य विदेः सेट्कत्वादाह– **अविदित्वेति** ॥ **पुरुषशब्देनेति** ॥ 'सर्वदा स्थूलेन' इत्यादिभाष्येण पुरुषशब्दार्थोक्तेरिति भावः। **आकस्मिकस्येति** ॥ हेतुगर्भमेतत्। **अकामादि-नैवेति** ॥ आदिपदादीश्वरार्पणादेः ग्रहः।

**प्रमेयदीपिका (ज.टी.)– सङ्करस्तु 'अकरणमसत् न सन्तं प्रत्यवायं जनयति। कथमसतस्सञ्जायेत'** (छा.उ.६.२.१) **इति श्रुतेः' इत्यवादीत्। तद् भास्करः प्रत्यपेधीत्। 'द्रव्यविषया श्रुतिः। गुणस्त्वसतोऽपि जायते' इति। उभावपि स्थूलदृश्वानौ। न ह्यकरण-मसत्। तथा सति करणप्रसङ्गात्। किन्त्वभावः। सच भाववत् तत्त्वमेवेति कथम-कारणम्? गुणं प्रति कारणत्वे च द्रव्यकारणत्वं कुतो न भवेत्?** ॥ **'ननु चात्रोपादानत्वस्य विवक्षितत्वादकरणस्य चाभावरूपतया सत्वेऽप्यत्र विवक्षिता-पादानत्वानुपपत्तेर्न प्रत्यवाय-जनकत्वमित्यभिप्राय इत्यत आह– नहीति ॥' न ह्यत्रोपादानत्वं विवक्षितम्। किन्तु निमित्तत्वमेवेत्युक्तम् इत्यलम्** ॥

**भावबोधः (र.टि.)–** ॥ **करणप्रसङ्गादिति**। असतोऽप्यत्यन्ताभावप्रतियोगित्वात् करण-स्यैवाकरणात्यन्ताभावरूपत्वादिति भावः। ननु द्रव्यस्य सोपादानकत्वादसतो न द्रव्य-जनकत्वमित्यत आह– **न ह्यत्रेति** ॥

**भावदीपः (रा.टि.)– ॥ सङ्करस्त्विति ॥** मायावादीत्यर्थः ॥ **तथा सतीति ॥** करणा-भावस्यासत्वेभावप्रतियोगित्वे सतीत्यर्थः । अभावाभावस्य भावत्वनियमादिति भावः । कथमसतो द्रव्योपादानत्वम्? इत्यत आह– **नह्यत्रेति ॥**

**भावरत्नकोशः (सु.टि.)–** 'कर्मणां बन्धाहेतुत्वम् अकामादिनैव भवति । न त्वकरणेन । प्रत्यवायस्यैव प्राप्तेः' इति भाष्याभिमतमसहमानः सङ्करः मोक्षस्याकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम् । नित्यानित्यप्रत्यवायपरिहारार्थानीति चेन्न । असंन्यासिविषयत्वात् प्रत्यवायप्राप्तेः । संन्यासि-नामपि न तावन्नित्यानाम् अकरणाद् अभावरूपाद् भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या, युक्ता च । 'कथमसतः सज्जायेत' (छा. ६.२.१) इत्यसतः सज्जन्मासम्भवश्रुतेरिति गीताहृदयं नित्यकर्माकरणे प्रत्यवायमदूषयत् । तदिदं सङ्करभाष्यमनुवदति– **सङ्करस्त्विति ॥** प्रतिषेधप्रकारमेव दर्शयति– **द्रव्यविषयेति ॥** 'तत्तेजोऽसृजत' इत्यादिवाक्यशेषे तेजःप्रभृति-द्रव्यसृष्टेरेवोक्तत्वाद् असतः सकाशात् सत् द्रव्यं कथं जायेत? इत्येवंपरा श्रुतिरित्यर्थः । उभौ सङ्करभास्करौ । तत्र सङ्करमतं तावद् दूषयन् 'अकरणम् असत् न सन्तं प्रत्यवायं जनयति' इत्यत्र साक्षित्वेनोदाहृतश्रुतावसच्छब्दः किमत्यन्ताभावप्रतियोगिवाची? उताभाववाची इति विकल्प्याऽद्यं प्रत्याह– **न हीति ॥** अत्यन्तासदित्यर्थः । अकरणस्यात्यन्तासत्त्वे करणं सत् स्यात् । करणस्यैवाकरणात्यन्ताभावरूपत्वादिति भावः । द्वितीयं शङ्कते– **किन्त्विति ॥ अभावः** करणाभावः ॥ **कथमकारणमिति ॥** प्रागभावे प्रतियोगिकारणत्वस्य तान्त्रिकैरङ्गी-कृतत्वादिति भावः ।

भास्करमतं दूषयति– **गुणं प्रतीति ॥** असति कारकशक्त्यङ्गीकारे द्रव्यकारणता नास्ति गुणकारणता तु इष्यत इति कल्पनस्य विशेषनियामकाभावेनायुक्तत्वादिति भावः । ननु 'न त्वकरणेन प्रत्यवायप्राप्तेः' इति करणाभावस्य प्रत्यवायं प्रति सिद्धान्त्यभिमतं कारणत्वमयुक्तम् । अभावस्योपादानत्वाभावादित्यत आह– **न ह्यत्रेति ॥** 'कथमसतः' इति श्रुतस्य करणाभावस्य प्रत्यवायोपादानत्वं न विवक्षितम् । तार्किकमते प्रत्यवायस्याधर्मलक्षणत्वेन आत्मोपादान-कत्वात् । सिद्धान्ते च मनउपादानकत्वादिति भावः ।

ननु 'सदेव सोम्य इदमग्र आसीत्', 'तद्धैक आहुरसदेवेदमग्र आसीदिति' (छा. ६.२.१), 'कथमसतस्सज्जायेत' (छा.६.२.१.), 'असद्वा इदमग्र आसीत्' ,'ततो वै

सदजायत' (तै. २.१२) इत्यादिप्रकरणे 'बहु स्याम्' इति बहुभावश्रवणाद् उपादानत्वमेवाभिमतमिति ज्ञायत इति चेन्न । असच्छब्दार्थस्य ब्रह्मणश्चेतनत्वेनाविकारितयैव 'अजायमानो बहुधा विजायते' इति श्रुत्यैव बहुभावावेदनाद् इत्यन्यत्रोपपादितत्वादिति भावेन आह– **इत्यलमिति ॥**

केचित्तु **'कथमसतस्सज्जायेत'** इत्यत्र श्रुतौ 'असतः' इत्युपादाने पञ्चमी । 'जनिकर्तुः प्रकृतिः' इति स्मरणादित्यत आह– **न ह्यत्रेति ॥** 'पुत्रात् प्रमोदो जायते' इति वृत्तिकारोदाहृतप्रयोगे, 'गोलोमाविलोमभ्यो दूर्वा जायन्ते' इति भाष्यकारोदाहृतप्रयोगे, 'बिलाद् दीर्घभोगी निष्क्रामति' इति कैयटप्रयोगे चानपादानेऽपि पञ्चमीदर्शनात्, न्यासेऽपि 'प्रकृतिपदं हेतुमात्रपरम्' इत्याश्रितत्वाच्च नापादानत्वं पञ्चम्या विवक्षितमिति भावेन आह– इत्यलमिति इति व्याकुर्वते ॥

**भावदीपिका (श्री.टि.)–** 'कर्मणामबन्धकत्वम् अकामेनैव भवति । न त्वकरणेन । प्रत्यवायप्राप्तेः' इत्यभिहिते तत्र परोक्तं दूषणमनूद्य पराचष्टे– **सङ्गस्त्विति ॥ असदिति ॥** प्रतियागिप्राधान्यविवक्षया अत्यन्ताभावप्रतियागित्वस्यैवासच्छब्दार्थत्वाद् असद् अत्यन्ताभावप्रतियोगीत्यर्थः । अत्यन्ताभावप्रतियोगिनश्चाकरणस्य न शशविषाणादिवत् सत्प्रत्यवायजनकत्वं सम्भवतीति भावः । तथा च करणस्य प्रत्यवायजनकत्वात् तस्यैव मुक्तिसाधनत्वमस्त्वित्याशयः । कुतः? इत्यत आह– **कथमिति ॥ द्रव्यविपयेत्यादि ॥** असतोऽप्यकरणस्य सत्प्रत्यवायजनकत्वमित्येतत् सम्भवति । नच श्रुतिविरोधः । सत् द्रव्यं घटादि असतः सकाशात् कथं जायेत? इति श्रुतेर्द्रव्यविषयत्वात् । प्रकृते च नरकहेतुभूताधर्मरूपप्रत्यवायस्य गुणत्वेन तस्यासतोऽप्यकरणाज्जनिर्भविष्यतीत्यर्थः ।

ननु 'गुणस्त्वसतोऽपि जायते' इत्येतत् कथम्? कुत्राप्यदर्शनात्, इति चेत्– सत्यम् । तथाऽपि वाक्यद्वयान्यथाऽनुपपत्त्या कल्पनीयत्वात् । असतोऽकरणात् प्रत्यवायजनिस्तावत् प्रमिता । 'कथम् असतः सज्जायेत' इति तन्निषेधश्च । अतस्तयोर्वाक्ययोर्विरोधशान्त्यै श्रुतेर्द्रव्यविषयत्वेन सङ्कोचमुक्त्वा, गुणस्त्वसतोऽपि जायत इत्यङ्गीकार्यमिति तदभिप्रायः । **स्थूलदृश्वानौ** सूक्ष्मदर्शिनौ न भवतः । मूर्खाविति यावत् ।

सङ्करं प्रत्याह– **न हीति ॥** शशविषाणवत् त्रैकालिकनिषेधरूपात्यन्तभावप्रतियोगि नेत्यर्थः। तथा च प्रतियोगिप्राधान्यं न विवक्षितमिति भावः। कुतो न हि? इत्यत आह– तथा **सतीति ॥** कर्माकरणस्यात्यन्ताभावप्रतियोगित्वरूपासत्त्वाङ्गीकारे कर्मकरणमेव प्रसज्यते। करणस्यैवाकरणात्यन्ताभावरूपत्वात्। तथाच 'अकरणमसत्' इत्युक्त्या करणं लभ्यते। तत् सन्तं प्रत्यवायं न जनयतीत्युक्तं स्यात्। न चैतद् दूषणं सङ्गच्छते। न ह्यस्माभिः करणस्य प्रत्यवायजनकत्वं प्रागुक्तम्। येन त्वदीयं दूषणं सङ्गतं स्यात्। न चैवम्। किं त्वकरणस्यैवेति भावः। अकरणमसन्न चेत्, किंरूपं तत्? इति – **किन्त्विति ॥** उत्तरमाह– **अभाव इति ॥** तथा च 'अकरणमसत्' इत्यस्याभावप्राधान्यविवक्षया करणप्रतियोगिकात्यान्ताभव एव विवक्षित इति भावः। ननु करणात्यन्ताभावस्ययाप्यसत्त्वात् कथं सत्प्रत्यवायजनकत्वम्? इत्यत आह– **स चेति॥ तत्त्वमिति ॥**

'स्वतन्त्रं परतन्त्रं च द्विविधं तत्त्वमिष्यते।
स्वतन्त्रो भगवान् विष्णुर्भावाभावौ द्विधेतरत् ॥'

इति वचनात् भाववद् अभावस्यापि तत्त्वतया सत्त्वाद् अकरणस्यापि करणात्यन्ता-भावरूपतया तत्त्वत्वाङ्गीकारात् सत्त्वमेवास्तीति युक्तम्। तस्य सत्प्रत्यवायजनकत्वमिति सङ्करः स्थूलदृश्चेत्याशयः।

भास्करं प्रत्याह– **गुणं प्रतीति ॥** द्रव्यविषया श्रुतिः, गुणस्त्वसतोऽपि जायत इति वदता त्वयाऽसतो गुणं प्रति कारणत्वाङ्गीकारात् तद्वद् द्रव्यं प्रत्यपि कारणत्वं कुतो न भवेत्? उभयोरपि भावत्वाविशेषात्। अतो 'द्रव्यविषया श्रुतिः' इत्येतदयुक्तमिति भावः। ननु द्रव्यस्य सोपादानकत्वाद् असतश्च द्रव्यं प्रत्युपादानत्वासम्भवाद् असतः सज्जनकत्वं नास्तीति 'द्रव्य-विषया श्रुतिः' इत्युक्तं युक्तमिति चेत्, तत्राऽह– न ह्यत्रेतीत्याहुः। वस्तुतस्तु भवन्मतेऽ-करणस्याभावरूपत्वेन कथं प्रत्यावायं प्रत्युपादानत्वम्? इत्यत आह– **न ह्यत्रेति ॥** अकरणेन कर्मणां बन्धाहेतुत्वेन प्रत्यवायस्यैव प्राप्तेरित्यकरणस्य प्रत्यवायहेतुत्वोक्तिप्रसङ्गे करणाभावरूपा-करणस्य प्रत्यवायोत्पत्तौ उपादानत्वं न विवक्षितम्। किन्तु निमित्तत्वमेवेति न कोऽपि दोष इति भास्करोऽपि स्थूलदृश्चेत्यर्थः। 'गुणस्त्वसतोऽपि जायते' इत्येतदङ्गीकृत्य गुणं प्रति कारणत्वे द्रव्यकारणत्वं कुतो न भवेत्? इति प्रतिबन्दी गृहीता। वस्तुतस्तु सकलार्थक्रिया-विधुरस्यासतो गुणं प्रत्यपि कारणत्वं न सम्भवतीत्याशयेनाऽह– **इत्यलमिति ॥**

श्लोकः ४

भावप्रकाशः (कृ.टि.)– ॥ **अकरणमसदिति** ॥ अत्यन्तासदित्यर्थः । **द्रव्यविषया श्रुतिरिति** ॥ 'तत्तेजोऽसृजत' इत्यादिवाक्यशेषे तेजःप्रभृतिद्रव्यसृष्टेरेवोक्तत्वादसतः सकाशात् सत् द्रव्यम् कथं जायते? इत्येवं परा श्रुतिरित्यर्थः । **करणप्रसङ्गादिति** ॥ अत्यन्ताभावप्रतियोगित्वमेवात्यन्तासत्त्वम् । ततश्चाकरणस्यात्यन्तासत्त्वे करणं सत् स्यात् । करणस्यैवाकरणात्यन्ताभावरूपत्वादिति भावः । सङ्करमतं दूषयित्वा भास्करमतं दूषयति– **गुणं प्रतीति** ॥ असति कारकशक्त्यङ्गीकाराविशेषादिति भावः । नन्वकरणस्याभावत्त्वपक्षेऽपि प्रत्यवायकारणत्वमयुक्तम् । तदुपादानत्वाभावादित्यत आह– **नह्यत्रेति** ॥ प्रकृतेऽकरणस्य प्रत्यवायोपादनत्वं न विवक्षितम् । तार्किकमते प्रत्यवायस्याधर्मत्वेनात्मोपादानकत्वात् । अस्मन्मते च प्रकृत्युपादानकत्वात् । तर्ह्यकरणस्य प्रत्यवायजनकत्वमेव किम्? इत्याशयेन पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **निमित्तत्वमेवेति** ॥ किं चाकरणस्य प्रत्यवायाजनकत्वोक्तिरयुक्ता श्रुत्यादिविरोधादिति भावेनाह– **इत्यलमिति** ॥

## भाष्यम्

**ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः ।**

**'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते ।**

**निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्'** इति मानवे (म.स्मृ.१२-८९,९) ।

**अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह– न चेति ॥**

भावप्रदीपिका (प.टी.)– ननु निष्कामकर्मणा मोक्षः स्मर्यते 'निष्कामम्' इति । स च तस्य फलाभावादबन्धकत्वाभिप्रायेणैव भवेत् । न ज्ञानसाधनत्वेन । ज्ञानस्य श्रवणादिनाऽपि सम्भवात् । अतः कर्माकरणेऽपि फलाभावसाम्यात् तदेव वरमित्याशङ्क्य, उत्तरत्वेनोत्तरार्धमवतार्य व्याचष्टे– **नन्विति** ॥

भावप्रकाशिका (न.टी.)– ननु ज्ञानादेव मोक्षाङ्गीकारात्, निष्कामकर्म किं ज्ञानाय ? फलाभावमात्राय वा ? नाद्यः । श्रवणादिभिरेव ज्ञानोत्पत्तेः । नेतरः । कर्माकरणेऽपि फलाभावोपपत्तेः । अतः किं तदायासेन? इति भावेनाशङ्क्योत्तरार्धमवतार्य व्याचष्टे– **नन्विति** ॥

**प्रमेयदीपिका (ज.टी.)– 'नच सन्न्यसनादेव'** इति पुनरुक्तम् । अत्रापि कर्मसन्न्यसनस्य मोक्षसाधनत्वोक्तेरित्यत आह– **नन्विति ॥ 'निष्कामं ज्ञानपूर्वं च'** इति मानवे **वाक्ये** तावन्निष्कामकर्मणा मोक्षः स्मृतः । **स** चोपपत्त्यन्तरादर्शनान्निष्कामकर्मणः फलाभावाद् इत्येव तत्रोपपत्तिरङ्गीकार्या । यत एवं फलाभावस्यैव **प्राधान्यम्**, अतोऽकरणेऽपि फलाभावस्य साम्यान्मोक्षो भवत्येव। यत् प्राग्भवीयकर्मफलमुक्तं निष्कामकर्मकरणपक्षेऽपि तत्समानम् । न च **विनिगमने** कारणाभावः। आयासाभावस्य सत्त्वात् । नच प्रत्यवायप्राप्तिः । **अमुमुक्षुविषयत्वसम्भवात्** । अतो न कर्माणि करोमीति भावः ॥

**भावदीपः (रा.टि.)– ॥ फलमुक्तमिति ॥** संसारानुवृत्तिरूपमित्यर्थः ॥ **तत्समानमिति ॥** इदानीं निष्कामकर्मकरणेऽपि संसारानुवृत्तिः स्यादेव । प्राग्भवीयकर्मणामनुवृत्तेरिति भावः ॥ नच **विनिगमनेति ॥** 'कर्माकरणनिष्कामकर्मकरणयोर्मध्ये कर्माकरणोपादनम्' इत्यत्र कारणाभावो न चेत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– पुनरुक्तं** 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते इत्यनेन' इति शेषः । **अमोक्षसाधनत्वोक्तेः** मोक्षसाधनत्वाभावोक्तेः । 'मानवे' इत्यनन्तरं शेषमाह– **वाक्य इति ॥ स च** मोक्षः । **फलाभावात्** इत्यनन्तरं 'भवति' इति शेषः । **तत्र** निष्कामकर्मणा मोक्षो भवतीत्यत्र । **प्राधान्यं** मोक्षोपादाने । 'तत्साम्यात्' इत्यस्यार्थः– **फलाभावस्यैव साम्यादिति ॥** ननु कर्माकरणे मोक्षो भवतीत्यसत् । प्राग्भवीयानन्तकर्मफलस्यावश्यभोक्तव्यस्य भावादित्यत आह– **यत् प्राग्भवीयेति ॥ उक्तं** भोक्तव्यतया । **तत्समानं** भोक्तव्यं कर्मफलं समानम् । एवंसति कर्माकरणस्यैव किमित्यावश्यकत्वम् ? इत्याशङ्क्य निरस्यति– **न चेति ॥ अमुमुक्ष्विति ॥** 'प्रत्यवायश्रवणस्य' इति शेषः । अतः बाधकस्य परिहृतत्वाद्, अकरणस्यानायासेन मोक्षसाधनत्वाच्चेत्यर्थः ।

**भावदीपिका (श्री.टि.)– ॥ पुनरुक्तम्** 'पूर्वार्धेन' इति शेषः ॥ **कर्मसन्न्यासस्य** कर्मत्यागस्य ॥ **मानवे** मनुप्रणीते ॥ **फलाभावादित्येवेति ॥** मोक्षातिरिक्तफलाभावादित्यर्थः । ननु प्रागभवीयकर्मणां फलभोगस्याऽवश्यकत्वात् तेषां चानन्तत्वेन कथम् अद्यतनजन्मनि कर्माकरणमात्रेण मोक्षः? इत्यत आह– **यत् प्राग्भवीयेति ॥** 'प्रतिजन्मकृतानाम्' इति वाक्येनेत्यर्थः ॥ **विनिगमन इति ॥** एवं पक्षद्वये समाने सति कर्माकरणमेव मोक्षसाधनम्. न

श्लोकः ४

निवृत्तं कर्मेति विनिगमने कारणभाव इत्यर्थः । **आयासाभावस्येति** ॥ 'विनिगमने कारणस्य' इति शेषः । 'कर्माकरणं मोक्षसाधनम्' इत्यस्मिन् पक्षे आयासाभावोऽस्ति । निवृत्तकर्मणो मोक्षसाधनत्वपक्षे कर्म कृत्वाऽपि पुनः फलत्यागः कार्यः । अतो महानायासोऽस्तीत्यर्थः ॥ **प्रत्यवायेति** ॥ विहितकर्माकरणे 'कुर्वन्नेवेह' इति प्रत्यवायोक्तेरित्यर्थः ॥ **अमुमुक्ष्विति** ॥ अमुमुक्षोरेव कर्माकरणे प्रत्यवायः, न मुमुक्षोरिति प्रत्यवायोक्तिरमुमुक्षुविषयिणीत्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ननु कर्माकरणे मोक्षो भवत्येवेत्यसत् । प्राग्भवीयानन्तकर्मफलस्यावश्यभोक्तव्यत्वादित्यत आह– **यत्प्राग्भवीयेति** ॥ **अमुमुक्ष्विति** ॥ 'प्रत्यवायश्रवणस्य' इति शेषः ।

## भाष्यम्

**सन्न्यासः काम्यकर्मपरित्यागः । 'काम्यानां कर्मणाम्'** (१८.२) **इति वक्ष्यमाणत्वात् ॥ अकामकर्मणाम् अन्तःकरणशुद्ध्या ज्ञानात् मोक्षो भवति । तच्चोक्तम्- 'कर्मभिश्शुद्धसत्वस्य वैराग्यं जायते हृदि' इति भागवते ।**

भावप्रदीपिका (प.टी.)– श्लोकाभिप्रायमाह– **अकामेति** ॥ ज्ञानस्य श्रवणादिनाऽपि सम्भवात् किमनेन ? इत्यत उक्तम्– **अन्तःकरणेति** ॥कर्मणाऽन्तःकरणशुद्धिद्वारा ज्ञानं भवतीत्यत्र प्रमाणमाह– **तच्चेति** ॥

भावप्रकाशिका (न.टी.)– न वयं काम्यकर्मत्यागेन तत्फलाभावात् मोक्षं ब्रूमः । येनेतरकर्मत्यागोऽपि शङ्क्येत। किन्त्वन्तःकरणशुद्ध्या विरक्तानां ज्ञानोदयादेवेत्याह– **अकामकर्मणामिति** ॥ अशुद्धान्तःकरणानां श्रवणादिभिरपि न ज्ञानोदय इति भावः ।

प्रमेयदीपिका (ज.टी.)– अनेन कथमस्य परिहारः? इत्यत आह– **सन्न्यास इति** ॥ तेन च निष्कामकर्मकरणमुपलक्ष्यत इति भावः ॥ निष्कामकर्मकरणान्मोक्षं न प्राप्नोति इत्यतो न तत्प्रतिबन्दीग्रहणं युक्तमित्यनेनोक्तम् । तथाच स्मृतिविरोध इत्यतस्स्मृतेरभिप्रायमाह– **अकामेति** ॥ 'सकाशात्' इति शेषः । 'पुंसाम्' इति वा । अकामकर्मभिरन्तःकरणशुद्धिद्वारा ज्ञानं जायत इत्येतत् कुतः? इत्यत आह– **तच्चोक्तमिति** ॥

**भावबोधः (र.टि.)–** सन्न्यासशब्देन काम्यकर्मपरित्यागोक्तौ पुनरुक्त्यपरिहारात् प्रकृता-नुपयोगात् 'अकामकर्मणाम्' इत्युत्तरभाष्यानानुगुण्याच्चाह– **तेन चेति ॥**

**भावदीपः (रा.टि.)–** प्रकृतोपयोगायाह- **तेन चेति ॥** काम्यकर्मत्यागोक्तकर्मपरेण 'सन्न्यसनादेव' इत्येतेनेत्यर्थः ॥ **स्मृतीति ॥** मानवस्मृतीत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ अनेन** 'न च संन्यसनादेव' इति गीतावचनेन । **अस्य** 'ननु निष्काम' इति कृतचोद्यस्य ॥ ननु निष्कामकर्मप्रतिबन्द्या शङ्किते काम्यकर्मसंन्यसनेन सिद्ध्यभावोक्तिः असङ्गता । 'अकामकर्मणाम्' इत्युत्तरभाष्यानानुगुण्यं चेत्यत आह– **तेन चेति ॥** काम्यकर्मत्यागाद्यर्थकसंन्यसनपदेनेत्यर्थः । **प्रतिबन्दी** अतोऽकरणेऽपि फलाभावस्य साम्यादिति प्रतिबन्दी । **स्मृतीति ॥** 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति' इति मानवस्मृतीत्यर्थः । **अभिप्रायं** निवृत्तकर्मणा भवन्मोक्षः सव्यापारेणैव भवतीत्यभिप्रायम् । कर्मणामन्तःकरणशुद्धि-मोक्षयोरसम्भवादाह– **सकाशादिति शेष इति ॥** अध्याहारानुशयादाह– **पुंसामिति ॥** पूर्ववाक्यतात्पर्यं वदन्नेवोत्तरवाक्यमवतारयति– **अकामेति ॥** भागवते **सत्त्वम्** अन्तःकरणम् ॥

**भावदीपिका (श्री.टि.)–** निष्कामकर्मार्थकसन्न्यासादकृतात् सिद्धिर्नास्त्येवेति सर्वसिद्धम्, अत आह– **तेन चेति ॥** निष्कामकर्मार्थकसन्न्यासशब्देन तत्करणमुपलक्ष्यत इत्यर्थः । तस्यैव परोक्तप्रतिबन्दीपरिहारहेतुत्वादिति भावः । गीताभिप्रायं वदन्नेवोत्तरभाष्यमवतारयति– **निष्कामेति ॥ स्मृतीति ॥** 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इति मानववाक्यविरोध इत्यर्थः ॥

**भावप्रकाशः (कृ.टि.)–** नन्वेवमपि पुनरुक्त्यपरिहारः प्राक्कर्मत्यागमात्रस्य मोक्षासाधन-त्वोक्त्यैव कर्मविशेषकाम्यकर्मत्यागस्य मोक्षसाधनत्वलाभात् । किं चैवमपि प्रतिबन्दीनिरासा-भावः । अपिच 'काम्यकर्मणाम्' इत्युत्तरभाष्यानानुगुण्यमित्यत आह– **तेन चेति ॥** काम्यकर्मपरित्यागपदेनेत्यर्थः ॥

## भाष्यम्

**विरक्तानामेव च ज्ञानमुक्तम्–**

श्लोकः ४

'न तस्य तत्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमे(धि)धसौख्यं न तस्य हेयानुमितं स्वयं स्यात्'
(भाग.५.११.३) इति ॥

**न तु फलाभावात् । कर्माभावात् । अतो न कर्मत्याग एव मोक्षसाधनम् ।**

भावप्रदीपिका (प.टी.)– कर्मणा विरक्तिः श्रूयते न ज्ञानमित्यत आह– **विरक्तानामेव चेति** ॥ 'अकामकर्मणाम्' इत्यस्य व्यावर्त्यमाह– **न त्विति** ॥ ततश्च किम्? इत्यत आह– **कर्मेति** ॥ **अतः** दृष्टान्ताभावात्, न कर्माभावात्, इत्यर्थः । श्लोकार्थमुपसंहरति– **अत इति** ॥

भावप्रकाशिका (न.टी.)– उपसंहरति– **अत इति** ॥

प्रमेयदीपिका (ज.टी.)– नन्वत्र वैराग्यं जायत इत्युच्यते, न तु ज्ञानमिति । तत्राह– **विरक्तानामेवेति** ॥ प्रागपि वैराग्यद्वारेत्यभिमतमिति भावः । तथाऽपि कथं विरोधपरिहारः? गीतायामकामकर्मणां मोक्षसाधनत्वाभावावधारणादित्यतस्तदभिप्रायमाह– **न त्विति** ॥ फलाभावोपपत्तिकं कर्मणां मोक्षसाधनत्वं निषिध्यते । नतु सर्वथाऽपीत्यर्थः । प्रतिवन्दीं मोचयति– **कर्माभावादिति** ॥ अतः कर्माभावान्न मोक्ष इत्यर्थः ॥ श्लोकतात्पर्यमुपसंहरति– **अत इति** ॥

भावबोधः (र.टि.)– ॥ **गीतायामिति** ॥ 'नच सन्न्यासनादेव' इत्यत्र सन्न्यासशब्दस्याकामकर्मोपलक्षकत्वादिति भावः । **न मोक्ष इत्यर्थ इति** ॥ अनेन नञोऽनुवृत्तिरित्युक्तं भवति ॥

भावदीपः (रा.टि.)– ॥ **गीतायामिति** ॥ 'सन्न्यसनादेव' इत्यस्याकामकर्मोपलक्षकत्वोक्तेः 'अकामकर्मणाम्' इत्युक्तम् ॥

भावरत्नकोशः (सु.टि.)– नन्वन्तःकरणशुद्धेर्वैराग्यहेतुत्वे ज्ञानहेतुत्वोक्तिः कथम्? इत्यत आह– **प्रागपीति** ॥ 'अकामकर्मणाम्' इति भाष्येऽपीत्यर्थः । **वरीयसीः** वरीयस्यः । गृहमेध(धि)सौख्यं हेयत्वेन यस्य ज्ञातं न स्यात् तस्य तत्त्वावबोधाभावाभिधानेन वैराग्यस्य ज्ञानप्रयोजकत्वमवगम्यत इति भागवतश्लोकार्थः । **तथाऽपि** अन्तःकरणशुद्धेर्वैराग्यस्य च

द्वारत्वेऽपि । **गीतायामिति** ॥ तत्र संन्यसनशब्दस्याकामकर्मोपलक्षकत्वात्, 'सिद्धिं न समधिगच्छत्येव' इत्येवकारश्रवणाद्वेति भावः। **तदभिप्रायं** गीताऽभिप्रायम् । **फलाभावेति** ॥ 'फलाभावेन मोक्षः' इत्येतच्च 'ननु' इत्यादिगमनिकाभाष्ये स्फुटमिति भावः । **सर्वथाऽपि** स्वरूपतोऽपि ॥ **प्रतिबन्दीं** निष्कामकर्मप्रतिबन्दीम् । 'अतो न' इति वक्ष्यमाणमत्राऽऽकृष्य योजनीयमित्याशयेन आह– अतः **कर्माभावान्नेति** ॥ कर्माकरणादित्यर्थः। 'न मोक्षः' इति वदन् नञोऽनुवृत्तिमभिप्रैतीत्यप्याहुः ।

**भावदीपिका** (श्री.टि.)– अकामकर्मणां पुंसाम् अकामकर्मभिर्जातयाऽन्तःकरणशुद्ध्या च जाताज्ज्ञानान्मोक्षो भवतीति भाष्ययोजनां सूचयन्नेवोत्तरवाक्यमवतारयति– **अकामकर्मणामिति** ॥ **न तु ज्ञानमिति** ॥ तथा चान्तःकरणशुद्ध्या ज्ञानादिति प्रागुक्तमयुक्तमिति भावः । **प्रागपीति** ॥ 'अन्तःकरणशुद्ध्या ज्ञानाद्' इति पूर्ववाक्येऽपीत्यर्थः । तथा चान्तःकरणशुद्ध्या जाताद् वैराग्याज्जाताज्ज्ञानादित्यर्थो द्रष्टव्यः । तथा च भाष्यप्रमाणयोर्न विसंवाद इत्याशयः । **विरोधपरिहार इति** ॥ निवृत्तकर्मणो मोक्षसाधनत्वप्रतिपादकमानववाक्यविरोधपरिहार इत्यर्थः । **अवधारणादिति** ॥ सन्न्यासनात् सिद्धिं नैवाधिगच्छतीत्यवधारणादित्यर्थः । तथा च गीतायामेवकारस्य भिन्नक्रमेणान्वय इति सूचितं भवति । अकामकर्मणां निवृत्तकर्मणाम् । **न त्विति** ॥ तथा च 'अकामकर्मणाम्' इत्युक्तप्रणाड्या मोक्षसाधनत्वं त्वभिप्रेतमेवेति भावः । प्रतिबन्दीम् 'अतस्तत्साम्यादकरणेऽपि भवति' इत्युक्तम्। नञोऽनुवृत्तिमभिप्रेत्याऽह– **न मोक्ष इत्यर्थ इति** ॥

**भावप्रकाशः** (कृ.टि.)– ॥ **प्रागपीति** ॥ अकामकर्मरणामिति वाक्येपीत्यर्थः । **गीतायामिति** ॥ न च सन्यसनादेवेत्यत्र सन्यसनशब्दस्याकामकर्मोपलक्षकत्वादिति भावः । **न मोक्ष इत्यर्थ इति** ॥ अनेन नञोऽनुवृत्तिरिति सूचयति ॥

## भाष्यम्

**यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च । अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम्, इतरकर्मोद्योगात् । अप्रयतानां च न ज्ञानम् । तथा हि श्रुतिः 'नाशान्तो नासमाहितः' (कठ.१.२.२४) इति ॥**

श्लोकः ४

भावप्रदीपिका (प.टी.)– ननु कर्मत्यागस्य मोक्षसाधनत्वाभावे कथं यत्याश्रमाश्रयणम् ? इत्यत आह– **यत्याश्रमस्त्विति** ॥ न पुनर्मोक्षसिद्धये कर्मन्यासार्थमित्यर्थः । प्रायत्यं हरौ मनोनियमनम् । प्रायत्यस्यान्यत्रापि सम्भवान्न तदर्थं संन्यास इत्यत आह– **अप्रयतत्वमिति** ॥ भवेद्यज्ञादिनाऽप्रयतत्वम् । किं तेन? इत्यत आह– **अप्रयतानामिति** ॥

भावप्रकाशिका (न.टी.)– ननु यदि युद्धादीनामपि मोक्षसाधनज्ञानाङ्गत्वम्, कथं तर्हि मुमुक्षूणां तद्धीनयत्याश्रमाश्रयणमित्यत आह– **यत्याश्रमस्त्विति** ॥ प्रायत्यं नाम विष्णौ स्वमतिज्ञानादिनियामकत्वम् । तच्चेतराश्रमिणां न सम्भवति, बाह्यकर्मविस्तारादित्याह– **अप्रयतत्वमिति** ॥ ननु किं प्रायत्येन? अकामकर्मकरणादेव ज्ञानोपपत्तेरित्यत आह– **अप्रयतानामिति** ॥ न केवलं सकामानां न ज्ञानम् । किन्त्वप्रयतानां चेत्यर्थः । तत्र प्रमाणमाह– **तथा हीति** ॥

> 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
> नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥'

इत्यस्यायमर्थः– 'दुश्चरितादविरतः प्रज्ञानेनैनं परमात्मानं नाप्नुयात् । अशान्तः फलनिष्ठबुद्धित्वाच्चाविष्णुनिष्ठबुद्धिः । असमाहितः फलकामोऽपि बाह्यकर्मोद्योगात् । अशान्तमानसः संयतकर्मेन्द्रियोऽपि विषयस्मृतिः । एतेऽपि प्रकृष्टज्ञानेनैनं नाप्नुयुः' इति ।

प्रमेयदीपिका (ज.टी.)– ननु यत्याश्रमो मोक्षसाधनत्वेन श्रुत्यादिप्रसिद्धः । तत्र चेयमेवोपपत्तिर्यत् तद्धर्माणां फलाभावः । अतस्तत्साम्यादकरणेऽपि मोक्षो भवतीत्येतच्छङ्कानिरासार्थं चोक्तम्– **'नच सन्न्यसनादेव' इति** ॥ एवं तर्हि श्रुत्यादिविरोध इत्यत आह– **यत्याश्रमस्त्विति** ॥ **प्रायत्यं** प्रयतत्वम् । ईश्वरे मनःसमाधानम् । एतद्द्वारद्वयेन मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम्। फलाभावोपपत्तिकं तु गीतायां निवारितम्, अतो न विरोध इति भावः ॥ आश्रमान्तरेऽपि प्रायत्यसम्भवात् किं तदर्थं यत्याश्रमेण? इत्यत आह– **अप्रयतत्वमेवेति** ॥ इतरकर्मसु यजनादिषु । प्रायत्यं कथं मोक्षसाधनम्? इत्यतो व्यतिरेकमुखेन उपपादयति– **अप्रयतानां चेति** ॥ 'प्रज्ञानेनैनमाप्नुयात्' (कठ १.२.२४) इति श्रुतिशेषः । **अशान्तः** अभगवन्निष्ठः । **असमाहितः** तत्र चित्तसमाधानरहितः ॥

**भावबोधः (र.टि.)– प्रायत्यस्य ज्ञानद्वारा मोक्षहेतुत्वं व्यतिरेकमुखेन 'नाशान्त' इति श्रुत्या कथं सिद्ध्यति? इत्यत आह– प्रज्ञानेनेति ॥**

**भावरत्नकोशः (सु.टि.)– ॥ श्रुत्यादीति ।** 'तस्मान्न्यास एवात्यरेचयत्', 'मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्तितः' इत्यादिश्रुतिस्मृतिप्रसिद्ध इत्यर्थः । उपपत्तिशब्दापेक्षया **'इयमेव'** इति स्त्रीलिङ्गम् । वक्ष्यमाणफलाभाव एवेत्यर्थः । **तद्धर्माणां** यत्याश्रमविहितधर्माणाम् । **तत्साम्यात्** फलाभावस्य साम्यात् । **एतच्छङ्कानिरासार्थं चेति** ॥ न केवलं फलाभावसाम्यात्, निष्कामकर्मप्रतिबन्ध्या युद्धादिकर्माकरणेऽपि मोक्षो भवेदिति शङ्कानिरासार्थमिति 'च'शब्दः । **एवं तर्हि संन्यसनस्य सिद्ध्यनङ्गत्वे** ॥। **श्रुत्यादीति** ॥ उक्तश्रुतिस्मृतिविरोध इत्यर्थः । 'ननु कर्मत्यागस्य **मोक्षसाधनत्वाभावे** कथं यत्याश्रमाश्रयणमित्यत आह– यत्याश्रमस्त्विति' इति तु भावप्रदीपिकायामवतारितम् । प्रयतशब्दात् भावे ष्यञि निष्पन्नः प्रायत्यशब्दः प्रयतत्वार्थ इत्याह– **प्रायत्यमिति** ॥ किं नाम प्रयतत्वम्? किंविषयं च? इत्यत आह– **ईश्वर इति ॥ समाधानं** सम्यगाधानम् ॥ अनेन कथं गीतायाः श्रुत्यादिविरोधः? इति कृतचोद्यस्य परिहार इत्यतो भाष्यभावमाह– **एतद्द्वारद्वयेनेति** ॥ प्रायत्यभगवत्तोषणद्वारद्वयेनेत्यर्थः । **मोक्षसाधनत्वं** यत्याश्रमस्य । **फलाभावोपपत्तिकं त्विति ।** मोक्षसाधनत्वमित्यनुवर्तते । **तदर्थं** प्रायत्यार्थम् । 'गृहस्थादीनाम्' इति भाष्यस्य गृहस्था आदयो येषां वानप्रस्थानां ब्रह्मचारिणां च ते गृहस्थादयः, तेषामित्यर्थः । **यजनादिषु** यजनौपासनाग्निपरिचर्याध्ययनादिषु ।

'भगवत्तोषार्थश्च' इत्यनन्तरम् 'इत्यतो मोक्षसाधनम्' इति वर्तत इति भाष्यार्थः स्पष्ट इति मनसि निधाय शङ्कते– **प्रायत्यं कथमिति** ॥ व्यतिरेकमुखेन प्रायत्यस्य ज्ञानद्वारा मोक्षहेतुत्वमित्यत्र 'नाशान्तः' इति श्रुतिः कथं प्रमाणम्? इत्यत आह– **प्रज्ञानेनेति** ॥ भाष्यपदार्थमाह– **अशान्त इत्यादि** ॥ तत्र भगवति ॥

'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥'

इति श्रुतेरयमर्थः । दुश्चरितादविरतः प्रज्ञानेन एनं परमात्मानं नाप्नुयात् । अशान्तः फलनिष्ठबुद्धित्वात् अभगवन्निष्ठः । असमाहितः फलकामोऽपि बाह्यकर्मोद्योगाद् भगवति

श्लोकः ४

वित्तसमाधानहीनः । अशान्तमानसः संयतकर्मेन्द्रियोऽपि विषयस्मृतिमान् । प्रज्ञानेनैनं प्राप्नुयादिति प्राचीनटीकायाम् ॥

**भावदीपिका (श्री.टि.)– तद्धर्माणाम्** यत्याश्रमविहितधर्माणाम् । **तत्साम्यादिति ॥** अकरणेऽपि फलाभावसाम्यादित्यर्थः । **न च सन्न्यासनादेवेतीति ॥** अत्र सन्न्यासशब्दो यत्याश्रमपर इत्यवगन्तव्यम् । **श्रुत्यादीति ॥** यत्याश्रमस्य मोक्षसाधनत्वप्रतिपादकश्रुत्या-दीत्यर्थः । ननु तथऽपि कथं विरोधपरिहारः? गीतायां सन्न्यासस्य मोक्षसाधनत्वाभावावधारणा-दित्यतस्तदभिप्रायमाह– **फलाभावोपपत्तिकं त्विति ॥** फलाभावोपपत्तिकमेव मोक्षसाधनत्वं सन्न्यासस्य निषिध्यते, न तु सर्वथाऽपि । किन्तूक्तप्रायत्यादिद्वारद्वयेनास्त्येवेति भावः । **मोक्षसाधनम्** 'साक्षाद्' इति शेषः ॥ **उपपादयतीति ॥** ज्ञानद्वारा मोक्षसाधनत्व-मुपपादयतीत्यर्थः । ननु–

> 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
> नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥'

इति काठकवाक्ये 'नाशान्तो नासमाहित एनमाप्नुयात्' इत्यप्रयतानां मोक्षो न भवतीत्येव व्यतिरेकेणोपपादितत्वात्, तेन च प्रयतानां मोक्षो भवतीति प्रायत्यस्य मोक्षसाधनत्वमेव सिद्ध्यति, न त्वप्रयतानां च न ज्ञानमित्यनेनाभिप्रेतं प्रायत्यस्य ज्ञानद्वारा मोक्षसाधनत्वमत आह– **प्रज्ञानेनेति ॥** तथा चाशान्तादीनां ज्ञानाभावमभिप्रेत्यैव मोक्षाभावमुक्त्वा 'शान्तादिः प्रज्ञानेनैनमाप्नुयात्' इत्युक्ते प्रायत्यादीनां ज्ञानद्वरा मोक्षसाधनत्वं सिद्ध्यतीत्यर्थः । 'न चाप्रयतानां न ज्ञानम्' इत्यत्र कथमिव श्रुतिः प्रमाणम् । तत्राशान्तासमाहितानां ज्ञानाभावेन मोक्षाभावोक्त्या, अप्रयतानां ज्ञानाभावेन मोक्षाभावोक्तेः प्रकृतासङ्गतिरित्यत आह– **अशान्त इति ॥** अभगवन्निष्ठः भगवद्भक्तिशून्यः । **तत्र** भगवति । तथा च समाहितप्रयतपदयोः पर्यायत्वमिति प्रकृतसङ्गतिरिति भावः ।

**भावप्रकाशः (कृ.टि.)– ॥ श्रुत्यादिप्रसिद्ध इति ॥** 'तस्मान्न्यास एवात्यरेचयत्' । 'मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्तितः' इति श्रुतिस्मृतिप्रसिद्ध इत्यर्थः । **उक्तमिति ॥** गीतायामिति शेषः । **यजनादिष्विति ॥** यजनाध्ययनदानेष्वित्यर्थः । ननु 'नाशान्तः' इति

श्रुत्या व्यतिरेकमुखेन प्रायत्यस्य ज्ञानद्वारा मोक्षहेतुत्वं कथं सिद्ध्यति? इत्यत आह– प्रज्ञानेनेति ॥

## भाष्यम्

**महांश्च यत्याश्रमे तोषो भगवतः । तथा ह्याह– 'यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीम्' इति नारायणाष्टाक्षरकल्पे । आधिकारिकास्तु तत्स्था एव प्रायत्ये समर्थाः । स एव च महान् भगवतस्तोषः । तच्चोक्तम्–**

**'देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः ।**
**विष्णोश्चलति तद्योगोऽप्यतीव हरितोषणम् ॥' इति पाद्मे ॥ ४ ॥**

भावप्रदीपिका (प.टी.)– भगवत्प्रसादस्याश्रमान्तरेऽपि सम्भवात् किं यत्याश्रमेण ? इत्यत आह– **महांश्चेति ।** तर्हि बहुवाह्यकर्मणामिन्द्रादीनां प्रायत्याद्यभावेन मोक्षाभाव इत्यत आह– **आधिकारिकास्त्विति** ॥ ४ ॥

भावप्रकाशिका (न.टी.)– ननु भवतु प्रायत्यार्थो यत्याश्रमः, नतु भगवत्तोपार्थः । तस्येतराश्रमेष्वपि सम्भवादित्यत आह– **महांश्चेति ॥** यत्याश्रमस्यापि चातुर्विध्यात् यस्तुरीयः पारमहंसाख्यः तद्दीक्षां भगवतः सुतोपकरामित्यर्थः । प्रस्तुतांशस्यैवोदाहृतत्वात् शेषस्तत्रैव ज्ञातव्यो, नत्वध्याहर्तव्यः। ननु तर्हि प्रायत्यभगवत्तोपयोरेव सिद्ध्ये मुमुक्षु-मात्रस्य यत्याश्रमः किं न स्यात् ? इत्यत आह– **आधिकारिकास्त्विति** ॥ ४ ॥

प्रमेयदीपिका (ज.टी.)– भगवत्तोपणस्य आश्रमान्तरेण सम्भवात् किं यत्याश्रमेण? इत्यत आह– **महांश्चेति ॥** तुरीयं परमहंसाख्यम् । वाक्यशेषेणान्वयः । यत्याश्रम एव चेत् प्रायत्यं महान् भगवतस्तोषश्च, तर्हि तद्रहितानामाधिकारिकाणां तदुभयाभाव इत्यत आह– **आधिकारिकास्त्विति ॥ तत्स्थाः** अधिकारस्थाः । **स एव** अधिकार एव । 'तुष्यत्यनेन' इति तोपः । समासान्तविधेरनित्यत्वात् 'आदिराज्ञाम्' इति युक्तम् । यथोक्तं महाभाष्ये– '(शुच्यम्पि)शुच्याम्पि तटाकानि' इति ॥ ४ ॥

श्लोकः ४

**भावबोधः (र.टि.)– वाक्यशेषेणेति ॥** 'यत्याश्रमम्' इत्यादेः तद्ग्रन्थगतेन वाक्यशेषेणेत्यर्थः । 'सः' इति परामृष्टाधिकारस्य भगवत्तोषरूपत्वाभावादाह– **तुष्यत्यनेनेति ॥ आदिराज्ञामित्युक्तमिति ॥** अन्यथा 'राजाहस्सखिभ्यष्टच्' इति 'आदिराजानाम्' इति भवेदित्यर्थः । **शुच्याम्पीति ॥** अन्यथा 'ऋक्पूरब्धूः पथामानक्षे' इति शुच्यापानीति भवेदित्यर्थः ॥ ४ ॥

**भावदीपः (रा.टि.)– ॥ वाक्यशेषेणेति ॥** नारायणाष्टाक्षरकल्पगतवाक्यशेषेणेत्यर्थः ॥ 'राजाहःसखिभ्यष्टच्' (पा.सू. ५.४.९१) इति टच्प्रत्यये सति 'आदिराजानाम्' इति भाव्यमित्यत आह– **समासान्तेति ॥ भाष्य इति ॥** व्याकरणभाष्ये च 'शुच्यपानि' इति वक्तव्यम् । 'ऋक्पूरब्धूःपथामानक्षे' (पा.सू.५.४.७४) इति समासान्तविधानात् । तथाऽपि शुच्यम्पीत्युक्त्या तद्विधेरनित्यत्वं ज्ञायत इत्यर्थः ॥ ४ ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु चादिशब्दस्य राजशब्देन कर्मधारयसामसे 'राजाहःसखिभ्यष्टच्' इति समासान्ते टचि निष्पन्नस्यादिराजशब्दस्याकारान्ततया तस्मात् आमि 'ह्रस्वनद्यापो नुट्' इति नुटि 'नामि' इति दीर्घतायाम् 'आदिराजानाम्' इति भवितव्यम् । आदिराज्ञामिति तु कथमित्यत आह– **समासान्तेति ॥** समासान्तविधेरनित्यत्वज्ञापकमाह– **यथा भाष्ये शुच्यम्पि तटाकानीतीति ।** समासान्तविधेर्नित्यतायां 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्ते अकारे सति निष्पन्नशुच्यपशब्दस्य अजन्ततया तस्मात् परस्य जसः 'जःशसोः शिः इति शौ, तस्य 'शि सर्वनामस्थानम्' इति सर्वनामस्थानतया तस्मिन् परतः 'नपुंसकस्य झलचः' इति अजन्तक्लीबतया नुमि 'सर्वनामस्थाने चासम्बुद्धौ' इति उपधादीर्घतायां 'शुच्यपानि इति रूपनिष्पत्तेः शुच्याम्पि' इति भाष्यकारीयप्रयोगासधुत्वापत्त्या तदनित्यत्वमवसीयत इति भावः । समासविधेरनित्यत्वे तु अकारप्रत्ययाप्राप्तौ झलन्तक्लीबतया 'नपुंसकस्य झलचः' इति नुमि 'अप् तृन्' इति उपधायाः दीर्घतायां स्वांपी' इत्यादिवत् शुच्याम्पीति प्रयोगो भाष्यकारीयः उपपद्यत इति परेणापि तदनित्यत्वमेवाभ्युपेयमिति ध्येयम् ॥ ४ ॥

**भावरत्नकोशः (सु.टि.)–** यत्याश्रमस्य गृहस्थाद्याश्रमापेक्षया तुरीयत्वं सिद्धमेवेति व्यभिचाराभावान्नेदं विशेषणमित्यत आह– **तुरीयं परमहंसाख्यमिति ॥** यत्याश्रमस्य कुटीचकबहूदकहंसपरमहंसभेदेन चतुर्विधत्वाद् हंसादिव्यावृत्तये 'तुरीयम्' इति विशेषणं फलवदिति भावः । द्वितीयान्वयाय आह– **वाक्यशेषेणेति ॥** नारायणाष्टाक्षरकल्पगतवाक्य-

शेषेणेत्यर्थः । **तद्रहितानां** परमहंसाश्रमरहितानाम् । ननु तेषामपि परमहंसाश्रमस्वीकारा-नन्तरमेव भगवत्तोषादीति सर्वैरपि पारमहंस्यमापाद्यमित्यत आह– **आधिकारिकाणामिति** ॥ प्रियव्रतादीनां गार्हस्थ्यस्यैव आवश्यकत्वाभिधानादिति भावः । 'प्रायत्ये समर्थाः' इत्यत्र **प्रायत्यम्** ईश्वरे मनस्समाधानम् । **अधिकारः** साधकनिष्ठः । तोषस्तु भगवन्निष्ठः । अतः कथं 'स एव तोषः' इति सामानाधिकरण्यम् ? इत्यत आह– **तुष्यत्यनेनेति ॥ अनेन** अधिकारेण । 'हलश्च' इति करणे घञि निष्पन्नस्य तोषशब्दस्य तोषहेतुत्वार्थकत्वाद्युक्तं सामानाधिकरण्य-मिति भावः ।

॥ **समासान्तविधेरिति** ॥ राजन्शब्दे 'राजाहस्सखिभ्यष्टच्' इति विहितटच्प्रत्ययस्या-नित्यत्वादित्यर्थः । तथा च 'प्रतेरंश्वादयस्तत्पुरुषे' इति सूत्रे वृत्तिकारः 'राजन्शब्दः समासान्तविधेरनित्यत्वाद् यदा टच् नास्ति तदा प्रयोजयति । तस्मिन् हि सति चित्त्वादेव सिद्धमन्तोदात्तत्वम्' इति । एवं च राजन्शब्दस्याश्वादिगणे पाठ एव तस्य समासान्त-प्रत्ययोऽनित्य इत्यत्र ज्ञापक इति भावः ।

नन्वेतदयुक्तम् । महाभाष्यकारेण स्वार्थिकप्रत्ययानां समासान्तप्रत्ययानां च नित्यत्व-स्योक्तत्वाद् इत्याशङ्क्य भाष्यप्रयोग एव समासान्तस्यानित्यत्वं ज्ञापयतीति भावेनाऽह– **यथा भाष्य इति** ॥ शुचय आपो येषु तानि शुच्यम्पीति बहुव्रीहिः । 'शुच्याम्पि' इति कृतात्त्वं क्वचित् पठ्यते । 'अप्तृन्' इति सूत्रे 'बह्वाम्पि' इति वृत्तिकारः । 'अप्तृन्' इति दीर्घः । 'स्वाम्पि' इति आधुनिकश्च अ हेति सोऽपि पाठः साधुरित्याहुः । 'शुच्यापि' इति पठित्वा नुमभावोऽत्रास्तीति दर्शयितुमेवं प्रयोगः कृतो भाष्यकृतेति केचिदाहुः । तन्न । मनोरमायां 'अप्तृन्' इति प्रतिपदोक्तत्वाद् दीर्घत्वमाश्रित्य 'स्वाम्पि तटाकानि' इति प्रयोगो दुर्लभः । परत्वात् 'नपुंसकस्य झलचः' इति नुमः प्राप्तेः । नच प्रतिपदोक्तत्वाद् दीर्घत्वस्य प्राबल्यम् । निरवकाशत्वे सत्येव प्रतिपदोक्तस्य प्राबल्यप्रयोजकतया, सावकाशत्वे तदभावात् । सावकाशं चेदम् । 'स्त्रीपुंसयोरिति विमृश्य 'स्वम्पि तटाकानि' इत्येव युक्तम्' इत्युक्तत्वेन शुच्या-पीत्यादिप्रयोगस्यानाघ्रातत्वात् । काशिकायां नुमो नित्यत्वोक्तेः, मनोरमायां परत्वोक्तेश्च । अत्र सर्वत्रापि 'ऋक्पूरब्धूःपथामानक्षे' इति विहितः समासान्तप्रत्ययोऽनित्यत्वान्न भवतीति ज्ञायते । स्वम्पीत्यादौ 'न पूजनात्' इति समासान्तप्रत्ययो निषिद्ध इति तदनादृत्य भाष्यप्रयोगो दर्शित इति ॥

॥ **तद्भोगः** स्वाधिकारनिबन्धनपदभोगः । **हरितोषणं** हरितोषणहेतुरिति भाष्यार्थः ॥

**गीताक्षरार्थस्तु–** प्रागाधिकारिकत्वात् त्वया कर्म कर्तव्यमित्युक्तम् । विकल्पासहत्वादपि कर्माकरणमयुक्तम् । तथा हि । किं ज्ञानं न मोक्षसाधनम्, अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यन्ते उत ज्ञानं मोक्षसाधनं भवत्येव । किन्तु 'कर्मणा बध्यते जन्तुः' इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा । आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रेणेदमुच्यते अथ क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम् । अकरणे च बीजाभावात् संसारो न भविष्यतीति युक्तिमाश्रित्य । आद्यस्येदं दूषणं– **न कर्मणामिति** ॥ कर्मणां वर्णाश्रमविहिता-नाम् अनारम्भात् अकरणात् नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागप्राप्यं मोक्षमश्नुते इति यत् तन्न तथा । यतः पुरुषः पुराणि शरीराणि सरति प्राप्नोति । सर्वदा स्थूलेन सूक्ष्मेण वा देहेन युक्तत्वात् । कर्माकरणमात्रेण मोक्ष इति पक्षे कदाचित् कर्मानधिकृतस्थावरादिशरीरस्यापि प्राप्तिसम्भवेन तद्देहे कर्माकरणनिमित्तमोक्षप्राप्त्यापत्त्या अधुना दृश्यमानः शरीरयोगो न स्यात् । मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वं तु काम्यकर्माप्राप्यत्वेनाप्युपपन्नमिति भावः । द्वितीयेऽप्येतदेवोत्तरं 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इति । प्राग्वदेव अर्थः । अनादौ संसारे कर्माधि-कृतानन्तजन्मसम्भवेन सदा पुरुषशब्दितदेहयोगित्वात् तत्कृतानन्तकर्मसद्भावेनाद्यतने देहे कर्माकरणमात्रात् संसारबीजाभावकृतमोक्षप्रत्याशा कुतः स्यादिति भावः । तृतीयपक्षस्तु 'कर्मणा बध्यते' इति वाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः । तस्यावैष्णवकाम्यकर्म-विषयत्वादिति 'यज्ञार्थात् कर्मणः' इत्यत्र निरसिष्यते ।

ननु 'निष्कामं ज्ञानपूर्वं च' इति मानवस्मृतौ निवृत्तकर्मणो मोक्षोऽस्तीत्युच्यते । निवृत्त-कर्मणश्च मोक्षहेतुत्वे फलान्तराभाव एवोपपत्तिरङ्गीकार्या । तथा च कर्माकरणस्यापि फलान्तराभावरूपोपपत्तिसाम्याद् आयासाभावरूपगुणवत्त्वाच्च कर्माकरणादेव मोक्षोऽस्तु । 'एवं त्वयि नान्यथेतोऽस्ति' (ईश.१.२) इत्यादौ श्रुतः प्रत्यवायस्त्वमुमुक्षुविषयः सम्भवतीत्यत उच्यते– **न चेति ॥ संन्यसनात्** काम्यकर्माकरणात् । **तेन** निष्कामकर्मकरणमुपलक्ष्यते । निवृत्तकर्मकरणमात्रान्मोक्षं न प्राप्नोति । किन्तु तदापादितान्तःकरणशुद्धिविषयवैराग्यश्रवण-मननिदिध्यासनज्ञानद्वारैव । 'निवृत्तम्' इति स्मृतेरप्ययमेवाभिप्रायः । तथा च न तत्प्रतिबन्ध्या कर्माकरणस्य मोक्षहेतुत्वं वक्तुमुचितमिति भावः ॥

ननु यत्याश्रमो मोक्षहेतुत्वेन श्रुत्यादिसिद्धः । तत्र चेयमेवोपपत्तिर्यत् 'तद्धर्माणां फलाभावः' । अतस्तत्साम्यादकरणेऽपि मोक्षो भवतीत्याशङ्कानिरासार्थं चोक्तम्– **न च संन्यसनादेवेति** ॥ यत्याश्रममात्रादित्यर्थः । यत्याश्रमेणापीश्वरे मनस्समाधानं भगवत्तोषश्च आपादनीय इत्येतद् द्वारद्वयेन तस्य मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम् । न फलान्तराभावहेतुना । येन तत्प्रतिबन्ध्याऽपि कर्माकरणस्य मुक्तिहेतुत्वं शङ्क्येतेति ॥ ४ ॥

**भावदीपिका (श्री.टि.)–** यतयश्चतुर्विधाः - कुटीचक-बहूद-हंस-निष्क्रियभेदात् । यतोक्तं तृतीयस्कन्धे– 'न्यासे कुटीचकः पूर्वं बहूदो हंसनिष्क्रियौ' (भाग. ३-१३-४३) इति। तदभिप्रायेणाऽह– **तुरीयं परमहंसाख्यमिति** ॥ निष्क्रियापरपर्यायमित्यर्थः ॥ **वाक्यशेषेणेति** ॥ द्वितीयायाः नारायणाष्टाक्षरकल्पगतवाक्यशेषेणान्वय इत्यर्थः । **तद्रहितानाम्** यत्याश्रमरहितानाम् । **आधिकारिकाणाम्** पदस्थानां गार्हस्थ्यादिमतां देवानामित्यर्थः । **तदुभयेति** ॥ प्रायत्यभगवत्तोषेत्यर्थः । 'सः' सति परामृष्टाधिकारस्य भगवत्तुष्टिरूपत्वाभावादाह– **तुष्यतीति** ॥ तथा च तोषः तुष्टिकरणम् इत्यर्थो द्रष्टव्यः ॥

ननु आदिश्चासौ राजा चेति कर्मधारयतत्पुरुषे पश्चात् 'राजाहःसखिभ्यष्टच्' एतदन्तात् तत्पुषात् टच् स्यात् । महाराजः, उत्तमाहः, कृष्णसखः । ततश्चाऽदिराजन्शब्दात् टच्प्रत्यये, अकारमात्रं विहाय सर्वस्यापि लोपे, 'नस्तद्धिते' नान्तस्य भस्य टेर्लोपः स्यादिति नान्तस्य भस्य 'अन्' इत्यस्य टिभूतस्य लोपे, आदिराज् अ, 'आदिराज' इत्यकारान्तप्रातिपदिके सिद्धे पश्चात् स्वाद्युत्पत्तौ, 'आदिराजानाम्' इति स्यात् । 'आदिराज्ञाम्' इति तु कथम्? इत्यत आह– **समासान्तविधेरिति** ॥

समासत्वे तदन्तष्टच्प्रत्ययो न जात इत्यर्थः । समासान्तविधेरनित्यतायां फणिभणितभाष्यस्थप्रयोगं दर्शयति– **यथोक्तमिति** ॥ यदि समासान्तविधेर्नित्यत्वं महाभाष्यकाराभिप्रेतं स्यात्, तदा 'शुच्यपानि' सति प्रयोक्तव्यं स्यात् । तथा हि । शुचयः आपो येष्विति विग्रहे 'ऋक्पूरब्धूः पथामानक्षे' एषामप्रत्ययः स्यात् समासान्तः, धुरस्त्वनक्षे । अर्धर्चः, विष्णुपुरम्, विमलापं सरः, राजधुरः । अक्षे तु अक्षधूः । रम्यपथो देशः । तथा च समासान्ते शुच्यप्शब्दादप्रत्यये 'शुच्यप' इत्यकारान्तप्रातिपदिके जाते पश्चाज्जसि नपुंसके, 'जस्शसोः

शि:' इति जसः शिभावे 'शि सर्वनामस्थानम्' इति तस्य सर्वनामस्थानसञ्ज्ञायां 'लशक्वतद्धिते' इति शकारलोपे 'शुच्यप इ' इति जाते 'नपुंसकस्य झलचः' झलन्तस्याजन्तस्य क्लीबस्य नुमागमः स्यात्, सर्वनामस्थाने परे इति नुमागमे 'उम्' इत्यस्य लोपे 'शुच्यपन् इ' इति जाते, 'अप्-तृन्-त्वष्टृ-तृच्-स्वसृ-नप्तृ-नेष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृणाम्' अबादीनामुपधाया दीर्घः स्यात्, असम्बुद्धौ सर्वनामस्थाने परे। 'अलोऽन्त्यात् पूर्व उपधा' अन्त्यादलः पूर्वो वर्ण उपधासञ्ज्ञः स्यात् इति उपधाभूतपकारस्थस्य अकारस्य दीर्घे 'शुच्यपान् इ', 'शुच्यपानि' इति स्यात्। न तु 'शुच्याम्पि' इति। तेन ज्ञायते समासत्वेऽपि तदन्तात् प्रत्ययानाश्रयणात् 'समासान्तो विधिरनित्यः' इति समासान्तप्रत्ययानाश्रयणे तु शुच्यप्शब्दात् जसि, तस्य शिभावे तस्य लोपे, इकारे उर्वरिते, 'अप्तृन्' इत्युपधाभूतस्य च्यकारस्थस्य अकारस्य दीर्घे नुमागमे तस्यानुस्वारादेशे 'शुच्याम्प् इ', 'शुच्याम्पि' इति रूपं भवतीति द्रष्टव्यम् ॥ ४ ॥

**भावप्रकाशः (कृ.टि.)–** ननु यत्याश्रमस्य तुरीयत्वाव्यभिचारात् 'तुरीयम्' इति व्यर्थमित्यत आह– **परमहंसाख्यमिति**॥ तथाच यत्याश्रमस्य हंसादिभेदेन चतुर्विधत्वाद्धंसादिव्यावृत्त्यै 'तुरीयम्' इति सफलमिति भावः। ल्युडपवादो 'हलश्च' इति करणे घञिति भावः। ननु 'राजाहःसखिभ्यष्टच्' इति टचि 'आदिराजानाम्' इति स्यादित्यत आह– **समसान्तेति**॥ **शुच्याम्पीति**॥ अन्यथा 'ऋक्पूरब्धूः पथामानक्षे' इति समासान्तेऽप्रत्यये 'शुच्यपानि' इति स्यादिति भावः। अत्र 'शुच्यम्पि' इत्येव युक्तः पाठः। 'अप्तृन्' इति दीर्घं बाधित्वा अपरत्वात् 'नपुसंकस्य झलचः' इति नुम्प्राप्तेः। नच' अप्तृन्' इत्यस्य प्रतिपदविधित्वात् प्राबल्यम्, निरवकाशत्वे सत्येव तस्य प्राबल्यहेतुत्वेन सावकाशत्वे तदभावात्। एतच्च छदिरुपधिसूत्रे मनोरमायां स्पष्टम्। प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य शुच्यांपीति पाठो युक्त इति पक्षस्तु दुर्बल इति दिक् ॥ ४ ॥

**नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

## भाष्यम्

**न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह– न हीति ॥ ५ ॥**

भावप्रदीपिका (प.टी.)– एवं कर्मत्यागेन न मोक्ष इत्युक्तम् । इदानीं सोऽपि न युक्त इत्यर्थे श्लोकमवतारयति– **न चेति** ॥ ५ ॥

भावप्रकाशिका (न.टी.)– नन्वकामकर्मणां मोक्षाविरोधित्वेऽपि, अधमाधिकारिणामप्रायत्यकरत्वात् तत्सङ्कोचेन यत्याश्रमश्चेत्, सर्वकर्मत्याग एव श्रेयान् कर्मार्थप्रवृत्तेन्द्रियस्य विषयसङ्गभयादित्याशङ्कापरिहारायोत्तरश्लोकानवतारयति– **न त्विति** ॥ तथाऽपि यथाशक्त्यखिलं कर्म त्याज्यम्, विषयसङ्गपरित्यागस्यावश्यकत्वादिति भावेनाशङ्क्य तदुत्तरत्वेनोत्तरं श्लोकद्वयमवतार्य व्याचष्टे– **तथाऽपीति** ॥ ५ ॥

प्रमेयदीपिका (ज.टी.)– ज्ञानरहितात् कर्मत्यागरूपाद् यत्याश्रमात् 'सिद्धिं न समधिगच्छति' (३.४) इति किल पूर्वमुक्तम् । तत्र 'हेत्वाकाङ्क्षायां 'न हि कश्चित्' इत्युच्यते' इति व्याख्यानमसत् इति भावेन श्लोकतात्पर्यमाह– **न त्विति** ॥ न ह्यत्र ज्ञानस्यावश्यकत्वे किञ्चिदुच्यते । नापि यज्ञादिकर्माकरणस्यासम्भवोऽभिधीयते । येन प्रकृतसङ्गतिस्स्यात् । किन्तु शरीरयात्राद्यर्थानां कर्मणामपरिहार्यत्वम् । अतो नेदं व्याख्यानम् । अपि तर्हि 'कर्मणा बद्ध्यते जन्तुः' (म.भा.१२.२४१.७) इति स्मृतिमाश्रित्य यस्तृतीयः पक्षस्तमाशङ्क्य 'यज्ञार्थात्' (३.९) इति स्मृतेरर्थसङ्कोचं वक्ष्यति । तत्र कुतः स्मृतेरर्थसङ्कोचः? इत्याकाङ्क्षा स्यात् । तामपाकर्तुमुपोद्घातप्रक्रियान्यायेन कर्मशब्दस्तावदसङ्कुचितार्थः परेणाप्यङ्गीकर्तुमशक्य इति प्रतिपादयितुं 'कर्माणि सर्वात्मना त्यक्तुं नैव शक्यानि' इत्यनेन आहेति भावः ॥ ५ ॥

भावबोधः (र.टि.)– यज्ञादिकर्मत्यागरूपाद्यत्याश्रमात् सिद्धिं न समधिगच्छति । किन्तु ज्ञानादेवेत्यत्र हेतुर्भवन् ज्ञानाऽऽवश्यकत्वसाधको वा यज्ञादिकर्माकरणसम्भवरूपो वा भवेदित्यभिप्रेत्याह– **न ह्यत्रेति** ॥ तृतीयः पक्ष इति ॥ 'ज्ञानं मोक्षसाधनं भवत्येव । कर्माणि तु प्रतिबन्धकानि' इति यः प्राग्विकल्पित इत्यर्थः । आद्येऽपि पक्षद्वयस्योक्तत्वाद् द्वितीयस्यैव

श्लोकः ५

तृतीयमित्यभिप्रेत्य 'स तृतीयः' इत्युक्तम् । **यज्ञार्थादितीति** ॥ 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यनेन 'कर्मणा बध्यते जन्तुः' इति स्मृतेरित्यर्थः ।

**भावदीपः (रा.टि.)–** अपव्याख्यां स्वयं निराह– **न ह्यत्रेति॥ प्रकृतेति** ॥ त्वदभिप्रेत-पूर्वश्लोकार्थसङ्गतिरित्यर्थः ॥ **तृतीयः पक्ष इति** ॥ 'ज्ञानं तु मोक्षसाधनं भवत्येव, कर्माणि प्रतिबन्धकानि' इति प्राग्विकल्पितः पक्ष इत्यर्थः । आद्यस्य द्वेधा विकल्पितत्वादयं द्वितीयः तृतीयत्वेनोक्तः ॥ ५ ॥

**भावरत्नकोशः (सु.टि.)–** ॥ **इति व्याख्यानमसदिति** । 'कस्मात् पुनः कारणात् कर्मसंन्यासादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो न समधिगच्छतीत्यत्र हेत्वा-काङ्क्षायामाह' इति सङ्करव्याख्यानमित्यर्थः । कथमनेनापव्याख्याननिरसनम् ? इत्यतो भाष्यभावं व्यञ्जयन्नाह– **न ह्यत्रेति** ॥ **अत्र** 'न हि कश्चित्' इति श्लोके । ज्ञानरहितात् कर्मत्यागरूपाद् यत्याश्रमात्र मोक्ष इत्यर्थे हेतुप्रतिपादनपरे 'न हि कश्चित्' इत्यत्र किञ्चित् साधकं वक्तव्यम् । तथात्वे ज्ञानराहित्यरूपविशेषणविघटनाद् विशिष्टस्य कारणत्वाभावः सेत्स्यति । यज्ञादिरूपविहितकर्मत्यागासम्भवो वाऽत्राभिधातव्यः । तथात्वे विशेष्याभाव-सम्पादनेन विशिष्टस्य हेतुत्वं विहन्यते । तत्राऽद्यो न युक्तः । ज्ञानावश्यकतायां साधकोप-न्यासानुपलम्भात् । न द्वितीयः । विहितत्यागस्य कार्यत्वानभिधानात् । येनान्यतराभिधानेन ज्ञानरहितकर्मत्यागस्य मोक्षहेतुप्रतिपादकतया सङ्गतिः स्यादिति भावः ॥ **अपरिहार्यत्वम्** 'अभिधीयते' इति वर्तते ॥ **तृतीयः पक्ष इति** ॥ यद्यपि, 'उत ज्ञानं मोक्षसाधनं भवत्येव । किन्तु 'कर्मणा बध्यते जन्तुः' इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा' इति विकल्पित-त्वाद् अयं द्वितीयपक्ष इव भाति । तथाऽप्याद्यपक्षस्य द्वेधा विकल्पितत्वात् तदपेक्षया अयं तृतीयतयोक्त इति स्वामिनः । **स्मृतेः** 'कर्मणा बध्यते जन्तुः' इति स्मृतिगतकर्मशब्दस्य । **वक्ष्यति** गीताकारः । **उपोद्घातः** प्रकृतिसिद्ध्यनुकूलार्थान्तरपरामर्शः । **परेणापि** कर्मत्यागरूपाद् यत्याश्रमान्नैष्कर्म्यमिति वदता पूर्वपक्षिणाऽपि ॥ ५ ॥

**गीताक्षरार्थः–** 'न हि कश्चित्' इत्यादिपञ्चश्लोक्यक्षरार्थस्तु 'कर्मणा बध्यते जन्तुः' इति स्मृतिमाश्रित्य यश्चोदितस्तृतीयः पक्षः तमाशङ्क्य 'यज्ञार्थात्' इत्यत्रोक्तस्मृतिगतकर्मशब्दस्य अभागवतकर्मपरत्वेनार्थसङ्कोचो वक्ष्यते । तत्र कुतः स्मृतेरर्थसङ्कोच इत्याकाङ्क्षा स्यात् ।

तामपाकर्तुम् उपोद्घातन्यायेन कर्मशब्दस्तावदसङ्कुचितार्थः परेणाप्यङ्गीकर्तुमशक्य इति प्रतिपादयितुं शरीरयात्राद्यर्थकर्मणां सर्वात्मना त्यक्तुमशक्यत्वमुच्यते– **न हि कश्चिदिति** ॥ जातु कदाचित् कस्यामप्यवस्थायां क्षणमपि कालं 'कालाध्वनोरत्यन्तसंयोगे' द्वितीया । क्षणेऽपि । कश्चिदपि ज्ञोऽज्ञो वा अकर्मकृत् कर्माण्यकुर्वाणो न तिष्ठति । कुतः ? हि यस्मात्, अवशः विष्णुवशः अस्वतन्त्र एव सर्वः प्राणी प्रकृतिजैः 'सप्तम्यां जनेर्डः' प्रकृतौ जातैः सत्त्वरजस्तमोलक्षणैर्गुणैः । कर्म द्वितीयान्तम् । कार्यते अत इति ॥ ५ ॥

**भावदीपिका (श्री.टि.)–** ॥ **कर्मत्यागरूपादिति** ॥ यज्ञादिकर्मत्यागरूपादित्यर्थः । ज्ञानरहिताद् यज्ञादिकर्मत्यागरूपाद् यत्याश्रमात् सिद्धिं न समधिगच्छतीत्यत्र 'न हि' इत्ययं हेतुर्भवन् ज्ञानावश्यकत्वसाधक इति वक्तव्यम् । न ह्यत्र ज्ञानस्याऽवश्यकत्वे किञ्चिदुपपादक-मुच्यते । अतो न प्रकृतसङ्गतिरित्याह– **न ह्यत्रेति** ॥ नन्वथापि यथाकथञ्चित् प्रकृतसङ्गति-रस्त्येव । तथा हि । यज्ञादिकर्मत्यागरूपाद् यत्यायमात् सिद्धिं न समधिगच्छतीति पूर्वमुक्तम् । तत् कुतः? इति शङ्कायां 'न हि' इत्युच्यते । कश्चित् पुमान् क्षणमपि अकर्मकृद् यज्ञादिकर्मा-कृत् न हि तिष्ठति । अतो यज्ञादिकर्माकरणमसम्भावितम् । अतस्तत्परित्यागो न सम्भवति । अतस्तत्परित्यागरूपाद् यत्याश्रमात् सिद्धिं न समधिगच्छतीति प्रकृतसङ्गतिरस्त्येवेत्यत आह– **नापीति** ॥ तर्हि किं विधीयते इति पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **शरीरेति** ॥ **अपरिहार्यत्वमिति** ॥ शरीरयात्रोपयुक्तकर्मपरित्यागरूपाद् यत्यायमात् सिद्धिं न समधि-गच्छतीति यदि किल पूर्वमुक्तं स्यात्, तदैव शरीरयात्रोपयुक्तकर्माकरणस्यासम्भवप्रतिपादकतया 'न हि' इति श्लोकस्य प्रकृतसङ्गतिः स्यात् । न ह्येवं त्वया व्याख्यातम् । किन्तु यज्ञादि-कर्मत्यागरूपादेवेति । अतो न कथमपि प्रकृतसङ्गतिरिति भावः ।

॥ **यस्तृतीयः पक्ष इति** ॥ ज्ञानं मोक्षसाधनं भवत्येव । किन्तु 'कर्मणा बध्यते जन्तुः' इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा कर्माणि त्यज्यन्त इति यः प्राग् विकल्पित इत्यर्थः । यद्यप्ययं द्वितीयपक्ष एव, तथाऽपि आद्येऽपि 'मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्योच्यते, उत बीजाभावयुक्तिमाश्रित्य' इति पक्षद्वयस्योक्तत्वात् तदभिप्रायेण द्वितीयस्यापि तृतीय-त्वोक्तिरिति ध्येयम् । **यज्ञार्थादिति स्मृतेरिति** ॥ 'यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' (३-९) इति गीतावाक्येन 'कर्मणा बध्यते जन्तुः' इति स्मृतेरभगवदर्थकर्मणामेव

श्लोकः ५

बन्धकत्वम् इत्येवमर्थसङ्कोचं वक्ष्यतीत्यर्थः । **उपोद्घातप्रक्रियान्यायेनेति** ।। 'चिन्तां प्रकृत-सिद्ध्यर्थामुपोद्घातं प्रचक्षते' इति न्यायेनेत्यर्थः । **स्मृतेरर्थसङ्कोचोपयोगित्वेनेति** यावत् । **कर्मशब्द इति** ।। 'कर्मणा बध्यते जन्तुः' इति स्मृतिस्थः कर्मशब्द इत्यर्थः । परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वेन सङ्कुचितार्थस्याऽवश्यकत्वादित्याशयः । **'नैव'** इत्युक्त्या 'नतु' इत्यत्रत्यः तुशब्द 'एवार्थः' इत्युक्तं भवति । तथा च 'कर्माकरणान्मुक्तिरित्यसदिति हृदयं वक्तुमुत्तरश्लोक' इति शेषः ।। ५ ।।

**भावप्रकाशः (कृ.टि.)**– ज्ञानरहितात्कर्मत्यागान्न मोक्ष इत्यर्थे हेतुप्रतिपादकेनानेन वाक्येन ज्ञानस्यावश्यकत्वे किञ्चिद्वक्तव्यं तथात्वे विशेषणविघटनेन विशिष्टविघटनात् । यद्वा यज्ञादिकर्मत्यागस्यासम्भवो विधेयः तथा सति विशेष्यविघटनेन विशिष्टाभावसम्पादनात् । तत्राद्योऽत्र न सम्भवतीत्याह– **न ह्यत्रेति** ।। द्वितीयोऽपि न सम्भवतीत्याह– **नापीति** ।। **तृतीय पक्ष इति** ।। आद्यपक्षस्य द्विरूपत्वात् तदभिप्रायेण द्वितीयस्यैव तृतीयत्वमुक्तमिति ध्येयम् । **यज्ञार्थादिति स्मृतेरिति** ।। यज्ञार्थादित्यनेन कर्मणा बध्यत इति स्मृतेरित्यर्थः ।। ५ ।।

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ।। ६ ।।**

**गीताक्षरार्थः**– ननु यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुमशक्यानि, तथाऽपि शक्यत्वाद् यज्ञादिकर्मणां त्यागः कार्यः । तथा च तद्व्यतिरिक्तकर्मार्थः स्मृतौ कर्मशब्दो भविष्यतीत्याशङ्कायां मन एव सविशेषणं बन्धमोक्षयोः प्रयोजकम् । न कर्मकरणाकरणे । अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति ज्ञापयितुं अनिगृहीतमनसो बन्धहेतुत्वम्, तदभावे तदभावः । तस्यैव निगृहीतत्वे मोक्षहेतुत्वम् । तदभावे तदभाव इत्यन्वयव्यतिरेकावुच्येते– **कर्मेन्द्रियाणीति द्वाभ्याम्** । कर्मेन्द्रियाणि वाक्पाणिपादपायुउपस्थानि । उपलक्षणम् । ज्ञानेन्द्रियाणि च संयम्य स्वविषयेभ्यः समाहृत्य इन्द्रियार्थान् रूपादीन् मनसा संस्मरन् य आस्ते स विमूढात्मा विमूढान्तःकरणः मिथ्याचारः डाम्भिक उच्यते । मनस एव प्रधानतया तन्निग्रहाभावे कृतोऽपीतरेन्द्रियनिग्रहो न पुरुषार्थोपयोगीति भावः ।। ६ ।।

श्लोकः ६,७

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

## भाष्यम्

**तथाऽपि शक्तितस्त्यागः कार्य इत्याह– कर्मेन्द्रियाणीति ॥ मन एव प्रयोजकमिति दर्शयितुम् अन्वयव्यतिरेकावाह– मनसा स्मरन् मनसा नियम्येति ॥**

भावप्रदीपिका (प.टी.)– ननु मानसकर्मत्यागायोगेऽपि बाह्यकर्मणस्त्यक्तुं शक्यत्वात् तत्त्यागः कार्यः । कर्मणो बन्धकत्वात् । कियानपि लाभो लाभ एवेति न्यायादित्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकद्वयमवतारयति– **तथाऽपीति ॥** यथाशक्ति मनोनिग्रह एव कार्यो न कर्मत्यागः । मनस एव बन्धमोक्षहेतुत्वात्, कर्मणस्तदभावादित्यर्थः ॥

भावप्रकाशिका (न.टी.)– विषयासक्तौ मनः प्रयोजकं न सर्वकर्मत्याग इत्याह– **मन एवेति ॥**

प्रमेयदीपिका (ज.टी.)– तथाऽपि 'कर्मेन्द्रियाणि' इत्यसङ्गतम् । तृतीयपक्षस्थेन मनसेन्द्रियार्थस्मरणस्य अनुक्तत्वादित्यत आह– **तथाऽपीति ॥** यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुम् अशक्यानि । तथाऽपि शक्तितः शक्यत्वाद् यज्ञादिकर्मणां त्यागः कार्यः ॥

एतदुक्तं भवति । नाशक्यविषये शास्त्रप्रवृत्तिरित्यतस्तद्व्यतिरिक्तकर्मार्थः स्मृतौ कर्मशब्दो भविष्यतीति । एतच्छङ्कापरिहारः श्लोके न दृश्यते । द्वितीयश्लोकश्च व्यर्थ इत्यत आह– **मन एवेति ॥** मन एव बन्धमोक्षयोः प्रयोजकम् । न कर्मकरणाकरणे । अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति ज्ञापयितुमित्यर्थः । अनिगृहीतत्वे मनसो बन्धापेक्षयाऽऽद्योऽन्वयः । द्वितीयो व्यतिरेकः । मोक्षापेक्षया तु व्यत्यास इति ॥

भावबोधः (र.टि.)– ॥ इन्द्रियार्थस्मरणस्येति ॥ मोक्षप्रतिबन्धकत्वेनेत्यर्थः । व्यत्यास इति ॥ निगृहीतत्वे मनसो द्वितीयोऽन्वयः । आद्यो व्यतिरेक इति व्यत्यास इत्यर्थः ।

श्लोकः ६,७

'सन्न्यासादि' इत्युत्तरवाक्यस्थादिपदानुरोधात् 'गृहस्थकर्मैव' इत्येतदुपलक्षणपरमित्यभिप्रेत्योक्तम् ॥

**भावदीपः (रा.टि.)– ॥ इन्द्रियार्थस्मरणस्येति ॥** मोक्षप्रतिबन्धकत्वेनेति योज्यम् ॥ **स्मृताविति ॥ कर्मणो** बन्धकत्वोक्त्या तत्त्यागपरायां 'कर्मणा बद्ध्यते जन्तुः' इत्यस्यां स्मृतौ कर्मशब्दो शक्यकर्मव्यतिरिक्तकर्मपर इत्यर्थः ॥ **आद्य इति ॥** 'कर्मेन्द्रियाणि' इति श्लोकः, द्वितीयः 'यस्त्विन्द्रियाणि' इति श्लोकः ॥ **व्यत्यास इति ॥** द्वितीयोऽन्वयः । आद्यो व्यतिरेक इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ तथाऽपि** 'न हि कश्चित्' इत्यस्य शरीरयात्राद्यर्थककर्मत्यागायोगप्रतिपादकतया सर्वकर्मत्यागासम्भवेऽपि । असङ्गतिमुपपादयति– **तृतीयेति ॥** 'कर्मणा बध्यते जन्तुः' इति स्मृतिमाश्रित्य यस्तृतीयः पक्षः चोदितः तत्स्थेन । मनःकारणकेन्द्रियार्थस्मरणस्य मोक्षप्रतिबन्धकताया अनुक्तत्वात् 'कर्मेन्द्रियाणि' इति पद्यं न सङ्गतमित्यर्थः । प्रतियोगि दर्शयन् 'तथाऽपि' इत्येतदर्थमाह– **यद्यपीति ॥** 'शक्तितः' इत्यस्यार्थः– **शक्यत्वादिति ॥** शक्यत्वघटनायोक्तम्– **यज्ञादीति ॥** अनेन त्यागार्हकर्मपरः स्मृतौ कर्मशब्द इत्यत्र किं नियामकमुक्तम् ? इत्यत आह– **एतदुक्तमिति ॥** 'प्रयोजकम्' इत्युक्ते 'कस्य' इति न ज्ञायते । अतः प्रयोज्यं संयोजयति– **बन्धमोक्षयोरिति ॥ न कर्मत्याग इति ज्ञापयितुमिति ॥** तथा च 'एतदुक्तं भवति' इति कृतशङ्कापरिहारः श्लोकारूढः कृत इति भावः ।

'अन्वयव्यतिरेकौ' इति भाष्ये 'मन एव' इति प्रकृतत्वान्मनस एवेति वक्तव्यम् । तन्न युज्यते । बन्धे मोक्षे च मनसः कारणीभूतस्यावर्जनीयतया व्यतिरेकसम्पादनासम्भवाद् इत्याशङ्क्य विशिष्टस्य मनसोऽन्वयो विशिष्टस्य मनसो व्यतिरेकः । विशेषणं च निगृहीतत्वमनिगृहीतत्वं च । तत्र 'अनिगृहीतत्वविशिष्टे मनसि सति बन्धः', 'अनिगृहीतत्वविशिष्टमनसोऽभावे बन्धाभावः', निगृहीतत्वविशिष्टे मनसि सति मोक्षः', 'निगृहीतत्वविशिष्टमनसोऽभावे मोक्षाभावः' इति मनसो बन्धमोक्षौ प्रत्यन्वयव्यतिरेकौ वक्तुं श्लोकद्वयम् । तत्रापि 'कर्मेन्द्रियाणि' इत्याद्यः श्लोको बन्धं प्रत्युक्तान्वयप्रदर्शनाय प्रवृत्तः । 'यस्त्विन्द्रियाणि' इति द्वितीय उक्तव्यतिरेकप्रदर्शनाय । एवमन्वयव्यतिरेकौ बन्धं प्रति, मोक्षं प्रति तु 'निगृहीतमनसः सत्त्वे मोक्षः' इत्यन्वयप्रदर्शको द्वितीयः । 'निगृहीतमनसोऽसद्भावे मोक्षाभावः' इति

व्यतिरेकप्रदर्शक आद्यः श्लोकः । प्रथमे श्लोके 'मिथ्याचारः' इति बन्धस्य, द्वितीये 'स विशिष्यते' इति मोक्षस्य चाभिधानात् । तथा चोक्तशङ्कानिरासोद्वितीयश्लोकावैयर्थ्यं चेति भावः। **एतेनेति** ॥ मनसो बन्धप्रयोजकत्वप्रदर्शनार्थं मनोग्रहणस्यावश्यकत्वेनेत्यर्थः । **इत्यपीति** ॥ न केवलमेतच्छङ्कापरिहारः श्लोके न दृश्यत इति चोद्यं, द्वितीयश्लोकश्च व्यर्थ इति चोद्यं च 'मन एव' इत्यादिभाष्येण परिहृतं किन्तु गीतायाम् 'मनसा' इति व्यर्थम् इत्यपि चोद्यं परिहृतमित्यर्थः ।

**भावदीपिका (श्री.टि.)– ॥ अनुक्तत्वादिति ॥** मोक्षप्रतिबन्धकत्वेनानुक्तत्वादित्यर्थः । **नाशक्यविषय इति** ॥ 'कर्मणा बध्यते जन्तुः' इति स्मृतेर्बन्धकत्वात् कर्माणि त्याज्यानीत्याशयः । तत्र शरीरमात्रोपयुक्तकर्मणां त्यक्तुमशक्यत्वात् तेषां च बन्धकत्वाभावाच्च तत्परित्यागार्थकत्वं 'कर्मणा बध्यते' इति शास्त्रस्य न वक्तुं युक्तम् । अशक्यविषये शास्त्र-प्रवृत्त्यनुपपत्तेः । न ह्याकाशे मन्थनं शक्यविधानमिति भावः। **तद्व्यतिरिक्तकर्मार्थ इति** ॥ 'कर्मणा बध्यते' इति स्मार्तः कर्मशब्दः शरीरयात्रोपयुक्तकर्मभिन्नयज्ञादिकर्मपरो भविष्यति । तेषां बन्धकत्वे सुखेन त्यक्तुं शक्यत्वात् । अतो बन्धकयज्ञादिकर्माकरणान्मुक्तिर्भविष्य-तीत्याशयः । **न कर्मत्याग इति ज्ञापयितुमिति** ॥ तथा च यज्ञादिकर्मणां प्रतिबन्धकत्वेन तत्त्यागेऽपि मनोव्यापारस्य प्रतिबन्धकस्य सत्त्वेन तदभावस्याप्राप्तत्वादित्याशयः। भाष्ये– **इत्याहेति** ॥ **इति शङ्कायाम्** आहेत्यर्थः । **अनिगृहीतत्व इति** ॥ 'मनोऽनिगृहीतं चेद् बन्धः' इति बन्धापेक्षया 'कर्मेन्द्रियाणि' इत्याद्यश्लोकोऽन्वयपरः । तत्र च मिथ्याचारो बन्धवानिति व्याख्येयम् । 'मनो निगृहीतं चेद् बन्धाभावः' इति बन्धापेक्षया 'यस्तु' इति द्वितीयश्लोको व्यतिरेकपरः । तत्र च 'विशिष्यते' बन्धाभाववानिति व्याख्येयम् ॥ **मोक्षापेक्षया त्विति** ॥ मनो निगृहीतं चेन्मोक्ष इति मोक्षापेक्षया यस्तु इति द्वितीयश्लोकः अन्वयपरः । तत्र च 'विशिष्यते' मुक्तो भवतीत्यर्थः । मनः अनिगृहीतं चेत् मोक्षाभावः इति मोक्षापेक्षया 'कर्मेन्द्रियाणि' इत्याद्यश्लोको व्यतिरेकपरः । तत्र च मिथ्याचारपदं मोक्षाभावपरं द्रष्टव्यम् इति व्यत्यास इत्यर्थः । **एतेनेति** ॥ 'मनोऽनिगृहीतं चेद् बन्धः' इति बन्धापेक्षयाऽन्वयपरत्वेन 'मनोऽनिगृहीतं चेन्मोक्षाभावः' इति मोक्षापेक्षया च व्यतिरेककथनपरत्वेनेत्यर्थः । 'मनसा स्मरन्' इत्यस्य मनसः स्मरणं प्रति कारणत्वोक्तौ न तात्पर्यम् । येन 'मानसप्रत्यक्षजा स्मृतिः'

इति वचनेन स्मरणस्य मानसत्वाव्यभिचाराद् 'मनसा' इत्यस्य वैयर्थ्यशङ्का स्यात् । न चैवम् । किन्तु उक्तरीत्या बन्धमाक्षापेक्षयाऽन्वयव्यतिरेककथनाय मनसो निगृहीतत्व एवेति नोक्तदोष इति भावः ।

**भावप्रकाशः (कृ.टि.)– तृतीयपक्षस्थेनेति ॥** कर्मणा बध्यते जन्तुरिति स्मृतिमाश्रित्य यस्तृतीयः पक्षस्तत्स्थेनेत्यर्थः । **इन्द्रियार्थस्मरणस्येति ॥** मोक्षप्रतिबन्धकत्वेनेति शेषः । अनेन कर्मशब्दसङ्कोचे किं नियामकमुक्तमित्यत आह– **एतदुक्तं भवतीति ॥ आद्योऽन्वय इति ॥** अनिगृहीतमनसि सति बन्ध इत्यन्वयप्रदर्शक आद्य श्लोक इत्यर्थः । **द्वितीयो व्यतिरेक इति ॥** अनिगृहीतमनसोऽभावे बन्धाभाव इति व्यतिरेकपरो द्वितीयः श्लोक इत्यर्थः । **व्यत्यास इति ॥** 'निग्रहीतमनसः सत्त्वे मोक्षः' इत्यन्वयप्रदर्शको द्वितीयः 'निगृहीतमनसोऽसत्त्वे मोक्षाभावः' इति व्यतिरेकप्रदर्शक आद्य इत्यर्थः ।

## भाष्यम्

**कर्मयोगं स्ववर्णाश्रमोचितम् । न तु गृहस्थकर्मैवेति नियमः । सन्न्यासादिविधानात् । सामान्यवचनाच्च ॥ ६,७ ॥**

भावप्रदीपिका (प.टी.)– 'कर्मयोग'शब्दस्यापव्याख्यां निराकुर्वंस्तदर्थमाह– **कर्मेति ॥** न सर्वैः कार्यः कर्मयोगो गृहस्थकर्माख्यः । आश्रमान्तरविधिवैयर्थ्यात् । कर्मयोगपदस्य सामान्यतः सर्वाश्रमिकर्मवाचित्वाच्च ॥ ६-७ ॥

भावप्रकाशिका (न.टी.)– ननु कर्मयोगेन योगिनाम्' इत्यत्र कर्मयोगशब्दस्य गृहस्थादित्रयकर्मपरत्वेन व्याख्यातत्वात् तत्कर्त्तैवाधिकश्चेत् सर्वैरपि तदनुष्ठानात् प्रायत्याभावेन तज्ज्ञानाभाव इत्यत आह– **कर्मयोगमिति ॥** तत्तदधिकारिणां संन्यासादिविधानात्, 'कर्मयोगम्' इति सामान्यस्यैव वचनाच्च, स्ववर्णाश्रमोचितमेव स्यात् सर्वेपाम् । न गृहस्थकर्म न वनस्थकर्म वेत्यर्थः ॥ ६,७ ॥

प्रमेयदीपिका (ज.टी.)– एतेन स्मरणस्य मानसत्वाव्यभिचारात् 'मनसा' इति व्यर्थमित्यपि परास्तम् ॥ 'कर्मयोगेन योगिनाम्' (३.३) इत्यत्र कर्मयोगशब्दस्य गृहस्थादि-

**कर्मविषयत्वेन प्रकृतत्वादत्रापि तद्विषयत्वप्रतीतिः स्यात् । तन्निरासार्थमाह— कर्मयोगमिति ॥ गृहस्थकर्मैव वनस्थकर्मैव ब्रह्मचारिकर्मैव इति नियमः न विवक्षित** इत्यर्थः ॥ **'सन्न्यासादि' इत्यादिपदेन यो नियम्यते तद्व्यतिरिक्तग्रहणम् ॥ कर्मयोगशब्दस्य सामान्यवाचित्वाच्च । पूर्वं 'ज्ञानयोगेन साङ्ख्यानाम्' (३.३) इति यत्याश्रमकर्मणः पृथग्** उक्तत्वात् **सामान्यशब्दोऽपि विशेषे व्यवस्थापितः । न चात्र तथाविधं किञ्चिदस्तीति भावः ॥६-७॥**

**भावबोधः (र.टि.)–** ननु 'कर्मयोगेन' इति गृहस्थाद्याश्रमत्रयविहितकर्मणः प्रकृतत्वात् 'नतु गृहस्थाद्याश्रमकर्मैव' इति वक्तव्यमित्यत एतदुपलक्षणपरमिति भावेनाह— **वनस्थकर्मैवेति ॥** यद्याश्रमत्रयविहितकर्म कर्मयोगशब्दार्थो नेति नियम्यते, तदा सन्न्यासविधानादित्येव वक्तव्यम् । 'सन्न्यासादि' इत्यादिपदं व्यर्थमित्यत आह— **सन्न्यासादीत्यादिपदेनेति** ॥ यदा 'नतु गृहस्थकर्मैव' इति नियम्यते तदा वनस्थत्वब्रह्मचर्ययोः । यदा तु वनस्थकर्मैवेति नियम्यते तदा गार्हस्थ्यब्रह्मचर्ययोः । यदा नतु ब्रह्मचारिकर्मैवेति नियम्यते तदा गार्हस्थ्यवनस्थत्वयोरादिपदेन ग्रहणमित्यर्थः । **वनस्थकर्मैवेत्यादि ॥ यो नियम्यत इति ॥** यदा सन्न्यासिकर्मैवेति पक्षः कर्मयोगशब्दार्थत्वे नियम्यते तदा तन्निषेधकतया तद्व्यतिरिक्तस्य गार्हस्थ्यादेर्विधानादिति व्याख्येयमित्यर्थः ॥ ६,७ ॥

**भावदीपः (रा.टि.)– ॥ एतेनेति ॥** मनस एव प्रयोजकत्वोक्तिपरत्वकथनेनेत्यर्थः ॥ 'मनसा' इत्यनुक्तौ तस्यालाभादिति भावः ॥ भाष्यमुपलक्षणं मत्वाऽऽह— **गृहस्थकर्मैवेत्यादि ॥** 'कर्मयोगेन योगिनाम्' (३.३) इत्याश्रमत्रयविहितकर्मणामपि इह प्रकृतत्वादेवं व्याख्या कार्येति भावः ॥ 'न विवक्षितः' इत्यनन्तरं 'किन्तु आश्रमचतुष्टयधर्मोऽपि विवक्षितः' इति योज्यम् ॥ नन्वेवमुत्तरवाक्ये सन्न्यासविधानादित्येव वाच्यम्, आदिपदं न युक्तमित्यत आह— **सन्न्यासादीत्यादिपदेनेति** ॥ यदा न गृहस्थकर्मैवेति नियम इत्यर्थः तदा वनस्थत्वब्रह्मचारित्वयोर्विधानादित्यस्य ग्रहणम्, यदा न वनस्थकर्मैवेति नियमः इत्यर्थः तदा गृहस्थब्रह्मचर्ययोर्ग्रहणम्, यदा तु न ब्रह्मचारिकर्मैवेति नियम इति भाष्यार्थस्तदा गृहस्थवनस्थत्वयोर्ग्रहणमित्यर्थः ॥ **सामान्येति** ॥ आश्रमचतुष्टयसर्ववर्णकर्मयोगसाधारणवचनत्वादित्यर्थः ॥ कथं तर्हि 'कर्मयोगेन योगिनाम्' इत्यत्र कर्मयोगपदस्याश्रमत्रयकर्मपरत्वोक्तिः? इत्यत आह— **पूर्वमिति** ॥ ६-७ ॥

श्लोकः ६,७

**भावरत्नकोशः (सु.टि.)**– 'गृहस्थकर्मैव इति नियमः' इति भाष्य इतिशब्द आद्यर्थ इति भावेन तद् व्याचष्टे– **गृहस्थकर्मैव वनस्थकर्मैवेति** ॥ कुतः? इत्यतः 'संन्यासादि' इत्यादि-भाष्यम् । तत्र आदिपदार्थमाह– **आदीति** ॥ **नियम्यते** गृहस्थेनैवेदं कर्तव्यम्, वनस्थेनैवेदं कर्तव्यम्, ब्रह्मचारिणैवेदं कर्तव्यमिति यद्यन्नियम्यते तद्व्यतिरिक्तं कर्म सर्वं गृह्यते इत्यर्थः । 'सामान्य' इत्यतः पूर्वमध्याहार्यमाह– **कर्मयोगशब्दस्येति** ॥ **सामान्यवाचित्वाच्चेति** ॥ सामान्यतः सर्वाश्रमकर्मवाचित्वाच्चेत्यर्थः । नन्वेवं सति 'कर्मयोगेन योगिनाम्' इत्यत्र कथं कर्मयोगशब्दस्य गृहस्थादिकर्ममात्रवाचित्वमिष्यते ? इत्यत आह– **पूर्वमिति** ॥ **सामान्य-शब्दोऽपि** कर्मयोगसामान्यवाचकशब्दोऽपि ॥ **विशेषे** गृहस्थादिकर्ममात्रे । **तथाविधं** विशेषव्यवस्थापकम् । नियामकमित्यर्थः ॥ ६-७ ॥

**गीताक्षरार्थः**– यस्त्विन्द्रियाणि चक्षुरादिबुद्धीन्द्रियाणि विषयेभ्यो मनसा नियम्य असक्तः फलेच्छारहितः सन् कर्मेन्द्रियैः वागादिभिः कर्मयोगं स्ववर्णाश्रमोचितत्वेन विहितं कर्मरूपं ज्ञानोपायम् आरभते करोति । स विशिष्यते उक्तमिथ्याचारादतिशयितो भवति ॥ ७ ॥

**भावदीपिका (श्री.टि.)**– ननु 'कर्मयोगेन' इति गृहस्थाद्याश्रमत्रयविहितकर्मणः प्रकृत-त्वात् 'न तु गृहस्थाद्याश्रमकर्मैव' इति वक्तव्यम्, इत्यत एतदुपलक्षणपरमिति भावेनाऽह-**वनस्थकर्मैवेत्यादि** ॥ यदि गृहस्थाद्याश्रमत्रयविहितं कर्मयोगशब्दार्थो नेति नियम्यते तदा सन्न्यासविधानादित्येव वक्तव्यम् । 'सन्न्यासादि' इत्यादिपदं व्यर्थम् । तेन गृहस्थादिकर्मणोऽपि प्राप्त्या विरुद्धत्वापत्तेरित्यत आह– **सन्न्यासादीत्यादिपदेन यो नियम्यत इति** ॥ यदा गृहस्थकर्मैवेति नियम्यते तदा सन्न्यासस्य आदिपदेन वनस्थब्रह्मचर्ययोः । यदा न तु वनस्थकर्मैवेति नियम्यते तदा सन्न्यासस्य, आदिपदेन गार्हस्थ्यब्रह्मचर्ययोः । यदा न तु ब्रह्मचारिकर्मैवेति नियम्यते तदा सन्न्यासस्य, आदिपदेन गार्हस्थ्यवनस्थत्वयोर्ग्रहणमित्यर्थः । कर्मयोगशब्दः स्ववर्णाश्रमोचितकर्मपरत्वेनैव व्याख्येयः, न तु गृहस्थकर्मरूपविशेषपरत्वेन । कुतः? इत्यत आह– **कर्मयोगशब्दस्येति** ॥ नन्वेवं कर्मयोगशब्दस्य सामान्यशब्दत्वेन स्ववर्णाश्रमोचितकर्मपरतया व्याख्याने पूर्वं 'कर्मयोगेन योगिनाम्' इत्यत्र कथं गृहस्थकर्म-परतया व्याख्यातः? इत्यत आह– **पूर्वमिति** ॥ ६-७ ॥

**भावप्रकाशः (कृ.टि.)– ॥ एतेनेति ॥** मनसो बन्धमोक्षप्रयोजकत्वप्रदर्शनार्थं मनोग्रहणस्यावश्यकत्वेनेत्यर्थः । ननु कर्मयोगशब्देन गृहस्थादित्रयकर्मणः प्रतीतत्वात् तावन्नियमो निषेद्धव्यः । तत्कथं 'नतु गृहस्थकर्मैवेति नियम' इत्युक्तम्? इत्यत उपलक्षणमेतदिति भवेनाह– **वनस्थकर्मैवेत्यादि ॥** यद्यत्र नतु गृहस्थादित्रयकर्मैवेति नियम इत्येवं रूपेणोच्यते तदा सन्यासादीत्यादिपदवैय्यर्थ्यं स्यात् । अतः प्रत्येकमेव निषेधः कृत इति बोध्यम् । नन्वेवं सति नतु गृहस्थकर्मैवेति नियमः सन्यासाविधानादित्यादिरूपेण प्रत्येकमेव हेतुहेतुमद्भावो वक्तव्यः । अन्यथाऽदिपदवैयय्यर्थ्यतादवस्थ्यात् । न चासौ युज्यते । हेतावादिपदोक्तगार्हस्थ्यभागवैय्यर्थ्यात् । नियमनिषेधाय संन्यासब्रह्मचर्यवनस्थत्वविधानस्यैव सामञ्जस्यात् । एवं प्रतिज्ञान्तरेऽपि द्रष्टव्यमित्यत आह– **संन्यासादीत्यादिपदेनेति ॥** यो नियम्यते तद्व्यतिरिक्तग्रहणं संन्यासादीत्यादिपदेन कार्यमिति सम्बन्धः । तथा च यदा निषेधत्वेन गृहस्थकर्मैवेति तदा संन्यासस्य स्वपदेनैवोक्तत्वादादिपदेन गार्हस्थ्यव्यतिरिक्तवनस्थत्वब्रह्मचर्ययोः ग्रहणे संन्यासब्रह्मचर्यवनस्थत्वविधानादिति हेत्वर्थसम्पत्त्या नोक्तदोषः । एवं यदा वनस्थकर्मैव नियम्यते तदादिपदेन गार्हस्थ्यब्रह्मचर्ययोः ग्रहणम् । यदा तु ब्रह्मचारिकर्मैवेति तदा गार्हस्थ्यवनस्थत्वयोः ग्रहणमित्यर्थः ॥ ६,७ ॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

## भाष्यम्

**अतो नियतं वर्णाश्रमोचितं कर्म कुरु ॥ ८ ॥**

भावप्रदीपिका (प.टी.)– यतः कर्मत्यागेन न मोक्षो नाप्यसौ शक्यः, अतो नियतकर्मैव कुरु इत्युत्तरश्लोकार्थमाह– **अत इति ॥ ८ ॥**

भावप्रकाशिका (न.टी.)– यत एवमशक्यः सर्वथा कर्मत्यागः, अतो विहिताकरणादनर्थकरणाद्वरं स्ववर्णाश्रमविहितकरणमिति भावेनोत्तरश्लोकमवतारयति– **अत इति** ॥८॥

श्लोकः ८

**प्रमेयदीपिका (ज.टी.)– उत्तरश्लोकपर्यालोचनया चैवमिति भावेन सङ्गतिं सूचयन् व्याचष्टे– अत इति ॥ अतश्शब्दपरामर्श्यं 'कर्म ज्यायः' इत्यादिनैवोच्यते ॥ ८ ॥**

**भावबोधः (र.टि.)– सङ्गतिं सूचयन्निति ॥** 'अतः' शब्देनेत्यर्थः । **इत्यादिनैवोच्यत इति** ॥ विव्रियत इत्यर्थः ॥ ८ ॥

**भावदीपः (रा.टि.)– ॥ एवमवेति ॥** कर्मयोगपदं सर्ववर्णसर्वाश्रमकर्मपरमेवेति भावेनेत्यर्थः ॥ **उच्यत इति**॥ गीतायामुच्यत इत्यर्थः । अतो न व्याख्यायत इत्येवकारार्थः ॥ एतेन प्रागुपपादितकर्मकरणावश्यकत्वस्य 'अतः' इति हेतूकरणात् सङ्गतिः कार्यकारणरूपा सूचितेति भावः ॥ ८ ॥

**भावरत्नकोशः (सु.टि.)– ॥ एवमेव** कर्मयोगशब्दस्य स्ववर्णाश्रमोचितकर्मपरत्वमेव । अतःशब्दप्रयोगो भाष्ये कृतः । तत्तात्पर्यमाह– **सङ्गतिमिति** ॥ भाष्यं घटयितुमाह– **अतःशब्देति** ॥ तथा च प्रागुपपादितकर्मकरणावश्यकत्वं स्यादिति हेतूकरणाद् हेतुहेतुमद्भावलक्षणा सङ्गतिरिति सूचयितुम् 'अतः' इति भाषितमिति भावः । **उच्यते** विव्रियते ॥८ ॥

**गीताक्षरार्थः**— ततः किम् ? इत्यत उच्यते– **नियतमिति** ॥ नियतं स्ववर्णाश्रमोचितं कर्म कुरु । हि यस्मात् अकर्मणः कर्माकरणात् कर्म कर्मानुष्ठानं ज्यायः प्रशस्यतरम् । अपि च अकर्मणः कर्माकुर्वतस्तव शरीरयात्राऽपि देहनिर्वाहोऽपि न प्रसिध्येत् न भवेत् ॥ ८ ॥

**भावदीपिका (श्री.टि.)– ॥ उत्तरश्लोकेति ॥** तत्र नियतपदसद्भावादित्यर्थः ॥ **एवमेवेति** ॥ कर्मयोगशब्द उक्तार्थ एवेत्यर्थः ॥ **सङ्गतिं सूचयन्निति** ॥ अतःशब्देनेत्यर्थः । अतःशब्दपरामृश्यं किमित्यत आह– **अतःशब्देति** ॥ यतः कारणाद् अकर्मणः सकाशात् कर्म स्ववर्णाश्रमोचितकर्मकरणमेव ज्यायः, अतो नियतं कर्म कुर्वित्यर्थः । **उच्यत इति** ॥ गीताकारेण विव्रियत इत्यर्थः ॥ ८ ॥

**भावप्रकाशः (कृ.टि.)– सङ्गतिमिति** ॥ अतःशब्दप्रयोगादिति भावः । **उच्यत इति** ॥ विव्रियत इत्यर्थः ॥ ८ ॥

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥ ९ ॥**

## भाष्यम्

**'कर्मणा बद्ध्यते जन्तुः'** (म.भा.१२.२४१.७) **इति कर्म बन्धकं स्मृतमित्यत आह– यज्ञार्थादिति ॥ कर्मबन्धनं यस्य लोकस्य स कर्मबन्धनः ॥**

भावप्रदीपिका (प.टी.)– **'कर्मणा बध्यते जन्तुः'** इति साक्षात् कर्मणो बन्धकत्वं श्रूयते । अतः कथं तत्र नियोजयसि ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे– **कर्मणेति ॥**

भावप्रकाशिका (न.टी.)– ननु विद्यैव विधीयते, कर्म निषिध्यत एव । तयोरिष्टानिष्टहेतुत्वोक्तेः । 'कर्मणा बद्ध्यते' इत्यादिना कर्मवाक्यान्यपि तेषां बन्धकत्वमेव ज्ञापयन्ति । अतो न विहिताकरणदोषः कर्माकरणेऽपि । अवशत्वेन शरीरयात्रायैव किञ्चित्कर्मकरणेऽपि न निषिद्धकर्मकरणदोषोऽशक्यत्वादिति भावेनाशङ्क्य तदुत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे– **कर्मणेति ॥**

प्रमेयदीपिका (ज.टी.)– इदानीं तृतीयपक्षमाशङ्क्य तत्परिहाराय श्लोकमवतारयति– **कर्मणेति ॥ बन्धकं** मोक्षस्य प्रतिबन्धकम् । 'अतो न करोमि' इति शेषः । तत्पुरुपत्वभ्रान्तिनिरासायाह– **कर्मेति** ॥ तत्पुरुपत्वेऽसङ्गतिः स्यादिति भावः ॥

भावबोधः (र.टि.)– ॥ **तत्पुरुषत्वेति** ॥ बन्धनशब्दस्य नपुंसकत्वाद् भ्रान्तीत्युक्तम् ।

भावदीपः (रा.टि.)– ॥ **तृतीयपक्षमिति** ॥ 'कर्म बन्धकम्' इति प्राग्विकल्पितं तृतीयपक्षमित्यर्थः ॥

भावरत्नकोशः (सु.टि.)– 'कर्मणा बध्यते जन्तुः' इति स्मृतिमाश्रित्य यस्तृतीयः पक्षः तमाशङ्क्य 'यज्ञार्थात्' इति स्मृतेरर्थसङ्कोचं वक्ष्यतीत्युक्तम् । तदाह– **इदानीमिति** ॥ कर्मणो बन्धकत्वाभिधानं प्रकृतासङ्गतमित्यतो बन्धकशब्दस्य विवक्षितमर्थमाह– **मोक्षस्य प्रतिबन्धकमिति ॥ न करोमि** कर्माणि ॥ **तत्पुरुपत्वेति** ॥ 'कर्मणो बन्धनः कर्मबन्धनः' इति

तत्पुरुषत्वभ्रान्तीत्यर्थः । यद्यपि 'बन्धनः' इति शब्दस्य पुल्लिङ्गतया तत्पुरुषत्वभ्रमः सम्भवति । तथाऽपि 'कोऽसावनुमानो नाम' इत्यादिप्रयोगादत्रापि तथा स्यादिति युक्त्याभासेन सम्भवत्येव भ्रान्तिरिति हृदयम् । **असङ्गतिरिति** ॥ लोकोऽयं कर्मणो बन्धन इति विग्रहे तत्पुरुषसमासपक्षे कर्मणो मोक्षप्रतिबन्धकत्वपक्षे उत्तरानभिधानाद्, अनुपयुक्ताभिधानाच्चासङ्गतिः स्यादित्यर्थः ॥

**भावदीपिका (श्री.टि.)**– ॥ **तत्पुरुषत्वेति** ॥ 'कर्मणो बन्धनः' इति षष्ठीतत्पुरुषत्वेत्यर्थः । बन्धनशब्दस्य नपुंसकत्वेन बहुव्रीहीतरसमासकरणे पुंलिङ्गायोगाद् भ्रान्तीत्युक्तम् ॥

**भावप्रकाशः (कृ.टि.)**– कर्माकरणमेव मोक्षहेतुरित्याद्यपक्षे यो द्वितीयकल्पस्तेन गतार्थत्वनिरासायाह– **मोक्षस्य प्रतिबन्धकमिति** ॥ **असङ्गतीति** ॥ यज्ञार्थं कर्म कर्वित्यत्र यज्ञार्थान्यकर्मणो बन्धकत्वस्य हेतुत्वेन प्राप्तासङ्गतीत्यर्थः ।

## भाष्यम्

**यज्ञो विष्णुः । यज्ञार्थं सङ्गरहितं कर्म न बन्धकमित्यर्थः । 'मुक्तसङ्गः' इति विशेषणात् ॥ 'कामान् यः कामयते'** (मुं.उ.३.२.२) **इति श्रुतेश्च ॥ 'अनिष्टमिष्टम्'** (१८.१२) **इति वक्ष्यमाणत्वाच्च । 'एतान्यपि तु कर्माणि'** (१८.६) **इति च ।'तस्मान्नेष्टियाजुकः स्यात्'** (बृ.उ.३.६.३) **इति च ॥**

भावप्रदीपिका (प.टी.)– सङ्गराहित्यमत्रानुक्तं किमिति संयुज्यते ? इत्यत आह– **मुक्तेति** ॥

भावप्रकाशिका (न.टी.)– विष्णूद्दिष्टमपि कर्म साहङ्कारेण फलकामेन वा कृतं चेद्बन्धकमेव भवति । तन्निवृत्यर्थं 'मुक्तसङ्ग' शब्दप्राप्तमर्थमाह– **यज्ञार्थं सङ्गरहित-मिति** ॥ 'मुक्तसङ्ग'पदस्य कर्माहङ्कारफलकामपरित्यागोऽर्थ इति सूचयन्, तदुभयवत्कर्मणो बन्धकत्वे, तद्रहितस्याबन्धकत्वे च प्रमाणाह– **कामानित्यादिना** ॥ सङ्गम् अहं करोमि इति भावम्, फलानि फलेच्छां त्यक्त्वेत्यर्थः । **नेष्टियाजुकः स्यात्** फलेच्छया न यजेदित्यर्थः ॥

**प्रमेयदीपिका (ज.टी.)– यज्ञशब्दस्य यागार्थत्वप्रतीतिमपाकर्तुमाह– यज्ञ इति ।। अवैष्णवयागस्यापि बन्धकत्वादिति भावः ।। तदर्थम् इत्युत्तरवाक्यस्यासङ्गतिपरिहारायार्थात् सिद्धं पूर्ववाक्यार्थमाह– यज्ञार्थमिति ।। 'सङ्गरहितम्' इत्यनुक्तं कस्मादुक्तम्? इत्यत आह– मुक्तेति ।। इष्टियाजुकः फलेच्छया यष्टा ।।**

**भावबोधः (र.टि.)– ।। असङ्गतिपरिहारायेति ।।** यज्ञार्थकर्मान्यकर्मबन्धकत्वस्य यज्ञार्थकर्मसमाचरणेन सह साध्यसाधनभावेनासङ्गतिपरिहारायेत्यर्थः ।।

**भावदीपः (रा.टि.)– ।। असङ्गतिपरिहारायेति ।।** यज्ञार्थकर्मतोऽन्यकर्मणो बन्धकत्वे पूर्वार्धेनोक्ते सत्युत्तरार्धे तदर्थं यज्ञार्थकर्मान्यकर्म न कार्यमित्युक्तिरेव सङ्गता । नतु 'कर्म समाचर' इत्युक्तिः । एवमुक्तौ तु 'यज्ञार्थं कर्म न बन्धकम्' इत्येव पूर्वार्धोक्तिः सङ्गता इति हेतोरसङ्गतिपरिहारायादित्युक्तम् ।। भाष्ये 'इति श्रुतेश्च' इत्यस्य 'स कामभिर्जायते तत्र तत्र' इति श्रुतिशेषे काम्यकर्मणो बन्धकत्वोक्तेरित्यर्थः । 'अनिष्टमिष्टम्' इति वक्ष्यमाणत्वाच्चेत्यस्य अनिष्टमिति वाक्यशेषे 'भवत्यत्यागिनां पार्थ नतु सन्न्यासिनाम्' इति कामिनो बन्धकम्, अकामिनो नेत्युक्तेरित्यर्थः । 'एतान्यपि तु कर्माणि' (१८.६) इति वाक्यशेषे 'सङ्गं त्यक्त्वा धनञ्जय । कर्तव्यानि' इत्यष्टादशेऽध्याये वक्ष्यमाणत्वाच्चेत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। यागार्थत्वेति ।** 'यज्ञस्सवोऽध्वरो यागः' (अमर) इत्यभिधानादिति भावः । प्रसिद्धार्थत्यागे किं नियामकम् ? इत्यत आह– **अवैष्णवयागस्यापीति ।।** यज्ञलक्षणकर्मणः अन्यकर्मण एव बन्धकत्वाभिधानमयुक्तम् । यज्ञस्यापि विष्णुप्रीत्यनुद्देश्यकस्य 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' (९.२१) इति बन्धकत्वाभिधानाद्, गीतायां यज्ञशब्दोऽन्यपर एवेति स्वीकार्ये 'यज्ञो विष्णुः' इति श्रुतिप्रसिद्ध्या विष्णुपर इत्यभ्युपगम एव न्याय्य इति भावः। **तदर्थमित्युत्तरवाक्यस्येति ।।** 'तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर' (३.९) इत्युत्तरगीतावाक्यस्येत्यर्थः । **असङ्गतीति ।।** यज्ञार्थान्यकर्मणां बन्धकत्वात् कर्म कुर्वित्युक्तावसङ्गतिः स्यादिति तत्परिहाराय इत्यर्थः । **अर्थादिति ।।** 'यज्ञार्थादन्यत्कर्म बन्धकम्' इत्युक्तावर्थापत्तेर्यज्ञार्थं कर्म न बन्धकमित्यर्थः । मुक्तसङ्गः फलस्नेहरहित इति कौन्तेयस्य विशेषणात्, 'कामान् यः कामयते' इति श्रुतौ 'स कामभिर्बध्यते तत्रतत्र' इति काम्यकर्मणो बन्धकत्वश्रवणात्, 'अनिष्टमिष्टम्' इत्येतद्वाक्यशेषे 'भवत्य-

श्लोकः ९

त्यागिनां पुंसां न तु संन्यासिनाम्' इति सङ्गनिषेधाभिप्रायस्य वक्ष्यमाणश्लोकतोऽवगमात्, 'एतान्यपि तु कर्माणि (१८.६) इत्यत्र सङ्गं त्यक्त्वा धनञ्जय कर्माणि कर्तव्यानीति सङ्गराहित्यस्य वक्ष्यमाणत्वाच्चेति भाष्यार्थः । **'इष्टियाजुकः'** इत्यत्र यजतेर्भावे क्तिनि सम्प्रसारणे 'यजनेन याजकः' इत्यर्थो भवति । स च न युज्यते । प्रकृतार्थासङ्गतेरित्यत आह– **फलेच्छयेति** ॥ इषु = इच्छायाम् इति धातोः क्तिनि इष्टिः इच्छा, योग्यतया फलस्य सम्बन्धः । यजतेश्च बाहुलकात् उकञ्प्रत्यये, याजकशब्द एव पृषोदरादिभावेनाकारस्योकारे विकारे वा 'याजुकः' इति रूपम् । 'इष्ट्या याजुक इष्टियाजुकः' इति समासे च प्रकृतार्थसिद्धिरिति भावः । तथा च प्राचीनटीका 'फलेच्छया न यजेदित्यर्थः' इति ॥

**भावदीपिका (श्री.टि.)**– मूले– **यज्ञो विष्णुरिति** ॥ 'यज्ञो विष्णुर्देवता' इति श्रुतेः, 'यज्ञो यज्ञपतिर्यज्वा' इति स्मृतेश्चेति भावः । ननु सङ्गरहितस्य कर्मणोऽबन्धकत्वं युक्तम् । काम्यकर्मणो बन्धकत्वात् । यज्ञशब्दोक्तविष्ण्वर्थस्य कर्मणोऽबन्धकत्वं कथम्? अवैष्णवकर्मणो बन्धकत्वादर्शनात्यत आह– **अवैष्णवयागस्यापीति** ॥ न केवलं काम्यकर्मण एवेत्यपेरर्थः । **बन्धकत्वात्** बन्धकत्वावगमात् । **असङ्गतीति** ॥ न तु यज्ञार्थकर्मान्यकर्मणो बन्धकत्वाद् यज्ञार्थं कर्म समाचरेति वचनम् । तयोः साध्यसाधनभावाभावेनासङ्गतत्वादित्यर्थः । **अर्थात् सिद्धमिति** ॥ यज्ञार्थादन्यत् कर्म बन्धकमित्युक्ते यज्ञार्थं कर्म न बन्धकमित्यर्थात् सिद्धमित्यर्थः ॥ **अनुक्तमिति** ॥ प्रथमवाक्यार्थकथनावसरे 'यज्ञार्थं कर्म न बन्धकम्' इत्येव वाच्यम् । पूर्वार्धे तावत एव सत्त्वात्, न तु 'सङ्गरहितम्' इति । पूर्वार्धेऽनुक्तत्वादित्यर्थः । **एषणम्** इष्टिरिच्छा । सा च प्रकरणात् फलविषयिणी ग्राह्येत्याशयेनेष्टिशब्दार्थ उक्तः- **फलेच्छयेति** ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **अर्थादिति** ॥ यज्ञार्थादन्यत् कर्मबन्धकमित्युक्तेऽर्थाद्यज्ञार्थं कर्म न बन्धकमिति सिद्धमित्यर्थः । ननु 'याजुकः' इत्यत्र यो यजधातुस्तेनेष्टीति गतार्थमित्यत आह– **फलेच्छया यष्टेति** ॥ इष्टिपदमिच्छार्थकम् । इषु इच्छायामित्युक्तेः ।'यस्माद्धुतप्रहुते देवान्ने तस्मान्न फलेच्छया यष्टा स्यात्' इति श्रुत्यर्थः ।

## भाष्यम्

**विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ॥ ९ ॥**

भावप्रदीपिका (प.टी.)– ननु **'कर्मणा बध्यते जन्तुः'** इत्यस्यापि विशेषवचनत्वात् कथं विशेषवचनान्तराश्रयेण बाध उच्यतेऽत्र ? इत्यत आह– **विशेषेति** ।। 'यज्ञार्थात्' इत्यतिरिक्तविशेषणम् ।। ९ ।।

भावप्रकाशिका (न.टी.)– ननु विशेषवचनानुरोधेन सामान्यविषयसङ्कोचः 'सर्वा-नानय नैकं मैत्रम्' इत्यादौ। अत्र तु द्वयोरपि विशेषवचनत्वात्, 'कर्मणा बद्धयते' इत्यस्य 'न कर्मणा बद्धयते' इत्यनेन कथं विषयसङ्कोचः ? इत्याशङ्क्य, यज्ञार्थेन सङ्ग-रहितेनेति विशेषणाधिक्याद्युज्यते सङ्कोच इति भावेनाह– **विशेषवचनत्व इति** ।। ९ ।।

प्रमेयदीपिका (ज.टी.)– ननु 'कर्मणा बद्धयते जन्तुः' इत्यपि विशेषवचनम् । अविद्यादीनामनेकेषां बन्धकत्वेन 'अविद्यादिभिः' इति सामान्यस्यानुपात्तत्वात् । गीता-वाक्यं 'कर्म न बन्धकम्' इतीदमपि विशेषवचनम् । तत्कथं तत्परिहारायावतार्य व्याख्यातम्? इत्यत आह– **विशेषेति** ।। यद्यप्युक्तविधया द्वयोर्विशेषवचनत्वं समम् । तथाऽपि गीतावाक्ये 'यज्ञार्थात्' इत्यादि विशेषणमतिरिच्यते। अतस्तदपेक्षया तत् सामान्यवचनमेव । अतो युक्तमेतद् व्याख्यानमिति भावः ।।

अयमत्र प्रत्युत्तरक्रमः । 'कर्मणा बद्धयते' इति वाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः । तस्यावैष्णवकाम्यकर्मविषयत्वात् । कुतः सङ्कोचः? इति चेत् । परेणापि परिस्पन्दमात्रस्य त्यक्तुमशक्य वेनासङ्कुचितार्थतायाः स्वीकर्तुमशक्यत्वात् । तर्ह्यत एव बाधकाच्छरीरयात्रार्थकर्मव्यतिरिक्तविषयत्वं कल्प्यत इति चेन्न । वैयर्थ्यात् । एवमपि मनो-व्यापारस्य अत्यत्वेन प्रतिबन्धकाभावो न सिद्धयति । तस्यैवान्वयव्यतिरेकाभ्यां प्रयोज-कत्वावधारणात् । बाधकात् सङ्कोचमङ्गीकुर्वतां चायमपि सङ्कोचोऽङ्गीकार्यः । विधान-सामर्थ्याद्युद्धादीनामपि तत्तद्वर्णाश्रमोचितत्वात् ।।

नच विधानस्यामुमुक्षुविषयत्वम् । कल्पकाभावात् । न चेदमेव वाक्यं कल्पकम्। तस्य अवैष्णवत्वादिधर्मत्यागेन चरितार्थत्वात् । धर्मिपरित्यागाद्धर्ममात्रपरित्यागस्य ज्यायस्त्वात् । अतो न कर्मस्वरूपं त्याज्यमिति ।। ९ ।।

श्लोकः ९

**भावबोधः (र.टि.)– ॥ अर्थात्सिद्धमिति ।** यज्ञार्थादन्यत् कर्म बन्धकमित्युक्ते यज्ञार्थं कर्म न बन्धकमित्यर्थात् सिद्धमित्यर्थः ॥ ९ ॥

**भावदीपः (रा.टि.)–** विशेषवचनत्वं व्यनक्ति– **अविद्यादीनामिति** ॥ 'इदमपि गीता-वाक्यम्' इत्यन्वयः । '**कर्म न बन्धकम्**' इति तु पूर्वार्धाभिप्रेतार्थानुवादः ॥ 'नहि कश्चित्' (३.५) इति श्लोकचतुष्टयस्य 'यज्ञार्थात्' इत्येतदुपोद्घातत्वमुक्तम् । तत्कथम्? इत्यतो 'न हि' इत्यादिश्लोकचतुष्टयस्य 'यज्ञार्थात्' इत्येतदुपयुक्तार्थतां व्यक्तीकर्तुमाह– **अयमत्र प्रत्युत्तरक्रम इति** ॥ 'यज्ञार्थात्' इत्यस्याभिप्रायं तावदाह– **कर्मणेत्यादिना** ॥ 'न हि कश्चित्' (३.५) इति श्लोकतात्पर्यमाह– **परेणापीति ॥ कल्प्यत इति** ॥ 'कर्मणा' इति स्मृतेरिति योज्यम् ॥ वैय्यर्थ्यमेव व्यनक्ति– **एवमपीति** ॥ उक्तार्थकत्वकल्पनेऽपीत्यर्थः । यद्वा देहयात्रार्थकर्मान्य-कर्मपरत्वकल्पनया तत्स्मृतिबलेन देहयात्रार्थकर्मान्यकर्मत्यागेऽपि इत्यर्थः ॥ **प्रतिबन्धकेति** ॥ 'मोक्षस्य' इति योज्यम् । कुतः? इत्यत आह– **कर्मेन्द्रियाणीति** ॥ श्लोकद्वयतात्पर्यमाह– **तस्यैवेति** ॥ मनोव्यापारस्यैवेत्यर्थः ॥ कुतः? इत्यतो 'नियतम्'(३.८) इति श्लोकतात्पर्यमाह– **विधानेति ॥ धर्ममात्रेति** ॥ अवैष्णवत्वकाम्यत्वरूपकर्मनिष्ठधर्ममात्रेत्यर्थः ॥ ९ ॥

**भावरत्नकोशः (सु.टि.)–** विशेषवचनत्वमुपपादयति– **अविद्यादीनामिति** ॥

'**प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्त्वादिकानपि ।**
**कर्माणि सूक्ष्मदेहं च'**

इत्यादौ अविद्यागुणत्रयादेरपि बन्धकत्वावेदनेनेत्यर्थः । 'यज्ञार्थात्' इति पूर्वार्धतात्पर्य-मनुवदति – **गीतेति** ॥ 'कर्म न बन्धकमितीदमपि गीतावाक्यम्' इत्यन्वयः । भाष्यस्थमपिपदं विशेषणपदं च विवृणोति– **यद्यपीत्यादि ॥ इत्यादिविशेषणमिति** ॥ 'मुक्तसङ्गः' इति कर्तृविशेषणस्यापि परम्परया कर्मविशेषणत्वं वक्तव्यमिति भावेन आदिपदं प्रयुक्तम् । अत एव भाष्ये 'सङ्गरहितम्' इति कर्मैव विशेषितम् । 'कर्मादिष्वासङ्गफलकामनापरित्यागो मुक्तसङ्ग-शब्दार्थः' इति प्राचीनटीका । **एतद्व्याख्यानम्** 'अवैष्णवकर्मणो बन्धकत्वं नान्यस्य' इत्येतद्व्याख्यानम् ।

'न हि कश्चित्' (३.५) इत्यादिचतुःश्लोक्या 'यज्ञार्थात्' इत्येतदुपोद्घातत्वमुक्तं व्यक्ती-कर्तुमाह– **अयमत्रेति** ॥ 'यज्ञार्थात् कर्मणः' इत्यादेस्तात्पर्यं– '**कर्मणा बध्यत इति**' इति ॥

**सङ्कोचः** कर्मशब्दस्य सर्वविषयस्यावैष्णवकर्मार्थत्वमिति सङ्कोचः कुतो हेतोरित्यर्थः । 'न हि कश्चित्' इत्यस्य तात्पर्यं– **परेणापीति** ॥ **व्यतिरिक्तविषयत्वं** व्यतिरिक्तकर्मविषयत्वम् । **कल्प्यते** 'कर्मणा बध्यते' इत्यत्र 'कर्मशब्दस्य' इति योज्यम् । वैयर्थ्यात् शरीरयात्रार्थ-कर्मव्यतिरिक्तकर्मणां बन्धकत्वं वदत् 'कर्मणा बध्यते जन्तुः' इति वचनं मोक्षरूपमर्थं प्रयोजनं न आवहतीति भावः । वैयर्थ्यमुपपादयति– **एवमपीति** । **स्मृत्युक्तकर्मशब्दस्य** देहयात्रार्थ-कर्मान्यकर्मपरत्वेऽपीत्यर्थः । **प्रतिबन्धकाभावः** मोक्षप्रतिबन्धकाभावः । **तस्यैव** मनोव्यापारस्यैव । अनेन 'कर्मेन्द्रियाणि' इत्यादिश्लोकद्वयतात्पर्यमुक्तं भवति । कुतः? इत्यतो 'नियतम्' इति श्लोकभावमाह– **विधानेति** ॥ **उचितत्वादिति** ॥ 'नियतम्' इत्यस्य तत्तद्वर्णाश्रमोचितत्वेन विहितार्थत्वादिति भावः । **इदमेव** 'कर्मणा बध्यते' इति **स्मृतिवाक्यमेव** । 'अवैष्णवत्वादि' इत्यत्र आदिशब्देन ससङ्गत्वं ग्राह्यम् । **धर्ममात्रेति** । अवैष्णवत्वफलस्नेहरूपधर्ममात्रेत्यर्थः । **'त्याज्यमिति'** इत्यत्र इतिशब्दस्य 'अयमत्र' इति पूर्वेण सम्बन्धः ॥ ९ ॥

**गीताक्षरार्थः**– अथेदानीं 'कर्मणा बध्यते जन्तुः' इति स्मृतिमाश्रित्य कर्माणि न करोमि मोक्षप्रतिबन्धकत्वादिति यस्तृतीयः पक्षश्चोदितः स निरस्यते– **यज्ञार्थादिति** ॥ यज्ञो विष्णुः । तदर्थात् तदुद्देश्यकात् कर्मणोऽन्यत्र तदेकं विना अयं लोकः कर्मबन्धनः कर्म बन्धनं बाहुलकात् कर्तरि ल्युट् बन्धकं यस्य स तथा । कर्म बन्धकमिति वचनमवैष्णवकर्मविषयमिति भावः । अतः तदर्थं विष्णूद्देश्यकं विष्णुपरितोषमात्रार्थकं कर्म मुक्तसङ्गः सन् कर्माहङ्कारफलकामना-परित्यागवान् समाचर अनुतिष्ठ इति ॥ ९ ॥

**भावदीपिका (श्री.टि.)**– यजनशीलो याजुक इति पदार्थमभिप्रेत्य यष्टेत्युक्तम् । तदुप-पादयति– **अविद्यादीनामिति** ॥ आदिपदेन कामादीनां ग्रहणम् ॥ **अनुपात्तत्त्वादिति** ॥ 'कर्मणा बध्यते' इति स्मृतौ 'कर्मणा' इत्यनुक्त्वा 'अविद्यादिभिः' इति सामान्यतो नोक्तमिति भावः । **कर्मेति** ॥ यज्ञार्थं कर्म न बन्धकमित्यर्थकं 'यज्ञार्थात्' इतीदं गीतावाक्यमपीत्यन्वयः । **तत्परिहारायेति** ॥ 'कर्मणा बध्यते' इति स्मृतिविरोधपरिहारायेत्यर्थः । तथा च स्मृति-गीतावाक्ययोरुभयोरपि विशेषवचनत्वाविशेषात् स्मृत्यैव गीतावाक्यस्य बाधः किं न स्यादि-त्यभिप्रायः । **द्वयोः** स्मृतिगीतावाक्ययोः । **'इत्यादि'** इत्यादिपदेन 'मुक्तसङ्गः' इति विशेषण-सङ्ग्रहः ॥ **तदपेक्षया तदिति** ॥ गीतावाक्यापेक्षया स्मृतिवाक्यमित्यर्थः । तथाच स्मृतेरेव गीतोक्तरीत्या सङ्कोच इति भावः ।

श्लोकः ९

॥ **तस्येति** ॥ तथा च सङ्कोच इति भावः । असङ्कुचितार्थतायाः 'स्मार्तकर्मशब्दस्य' इति शेषः । वैयर्थ्यमेवोपपादयति– **एवमपीति** ॥ 'कर्मणा' इति स्मृतेः शरीरयात्रार्थककर्म-व्यतिरिक्तयजनादिकर्मविषयत्वं प्रकल्प्य तत्त्यागेऽपीत्यर्थः ॥ **मनोव्यापारस्येति** ॥ 'बन्धापाद-कत्वेन मोक्षप्रतिबन्धकस्य' इति वाक्यशेषः । **तस्यैवति** ॥ मनोव्यापारस्यैवान्वयव्यतिरेकाभ्यां बन्धप्रयोजकत्वेन मोक्षप्रतिबन्धकत्वावधारणात् । 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इति वचनादित्यर्थः । ननु परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वरूपाद् बाधकात् 'कर्मणा' इति स्मृतेः शरीरयात्रार्थकर्मव्यतिरिक्तकर्मविषयत्वमङ्गीक्रियत इत्यत आह– **बाधकादिति** ॥ **अयमपि सङ्कोच इति** ॥ वैष्णवनिष्कामकर्मव्यतिरिक्तावैष्णवकाम्यकर्मविषयत्वेनापि सङ्को-चोऽङ्गीकार्य इत्यर्थः । कुतः? इत्यत आह– **विधानेति** ॥ 'तस्माद् युध्यस्व भारत' इत्यादि विधानसामर्थ्याद् युद्धादिकर्मणामपि तत्तद्वर्णाश्रमोचितत्वेन निष्कामतया विष्णुप्रीत्यर्थमवश्यं कर्तव्यत्वादित्यर्थः ॥ **अमुमुक्ष्विति** ॥ मोक्षेच्छूनां च सर्वमपि युद्धादिकं कर्म त्याज्यमेवेति भावः ॥ **इदमेवेति** ॥ युद्धादिकर्मणां बन्धकत्वप्रतिपादकं **'कर्मणा' इति** वाक्यमेवेत्यर्थः । तथा च बन्धकानि कर्माणि कथं मुमुक्षुः कुर्यादिति भावः । **'तस्य'** इत्यनन्तरं 'क्रियमाणे कर्मणि' इति शेषः । ननु भवद्भिः कर्मणि अवैष्णवत्वकाम्यत्वरूपधर्मयोः परित्याग उच्यते । मया तु धर्मिभूतकर्मण एव, इति साम्यमेवेत्यत आह– **धर्मीति** ॥ ९ ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **अनेकेषां बन्धकत्वेनेति** ॥ 'प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्त्वादिकानपि । कर्माणि सूक्ष्मदेहं च' इत्यनेकबन्धकोक्तेरिति भावः । **इत्यादिविशेषणमिति** ॥ 'मुक्तसङ्गः' इति विशेषणसङ्ग्रहायादिशब्दः । बुद्ध्यारोहार्थं 'न हि कश्चित्' इत्यादिना 'यज्ञार्थात्' इत्यन्तेनोक्तमर्थं सङ्गृह्याह– **अयमत्रेति** ॥ 'कुतः सङ्कोचः' इति कोऽर्थः ? किं सङ्कोच एव न कार्य इति, किं वा वैष्णवकाम्यकर्मविषयत्वेन सङ्कोचो न कार्य इति । आद्ये आह– **परेणापीति** ॥ **अशक्यत्वादिति** ॥ अनेन 'न हि कश्चित्' इत्यस्योपयोगः सूचितः । वैय्यर्थ्यमुपपादयति– **एवमपीति** ॥ अनेन 'कर्मेन्द्रियाणि' इति श्लोकद्वयस्य फलमुक्तम् । द्वितीये त्वाह– **बाधकादिति** ॥ अनेन 'नियतम्' इत्यस्योपयोगो दर्शितः ॥ ९ ॥

**सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

**गीताक्षरार्थः**– 'सहयज्ञाः' इत्यादिचतुःश्लोक्यक्षरार्थस्तु— यज्ञैः सह वर्तन्त इति सहयज्ञाः। यज्ञसाहित्यं च प्रजानां ब्राह्मणक्षत्रियवैश्यानां 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इत्यादिश्रुतिप्राप्ताग्निहोत्राद्यनुष्ठातृत्वमेव। इष्टकामान् प्रसविष्यध्वम्। प्रपूर्वात् 'षूङ् = प्राणिगर्भविमोचने' इत्यतो लृटि स्यप्रत्यये, ध्वमिडागमयोः, 'टित आत्मनेपदानाम्' इति प्राप्तैत्त्वस्य छान्दसत्त्वेनाभावे च, रूपम्। सम्पादयिष्यथेत्यर्थः। लोट्यपि स्यप्रत्ययेत्यस्य व्यत्ययो वा। 'इष्टकामधुक्' इत्यत्र काम्यन्त इति कामा भोगाः ॥ १० ॥

**देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

## भाष्यम्

**(तत्र)अत्रार्थवादमाह– सहयज्ञा इति ॥ १०-११ ॥**

भावप्रदीपिका (प.टी.)– कर्मविध्युपयोगितयोत्तरप्रघट्टकमवतारयति– **अत्रेति** ॥ स्तुतिर्निन्दा परकृतिः पुराकल्पः अर्थवादः ॥ १०-१३ ॥

भावप्रकाशिका (न.टी.)– न केवलं यज्ञार्थं सङ्गरहितं कर्म न बन्धकम्, किन्तु मोचकमेव ज्ञानद्वारेति भावेनोत्तरं प्रघट्टकमवतारयति– **तत्रेति** ॥ अस्मिन्नेवार्थेऽन्यत्र तन्त्रभागवतवाक्यमुदाहृतं भाष्यकारैः–

'कर्मणा निरपेक्षेण विष्णावेवार्पितेन च।
सम्यज्ज्ञानं भवेत् पुंसां देवतातृप्तिपूर्वकम् ॥
निर्देशाद्भगवत्येव तृप्ता स्युर्देवता यतः।
तदङ्गत्वेन निर्देशात् तेषु तृप्तिं व्रजन्ति ते।
तृप्तेषु तेषु देवेशे विष्णौ चोत्पद्यते परम्।
ज्ञानं तेनैव सम्यक् च मुच्यते कर्मपीडनात्' इत्यादि।

श्लोकः १०-१३

**मुक्तिरेव ह्युच्यते मुख्यतः,' इष्टकामधुक्' 'श्रेयः परमवाप्स्यथ' 'मुच्यन्ते सर्वकिल्बिषैः' इति वाक्येषु पुरावृत्ताख्यानात् स्तुतिनिन्दात्मकत्वाच्चार्थवादोऽयम् ॥१०-१३॥**

**प्रमेयदीपिका (ज.टी.)– 'सह यज्ञाः' इत्यादेर्न प्रकृते सङ्गतिर्दृश्यते । अत आह– अत्रेति ॥ वर्णाश्रमोचितस्य कर्मणः सर्वथा कर्तव्यत्वे । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः ॥ १०-११ ॥**

भावबोधः (र.टि.)– ॥ **स्तुतिरिति** ॥ समग्रस्यार्थवादस्य गीतायां दर्शनादिति भावः ॥ १० ॥

**भावदीपः (रा.टि.)–** 'अत्र' इत्यस्यार्थः– **'वर्ण'** इत्यादि ॥ **स्तुतिरिति** ॥ गुणिनिष्ठगुणोक्तिः **स्तुतिः** । दोषोक्तिः **निन्दा** । एककर्तृकचरितानुवादः **परकृतिः** । बहुकर्तृकचरितानुवादः **पुराकल्पः**। **'सह'** इत्यादि श्लोकचतुष्टये 'पुरोवाच प्रजापतिः' इत्येककर्तृकचरितानुवादस्य, आद्यश्लोकद्वयेन गुणकीर्तनस्य, 'इष्टान्' इत्यादिश्लोकद्वयेन बहुकर्तृकचरितानुवादस्य दोषकीर्तनस्य च सत्वेन चतुर्णामप्युक्तिः ॥ १०-११ ॥

**भावरत्नकोशः (सु.टि.)–** बहूनामर्थानां प्रकृतत्वात् 'अत्र' इति भाष्य एतच्छब्देन कस्य परामर्श इति न ज्ञायते । अत आह– **वर्णाश्रमेति** ॥ विहितकर्मणो विधिबलेनैव कर्तव्यत्वसिद्धावप्यर्थवादेन स्ववर्णाश्रमोचितं कर्म सर्वथा कर्तव्यम् अत्यवश्यमनुष्ठेयमिति ज्ञाप्यत इत्यर्थवादोपयोगः । तत्र स्तुतिरूपार्थवादेन करणेऽभ्युदयस्य, निन्दया चाकरणेऽनिष्टस्य सूचनादिति भावः । अत्रार्थवादशब्देन सङ्कोचाभावाच्चतुर्विधोऽपि विवक्षित इति भावेनोक्तम्– **स्तुतिरित्यादि** ॥ अस्ति च प्रकृते 'एष वोऽस्त्विष्टकामधुक्' इति स्तुतिः । मुक्तिरेव हि मुख्यत इष्टकामः । 'यो भुङ्क्ते स्तेन एव सः' इति निन्दा । 'पुरोवाच प्रजापतिः' इत्येककर्तृकचरितानुवादरूपपरकृतिः । 'इष्टान् भोगान् हि वो देवाः' इत्यनेककर्तृक-चरितानुवादरूपपुराकल्पश्च । 'तमाह' इत्यर्थ इति शेषः ॥ १०-१३ ॥

**भावदीपिका (श्री.टि.)–** ॥ **स्तुतिरिति** ॥ समग्रस्याप्यर्थवादस्य गीतायां दर्शनादित्थं व्याख्यातमिति द्रष्टव्यम् । 'कौण्डिन्येनेदमनुष्ठितम्' इत्यादिनामग्रहणपूर्वकवचनं परकृतिः । 'पूर्वतरैरनुष्ठितम्' इति सामान्यतो वचनं पुराकल्पः, इति तयोर्भेदः । केचित्तु एककर्तृ-

कोपाख्यानं परकृतिः। अनेककर्तृकोपाख्यानं पुराकल्प इति तयोर्भेद इत्याहुः। तथा हि। 'एष वोऽस्त्विष्टकामधुक्' 'श्रेयः परमवाप्स्यथ' 'इष्टान् भोगान्' इति स्तुतिः। 'तैर्दत्तान्' इत्यादि निन्दा। 'पुरोवाच प्रजापतिः' इति परकृतिः। 'यज्ञशिष्टाशिनः' इति पुराकल्पः कथ्यत इति द्रष्टव्यम्॥ १०-१३॥

**भावप्रकाशः (कृ.टि.)**– बहूनामर्थानां प्रकृतत्वात् कस्य परामर्श इत्यत आह– **वर्णाश्रमोचितस्येति**॥ कर्तव्यत्वस्य विधिवाक्यबोध्यत्वान्न तत्रार्थवादोपयोग इत्यत उक्तम्– **सर्वथेति**॥ स्ववर्णाश्रमोचितं कर्मावश्यं कर्तव्यमेवेति ज्ञापयितुमित्यर्थः। स्तुत्या करणे लाभस्य निन्दया चाकरणेऽनिष्टस्य वचनादिति भावः। तेनार्थवादस्य न शब्दविधयोक्तार्थप्रतिपादकत्वम्। अनुपलम्भात्। नाप्यनुमानविधया तात्पर्यभिन्नत्वात्। तत्रैव तस्य लिङ्गतया प्रामाण्यादिति निरस्तम्। अर्थवादस्य प्राशस्त्यप्रतिपाद्यावश्यकत्वज्ञापकत्वात्। **परकृतिरिति**॥ एको यत्र कर्तृत्वेनोपाख्यायते सा परकृतिः। यथा 'जनको ह वैदेह आसाञ्चक्रे' इति। अनेके यत्र कर्तृत्वेनोपाख्यायन्ते स पुराकल्पः। यथा 'त्रयो होद्गीथे कुशला बभूवुः' इति। प्रकृते च 'एष वोऽस्त्विष्टकामधुक्' इत्यादिस्तुतेः 'स्तेन एव' इत्यादिनिन्दायाः 'पुरोवाच' इति परकृतेः 'इष्टान् भोगान्' इति पुराकल्पस्य च सत्त्वात् 'स्तुतिः' इत्याद्युक्तम्॥ १०-१३॥

**इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥ १२॥**
**यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥ १३॥**
**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥ १४॥**

## भाष्यम्

**हेत्वन्तरमाह– अन्नादिति॥ यज्ञः पर्जन्यान्नत्वात् तत्कारणमुच्यते। पूर्वयज्ञविवक्षायां तस्य चक्रप्रवेशो न भवति। तद्धि आपाद्यं कर्मविधये। नतु साम्यमात्रेणेदानीं कार्यम्॥**

श्लोकः १२-१४

भावप्रदीपिका (प.टी.)– उत्तरप्रघट्टकं तत्रोदाहरति– **हेत्वन्तरमिति** ।। यज्ञोद्देश्य-पर्जन्यस्य कथं यज्ञादुद्भवः ? इत्यत आह– **यज्ञ इति** ।। पर्जन्यपदप्रापकयज्ञोऽत्र तत्कारणतयोच्यते इति किं न स्यात् ? इत्यत आह– **पूर्वेति** ।। तदा तस्य चक्रप्रवेश आसीदेवेत्यत आह–**तद्धीति** ।। तच्च कर्मविध्युपयोगितयैवापाद्यम् । न त्वितिहासरूपेण कथने कर्मविधिर्भवतीत्यर्थः । पर्जन्यकृतकर्मणा चक्रप्रवेशो जातः । अतस्त्वयाऽपि कर्म कार्यमिति कर्मविध्युपयोग इत्यत आह– **नन्विति** ।। पर्जन्यकर्मण एव चक्रप्रवर्तकत्वे नेदानीं कर्म कार्यम् । न हीष्टानिष्टप्राप्तिपरिहारसाधनतावबोधं विना कर्मतामात्रेण कर्मणि प्रवृत्तिरित्यर्थः ।।

भावप्रकाशिका (न.टी.)– तस्मिन्नेवार्थे तदुत्तरं प्रघट्टकमवतारयति– **हेत्वन्तर-मिति** ।। ननु पूर्वसिद्धदेवताया एव यज्ञोद्देश्यत्वात् कथं यज्ञात् पर्जन्यो भवति ? इत्यत आह– **यज्ञ इति** ।। आहुतिरूपत्वात् तदन्नत्वात् तत्कारणमुच्यते । न तु तज्जनकत्वा-दित्यर्थः । ननु पर्जन्यपदप्रापकतत्कृतपूर्वयज्ञविवक्षया 'यज्ञाद्भवति पर्जन्यः' इत्याद्युक्तिः किं न स्यात् ? इत्यत आह– **पूर्वेति** ।। न ह्यर्जुनादिभिः सर्वे पर्जन्यपदप्रापकयज्ञः क्रियते । अतस्तस्य चक्रप्रवेशाभावप्रसङ्गात् नासौ 'यज्ञाद्भवति पर्जन्यः' इत्यत्र विवक्षित इत्यर्थः । ननु यज्ञत्वेन पर्जन्यपदकारणतत्कृतपूर्वयज्ञसमानजातीयत्वादिदानीन्तनसर्वपुरुषानुष्ठेय-यज्ञस्य सामान्यतः, स चक्रप्रविष्टः किं न स्यात् ? इत्यत आह– **तद्धीति** ।। तच्चक्रं कर्मविध्युपयोग्येवापाद्यम् । ननु पर्जन्यपदकारणस्यार्जुनाद्यनुष्ठेययज्ञत्वसाम्यमात्रेणेदानीं चक्रमापाद्यम् । अर्जुनाद्यनुष्ठितयज्ञेन पर्जन्यादिद्वारा भूतोद्भवाभावात्, तदभावे भूत-विनाशाभावाच्च । न कर्मविध्युपयोग्येवंविधचक्रकरणमिति भावः ।।

प्रमेयदीपिका (ज.टी.)– 'अन्नात्' इत्यादेः सङ्गतिमाह– **हेत्वन्तरमिति** ।। 'अत्र' इत्यनुवर्तते । अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ । तत्रादित्यस्य पूर्वसिद्धस्य कथं 'यज्ञाद् भवति पर्जन्यः' इति यज्ञः कारणत्वेनोच्यते? इत्यत आह– **यज्ञ इति** ।। यद्यपि 'यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः' इति वक्ष्यति । तथाऽप्यत्र परित्यज्यमानं द्रव्यं गृह्यते । तस्य पर्जन्यान्नत्वात् पर्जन्योपभोग्यत्वात् । उपभुक्तेन च तस्य वलाद्युपचयाद् यज्ञः तस्य पर्जन्यस्य कारणमुच्यते ।।

श्लोकः १२-१४

**ननु पर्जन्यो देवतात्मा येन यज्ञेन पर्जन्यत्वं प्राप्तः स यज्ञो विविक्षितोऽत्रास्तु । तथासति यज्ञात् पर्जन्योद्भवो मुख्य एव सम्पत्स्यत इति । नेत्याह– पूर्वेति ।।** तस्य **पर्जन्यपदप्राप्तिहेतोः । 'यज्ञस्य' इति शेषः ।।**

**ननु तदा चक्रं प्रवृत्तमेव । अतः कथं पूर्वयज्ञस्य चक्राप्रवेशः?** इत्यत आह– **तद्धीति ।। तत् चक्रमापाद्यं ह्यत्र विविक्षितम् । नतु प्रागापादितम् । कुतः? कर्मविधये ह्येतदुच्यते । यदि विहितं कर्म करिष्यसि तर्हि** जगच्चक्रप्रवृत्तिर्भविष्यति । अन्यथा **तद्विघातः । अतस्त्वया कर्म कर्तव्यमिति । कर्मविध्युपयोगिता चापाद्यस्यैव, न** त्वापादि- **तस्य । आपाद्ये च यज्ञव्यक्तिविशेषस्य पर्जन्यपदप्राप्तिहेतोर्न प्रवेश इत्यर्थः ।।**

**प्राक् पर्जन्येन कर्म कृतम् । तेन च यज्ञादिद्वारा चक्रं प्रवृत्तम् । अतस्त्वयापि** कर्म **कर्तव्यमित्येवं प्रागापादितचक्रोक्तिरपि कर्मविध्युपयोगिनी भवतीति चेन्मैवम् । 'अतः'** इति कोऽर्थः? **त्वत्कर्मणापि चक्रप्रवृत्तिसम्भवादिति वा? कर्मत्वादिति वा?** नाद्यः । **इदानीन्तनपुरुषकर्मजेन यज्ञेन पर्जन्योत्पत्त्यसम्भवेन चक्राप्रवृत्तेः । न हि** सर्वेऽपि **कर्मकारिणः पर्जन्यत्वं प्राप्नुवन्ति । द्वितीयं दूषयति– न त्विति ।।** फलरहितेन **कर्मत्वसाम्येनेदानीं कर्म कार्यं न भवति । स्वयं क्लेशरूपत्वादिति ।।**

**भावबोधः (र.टि.)–** ।। अत्र **पर्जन्य इति ।** 'मेघचक्राभिमानी च पर्जन्य' इत्युत्तर- भाष्यानुरोधान्मेघ इत्युक्तम् । ननु 'यज्ञः पर्जन्यान्नत्वात्' इत्यादिना 'मेघचक्राभिमानी च पर्जन्यः' इत्यादिना च मुख्यमेव पर्जन्यस्य भवनं प्रतिपाद्यते । अतः कथं 'प्रकारान्तरेण' इत्युक्तम्? इत्यत आह– **प्राक्पर्जन्यस्येति ।**

**भावदीपः (रा.टि.)– ।। अत्रेत्यनुवर्तत इति ।।** तदर्थस्तु प्रागुक्त एवेति भावः ।। प्राचीनस्यापि चक्रप्रवेशमाशङ्कते– **प्राक् पर्जन्येनेति ।। स्वकीयमिति ।।** 'स्वकीयमुदकं नद्यः समुद्रे नैव जानते । वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति' इति स्मृतावुच्यत इत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। अत्रेत्यनुवर्तत इति ।** वर्णाश्रमोचितकर्मणः सर्वथा कर्तव्यत्वे जगच्चक्रप्रवर्तकत्वरूपं हेतुम् अर्थवादहेतोरन्यम् आह गीताकार इति भाष्यं योजनीय- मिति भावः । 'पर्जन्यादन्नसम्भवः । यज्ञाद् भवति पर्जन्यः' इति गीतायां पर्जन्यशब्देन

आदित्यमात्रविवक्षायां 'मेघचक्राभिमानी पर्जन्यः' इत्युत्तरभाष्यानानुगुण्यादाह– **अत्र पर्जन्य इति** ॥ 'पर्जन्यौ रसदब्देन्द्रौ' इत्यादिलौकिकप्रसिद्धया, 'स्वगोभिर्भोक्तुमारेभे पर्जन्यः काल आगतः' इत्यादिवैदिकप्रसिद्ध्या च, मेघादित्ययोः प्रतीतेरुभावपि विवक्षितावित्यर्थः । **तत्र** तथासति । 'आदित्यस्य' इत्यस्य 'यज्ञः कारणत्वेनोच्यते' इत्यनेन सम्बन्धः । पूर्वकालवर्तिन एव कारणत्वाद् यज्ञस्य पश्चात्तनस्य न कारणत्वं युक्तमिति भावः । पर्जन्यात्रत्वं, तत्कारणत्वं चोपपादयितुमाह– **यद्यपीति** ॥ अत्र गीताभाष्ययोः । **पर्जन्योपभोग्यत्वात्** यत्र यज्ञे पर्जन्यो देवता तत्र दत्तस्य **हविषः** पर्जन्योपभोग्यत्वादित्यर्थः ।

॥ **देवतात्मा** प्राप्तदेवपदः ॥ पर्जन्यत्वं पर्जन्यपदम् ॥ **अत्र** 'यज्ञाद् भवति पर्जन्यः' इत्यत्र । विवक्षायाः फलोक्तिः– **तथा सतीति** ॥ **मुख्य एवेति** ॥ पूर्वत्र तु बलाद्युपचयद्वारा गौण उद्भवः **कल्प्य इति** भावः । 'पूर्वयज्ञविवक्षायाम्' इत्यनन्तरं 'चक्रप्रवेशः' इत्यतः पूर्वं भाष्येऽपेक्षितमध्याहरति– **तस्येति** ॥ 'इति शेष' इत्यन्वयः । कृतचोद्यपरिहारस्फोरणायाध्याहृतस्य 'तस्य' इत्यस्यार्थमाह– **पर्जन्यपदप्राप्तिहेतोर्यज्ञस्येति** ॥ भाष्य एव 'तस्य' इति पाठ इति पक्षस्तु टीकाऽननुगुणः । **तदा** पर्जन्येन स्वपदप्राप्तये यदा यज्ञोऽनुष्ठीयते तदा । 'तत्' इत्यस्यार्थः– **चक्रमिति** ॥ जगच्चक्रमित्यर्थः । 'हि'शब्दं व्यत्यस्य संयोजयन्नपेक्षितं पूरयति– **आपाद्यं ह्यत्र विवक्षितमिति** ॥ आपादितं पर्जन्यानुष्ठितम् ।

'कर्मविधये' इत्येतद् 'हि'शब्दमनुवर्तयन्नवतारयति– **कुत इति** ॥ 'उच्यते' इति शेषपूरणम् । उपपादयति– **यदीति** ॥ **अन्यथा** विहितकर्माकरणे । **तद्विघातः** जगच्चक्रप्रवृत्तिविघातः । 'त्वया कृतो भविष्यति' इति शेषः । **त्वया** अर्जुनोपलक्षितेनाधिकारिणा । **कर्मविधिः** कर्मविधानम् । **आपाद्ये** अनुष्ठेये चक्रे । 'यज्ञव्यक्तिविशेषस्य' इत्येतद्विवरणं– **पर्जन्येति** ॥ कर्मविधानानुपयोगित्वान्न चक्रे प्रवेश इत्युक्तोपयोगं शङ्कते– **प्राक् पर्जन्येनेति** ॥ 'यज्ञादिद्वारा' इत्यत्र आदिशब्देन पर्जन्यादिग्रहणम् । **पर्जन्योत्पत्त्यसम्भवेनेति** ॥ कार्यत्वस्य पश्चात्तनत्वरूपत्वादिति भावः । पर्जन्योद्भवो नाम पर्जन्यत्वप्राप्तिः । स च प्रकृते न सम्भवतीत्याह– **न हीति** ॥ द्वितीयं 'कर्मत्वात्' इति द्वितीयपक्षम् । मात्रपदतात्पर्यमाह– **फलेति** ॥ **क्लेशरूपत्वादिति** ॥ फलरहितत्वादेवेति भावः ॥

**भावदीपिका (श्री.टि.)**– ॥ **अत्रेतीति॥** वर्णाश्रमोचितकर्मणः कर्तव्यत्व इत्यर्थः । 'मेघचक्राभिमानी च पर्जन्यः' इत्युत्तरभाष्यानुसारेण 'मेघः' इत्युक्तम् ॥ **इति वक्ष्यतीति** ॥ अनुपदमेवेति शेषः । तथा च परित्यागरूपक्रियायाः पर्जन्योपभोग्यत्वमयुक्तमिति भावः । 'पर्जन्येनाद्यते' इति पर्जन्यान्नमिति व्युत्पत्तिमभिप्रेत्य व्याचष्टे– **पर्जन्योपभोग्यत्वादिति** ॥ ननु पर्जन्योपभोग्यत्वेऽपि कथं पर्जन्यकारणत्वम्? इत्यत आह– **उपभुक्तेन चेति** ॥ तस्य पर्जन्यस्य, 'यद्बलाद्' इत्यस्योपचयादित्यर्थः । **पर्जन्यत्वम्** पर्जन्यपदम् ॥ **स यज्ञ इति** ॥ पर्जन्यपदप्राप्तिहेतुभूतो यज्ञ इत्यर्थः । **चक्रमापाद्यमिति** ॥ 'अन्नाद् भवन्ति' इत्याद्युक्तक्रमेण सम्पाद्यमित्यर्थः । आपाद्यस्यैवेति ॥ 'यज्ञाद् भवति' इत्यापाद्यचक्रस्यैवेत्यर्थः । मूलं योजयति– **आपाद्ये चेति ॥ सम्पाद्ये,** 'चक्रे' इति शेषः । **अत इति कोऽर्थ इति** ॥ 'अतस्त्वयाऽपि कर्म कर्तव्यम्' इत्यत्र हेतुत्वेनोक्तस्य 'अतःशब्दस्य कोऽर्थः' इत्यर्थः ॥ **चक्रप्रवृत्तीति** ॥ त्वयाऽपि कर्म कृतं चेत् तेनापि यज्ञादिद्वारा चक्रप्रवृत्तिर्भविष्यतीति भावः ॥ **कर्मत्वादिति** ॥ चक्रप्रवृत्तिरूपफलं भविष्यतीति बुद्ध्या कर्म न कर्तव्यम् । किं नाम? पर्जन्यकृतकर्मणा त्वया क्रियमाणकर्मणः कर्मत्वेन साम्यात् त्वयाऽपि कर्म कर्तव्यमित्यर्थः ॥ **पर्जन्योत्पत्त्यसम्भवेनेति** ॥ अत्र हि पर्जन्यशब्देन देवताऽभिप्रेता । तथैव पूर्वं शङ्कितत्वात् । तथा चेदानीन्तनेनास्मदादिकर्मणा देवतोत्पत्त्यसम्भवेन 'यज्ञाद् भवति पर्जन्यः' इत्यस्यायोगाच्चक्राप्रवृत्तिरित्यर्थः ।

ननु न चक्राप्रवृत्तिः । यथा पर्जन्यकृतयज्ञेन पर्जन्यस्य पर्जन्यत्वं जातम्, एवस्मत्कृतयज्ञेनाप्यस्माकं पर्जन्यत्वं भविष्यति । तथा च 'यज्ञाद् भवति पर्जन्यः' इत्यस्य सम्भवेन युक्ता चक्रप्रवृत्तिरिति चेत्, तत्राऽह– **न हीति** ॥ **कर्मकारिणः** कर्मकर्तारः । तस्य नियताधिकारिसाध्यत्वादिति भावः । **कर्मत्वसामान्येन** कर्मत्वसाम्येन ।

**भावप्रकाशः (कृ.टि.)**– पर्जन्यशब्देनादित्यमात्रविवक्षयां 'मेघचक्राभिमानी च पर्जन्यः' इत्युत्तरभाष्यानानुगुण्यादाह– **अत्र पर्जन्य इति** ॥ **वक्ष्यतीति** ॥ अत्रैवाध्यायेऽग्रिमग्रन्थ इति शेषः । ननु यज्ञस्य कथं पर्जन्यान्नत्वं? चर्व्यत्वाभावादित्यत आह– **पर्जन्योपभोग्यत्वादिति** ॥ ननु पर्जन्यस्य यज्ञादुत्पत्त्यभावात् कथं तयोर्जन्यजनकता? इत्यत आह– **उपभुक्तेन चेति** ॥

श्लोकः १२-१४

## भाष्यम्

**मेघचक्राभिमानी च पर्जन्यः । तच्च यज्ञाद् भवति ।**

'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' (मनु.स्मृ.३.७६)

**इति स्मृतेः । उभयवचनादादित्यात् समुद्राच्चाविरोधः । अतश्च यज्ञात् पर्जन्योद्भवः सम्भवति । यज्ञः देवतामुद्दिश्य द्रव्यपरित्यागः । कर्म इतरक्रिया ॥ १४ ॥**

भावप्रदीपिका (प.टी.)– प्रकारान्तरेण यज्ञात् पर्जन्योद्भवमाह– **मेघेति** ॥ 'स्वकीयमुदकं नद्यः' इति वचनात् समुद्राद्वृष्टिर्जायते । अतः कथमादित्यात् ? इत्यत आह– **उभयेति** ॥ मेघचक्रस्य यज्ञोद्भूतत्वे किं प्रकृते ? इत्यत आह– **अतश्चेति** ॥ अभिमानिनाऽभिमन्यमानस्येत्यर्थः । कर्मैव यज्ञः कथं तदुद्भवः? इत्यत आह– **यज्ञ इति** ॥ १४ ॥

भावप्रकाशिका (न.टी.)– प्रकारान्तरेणापि यज्ञात् पर्जन्योद्भवमाह– **मेघेति** ॥ मेघचक्राभिमान्यादित्यः, पर्जन्यनामा । परसस्यादिजननात्, तेनाभिमन्यमानत्वात् तदपि पर्जन्याख्यम् । तत्र यज्ञाराधितादित्यात् भवतीति यज्ञात् पर्जन्यो भवतीत्यर्थः ।

तत्र प्रमाणमाह– **अग्नाविति** ॥ **सम्यगिति** ॥ यथाशास्त्रं प्रक्षिप्ताहुतिरादित्यमुपतिष्ठत इत्यर्थः । क्वचित् समुद्रस्य वृष्टिकारणत्वोक्तावप्यविरोधमाह– **उभयवचनादिति** ॥ एवमादित्यवचनो मेघचक्रवचनो वा पर्जन्यशब्दः । उभयथाऽपि यज्ञात् पर्जन्योद्भवः सम्भवतीत्युक्तमुपसंहरति– **अतश्चेति** ॥ ननु कर्मैव यज्ञः, स कथं कर्मसमुद्भवः ? इत्यत आह– **यज्ञ इति** ॥ १४ ॥

प्रमेयदीपिका (ज.टी.)– प्रकारान्तरेणापि 'यज्ञाद्भवति पर्जन्यः' इत्येतद् घटयितुमाह– **मेघेति** ॥ चक्रं समूहः । ततः किम्? इत्यत आह– **तच्चेति** ॥ मेघचक्रम् । कुतः? इत्यत आह– **अग्नाविति** ॥

ननु 'स्वकीयमुदकं नद्यः' इति समुद्राद् वृष्टिरुच्यते । अत आदित्याद् वृष्ट्यङ्गीकारे तद्विरोधः स्यादित्यत आह– **उभयेति** ।। 'वृष्ट्यङ्गीकारात्' इति शेषः । वार्षुका मेघा इह वृष्टिशब्देनोच्यन्ते । अतोऽपि किम्? इत्यत आह– **अतश्चेति** ।। प्राक् पर्जन्यस्य भवनं गौणमङ्गीकृत्य व्याख्यातम् । इदानीं त्वभिमन्यमानगतस्य भवनस्य अभिमानिनि लक्षणामाश्रित्येति भेदः । यद्वाऽभिमानिगतस्य पर्जन्यशब्दस्याभिमन्यमाने लक्षणामाश्रित्य द्वितीयं व्याख्यानम् ।।

तात्पर्यनिर्णये तु मेघसन्ततौ पर्जन्यशब्दो यौगिकोऽङ्गीकृतः ।।

ननु यज्ञः कर्मात्मकः । तत्कथमुच्यते 'यज्ञः कर्मसमुद्भवः' इति? तत्राह– **यज्ञ इति** ।। इतरक्रिया यज्ञाङ्गभूता । अपूर्वाङ्गीकारे रूढित्यागेन लक्षणाश्रयणं स्यात् ।। १४ ।।

**भावबोधः (र.टि.)**– ।। **गौणमिति** ।। कार्याभिवृद्ध्योरुपचयाख्यगुणयोगात् भवति अभिवृद्धबलादिर्भवतीति भवनं गौणमङ्गीकृत्य व्याख्यातमित्यर्थः । **अभिमन्यमानगतस्येति** ।। अभिमानिगतभवनकर्तृत्वप्रतिपादकस्य भवतीत्यस्य अभिमन्यमानभवनकर्तृत्वे लक्षणामाश्रित्याभिमन्यमानगतस्य भवनस्याभिमानिन्युक्तिरिति व्याख्यायत इत्यर्थः । **अपूर्वाङ्गीकार इति** ।। यज्ञशब्देनेत्यर्थः । कर्मणः अपूर्वस्य समुद्भवो यस्मादिति विग्रहाश्रयेणेत्यर्थः ।। १४ ।।

**भावदीपः (रा.टि.)**– ।। **इहेति** ।। स्मृतावध्याहृतवाक्ये चेत्यर्थः ।। पक्षद्वयेऽपि पर्जन्योद्भवस्यामुख्यत्वाविशेषात् 'प्रकारान्तरेणापि' इति कथमुक्तम्? इत्यत आह– **प्राक् पर्जन्यस्येति** ।। इत्यादि ग्रन्थ इत्यर्थः ।। **गौणमिति** ।। कार्यस्यैवोपचयाख्यगुणयोगोक्तेर्गौणमित्यर्थः ।। **तात्पर्येति** ।। गीतातात्पर्यनिर्णये तु– 'जननात् परसस्यादेः पर्जन्यो मेघसन्ततिः' इति यौगिकोऽङ्गीकृतः । अतो नामुख्यवृत्तिर्दोष इति भावः ।। ननु यज्ञजन्यपुण्याख्यमपूर्वं कर्मपदेन गृह्यताम् । 'कर्मणः=अपूर्वस्य समुद्भवो यस्मात्' इति वा, यज्ञशब्देन वाऽपूर्वग्रहणे 'कर्मणा समुद्भवो यस्य' इति विग्रहे 'यज्ञः कर्मसमुद्भवः' इति सङ्गच्छत इत्यत आह– **अपूर्वेति** ।। भाष्ये बुद्धिर्ज्ञानम् इत्यस्य 'बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यम्' (१०.४) इत्यादिना 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' (१०.५) इत्यन्तेन दशमे सर्वस्य तदधीनत्वस्य वक्ष्यमाणत्वादित्यर्थः ।। १४ ।।

श्लोकः १२-१४

**भावरत्नकोशः (सु.टि.)– ॥ प्रकारान्तरेणेति ॥** 'यज्ञः पर्जन्यात्रत्वात्' इत्युक्त्यपेक्षया अन्यः प्रकारः प्रकारान्तरम् । तेनेत्यर्थः । चक्रशब्दस्य प्रकृतजगच्चक्रपरत्वे तस्य मेघमात्र-सम्बन्धित्वानुपपत्तिरित्यतोऽत्र प्रसिद्धार्थत्वं विवक्षितमिति भावेन आह– **चक्रं समूह इति ।** यद्यपि 'चक्रो गणे चक्रवाके' इति समूहार्थश्चक्रशब्दो विश्वप्रकाशे पुंल्लिङ्गोऽभिहितः, तथाऽपि 'पटलं पेटलं चक्रं चक्रवालं च मण्डलम्' इत्यारभ्य 'निकरनिकायनिवहनिविडव्रजविसर-पुञ्जसमूहसञ्चयाः' इति हलायुधादौ नपुंसकत्वमभिहितमित्यत्र नपुंसकतया निर्देशः । अत एव केशवः 'पुंनपुंसकयोश्चक्रशब्दः' इत्यभ्यधत्त **॥ कुत इति ॥** मेघचक्रं यज्ञाद् भवतीत्येतत् कुतः प्रमाणादवगम्यते ? अप्रत्यक्षत्वादिति भावः । **सम्यक्** यथाशास्त्रम् । अग्नौ **प्रास्ता** प्रक्षिप्ता आहुतिः आदित्यम् **उपतिष्ठति** प्राप्नोतीति प्रमाणवचनार्थः ।

इदमुक्तं भवति । 'यज्ञाद् भवति पर्जन्यः' इत्यत्र तु पर्जन्यशब्देन मेघचक्राभिमान्यादित्यो ग्राह्यः । ततस्तदभिमन्यमानं मेघचक्रमपि तच्छब्दार्थः । तच्च यज्ञाराधिताद् आदित्याद् भवतीति यज्ञात् पर्जन्योद्भव आदित्यद्वारक इति 'यज्ञाद् भवति पर्जन्यः' इति यज्ञपर्जन्ययोः कार्य-कारणभाववचनमुपपद्यत इति । इदं च प्राचीनटीकायां स्पष्टमुक्तम् । **स्वकीयमिति ॥**

'स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति'

इति स्मृतौ नादेयानामपि जलानां समुद्रे मेलनेन समुद्रत्वविवक्षया तत्रत्यं जलं 'मेघे कृत्वा प्रवर्षती'त्युक्तौ समुद्रादेव वृष्टिरुक्ताऽसीदिति भावः । **इति शेष इति ॥** 'आदित्यात् समुद्राच्चेत्यनन्तरम्' इति शेषः ।

ननु 'आदित्याज्जायते वृष्टिः' इत्यत्र भावार्थक्तिन्प्रत्ययान्तवृष्टिशब्देन वर्षणक्रियाऽभिधाने वृष्टेरादित्यद्वारा यज्ञजन्यत्वं प्रतीयते । तत् कथमिदं वचनं मेघचक्रस्य यज्ञजन्यत्वे मानं भवेत् ? इत्यत आह– **वर्षुका मेघा इहेति ॥** क्रियावाचिनाऽपि वृष्टिशब्देन तत्कर्तारो मेघा लक्षणया प्रतिपाद्यन्ते इत्यभिसन्धाय लक्षणायां शक्यसम्बन्धं प्रदर्शयितुं वर्षुका इत्युक्तम् । यद्वा, वृष्यतेऽनेन मेघचक्रेणेति 'अकर्तरि च कारके' इति क्तिन्प्रत्यये कर्तरि करणत्वोपचाराद् वृष्टिशब्दो मेघचक्रवाचक इत्यर्थः । 'वार्षुकाः' इति पाठे तु 'लष-पत-पद-स्था-भू-वृषहन-

कम-गम-शॄभ्य उकञ्' इति सूत्रेण 'वृष सेचने' इत्यतस्ताच्छीलिकउकञ्प्रत्यये अणन्तत्वेन 'अत उपधायाः' इति वृद्धौ 'वर्षशीला इत्यर्थः । **अतोऽपीति ॥** इयताऽपि मेघचक्रस्य यज्ञोद्भूतत्वमुक्तम्, अतोऽपि किं प्रकृत इत्यर्थः ।

ननु 'यज्ञः पर्जन्यान्नत्वात्' इत्यादिना 'मेघचक्राभिमानी च पर्जन्यः' इत्यादिना चामुख्य-मेव पर्जन्यस्य भवनं व्याख्यातं भाष्ये । तत्र कथं प्रकारान्तरेणेत्युक्तम्? इत्यत आह– **प्राक् पर्जन्यस्येति ॥ भवनं गौणमिति ॥** भवनकर्तृवाचकं 'भवति' इति पदं गौण्या वृत्त्या प्रवृत्तमित्यर्थः । बीजोद्भूतेऽङ्कुर उपचय इव यज्ञोद्भूते आदित्ये बलोपचय एव समानो गुण इति भावः । **अभिमन्यमानगतस्येति ॥** पर्जन्याभिमन्यमानं मेघचक्रम् । तद्गतस्य भवनस्य तदभि-मानिनि पर्जन्यशब्दितादित्ये लक्षणया व्यवहारः । एवं सति 'आदित्यस्य पूर्वसिद्धस्य कथं यज्ञः कारणत्वेनोच्यते' इति चोद्यमनवकाशम् । लक्षणायां च शक्यसम्बन्धं प्रदर्शयितुं भाष्ये 'मेघचक्राभिमानी पर्जन्यः' इत्युक्तम् । गौणीतो लक्षणा च जघन्येत्यन्यत्र व्यवस्थापितत्वात् 'प्रकारान्तरेणापि' इति गमनिकायामुक्तमिति भावः ।

ननु लक्षणा नाम शक्यसम्बन्धिनी वृत्तिः शब्दधर्मः । तथा चोक्तं भगवत्पादैः 'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः' इति । अत्र च भवनस्याभिमानिनि लक्षणामाश्रित्ये-त्युच्यते। भवनं च क्रियैवेति कथं तस्य लक्षणावृत्तिः ? न च 'भवति' इत्यस्य 'प्रसीदति' इत्यर्थाङ्गीकारे धातोर्लक्षणेत्येवमुक्तिरिति वाच्यम् । 'मेघचक्राभिमानी पर्जन्यः । तच्च यज्ञाद् भवति' इति भाष्याक्षरास्वारस्यापत्तेः । प्रकृतानुपयुक्तश्चेत्यरुचेराह– **यद्वेति ॥ अभिमानिगतस्य** अभिमानिवाचकस्य । तथा च आदित्यवाचकस्य पर्जन्यशब्दस्य तदभिमन्यमाने मेघचक्रे लक्षणेत्यङ्गीकारान्नोक्तचोद्यावकाशः । 'अभिमानिना अभिमन्यमानस्य' इति प्राचीनटीकाऽपि लक्षणाभिप्रायेणैव प्रवृत्तेति भावः । अनेन 'अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ' इत्युक्तेरुपयोगः, 'यज्ञः पर्जन्यान्नत्वात्' इत्यत्र 'भवति', 'भवति इव' इति भवतिशब्दे गौणी वृत्तिराश्रिता । 'मेघचक्राभिमानी' इत्यादिभाष्ये तु पर्जन्यशब्दे लक्षणावृत्तिराश्रितेति भेदश्च प्रदर्शितो भवति । 'गौणं भवनम्' इति, 'पर्जन्यशब्दलक्षणामाश्रित्य' इति च स्पष्टमेव विभावितत्वात् ।

श्लोकः १२-१४

ननु यज्ञशब्दस्यापूर्वार्थत्वं परोक्तं प्रत्याख्यास्यत्याचार्यः । तत्र युक्तम् । पर्जन्यशब्दस्य युष्माभिरपि लक्षणाङ्गीकारेण विशेषाभावाद् इत्यतो विशेषं प्रदर्शयति– **तात्पर्येति** ॥ गीतातात्पर्यनिर्णय इत्यर्थः । प्रस्तुतत्वाद् 'मेघचक्रे' इति वक्तव्ये 'सन्ततौ' इति वदन् 'जननात् परसस्यादेः पर्जन्यो मेघसन्ततिः' इति तत्रत्यवचनं स्मारयति । योगवृत्तिमङ्गीकृत्यैव लाक्षणिकत्वाभ्युपगमात् नामुख्यार्थत्वाङ्गीकाराविशेष इति भावः । एतेनैव निर्णयविरोधोऽपि परिहृतः । रूढ्यभावस्योभयत्र अभिप्रेततया योगलक्षणाऽन्यतरनिराकरणस्य क्वाप्यनभिसंहितत्वादिति । **कर्मात्मक इति** ॥ 'त्रिकर्मकृत्' इत्यादौ यज्ञादेः कर्मशब्दार्थत्वादिति भावः । **यज्ञाङ्गभूता** पूर्वोत्तराङ्गकल्पनानुष्ठानरूपा ।

ननु 'यज्ञः अपूर्वम्, स च कर्मसमुद्भवः । ऋत्विग्यजमानव्यापारः कर्म तत् समुद्भवः जनकं यस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः' इति सङ्करीत्या व्याख्याने 'यज्ञः कर्मात्मा । तत्कथमुच्यते यज्ञः कर्मसमुद्भव इति' इति कृतचोद्यानवकाश इत्यत आह– **अपूर्वाङ्गीकार इति** ॥ 'यज्ञशब्देन अपूर्वमिह ग्राह्य'मिति परव्याख्याने देवतोद्देश्यकद्रव्यपरित्यागलक्षणलोकप्रसिद्धमुख्यार्थत्यागपूर्वकं तज्जन्यापूर्वे लक्षणाश्रयणमापद्येत । न च मुख्ये सम्भवति लाक्षणिकाश्रयणं न्याय्यमित्यर्थः । तदिदं दूषणं भाष्यकाराभिप्रेतमिति दर्शयितुं 'रूढित्यागेन' इत्युक्तम् ॥१४॥

**गीताक्षरार्थस्तु**– कथमिष्टानां दोग्धा यज्ञः स्यात्? इत्यत उक्तम्– **देवानिति** ॥ **अनेन** यज्ञेन । 'स एष यज्ञः' इत्यादावेकवचननिर्देशादत्राप्येकवचनम् । **देवान्** इन्द्रादीन् भावयत हविरादिभिस्तर्पयत । **परं श्रेयः** मोक्षम् । **दत्तान्** तदनुग्रहप्राप्तान् अन्नादीन् । तेभ्यो देवेभ्यो हवीरूपेण अप्रदाय । **स्तेनः** चोरः । स्वाम्यननुज्ञया आत्मीयत्वापादनादिति भावः । **सर्वकिल्बिषैः** संसारबीजभूतैः पापैः । आत्मकारणात् स्वात्मार्थमेव ये पचन्ति तद्भोजनं पापहेतुरेव इत्युवाच प्रजापतिरिति इतिशब्दोऽध्याहार्य इति ॥ ११-१३ ॥

जगच्चक्रप्रवर्तनार्थत्वाच्च कर्म कर्तव्यमिति 'अन्नात्' इत्यादित्रिश्लोक्योच्यते । भुक्ताल्लोहितरेतःपरिणताद् अन्नाद् भूतानि सशरीरा जीवा भवन्ति । पर्जन्याद् आदित्याद् वृष्टिद्वारा अन्नस्य सम्भवः उत्पत्तिः । पर्जन्यः मेघचक्राभिमान्यादित्यो यज्ञाद् भवति । यज्ञे त्यज्यमानाद्धविषः यजमानदत्ताद् आदित्यस्य बलोपचयाद् उपचारेण 'यज्ञाद् भवति पर्जन्यः' इत्युच्यते । यज्ञः देवतोद्देशेन द्रव्यपरित्यागात्मा ज्योतिष्टोमादिः । कर्म यज्ञाङ्गभूतयजमानादिक्रिया समुद्भवः उत्पादकं यस्य स तथा ॥ १४ ॥

**भावदीपिका (श्री.टि.)**– मात्रशब्दार्थमाह– **फलरहितेनेति** ॥ चक्रप्रवृत्त्याख्यफलरहितेनेत्यर्थः ॥ **चक्रं समूह इति** ॥ 'चक्रं च राष्ट्रं सङ्घश्च' इत्यभिधानादिति भावः ॥ **स्वकीयमिति** ॥

'स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत् पृथग् ज्ञात्वा मेघे कृत्वा प्रवर्षति ॥'

इति स्मृतौ वायुः समुद्रगतं तत्तन्नद्युदकं पृथक् कृत्वा समुद्रात् सङ्गृह्य मेघे कृत्वा पश्चात् तत्तन्नदीसमीपदेशेषु प्रवर्षतीति समुद्रान्नद्युदकग्रहणेन वृष्ट्युक्तौ परम्परया समुद्रादेवोक्ता भवतीत्याशयः । **शेष इति** ॥ अयं च शेषः 'आदित्यात् समुद्राच्च' इत्यनन्तरं द्रष्टव्यः । ननु 'अग्नौ' इति स्मृतौ परम्परया यज्ञाद् वृष्ट्युत्पत्तिरुच्यते । न मेघचक्रस्येत्यत आह– **वार्षुका इति** ॥ वर्षणशीला इत्यर्थः । 'लष-पत-पद-स्था-भू-वृषहन-कम-गम-शृभ्य उकञ्' इति सूत्रेण लषादिधातुभ्यस्ताच्छील्ये उकञ्प्रत्ययविधानाद् अत्रापि 'वृष सेचने' अस्मात् ताच्छील्ये उकञ्प्रत्यये, गुणे तस्य चाण्परत्वे, ञित्त्वादादिवृद्धौ' 'वार्ष् उक वार्षुक' इति रूपं द्रष्टव्यम् । वार्षिका इत्यपि क्वचित् पाठः । तत्र वर्षासु भवा वार्षिकाः वर्षाकालीना इत्यर्थः । कालवाचिनो वर्षाशब्दात् 'कालाट्ठञ्' इति ठञ्प्रत्यये, ठस्येकादेशे ञित्त्वादादिवृद्धौ भस्य षकारस्थस्य आकारस्य लोपे, 'वार्षिक' इति रूपं द्रष्टव्यम् । अत्र यद्यपि मेघचक्रं पूर्वमपि वृत्तमेव । तथाऽपि वार्षुकत्वाख्यविशेषणोत्पत्त्या विशिष्टोत्पत्तिर्द्रष्टव्या ।

ननु 'यज्ञः पर्जन्यात्रत्वात्' इत्यादिना 'मेघचक्राभिमानी च पर्जन्यः' इत्यादिना च मुख्यमेव पर्जन्यस्य यज्ञाद् भवनं प्रतिपाद्यते । अतः कथं 'प्रकारान्तरेण' इत्युक्तम्? इत्यतोऽमुख्यवृत्तिप्रभेदरूपामेव गौणीं लक्षणां चाभिप्रेत्य 'प्रकारान्तरेण' इत्युक्तमित्याशयेनाऽह– **प्राक् पर्जन्यस्येति** ॥ **गौणमिति** ॥ उत्पन्नाभिवृद्धयोरुपचयाख्यगुणयोगाद् अभिवृद्धबलादिर्भवतीति भवनं गौणमङ्गीकृत्य व्याख्यातमित्यर्थः । **अभिमन्यमानं** मेघचक्रम्, **तद्गतस्य** तत्र मुख्यतया विद्यमानस्य **भवनस्य** भवनप्रतिपादकस्य भवतीति शब्दस्य । **अभिमानिनि** पर्जन्यशब्दवाच्यादित्ये ।

ननु 'अभिमानिव्यपदेशस्तु' इत्यत्राभिमन्यमाननिष्ठशब्दानाम् अभिमानिन्येव मुख्यतायाः, अभिमानिनिष्ठशब्दानां चाभिमन्यमाने लक्षणाया एवोक्तत्वेन कथमिदं व्याख्यानम्?

श्लोकः १२-१४
इत्यस्वरसादाह– **यद्वेति** ॥ अभिमन्यमानगतशब्दानाम् अभिमानिनि मुख्यत्वं च 'अभिमानि-व्यपदेशस्तु विशेषानुगतिभ्याम्' इति सूत्रे–

'बालरूढिं विनैवात्र विद्वद्रूढिसमाश्रयात् ।
तत्तन्नामान एवैते तत्तद्वस्त्वभिमानः ॥
सन्ति..............................।'

इत्याद्यनुव्याख्याने च सुस्पष्टमुक्तमित्यवगन्तव्यम् । नन्वेवं पर्जन्यशब्दस्याभिमन्यमाने मेघचक्रे लक्षणाऽङ्गीकारे 'जननात् परसस्यादेः पर्जन्यो मेघसन्ततिः' इति तात्पर्ये 'परं जनयतीति पर्जन्यः' इति कथं योगरूपमुख्यवृत्त्या पर्जन्यशब्दो मेघसन्ततौ व्याख्यातः? इत्यतस्तदपि व्याख्यानान्तरम्, । अतो न तद्विरोध इत्याशयेनाऽह– **तात्पर्यनिर्णये त्विति** ॥ **तत् कथमिति** ॥ आत्माश्रयादिति भावः ॥ **यज्ञाङ्गभूतेति** ॥ पुरोडाशादिकृतिरूपेत्यर्थः । ननु यज्ञशब्देन लक्षणयाऽपूर्वमेव गृह्यते । कर्मशब्देन च देवतामुद्दिश्य द्रव्यपरित्यागरूपो यज्ञः । तथा च 'कर्म इतरक्रिया' इति व्याख्यानं युक्तमित्यत आह– **अपूर्वाङ्गीकार इति** ॥ 'यज्ञशब्देन' इति शेषः । **रूढित्यागेनेति** ॥ देवतामुद्दिश्य द्रव्यपरित्यागे यज्ञशब्दस्य रूढत्वात् तत्परित्यागापत्तिरिति भावः ॥ **लक्षणाऽऽश्रयणं स्यादिति** ॥ मुख्यवृत्तिपरित्यागेनामुख्यवृत्त्या-श्रयणं च लज्जाकरमिति भावः ॥ १४ ॥

**भावप्रकाशः (कृ.टि.)**– 'एवं प्रवर्तितं चक्र'मिति चक्रशब्दस्य परम्पराविशेषवाचित्वे तस्य मेघचक्रत्वानुपपत्तिरित्यत आह– **चक्रं समूह इति** ॥ **स्वकीयमुदकमिति** ॥

'स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत्पृथक् ज्ञात्वा मेघे कृत्वा प्रवर्षति'

इति वाक्येनेत्यर्थः । नन्वत्र वृष्टेरादित्यद्वारा यज्ञजन्यत्वमुक्तं तत्कथमिदं मेघचक्रस्य यज्ञजन्यत्वे मानम्? इत्यत आह– **वर्षुका मेघा इति** ॥ शक्यसम्बन्धदर्शनाय 'वर्षुका' इत्युक्तम् । वर्षणशीला इत्यर्थः । 'लषपतपदस्थाभूवृष' इति वर्षतेरुकञ् । वार्षुका इति पाठे तु वर्षकशब्दात् स्वार्थिकोऽणिति बोध्यम् । ननु 'यज्ञः पर्जन्यान्नत्वात्' इत्यादिना 'मेघचक्राभि-मानी च' इत्यादिना च मुख्यमेव पर्जन्यस्य भवनं प्रतिपाद्यते ।अतः कथं प्रकारान्तरेण? इत्युक्तमित्यत आह– **प्रागिति** ॥

**गौणमिति ॥** अर्थनिष्ठा लक्षणे(गौणी)ति मतेनैवमुक्तम् ॥ वस्तुतो भवनवाचकं भवतीति पदं गौणमित्यर्थः । यज्ञजन्यपुरुष आदित्ये च बलाद्युपचयलक्षणगुणसाम्यादिति भावः । अर्थनिष्ठा लक्षणेति मतेन भवनस्येत्युक्तम् । वस्तुतस्तु भवतीति पदस्येत्यर्थः । शक्यसम्बन्ध-प्रदर्शनायोक्तम्– **अभिमन्यमानगतस्येति ॥ अभिमानिनीति च ॥** अत्र गौणीपक्षे पर्जन्यो यज्ञजन्यसदृश इत्यर्थबोधः, लक्षणायां तु यज्ञजन्याभिमानीत्यर्थबोध इति विवेकः । ननु भवतिपदस्य लक्षणा चेत्तर्हि भवदभिमानी च पर्जन्य इति वाच्यम् । शक्यतावच्छेदकपुरस्कारेण शक्यसम्बन्धप्रदर्शनस्य तान्त्रिकसम्मतेः । 'मेघचक्राभिमानी च पर्जन्यः' इति मेघचक्रपर्जन्ययोः सम्बन्धप्रदर्शनं त्वयुक्तमित्यरुचेराह– **यद्वेति ॥** अनेनात्र पर्जन्यो मेघ इत्युक्तं विवृतम् । ननु पर्जन्यशब्दस्य लाक्षणिकत्वे तात्पर्यनिर्णयविरोधः । तत्र तस्य योगेन मुख्यत्वस्वीकारादित्यत आह– **तात्पर्यनिर्णये त्विति ॥** रूढ्यभाव एवोभयत्राभिप्रेतः । योगलक्षणान्यतरनिराकरणं तु न क्वाप्यभिप्रेतमिति न विरोध इति भावः । **अपूर्वाङ्गीकार इति ॥** यज्ञशब्देनेति शेषः ॥१४॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

## भाष्यम्

**कर्म ब्रह्मणो जायते । 'एष ह्येवैनं साधु कर्म कारयति'** (कौ.उ.३-८) **'बुद्धिर्ज्ञानम्'** (१०.४) **इत्यादिभ्यः ॥**

भावप्रदीपिका (प.टी.)– 'कर्म ब्रह्मोद्भवम्' इत्येतत् 'कर्म वेदेन प्रकाश्यते इति' इत्यपव्याख्यां दूषयितुं व्याचष्टे– **कर्मेति ॥**

भावप्रकाशिका (न.टी.)– 'कर्म ब्रह्मोद्भवम्' इत्यत्र ब्रह्मशब्दोक्तो वेद उद्भवशब्दोक्तः प्रकाश इत्येतामपव्याख्यामपाकर्तुं तावद्ब्रह्मशब्दोक्तं परब्रह्म, उद्भवशब्दोक्तं जन्मेति सप्रमाणकं सम्यगेव व्याचष्टे– **कर्मेति ॥**

प्रमेयदीपिका (ज.टी.)– 'कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यम्' इति परेषां व्याख्यान-मसदिति भावेनाऽऽह– **कर्मेति ॥** ब्रह्मणः परब्रह्मणः । कुतः? इत्यत आह– **एष हीति ॥**

श्लोकः १५

**भावरत्नकोशः** (सु.टि.)– 'कर्म ब्रह्मोद्भवम्' इत्यत्र 'ब्रह्म वेदः स उद्भवः प्रकाशको यस्य तद् ब्रह्मोद्भवम्' इति परेषां भाष्यं सप्रतीकमर्थतोऽनुवदति– **कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यमितीति** ।। ब्रह्मशब्देन वेदग्रहणे किं परेणापराद्धम् ? इत्यतः 'मुख्यस्य निर्विशेषेण शब्दः' इति शास्त्रं मनसि निधाय तदर्थमाह– **ब्रह्मणः परब्रह्मण इति** ।। **कुत इति** ।। 'कर्म ब्रह्मणो जायते' इत्येतत् कुतः प्रमाणाज्ज्ञातव्यमित्यर्थः । एषः परमात्मा । 'बुद्धिर्ज्ञानम्' इति गीतावचन एव 'भवन्ति भावा भूतानाम्' इति भावशब्देन बुद्ध्यादिधर्माणां जीवनिर्वर्त्यसर्व-कर्मणां च 'मत्त एव' इति भगवदेकायत्तत्वश्रवणादिति भाष्यार्थः ।

## भाष्यम्

**नच मुख्ये सम्भाव्यमाने पारम्पर्येणौपचारिकं कल्प्यम् । नच जडानां स्वतः प्रवृत्तिस्सम्भवति । 'एतस्य वाऽक्षरस्य'** (बृ.उ.५.८.९) **इति सर्व-नियमनश्रुतेश्च । 'द्रव्यं कर्म च कालश्च'** ( भाग.२.१०.१२) **इत्यादेश्च ।।**

भावप्रदीपिका (प.टी.)– अर्थान्तरे किं बाधकम् ? इत्यत आह– **न चेति** ।। **'ब्रह्म'** 'उद्भव'शब्दयोर्मुख्यार्थे सम्भवत्यमुख्यार्थः 'कर्म वेदेनाभिमानिद्वारा प्रकाश्यते' इति, न युक्त इत्यर्थः । वेदोऽभिमानिनं विनाऽपि कर्म प्रकाशयति । अतः का नाम परम्परा ? इत्यत आह– **न चेति** ।। न केवलं जडत्वात् वेदस्य स्वतः प्रवृत्त्ययोगः, किन्तु भगवतः सर्वनियामकत्वश्रुतेश्चेत्याह– **एतस्येति** ।। अर्थप्रकाशकत्वं वेदस्वभावः कथमन्यनियतः ? इत्यत आह– **द्रव्यमिति** ।।

भावप्रकाशिका (न.टी.)– अपव्याख्यामपाकरोति– **न चेति** । ब्रह्मशब्दमुख्यार्थ-परब्रह्मणः साक्षादुद्भवशब्दमुख्यार्थे कर्मजनने सम्भाव्यमाने वेदाख्यादौपचारिकब्रह्मणः तदन्तर्यामिद्वारा प्रकाशाख्यौपचारिकोद्भवः कर्मणो न कल्पनीय इत्यर्थः । देशतः कालतो ब्रह्मत्वेऽप्यगुणब्रह्मवदौपचारिकं ब्रह्म वेद इति भावः ।

ननु वेदानां बुध्यारोह एव परापेक्षा । बुद्ध्यारूढानां स्वार्थप्रकाशनं स्वत एव । अतः का परम्परा ? इत्यत आह– **न चेति** । जडानां च स्वयमेव बालदीपोऽर्थमिव वेदादीनामर्थप्रकाशाख्यप्रवृत्तिरपि स्वतो न सम्भवतीत्यर्थः ।

न केवलमचेतनत्वयुक्त्यैवान्यनियम्यत्वं वेदादेः । किन्तु विष्णोः सर्वनियामक(त्व) श्रुतेश्चेत्याह– **एतस्येति ॥** ननु भवत्यन्याधीनत्वं जडगतचलनादेरस्वभावधर्मस्य । अर्थ-प्रकाशनादेस्तु स्वभावत्वादनन्याधीनत्वमित्याशङ्क्य, तस्याप्यन्याधीनत्वे प्रमाणमाह– **द्रव्यमिति ॥**

**प्रमेयदीपिका (ज.टी.)**– अपव्याख्यानं प्रत्याख्याति– **न चेति ॥** उद्भवशब्दस्य मुख्येऽभिधेये जन्मनि सम्भाव्यमाने सति औपचारिकं प्रकाशनमर्थतया न कल्प्यम् । तथा ब्रह्मशब्दस्य मुख्येऽभिधेये परब्रह्मणि सम्भाव्यमाने सति औपचारिकम् अमुख्यं वेदाख्यं ब्रह्मशब्दार्थतया न कल्प्यम् ॥ किञ्चैवं व्याचक्षाणेनापि वेदस्य कर्मप्रकाशकत्वमन्तर्यामि-द्वारा परम्परयाऽङ्गीकार्यम् । तथा चान्ततोऽपि परब्रह्मण्यङ्गीकार्ये शब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्नः । ननु वेदः स्वयमेव कर्मप्रकाशकः । किं परब्रह्मणा? अतो न परम्परेत्यत आह– **न चेति ॥**

न केवलं जडत्वाद्वेदस्यान्याधीनत्वम्, किन्त्वागमाद् विष्ण्वधीनत्वं प्रसिद्धमित्याह– **एतस्येति ॥** 'विष्णोः' इति शेषः ॥ ननु शब्दस्यार्थप्रकाशनं स्वभावः । न त्वागन्तुको व्यापारः । यथाऽग्नेरौष्ण्यम् । ततो जडत्वेऽपि न परापेक्षत्यतः स्वभावस्यापि भगवदधीनत्वे प्रमाणमाह– **द्रव्यमिति ॥**

**भावबोधः (र.टि.)**– ॥ अन्तर्यामिद्वारेति । नियामकेश्वरद्वारेत्यर्थः ॥

**भावदीपः (रा.टि.)**– ॥ **अन्तर्यामिद्वारेति** ॥ साक्षाद्वेदस्य जडस्य प्रकाशकत्वायोगा-दन्तर्यन्तृरूपेश्वरेत्यर्थः । **स्वभावस्यापीति** ॥ 'इत्यादेश्च' इति भाष्ये– 'स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इति वाक्यशेषमादिपदार्थः ॥

**भावरत्नकोशः (सु.टि.)**– अर्थान्तरे किं बाधकम् ? इत्यत उक्तम्–**अपव्याख्यान-मिति** ॥ 'मुख्ये' इत्यनन्तरम् 'अभिधेये' इति तु शेषः । तस्यार्थः– **जन्मनीति** ॥ व्याख्यानान्तरं– **तथेति** ॥ **अमुख्यं वेदाख्यमिति** ॥

'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्' इति वचनादिति भावः ।

श्लोकः १५

'पारम्पर्येण' इति भाष्यमपव्याख्यानस्य दूषणान्तराभिप्रायमिति तद् विशदयति– **किञ्चैवमिति ॥ अन्तर्यामीति ॥** वेदस्य जडस्य स्वतः कर्मप्रकाशकत्वसामर्थ्यायोगाद् अन्तर्नियन्त्रीश्वरद्वारैव तद् वाच्यम् । तथा च पारम्पर्यमङ्गीकार्यमित्यर्थः । शब्दत एव निर्विशेषब्रह्मशब्दत एव । तस्य परब्रह्मणः । एतेन 'कर्म ब्रह्मोद्भवम्' इत्यत्र यत् केषाञ्चिद् भाष्यं 'ब्रह्मशब्देन प्रकृतिर्निर्दिष्टा । 'एतद् ब्रह्म नाम रूपमन्नं च जायते' इति श्रुतेः । तेन च तत्परिणामरूपं शरीरं ग्राह्यम् । प्रकृतिपरिणामरूपशरीरोद्भवं कर्मेत्युक्तं भवति' इति, तदपि निरस्तम् । ब्रह्मशब्दस्य मुख्येऽभिधेये परब्रह्मणि सम्भाव्यमाने सति औपचारिकम् अमुख्यं प्रकृत्याख्यं ब्रह्मशब्दार्थतया न कल्पनीयम् । मुख्यामुख्ययोर्मुख्यस्य ग्राह्यत्वात् ।

किञ्चैवं व्याचक्षाणेनापि ब्रह्मशब्दितप्रकृतेः साक्षाद् द्रव्यार्जनादिरूपकर्तृव्यापारात्मककर्मजनकत्वं नास्तीति देहद्वारा परम्परयाऽङ्गीकार्यम् । तत्रापि शरीरमात्रस्य यज्ञानुकूलसाधुकर्मजनकत्वाभावात् परब्रह्म यत्र शरीरे स्थित्वा साधु कर्म कारयति तदेव शरीरं ग्राह्यम् । तथा चान्ततोऽपि परब्रह्मण्यङ्गीकार्ये स्वशब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्न इति । 'नच मुख्ये' इति भाष्यव्याख्यानेन दूषणसाम्यात् । 'तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्' इति गीताक्षरास्वरसाच्च । नच ब्रह्म प्रकृतिः शरीरं वा सर्वगतं यज्ञे प्रतिष्ठितं वा । कथञ्चित् प्रकृतोपयोगकल्पनं त्वगतिका गतिः । 'एतद् ब्रह्म नाम रूपम्' इत्यत्र 'एतद् ब्रह्म चतुर्मुखः' इति च भाषितमन्यत्रेति । 'स्वयमेव' इत्यनन्तरं 'दीपोऽर्थमिव' इति शेषः । 'यद्यज्जडं तत्तत् पराधीनम्, जडं चेदं वेदाख्यं ब्रह्म' इति व्याप्तिपक्षधर्मतावत्तया युक्तं जडत्वस्य हेतुत्वमिति प्रदर्शयितुं भाष्ये 'जडानाम्' इति बहुवचनमिति भावेन 'वेदोऽर्थप्रकाशने स्वव्यापारेऽन्याधीनः जडत्वात् मृत्पिण्डादिवद्' इत्यनुमानम् उपन्यस्यन्नेवोत्तरभाष्यमवतारयति– **न केवलमिति ॥** एतेन भाष्ये चशब्दो व्याख्यातः । **विष्ण्वधीनत्वमिति ॥** अनुमानेन सामान्येन नियन्तृमात्रसिद्धावपि नियन्तुर्विष्णुत्वबोधनाय आगमोदाहरणमिति भावः ।

नन्वत्र भाष्ये नियमनं प्रतीयते । तच्च विष्णुकर्तृकमिति तु नेत्यतः 'तच्च प्रशासनं विष्णोरेव' इति सूत्रभाष्यं मनसि निधाय शेषं पूरयति– **विष्णोरिति शेष इति ॥** 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' इति श्रुतावक्षरशब्देन विष्णोरभिधानात्, तया नद्यादिचलनस्य विष्ण्वधीनत्वं ज्ञायत इत्येतदर्थं प्राप्ताया नियमनश्रुतेरित्यर्थः । पूर्वं भाष्ये

शेषः पूरणीय इत्यर्थः । **इत्यादीति** ॥ क्रियाविशेषणमिति भावः । **न त्वागन्तुको व्यापार इति** ॥ मृदः पृथुबुध्नोदराकारतावत् नद्याः स्पन्दनं न मध्ये समुपगतो धर्म इति न तद्दृष्टान्तीकरणमुपयोगि । प्रत्युत जडत्वहेतोरग्नौ व्यभिचारः । तस्य स्वव्यापार औष्ण्ये परानपेक्षादृष्टेर्वेदस्य जडत्वेऽप्यर्थप्रकाशने पराधीनत्वाभाव इति जडत्वमप्रयोजकमिति भावः । **स्वभावस्यापीति** ॥ **द्रव्यं प्रकृत्यादि** । स्वभावः प्रकृत्यादीनां परिणामादिरिति वचनार्थस्याङ्गीकाराद् वेदेऽर्थप्रकाशनरूपस्वभावस्यापि भगवदधीनत्वं प्रामाणिकमित्यर्थः ॥

**भावदीपिका (श्री.टि.)**– भाष्ये **बुद्धिर्ज्ञानमित्यादिभ्य इति** ॥

'बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥'

इति गीतायां भगवता दानशब्दोपलक्षितकर्ममात्रस्य स्वाख्यपरब्रह्मजन्यत्वोक्तेरिति द्रष्टव्यम् ॥ **अन्तर्यामिद्वारेति** ॥ वेदः कर्मप्रकाशको यथा स्यात् तथेश्वरो नियामयतीति नियामकेश्वरद्वारेत्यर्थः ॥ **अन्तत इति** ॥ ब्रह्मशब्देन वेदं गृहीत्वा तस्य कर्मप्रकाशकत्वाङ्गीकारेऽपि नियामकतयाऽन्तत ईश्वरोऽङ्गीकार्य इत्यर्थः । **शब्दतः** ब्रह्मशब्दतः । **स्वयमेवेति** ॥ अर्थप्रकाशकत्वस्य शब्दस्वभावत्वादिति भावः । **किं परब्रह्मणेति** ॥ नियामकेनाङ्गीकृतेन किम्? इत्यर्थः । भाष्ये **सर्वनियमनश्रुतेश्चेति** ॥ सर्वमध्ये वेदस्यापि पतितत्वादिति भावः । **स्वभाव इति** ॥ 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति जैमिनिवचनादिति भावः । **न त्विति** येन परापेक्षा स्यादिति भावः ।

**भावप्रकाशः (कृ.टि.)**– ॥ **अन्तर्यामिद्वारेति** ॥ नियामकेश्वरद्वारेत्यर्थः ।

## भाष्यम्

**अचिन्त्यशक्तिश्चोक्ता । जीवस्य च प्रतिबिम्बस्य बिम्बपूर्वैव चेष्टा । 'न कर्तृत्वम्'** (५.१४) **इत्यादि निषेधाच्च ॥**

श्लोकः १५

**भावप्रदीपिका (प.टी.)**– श्रुतमपि स्वभावनियमनं कथं घटते ? इत्यत आह– **अचिन्त्येति** ॥ जीवस्यैव कर्तृत्वात् 'कर्म ब्रह्मोद्भवम्' इत्यत्र भवद्भिरप्युपचरितार्थ एवाङ्गीकार्य इत्यत आह– **जीवस्येति** ॥

**भावप्रकाशिका (न.टी.)**– ननु नित्यवेदादिस्वभावनियामकत्वं श्रुतमपि कथं शक्यम् ? पुंप्रयत्नासाध्यत्वादित्याशङ्क्य, अन्यस्याशक्यमप्यचिन्त्यशक्तित्वाद्भगवतः शक्यमिति भावेनाह– **अचिन्त्येति** ॥ ननु तर्हि जीवानां स्वतः प्रवृत्तिसम्भवात्, न तत्कर्म परब्रह्मणो जायत इति मुख्यार्थासम्भवात्, पारम्पर्येण वेदाख्यापरब्रह्मप्रकाश्यमेव किं न स्यात् ? इत्यत आह– **जीवस्येति** ॥ जडजीवयोः पराधीनत्वापराधीनत्वविशेषेऽपि, जीवं कचित् तदिच्छानुपूर्वकं चेष्टयतीत्येतावतैवासौ स्वतः प्रवर्तत इत्युच्यते कचिदिति भावः । इतोऽपि न जीवकर्म जीवेनैव जायत इत्यङ्गीकार्यम् । भगवतैव निषिद्धत्वादित्याह– **न कर्तृत्वमिति** ॥

**प्रमेयदीपिका (ज.टी.)**– एतत् प्रमाणसिद्धमपि स्वभावनियमनं विष्णोरसम्भावितमित्यत आह– **अचिन्त्येति** ॥ यदि जडस्य न स्वतः प्रवृत्तिः तर्ह्यभिमानिदेवताद्वाराऽस्तु । तथाच नान्ततोऽपि परब्रह्माङ्गीकार इत्यत आह– **जीवस्य चेति** ॥ ततश्चाधिक्येन परम्परेति भावः । न केवलं प्रतिबिम्बत्वाज्जीवस्य स्वतः प्रवृत्त्यभावः । किन्त्वागमाच्चेत्याह– **नेति** ॥

**भावदीपः (रा.टि.)**– 'अचिन्त्य' इति भाष्ये 'उक्ता' इत्यस्य पूर्वाध्याये– 'स्थाणुत्वेऽपि 'ऐक्षत' इत्याद्यविरुद्धमीश्वरस्य' (२.२३) इत्यादिना 'इत्यादिवचनात्' इत्यन्तेनोक्तेत्यर्थः ॥ 'न कर्तृत्वम्' इत्यादिभाष्यस्य तु 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः' इति पञ्चमे वक्ष्यमाणदिशा कर्तृत्वादिनिषेधाच्चेत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **असम्भावितमिति** । 'उत्ताना वै देवगवा वहन्ति' इत्यादिश्रुतिसिद्धमप्युत्तानानां देवगवानां वहनमिवेदमप्यसम्भावितम् । पुम्प्रयत्नासाध्यत्वादिति भावः । अन्यस्याशक्यमप्यचिन्त्यशक्तियोगाद् ईश्वरस्य शक्यमिति पूर्वाध्याये 'स्थाणुत्वेऽप्यैक्षतेत्याद्यविरुद्धमीश्वरस्य' इति भगवतोऽचिन्त्यशक्तिरुक्तेति भाष्यार्थः । **परब्रह्माङ्गीकार इति** ॥ तथा च कर्म ब्रह्मणो जायत इति व्याख्यानमयुक्तमिति भावः । **आधिक्येनेति** ॥ जडस्य वेदस्य

स्वतःप्रवृत्त्यनुपपत्तिशमनायाभिमानिदेवताया अङ्गीकार्यत्वे तस्याश्च भगवत्प्रतिबिम्बतया बिम्बाधीनक्रियाव्यतिरिक्तक्रियाया अयोगाद् बिम्बभूतपरब्रह्मण एव अन्ततोऽकामेनापि स्वीकर्तव्यत्वात् पूर्वोक्तपरम्परापेक्षयाऽधिकैव परम्पराऽभ्युपगन्तव्या स्यादित्यर्थः। भाष्ये चशब्दसमुच्चेयं दर्शयितुमाह– **न केवलमिति ॥ आगमाचेति ॥** लोकशब्दितजीवस्य कर्तृत्वं क्रियास्वातन्त्र्यं नास्तीति निषेधप्रतिपादकागमाच्च तस्य स्वतःप्रवृत्त्यभावो विज्ञायत इत्यर्थः ॥

**भावदीपिका (श्री.टि.)**– भाष्ये – **अचिन्त्यशक्तिश्चोक्तेति ॥** द्वितीयाध्याये 'अचिन्त्य-शक्तेश्च' इत्यादिनेति द्रष्टव्यम् । **आधिक्येनेति ॥** अभिमानिदेवतानामपि जीवत्वेनास्वतन्त्रतया साक्षाद् वेदनियामकत्वासम्भवात् नियामकतयाऽप्यन्तत ईश्वरोऽङ्गीकार्य इति पूर्वापेक्षयाऽप्याधि-क्येन परम्परेति भावः । भाष्ये – **बिम्बपूर्वैवेति ॥** बिम्बचेष्टापूर्वैवेत्यर्थः । **नेतीति ॥** ' न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः' इति गीतायां भगवता जीवानां कर्तृत्वापरपर्याय-स्वतःप्रवृत्तेर्निषेधादित्यर्थः ।

## भाष्यम्

**अक्षराणि प्रसिद्धानि । तेभ्यो ह्यभिव्यज्यते परं ब्रह्म । अन्यथा अनादिनिधनम् अचिन्त्यं परिपूर्णमपि ब्रह्म को जानाति ॥**

भावप्रदीपिका (प.टी.)– **'अक्षरशब्देन ब्रह्मोच्यते'** इत्यपव्याख्यां दूषयितुं तदर्थमाह– **अक्षराणीति ॥** कथं वेदाद्ब्रह्मणो जननम् ? इत्यत आह– तेभ्य इति । जननमेव कुतोऽर्थो न स्यादभिव्यक्तेः प्रमाणान्तरेणापि सम्भवात् ? इत्यत आह– **अन्यथेति ॥**

भावप्रकाशिका (न.टी.)– **'कर्म ब्रह्मोद्भवम्'** इत्यत्र परं प्रत्यापादितदोषं **'ब्रह्माक्षर-समुद्भवम्'** इत्यत्र स्वमते परिहरन्नेतद्व्याचष्टे– **अक्षराणीति ॥ 'ब्रह्म-अक्षर-समुद्भवम्'** इति त्रयः शब्दाः प्रतीयन्ते। तत्र तावन्नाक्षरशब्दे मुख्यपरित्यागः । तेन प्रसिद्धाक्षर-तत्त्वात्मकवेदस्वीकारात् । नापि ब्रह्मशब्दे । तेन परब्रह्मण एव स्वीकारात् । शब्दद्वय-मुख्यार्थत्वाविरोधेनैकस्योद्भवशब्दस्याभिव्यक्त्यर्थत्वाङ्गीकारो युक्त एव । नह्यनादिनिधन-मनन्तगुणपरिपूर्णं ब्रह्मान्यतो जायत इति भावः । नन्वेवंविधस्य ब्रह्मणोऽभिव्यक्तिरन्यतः कुतः ? इत्यत आह– **अन्यथेति ॥**

श्लोकः १५

**प्रमेयदीपिका (ज.टी.)– 'ब्रह्माक्षरसमुद्भवम्'** इत्यस्य **'ब्रह्म वेदः अक्षरात् परब्रह्मणो जायते'** इति परेषां व्याख्यानमसदिति भावेनाऽह– **अक्षराणीति ॥ प्रसिद्धानि** अकारादीनि नियतानुपूर्वीविशिष्टानि । वेद इति यावत् ॥

**ननु समुद्भवशब्दस्य मुख्यार्थाङ्गीकारे किं बाधकम् ? येनाभिव्यज्यत इत्यमुख्योऽर्थः स्वीक्रियते । किञ्च प्रमाणान्तरेणापि ब्रह्माभिव्यक्तिसम्भवात् 'तेभ्यः' इति किमर्थमुक्तम्?** इत्यत आह– **अन्यथेति ॥ व्यक्त्यर्थत्वानङ्गीकारे । अनादिनिधनं ब्रह्म 'कथं जायेत' इति** शेषः । **तथा वेदस्य तदभिव्यञ्जकत्वानङ्गीकारे परिपूर्णत्वाद् अचिन्त्यं ब्रह्म को जानाति? वाक्यार्थद्वयसमुच्चये अपिशब्दः ॥**

**भावबोधः (र.टि.)–** 'तानि चाक्षराणि नित्यानि' इत्युत्तरग्रन्थपर्यालोचनयाऽत्राक्षरशब्दो वेदपर इत्यभिप्रेत्याह– **नियतानुपूर्वीति ॥ को जानातीति ॥** ज्ञापकप्रमाणाभावादिति भावः ॥ १५ ॥

**भावदीपः (रा.टि.)– ॥ वाक्यार्थद्वयेति ॥** 'अनादिनिधनं ब्रह्म कथं जायेत' इति, 'अचिन्त्यम्' इत्यादि वाक्यार्थद्वय इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ परेषामिति ।** 'ब्रह्म वेदः, अक्षरसमुद्भवम् अक्षरं परमात्मा समुद्भवो हेतुर्यस्य तत् तथा' इति सङ्करः, तदनुयायिनामित्यर्थः । **अकारादीनीति ॥** 'अक्षरं ब्रह्मवर्णयोः' इति विश्वरुद्रयोः 'वर्णे ब्रह्मण्यक्षरं स्यात् इत्यमरकोषे च तथाऽभिधानादिति भावः । एकैकाक्षरस्य परब्रह्मव्यञ्जकत्वं न सर्वाधिकारिणः प्रतीयत इत्यत उक्तं– **नियतेति ॥** नियतानुपूर्वीविशिष्टानि कान्यक्षराणि? इत्यतस्तात्पर्यमाह– **वेद इति ॥ किमर्थमिति ॥** तेभ्योऽक्षरेभ्यो व्यज्यते परं ब्रह्मेति किमर्थमित्यर्थः । 'अन्यथा' इत्यस्य व्याख्यानं– **व्यक्त्यर्थत्वानङ्गीकार इति ॥** अनादिनिधनम् उत्पत्तिविनाशशून्यमिति ब्रह्मविशेषणं हेत्वर्थगर्भमिति मनसि निधायोक्तं चोद्यं परिहर्तुं शेषमाह– **कथं जायेतेति शेष इति ॥** 'अन्यथा' इत्यस्यार्थान्तरमाह– **तथा वेदस्येति ॥** 'परिपूर्णम्' इत्यचिन्त्यत्वे हेतुसमर्पकम् इति भावेन आह– **परिपूर्णत्वादचिन्त्यमिति ॥ वाक्यार्थद्वयेति ॥** अनादिनिधनं ब्रह्म कथं जायेत ? परिपूर्णत्वादचिन्त्यं ब्रह्म को जानाति ? इति च वाक्यार्थद्वयसमुच्चयार्थतया भाष्यस्थापिशब्दो व्याख्येय इत्यर्थः । अनेन 'किं बाधकम्' इति चोद्यम्, 'किमर्थमुक्तम्' इति चोद्यं च परिहृतं भवति ॥

**भावदीपिका** (श्री.टि.)– नन्वत्राक्षरशब्देन अकारादिप्रसिद्धाक्षरग्रहणे तेषां ब्रह्म-व्यञ्जकत्वायोगाद् योगे वोत्तरत्र वेदनित्यत्वे प्रमाणोदाहरणासङ्गतेः, केवलवर्णानां वेदत्वा-भावाद्, अतो व्याचष्टे– **नियतानुपूर्वीति ॥ वेद इतीति ॥** नियतानुपूर्वीविशिष्टवर्णानामेव वेदत्वादिति भावः । **व्यक्त्यर्थत्वानङ्गीकारे** 'समुद्भवशब्दस्य' इति शेषः । उत्पत्तिरूपमुख्यार्थ-त्वाङ्गीकारे चेत्यपि ग्राह्यम् । 'अनादिनिधनत्वादिविशिष्टं ब्रह्म को जानाति' इति द्वितीयप्रश्नस्यैव परिहारो दृश्यते न त्वाद्यस्य, अतोऽत्र वाक्यभेदः कार्यः, तेनाऽद्यप्रश्नोत्तरलाभ इत्याशयेनाऽह– **जायत इति शेष इति ॥ को जानातीति ॥** ज्ञापकप्रमाणाभावात् । आगमेतरप्रमाणानां चाज्ञापकत्वादिति भावः ।

**भावप्रकाशः** (कृ.टि.)– ननु 'ब्रह्माक्षरसमुद्भव'मित्यत्र परब्रह्माक्षराभिव्यङ्ग्यमित्यभि-प्रेतम् । नच तद् युक्तम् । 'अक्षरत्रयमीरित'मिति परापरप्रकृत्योरीश्वरस्य चाक्षरत्वेन प्रसिद्ध-त्वात्, तेषां च ब्रह्माभिव्यञ्जकत्वाभावादित्यत आह– **अकारादीनीति ॥** नन्विदमप्ययुक्तम् । अ-इ-उ इत्यादि मात्रस्य ब्रह्माभिव्यञ्जकत्वाभावादित्यत आह– **नियतानुपूर्वीति ॥** ननु कालिदासादिवाक्यान्यप्युत्पत्त्यनन्तरं नियतानुपूर्वीविशिष्टानि । न च तेषां ब्रह्मप्रकाश-कत्वमित्यत आह– **वेद इति ॥ यावदिति ॥ को जानातीति ॥** प्रमाणाभावादिति भावः । **वाक्यार्थद्वयेति ॥** 'ब्रह्म कथं जायत' इति 'ब्रह्म को जानाति' इति च वाक्यार्थद्वयसमुच्चय इत्यर्थः ॥

## भाष्यम्

**न च रूढिं विना योगाङ्गीकारो युक्तः । परामर्शाच्च 'तस्मात् सर्वगतं ब्रह्म'** (३.१५) **इति । न ह्येकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते ॥**

भावप्रदीपिका (प.टी.)– नन्वत्र न क्षरतीत्यक्षराद्ब्रह्मणो बृहत्त्वाद्ब्रह्म वेदो जायत इत्यर्थः किं न स्यात्? उद्भवशब्दस्य मुख्यार्थलाभात् इत्यत आह– **न चेति ॥** शब्दद्वय-मुख्यार्थलाभादेकशब्दस्योपचारितार्थत्वं न बाधकम् । अर्थान्तरे शब्दद्वयस्योपचरितार्थता-पत्तेरिति भावः । इतश्च न ब्रह्मशब्दोक्तो वेद इत्याह– **परामर्शाच्चेति ॥** न च तत्रापि

श्लोकः १५
वेदोऽर्थः । वेदस्य यज्ञस्थित्युक्तेरसङ्गतत्वात् । अत्र 'ब्रह्म'शब्देन वेदवत्, उत्तर'ब्रह्म'शब्देन 'अक्षर'पदोक्तब्रह्मणः परामर्शः क्रियत इत्यत आह– **न हीति** ।। 'अन्नरसमयः' इत्यादिभेदश्रुतिं विना ।।

भावप्रकाशिका (न.टी.)– ननु यौगिकार्थस्यापि मुख्यार्थत्वात् प्रसिद्धार्थपरित्यागेऽपि 'बृहत्वात् ब्रह्म' वेदः, न क्षरति इत्यक्षरं' परंब्रह्म, किं न स्यात् ? उद्भवशब्दस्य मुख्यार्थत्वायेत्यत आह–**न चेति** ।। अव्याकृताकाशादेरपि सर्वगतनित्यत्वात् ब्रह्मत्वमक्षरत्वं च स्यादिति भावः । 'तस्मात् सर्वगतं ब्रह्म' इत्यत्र ब्रह्मशब्देन परब्रह्मवाचिना 'ब्रह्माक्षरसमुद्भवम्' इत्युक्तब्रह्मणः परामर्शाच्च, न ब्रह्मशब्दोऽयं बृहत्त्वयोगमात्रेण वेदपर इत्याह– **परामर्शाच्चेति** ।।

ननु 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मशब्दस्य वेदवाचित्वेऽपि, अक्षरशब्दोक्तपरब्रह्मपरामर्शक एवोत्तरो ब्रह्मशब्दः किं न स्यात् ? इत्यत आह– **न हीति** ।। सत्यां भेदश्रुतावेकस्मिन्नपि शब्दे द्विरुक्तेऽर्थभेदोऽवगम्यते । यथा हि 'ओषधीभ्यो अन्नम्' 'अन्नरसमयः' इत्यत्र द्वितीयान्नशब्दस्य रसश्रुत्या विशेषितत्वादर्थभेदः, न तथाऽत्रेत्यर्थः ।।

प्रमेयदीपिका (ज.टी.)– समुद्भवशब्दस्य मुख्यार्थलाभात् परोक्तः अर्थः किं न स्यात्? इत्यत आह– **नचेति** ।। ब्रह्मशब्दो हि परब्रह्मणि रूढः । वेदे तु बृहत्त्वयोगेन प्रवृत्तः । तथाऽक्षरशब्दो वर्णेषु रूढः । परब्रह्मणि त्वक्षरणयोगेन प्रवृत्तः । तथा चान्यथा व्याकुर्वता रूढिं परित्यज्य योगोऽङ्गीकृतः स्यात् । तच्च न्यायबाह्यमित्यर्थः ।।

इतश्च ब्रह्मशब्दः परब्रह्मवाचीत्याह– **परामर्शाच्चेति** ।। उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शाच्च पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो ज्ञायते । तथाच 'अक्षरशब्दोऽप्यर्थाद् वेदवचनो भविष्यति' इति शेषः । प्राग् अक्षरशब्दोक्तं परब्रह्मेदानीं ब्रह्मशब्देन परामृश्यते । अतः पूर्वोक्तो ब्रह्मशब्दो वेदार्थ एवेत्यत आह– **न हीति** ।। 'एकस्मिन्नेव प्रकरणे' इति शेषः ।। 'अन्नात् पुरुषः । स वा एष पुरुषोऽन्नरसमयः' (तै.उ.२.२) इत्यादिव्यावृत्त्यर्थं 'भेदश्रुतिं विना' इत्युक्तम् । श्रुतिशब्दश्च प्रमाणोपलक्षणार्थः । अत्रापि 'सर्वगतम्' इति विशेषणमस्तीति चेन्न । वर्णानामपि सर्वगतत्वात् । विकारित्वान्नेति चेन्न । अनन्तरमेव निराकरणात् । इदं च भास्करं प्रत्यभिहितम् । मायावादिना तु 'प्राग् ब्रह्मशब्दोक्तस्य वेदस्यैवायं परामर्शः' इत्यङ्गीकृतत्वात् ।।

**भावदीपः (रा.टि.)**– 'तपसा चीयते ब्रह्म' (आथ.१.१.८) इत्यस्योत्तरवाक्ये 'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते' (आथ.१.१.९) इति श्रुतब्रह्मशब्दादेः सङ्ग्रहाय आह– **श्रुतिशब्दश्चेति** ॥ सर्वस्य ब्रह्मविकारित्वभावेन शङ्कते– **विकारित्वादिति** ॥ वर्णानां सर्वगतत्वं नेत्यर्थः ॥ **अनन्तरमेवेति** ॥ 'तानि च' इति ग्रन्थ इति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **परोक्तार्थ इति** । 'ब्रह्म वेदः अक्षरात् परब्रह्मणो जायते' इति परव्याख्यानमित्यर्थः । **रूढ इति** ॥ 'तदेव ब्रह्म परमं कवीनाम्' , 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इत्यादि श्रुतिस्मृतिषु परब्रह्मणि तस्य बहुलप्रयोगदर्शनादिति भावः । **बृहत्त्वयोगेनेति** ॥ तथा च 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरे, बृहति = वर्धत इति ब्रह्म, 'बृह वृद्धौ' इत्यतो 'बृंहेरम्लोपश्च' इति मनिन्प्रत्ययोऽमागम उपधानकारस्य च लोपः इति हरिदीक्षितः । एवञ्च ब्रह्मशब्दस्य वेदेऽपि रूढत्वमेवेति न परस्य पर्यनुयोगावकाश इति भावः । अक्षरणयोगेन अविनाशित्वलक्षणप्रवृत्तिनिमित्तधर्मेण प्रवृत्त इत्यक्षराधिकरणे स्थितेरिति भावः । **अन्यथा व्याकुर्वतेति** ॥ ब्रह्मशब्दस्य परब्रह्मार्थकत्वमित्यस्मद्व्याख्यानस्य व्यत्यासेन व्याकुर्वतेत्यर्थः । **तच्चेति** ॥ एवमङ्गीकृत्य व्याख्यानमवयवार्थनिरपेक्षाया रूढेः शीघ्रगामित्वात्, तत्सापेक्षतया मन्थरगामियोगात् प्राबल्यमिति मीमांसकैः रथकाराधिकरणे यो न्याय उक्तः तद्बाह्यं तद्विरुद्धमित्यर्थः । एतेन भाष्यस्थयुक्तशब्दार्थ उक्तः । न च प्रोक्षण्यादिशब्देषु मीमांसकैर्योगाङ्गीकाराद् अत्रेव वेदे सोऽस्त्विति वाच्यम् । 'प्रोक्षणीष्वर्थसंयोगात्' इति चन्द्रिकायां व्यक्तम् । 'ब्रह्मेति सर्ववेदानां नामानन्तत्वतः स्मृतम्' इति छान्दोग्यभाष्यमपि अनन्तत्वत इति बृहत्त्वयोगेनैव प्रवृत्तमिति न तद्विरोधोऽपि । **उत्तरेति** ॥ 'तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्' इत्युत्तरवाक्ये सर्वगतत्वनित्यत्वादिविशेषणेन परब्रह्मण एव परामर्शादित्यर्थः । 'परामर्शाच्च' इत्यस्य हेतोः साध्यमाह– **पूर्वेति** ॥ **अर्थादिति** ॥ परब्रह्माभिव्यञ्जकस्यान्यस्य वक्तुमशक्यत्वादर्थापत्तिवशादक्षरशब्दो वेदवचन इत्यर्थः ।

ननु 'ओषधीभ्योऽन्नम् । अन्नात् पुरुषः' । 'अन्नं प्राणं चक्षुः श्रोत्रम्' इति ब्रह्मवल्ली-भृगुवल्लीरूपप्रकरणद्वये द्विरुक्तेनान्नशब्देन प्रसिद्धान्नपरब्रह्मरूपान्नद्वयग्रहणदर्शनात् 'न ह्येकशब्देन' इत्याद्युक्तम् अयुक्तमित्यत आह– **एकस्मिन्नेव प्रकरण इति शेष इति** ॥ उक्तस्थलस्य च भिन्नप्रकरणत्वेन तत्रत्यान्नशब्दस्यार्थद्वयाङ्गीकारो न दोष इति भावः । **इत्युक्तमिति** ॥ तथा

श्लोकः १५

च 'अन्नात् पुरुषः' इत्यत्रान्नशब्देन प्रसिद्धान्नग्रहणेऽपि 'अन्नरसमयः' इत्यत्र अन्नशब्देन परमेश्वरग्रहणं युक्तम् । भेदज्ञापकरसशब्दश्रवणादित्यर्थ इति भावः ।

नन्वेवमपि 'आत्मन आकाशः सम्भूतः' इत्यारभ्य 'को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दः' इत्यन्तं पठितमेकं प्रकरणम् । 'सत्यं ज्ञानमनन्तम्' इति मन्त्रवर्णविवरणरूपत्वात् । तथा 'तपसा चीयते ब्रह्म' इत्यस्योत्तरवाक्यं 'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते' इति वाक्यं चैकप्रकरणमेव । तत्र च भेदश्रुतिं विनैव द्विरुक्तेन आकाशशब्देन, तथाविधेन ब्रह्मशब्देन च, भूताकाशब्रह्मरूपार्थद्वयं, परब्रह्मचतुर्थमुखरूपार्थद्वयं च, सिद्धान्ते स्वीकृतमिति तत्र व्यभिचार इत्यत आह– **श्रुतिशब्दश्चेति** ॥ उक्तस्थले भूतसहपाठः, सम्भूतत्वं च, लोकचेष्टकत्वं, पूर्णानन्दत्वं च भेदलिङ्गं श्रूयते । तथा 'तपसा चीयते ब्रह्म' इत्यत्र सर्वस्रष्टृत्वसर्वज्ञत्वादिभगवल्लिङ्गं 'तस्मादेतद् ब्रह्म' इत्यत्र परब्रह्मजातत्वं, नामरूपात्मककार्यप्रपञ्चसहपाठश्च भेदलिङ्गं श्रूयते । भाष्ये श्रुतिशब्दश्च 'भेदज्ञापकप्रमाणोपलक्षकः' इति भेदकलिङ्गसद्भावाद् अर्थद्वयाङ्गीकारो नानुचित इति भावः ।'तस्मात् सर्वगतं ब्रह्म' इति वाक्येऽपि भेदज्ञापकमस्तीति शङ्कते– **अत्रापीति** ॥ **वर्णानामिति** ॥ सिद्धान्तेऽक्षरशब्दार्थभूतानामिति योज्यम् । तथा च भेदज्ञापकं नास्तीति भावः ।

ननु वर्णानां सर्वगतत्वेऽप्यक्षरशब्देन प्रकृतानां वेदानां व्याप्यत्वं कुत इति चेत् ? 'यावद् ब्रह्म विष्ठितं तावती वाक्' इति श्रुतिबलादिति ब्रूमः । नियतानुपूर्वीविशेषविशिष्टानां वर्णानामेव वेदत्वात् वर्णव्याप्तिरिति भावेनेयमुक्तिरित्यवगन्तव्यम् । **विकारत्वादिति** ॥ पुरुषप्रयत्नजन्यत्वेन अनित्यत्वात् न वर्णानां सर्वगतत्वं युक्तमित्यर्थः । **अनन्तरमेवेति** ॥ 'तानि चाक्षराणि' इत्युत्तरभाष्य एवेत्यर्थः । अभ्युपगम्य चेदमुदितम् । स्वरीत्या तु सर्वगतस्यापि क्षणलवादेरनित्यत्वदर्शनाद् व्यभिचार इति दूषणं द्रष्टव्यम् । ननु प्रागक्षरशब्दोक्तं परब्रह्मेदानीं ब्रह्मशब्देन, प्रकृतिपरिणामशरीरम् अक्षरशब्देन परामृश्यत इति न सङ्करमतम् । दूष्यते च साम्प्रतं सङ्करमतमेव 'अक्षराणि प्रसिद्धानि' इत्यादिना । रामानुजस्तु ब्रह्मशब्देन प्रकृतिपरिणामशरीरम् अक्षरशब्देन जीवात्मानं च गृहीतवानिति न तस्याप्युक्तदूषणास्पदत्वमित्यत आह– **इदं चेति** ॥ न मतद्वयमेतद्दूषणपात्रम् । किन्तु भास्करमतमेवेति नानुक्तोपालम्भशङ्केति भावः ।

॥ **इत्यङ्गीकृतत्वादिति** ॥ तथा च सङ्करभाष्यम् 'यस्मात् परमात्माख्यादक्षरात् पुरुष-निःश्वासवत् समुद्भूतं ब्रह्म ब्रह्माक्षरसमुद्भवमित्यत्र प्रस्तुतो वेदः, तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतम्, नित्यं सदा यज्ञविधिप्रधानत्वाद्यज्ञे प्रतिष्ठितम्' इति । **अन्यथा** सङ्करीत्या । **प्रसिद्धानि** अकारादीनि नियतानुपूर्वीविशिष्टानि । वेद इति यावत् । **'अभिधानादि'** इत्यादि-पदेन प्रयोगनिरुक्तिग्रहः । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यभिधानात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिप्रयोगाच्च ब्रह्मशब्दो वेदपरब्रह्मणो रूढः । 'अक्षरं ब्रह्मवर्णयोः' इत्यभिधानादक्षर-शब्दोऽप्युभयत्र रूढः । तथा बृहत्त्वयोगेनाक्षरणयोगेन च वेदब्रह्मणोः प्रवृत्तौ ब्रह्माक्षरशब्दाविति योगरूढावित्यतः यदुक्तं 'न च रूढिं विना योगाङ्गीकारो युक्तः' इति तद्युक्तमिति दूषणं परास्तमित्यर्थः । 'अनेन' इत्युक्तहेतुं व्यनक्ति– **परामर्शस्येति** ॥ योगरूढत्वाङ्गीकारेणोक्त-न्यायविरोधसमाधानेऽपि उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शात् पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो ज्ञायते, न वेदार्थ इति परामर्शस्येत्यर्थः । तत्रापि वेदस्यैव परामर्श इत्युक्तौ सर्वगतत्वादेरमुख्यत्वापत्तिरिति भावः ॥

भावदीपिका (श्री.टि.)– ॥ **परोक्तोऽर्थ इति** ॥ 'ब्रह्म वेदः अक्षरात् परब्रह्मणो जायते' इत्येवं परोक्तोऽर्थ इत्यर्थः ॥ **रूढ इति** ॥ 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इत्यभि-धानादिति भावः । **बृहत्त्वयोगेनेति** ॥ 'बृंहतीति ब्रह्म' इति योगेनेत्यर्थः । बृह वृद्धौ । वृद्धिश्च देशतः कालतश्चेति द्रष्टव्यम् । बृहतेर्मन्प्रत्ययेऽमागमे यणादेशे च सति ब्रह्मन् इति प्रातिपदिके सिद्धे, पश्चात् स्वाद्युत्पत्तौ ब्रह्मेति भवति ॥ **रूढ इति** ॥ 'अक्षराणि स्मृता वर्णा वर्णाः श्वेतादयो गुणाः' इत्यनेकार्थमञ्जर्यामभिधानादिति भावः ॥ **अक्षरणेति** ॥ न क्षरतीत्यक्षरमिति योगेनेत्यर्थः ॥ **तच्च न्यायबाह्यमिति** ॥ रूढित्यागेन योगाङ्गीकरणं 'रूढिर्योगमपहरति' इति न्यायविरुद्धमित्यर्थः । **परामर्शाच्चेति** ॥ परामर्शश्च पूर्वोक्तस्यैव नानुक्तस्येति भावः ॥ तथा **चेति** ॥ 'ब्रह्माक्षरसमुद्भवम्' इति पूर्ववाक्यस्थब्रह्मशब्दस्य परब्रह्मार्थत्वे सतीत्यर्थः । **अर्था-दिति** ॥ अन्यथाऽनुपपत्त्येत्यर्थः । यदा ब्रह्मशब्दः परब्रह्मपरस्तदाऽक्षरशब्दस्य न परब्रह्मपरत्वम् । तथात्वे स्वस्मादेव स्वस्योत्पत्तिप्रसङ्गात् । तथा चाक्षरब्दस्य वेदपरत्वानङ्गी-कारे वाक्यार्थानुपपत्त्याऽक्षरशब्दो वेदवचन इति सिद्ध्यतीति भावः । **प्रागिति** ॥ 'ब्रह्माक्षर-समुद्भवम्' इत्यत्रेत्यर्थः ॥ **ब्रह्मशब्देनेति** ॥ 'तस्मात् सर्वगतं ब्रह्म' इत्यत्र ब्रह्मशब्देनेत्यर्थः ॥ **अत इति** ॥ परामर्शस्यान्यथासिद्धत्वादिति भावः ।

ननु 'आत्मा वा इदमेक एवाग्र आसीत्' इति प्रकरणे 'तद्यथाऽयमात्मा सर्वतः शरीरैः परिवृतः' इति प्रकरणे चैकेनैवाऽत्मशब्देन प्रकरणद्वये उक्तत्वाद् द्विरुक्तेनेश्वरजीवाख्यं वस्तुद्वयं गृह्यत एवात आह– **एकस्मिन्नेवेति ॥ अन्नात् पुरुष इति ॥** एकस्मिन्नेव 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिसृष्टिप्रकरणे 'अन्नात् पुरुषः, स वा एष पुरुषोऽन्नर-समयः' इत्यत्रैकेनैव पुरुषशब्देन देहेश्वराख्यवस्तुद्वयग्रहणाद्, 'एकशब्देन द्विरुक्तेन वस्तुद्वयं नोच्यते' इति नियमो न सम्भवतीत्यर्थः ॥ **भेदश्रुतिं विनेत्युक्तमिति ॥** तथा च 'अन्नात् पुरुषः' इत्यत्र पुरुषशब्देन देहो ग्राह्यः । 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र तु पुरुषशब्देन हरिः । कुतः? भेदकशब्दस्य सत्त्वात् । स च रसशब्द एव । यथोक्तमनुव्याख्याने–

'सारान्नमय एवायं न लोकान्नमयः प्रभुः ।
इति तं रसशब्देन विशिनष्टि शरीरगम् ॥'

इति । भाष्ये चोक्तम्– 'रसशब्देन विशेषणात् तत्सारभूतं चिन्मात्रमेवोच्यते' इति । एवञ्च भेदकशब्दस्यैव विवक्षितत्वाद् यत्र भेदकश्रुतिर्नास्ति तत्रोभयपरत्वं न स्यात् । यथा हि - 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णविवरणात्मकं तावत् 'आत्मन आकाशः सम्भूतः' इत्यारभ्य 'को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' इत्यन्तं प्रकरणम् । यथोक्तम्–

'अतो हि मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया ।
क्रियते परया यस्मात् ......................॥' इति । (अ.व्या. १-१-१९८)

अत्र चाऽद्य आकाशशब्दो भूताकाशवाची द्वितीयो भगवद्वाची । न ह्येतत् सम्भवति । अत्र भेदकशब्दाभावात् । अतो भेदश्रुतिं विना एकेन शब्देन द्विरुक्तेन वस्तुद्वयं नोच्यत इति नियमो भग्न इत्यत आह– **श्रुतिशब्दश्चेति ॥** तथा च तत्र सम्भूतत्वलोकचेष्टकत्वरूपलिङ्ग-मेवाऽकाशशब्देन एकेन द्विरुक्तेन वस्तुद्वयग्रहणे ज्ञापकमस्तीत्याशयः । तथा चैकस्मिन् प्रकरणे एकेन शब्देन द्विरुक्तेन भेदप्रमाणं विना वस्तुद्वयं कुत्रचिदपि न ह्युच्यत इति नियमो द्रष्टव्यः ।

नन्वेवं प्रकृतेऽपि 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मशब्दो वेदपर एवास्तु । 'तस्मात् सर्वगतं ब्रह्म' इत्यत्र तु ब्रह्मशब्दः परब्रह्मपरोऽस्तु । न चोक्तनियमविरोधः । अत्रापि परब्रह्मत्वज्ञापकस्य

'सर्वगतम्' इति भेदकश्रुतिसद्भावादित्याशयेन शङ्कते– **अत्रापीति** ॥ विशेषणं 'भेदकम्' इति शेषः । अस्य विशेषणस्य भेदकत्वमेव न सम्भवति, परब्रह्मासाधारणधर्मत्वाभावादित्यशयेनाऽह– **नेति** ॥ कुतः? इत्यत आह– **वर्णानामपीति** ॥ 'यावद् ब्रह्म विष्ठितं तावती वाक्' इति श्रुतेरिति भावः । **विकारित्वादिति** ॥ 'न वर्णाः सर्वगताः विकारित्वाद् घटवद्' इत्यनुमानेन वर्णानां सर्वगतत्वाभावसिद्धेः न सर्वगतत्वं भेदकं भविष्यतीति भावः । अत्र क्षणलवादिषु व्यभिचारः शिष्यैरेवोह्यतामित्याशयेन तमनुक्त्वा दूषणान्तरमाह– **अनन्तरमेवेति** ॥ अन्तरम् अवकाशं विना इति अनन्तरम् । 'तानि च' इत्यव्यवहितोत्तरग्रन्थ एव वर्णानां विकारित्वस्य निराकरणेनानुमाने स्वरूपासिद्धिरिति भावः । ननु 'परमर्शाच्च' इति दूषणं कथं मायावादिनं प्रति वक्तुं युक्तम् ? तेन हि 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मशब्देन वेदो गृहीतः स्यात् । 'तस्मात् सर्वगतं बह्म' इत्यत्र तु यदि ब्रह्मशब्देन परं ब्रह्म गृहीतं स्यात्, तदैव तं प्रत्येतद्दूषणकथनं सङ्गच्छेत । न चैवम् । किं नाम? पूर्वं ब्रह्मशब्देन प्रकृतस्य वेदस्यैव 'तस्मात् सर्वगतं ब्रह्म' इत्यत्र ब्रह्मशब्देन परामर्शाङ्गीकारात् । तथा च वेदो यज्ञे प्रतिपादकत्वेन प्रतिष्ठित इति व्याख्यानाद्, अत आह - **इदं चेति** ॥ 'परमार्शाच्च' इति दूषणकथनमित्यर्थः । तेन हि पूर्वं 'ब्रह्म वेदः अक्षरात् परब्रह्मणो जायते' इत्यन्यथाव्याख्यातमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ॥ न्यायवाह्यमिति ॥** रूढेः शीघ्रगामित्वात् मन्थरगामियोगात् प्राबल्यमिति रथकाराधिकरणोक्तन्यायबाह्यमित्यर्थः । न च प्रोक्षण्यधिकरणविरोधः । तत्र योगसम्भवे रूढिः न ग्राह्येत्युक्तत्वादिति वाच्यम् । तस्य क्लृप्तयोगसम्भवेऽक्लृप्तरूढिर्न ग्राह्येत्येवं परत्वात् । प्रकृते च रूढेः क्लृप्तत्वात् । **अर्थादिति** ॥ परब्रह्माभिव्यञ्जकस्याक्षरशब्दवाच्यस्यान्यस्य वक्तुमशक्यत्वादित्यर्थः । ननु 'अन्नात् पुरुषः । अन्नं प्राणं चक्षु'रिति ब्रह्मवल्ली-भृगुवल्लीरूपप्रकरणद्वये एकेन द्विरुक्तेनान्नशब्देन प्रसिद्धान्नब्रह्मरूपार्थद्वयग्रहणात् 'न ह्येकशब्देन' इत्याद्युक्तमयुक्तमित्यत आह– **एकस्मिन्नेव प्रकरण इति शेप इति** ॥

॥ **भेदश्रुतिं विनेत्युक्तमिति** ॥ तथा च 'अन्नात् पुरुषः' इत्यत्र पुरुषशब्देन देहग्रहणेऽपि 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र पुरुषशब्देनेश्वरग्रहणं युक्तम् । 'रस'इति भेदज्ञापकश्रुतेः सत्त्वादिति भावः । यद्वा द्वितीयान्नशब्दस्य रसश्रुत्या विशेषितत्वात् तत्रार्थान्तरग्रहणत्यतिशयः ? नच(न तु)आत्मन आकाशः सम्भूत इत्यारभ्य को ह्येवान्यत् कः प्राण्यात् यदेष

श्लोकः १५

आकाश आनन्दो नस्यात् इत्यन्तमेकं प्रकरणम् । सत्यं ज्ञानमिति मन्त्रवर्णविवरणरूपत्वात् तत्राभेदश्रुतिं विनैव द्विरुक्तेनाकाशशब्देन भूताकाशब्रह्मरूपार्थद्वयग्रहणाद् व्यभिचार इत्यत आह– **श्रुतिशब्दश्चेति** ॥ उक्तस्थले च सम्भूतत्वलोकचेष्टकत्वरूपभेदश्रुतिलिङ्गसद्भावान्नोक्त-दोष इति भावः । 'भेदप्रमाणं विना' इत्यस्य च पदार्थभेदकप्रमाणं विनेत्यर्थोऽत्र विवक्षितः । तेन प्रकरणद्वयस्य 'भेदप्रमाणं विना' इत्यनेनैव व्यावृत्तिसिद्धेः 'एकस्मिन् प्रकरणे' इति विशेषणवैय्यर्थ्यमिति चोद्यानवकाशः । उदाहृतब्रह्मवल्लीभृगुवल्लीरूपप्रकरणद्वयस्य वाक्यार्थभेद-कत्वेऽपि पदार्थभेदकत्वाभावादित्यालोचनीयम् । **वर्णानामपीति** ॥ ननु वर्णानां सर्वगतत्वेऽपि वेदस्य सर्वगतत्वं कथम्? इति चेत् – उच्यते । वेदो नाम वर्णानां विशिष्टं रूपम् । नियतानुपूर्वीविशेषविशिष्टवर्णानां वेदत्वात् । तथा च विशिष्टविशेष्ययोरभेदविवक्षयेयमुक्तिः सम्भवतीति । **विकारत्वादिति** ॥ अनित्यत्वादित्यर्थः । इदं च परीत्या स्वमतेऽनित्यस्यापि क्षणादेः सर्वगतत्वादिति बोध्यम् ।

## भाष्यम्

**तानि चाक्षराणि नित्यानि ।**

> **'वाचा विरूप नित्यया' (ऋ.८.६.४-६) । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा' । (म.भा.१२.२३२.१२४) 'अत एव च नित्यत्वम्' (ब्र.सू.१.३.२९) ।**

**इत्यादि श्रुतिस्मृतिभगवद्वचनेभ्यः ।**

भावप्रदीपिका (प.टी.)– त्वत्पक्षेऽपि, 'उद्भव'पदस्य मुख्यार्थो नास्ति । वेदस्यानादि नित्यत्वादित्याह– **तानि चेति** ॥

भावप्रकाशिका (न.टी.)– या त्वाशा उद्भवशब्दार्थमुख्यार्थत्वात् ब्रह्माक्षरशब्दार्थयोः व्यत्यासः किं न स्यात्? इति, सा न कर्तव्या । अक्षराणां नित्यत्वादित्येतत् सप्रमाणक-माह– **तानि चेति** ॥

प्रमेयदीपिका (ज.टी.)– यदप्यन्यथाव्याख्याने 'समुद्भवशब्दस्य मुख्यार्थतालाभः' इत्यभिप्रेतं तदपि दुराशा-मात्रमित्याह– **तानि चेति** ॥ यान्यस्माभिः प्रसिद्धानि

**व्याख्यातानि । अनेन 'अभिधानादिबलाद् ब्रह्माक्षरशब्दौ द्वावप्युभयत्र योगरूढौ'** इति **प्रत्यवस्थानमपि परास्तम् । परामर्शस्य वर्णनित्यत्वस्य चापरिहार्यत्वात् ॥**

**भावदीपः (रा.टि.)**– 'अनेन' इत्युक्तं व्यनक्ति– **परामर्शस्येति** ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **वर्णनित्यत्वस्येति** । नियतानुपूर्वीविशिष्टवर्णानादित्वस्येत्यर्थः । तथा च तानि चाक्षराणि नित्यानि अनादिनित्यानि ।

'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्' (ऋ. ८.६४.६) ।

अभितो द्यौः प्रकाशो यस्यासावभिद्युः । तस्मै अभिद्यवे वृष्णे वर्षित्रे नूनं निश्चितं भो विरूप नित्यया वाचा वेदलक्षणया सुष्टुतिं शोभनां स्तुतिं चोदस्व प्रेरय कुर्वीति विरूपऋषिं प्रत्युच्यते इति । **स्वयम्भुवा स्वतन्त्रेण विष्णुना या वेदवागुच्चारिता सा अनादिनिधनतया** उत्पत्तिविनाशशून्यतया नित्या ध्रुवा इति । **अत एव** वेदनित्यत्वादेव । **नित्यत्वं** वेदप्रवाहस्य । न केवलं शब्दात्, किन्तु वेदनित्यत्वान्यथाऽनुपपत्तेश्चेति चशब्दः । इति श्रुतिस्मृतिब्रह्मसूत्राणामर्थः ।

**भावदीपिका (श्री.टि.)**– ॥ **प्रसिद्धानि** अकारादीनि । **व्याख्यातानि** 'अक्षरशब्देन' इति शेषः । यदुक्तं ब्रह्मशब्देन वेदग्रहणमयुक्तं, तस्य परब्रह्मणि रूढत्वात् । वेदे तु बृहत्त्वयोगेन प्रवृत्तत्वात् । तथा चाक्षरशब्देन परब्रह्मग्रहणमयुक्तम्, तस्य वर्णेषु रूढत्वात् । परब्रह्मणि तु अक्षरणयोगेन प्रवृत्तत्वात् । तथा चान्यथा व्याकुर्वता रूढिं परित्यज्य योगोऽङ्गीकृतः । तच्च 'रूढिर्योगमपहरति' इति न्यायन्ग्राह्यमिति । तदयुक्तम् । ब्रह्मशब्दस्य वेदे योगवद् 'बृह जातिजीवकमलासनशब्दराशिषु' इति धातोः 'वेदस्तत्त्वं तपो ब्रह्म' इत्यभिधानबलाद् रूढेरपि सत्त्वात् । तथाऽक्षरशब्दस्यापि परब्रह्मणि योगवत् 'अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते' इत्यभिधानबलात् रूढेरपि सत्त्वात् । अतो नोक्तदोषः । तथा च समुद्भवशब्दस्य मुख्यार्थलाभ इत्यत आह– **अनेनेति** ॥ आदिपदेन प्रवृत्तिनिमित्तग्रहणम् । **उभयत्र** वेदे परब्रह्मणि च । अभिधानबलात् रूढिः, प्रवृत्तिनिमित्तसद्भावात् योग इति द्रष्टव्यम् । 'अनेन' इत्युक्तं विशदयति– **परमर्शस्येति** ॥ ब्रह्मशब्दस्य वेदे योगरूढिमङ्गीकुर्वता त्वया परामर्शविरोधोऽपरिहृत एव । तथा च पूर्वं ब्रह्मशब्देन वेदग्रहणमयुक्तम् । तथा ब्रह्मशब्देन वेदं गृहीत्वा

श्लोकः १५
समुद्भवशब्दस्य मुख्यार्थाङ्गीकारे वर्णनित्यत्वस्य वर्णनित्यत्वसाधकश्रुतिविरोधस्य चापरिहारान्न समुद्भवशब्दो मुख्यार्थोऽङ्गीकर्तुं युक्त इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ॥ अभिधानादिबलादिति ॥** प्रयोगप्रवृत्तिनिमित्तसङ्ग्रहायादि-पदम् । 'वेदस्तत्वं तपो ब्रह्म' इत्यभिधानात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रयोगाच्च ब्रह्मशब्दः परब्रह्मवेदयो रूढः । 'अक्षरं ब्रह्मवर्णयो' इत्यभिधानादक्षरशब्दोऽपि तथा । 'बृंहति वर्धते' इति ब्रह्मशब्दनिरुक्तिलभ्यस्य वृद्धिरूपव्याप्तत्वस्य 'न क्षरती'त्यक्षरशब्दनिरुक्तिलभ्याविनाशित्वस्य च ब्रह्मवेदयोः सत्त्वाद् ब्रह्माक्षरशब्दौ यौगिकौ । एवं योगरूढावित्यर्थः । 'अनेन' इत्युक्तं विवृणोति– **परामर्शस्येति ॥**

## भाष्यम्

**दोषाश्चोक्ताः सकर्तृकत्वे । न चाबुद्धिपूर्वम् उत्पन्नानि । तत्प्रमाणाभावात् । निश्वसितशब्दस्त्वक्लेशाभिप्रायो नाबुद्धिपूर्वाभिप्रायः । 'सोऽकामयत'** (तै.उ. २.११) **इत्यादेश्च । 'इष्टं हुतम्'** (बृ.उ.६.१.२) **इत्यादिरूपप्रपञ्चेन सहाभि-धानाच्च ॥**

भावप्रदीपिका (प.टी.)– वेदानित्यत्वे बाधकमाह– **दोषाश्चेति** । अबुद्धिपूर्वक-मुत्पन्नत्वान्नायं दोषः इत्यत आह– **न चेति ॥** 'निःश्वसितमेतद्यदृग्वेद' इति वाक्यार्थ-पर्यालोचनया सिद्धमबुद्धिपूर्वमुत्पन्नत्वं वेदस्येत्यत आह– **निःश्वसितेति ॥** इतश्च नाबुद्धिपूर्वं भगवतः किञ्चिदुत्पद्यत इत्याह– **स इति ॥** नामप्रपञ्चस्याबुद्धिपूर्वमुत्पन्नत्वेऽपि रूपप्रपञ्चविषयिणी सा श्रुतिरित्यत आह– **इष्टमिति ॥** सर्वस्यापि निःश्वसितत्वोक्तेर्वैयर्थ्यं कामश्रुतेस्तत्पक्ष इत्यर्थः ।

भावप्रकाशिका (न.टी.)– ननूत्पत्तावपि प्रमाणम् 'ऋचः सामानि जज्ञिरे' इत्या-दीत्याशङ्क्य, तद्युक्तिविरुद्धत्वाद् अन्यथा व्याख्येयमिति भावेनाह– **दोषाश्चेति ॥** 'रचितत्वे च' इत्यादाविति शेषः । नन्वबुद्धिपूर्वमुत्पन्नत्वाद् वेदानां न तेषु कर्तृगुणदोषा-वित्यत आह– **न चेति ॥** 'निःश्वसितमेतद्यद् ऋग्वेदः' इत्यादि तत्प्रमाणं स्यादित्यत

आह– **निःश्वसितेति** ॥ न हि सर्वज्ञात् स्वतन्त्रादबुद्धिपूर्वकं किञ्चिज्जायत इति भावः। इच्छापूर्वकसर्वसृष्टिश्रवणाच्च नाबुद्धिपूर्वकं किञ्चित् भगवत उत्पद्यत इत्याह– **स इति** ॥ नन्वत्र नामप्रपञ्चस्य निःश्वसितत्वोक्तेः, 'सोऽकामयत' इत्यारभ्य 'इदं सर्वमसृजत' इत्यत्र रूपप्रपञ्चविषय एव सर्वशब्दः किं न स्यात् ? इत्यत आह– **इष्टमिति** ॥

प्रमेयदीपिका (ज.टी.)– न केवलं श्रुत्यादिभ्यो वेदस्य नित्यत्वम्, किं तर्हि? विपक्षे बाधकाच्चेत्याह– **दोषाश्चेति** ॥ 'रचितत्वे च धर्मप्रमाणस्य'(गी.भा.२.१३) इत्यत्र। ननु वेदाक्षराणि ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नानि । अतो न विपर्ययादिमूलत्वशङ्केत्यत आह– **न चेति** ॥ 'निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः' (बृ.उ.४.४.१०) इति श्रुतिर्वेदानां ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वे प्रमाणमिति चेत्– किमयं निःश्वसितशब्दः अबुद्धिपूर्वमुत्पन्नत्वस्य वाचकः? उत निःश्वसितमिव निःश्वसितम्, इवार्थश्च 'अबुद्धिपूर्वकम् उत्पन्नत्वम्' इति गौण्या वृत्त्या तदभिप्रायः। नाद्यः। प्रमाणाभावात् ॥

द्वितीयं दूषयति– **निःश्वसितेति** ॥ अक्लेशेन निस्सरणस्यापीवार्थस्य सम्भवेन निःश्वसितशब्दस्य तदभिप्रायतोपपत्तौ नाबुद्धिपूर्वोत्पत्त्यभिप्रायत्वनिश्चय इत्यर्थः । नच परस्येवास्माकमपि निश्चयायोग इति भावेनाऽह– **स इति** ॥ 'सोऽकामयत, स इदं सर्वमसृजत' (तै.उ.२-११) इति ब्रह्मणः सर्वसृष्टेरिच्छापूर्वकत्वमुच्यते । इच्छा च बुद्ध्या अविनाभूता । अतो न किञ्चिद् ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नमिति ॥

ननु 'निःश्वसितमेतत्' इति श्रुतिः नामप्रपञ्चस्याबुद्धिपूर्वमुत्पत्तिं वक्ति। 'सोऽकामयत' इति चारूपप्रपञ्चस्येच्छापूर्वमित्यतो न विरोध इत्यत आह– **इष्टमिति** ॥ एवं सति 'निःश्वसितम्' इति श्रुतौ 'इष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः' (बृ.उ.६.१.२) इति नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानात्। रूपप्रपञ्चस्यापि निःश्वसितशब्देनाबुद्धिपूर्वोत्पन्नत्वप्राप्तौ 'सोऽकामयत' इति श्रुतिर्निर्विषयैवापाद्येतेति भावः ॥

भावदीपः (रा.टि.)– कुत्र? इत्यतः पूर्वाध्यायगतस्थलमाह– रचितत्वे चेति ॥ अबुद्धिपूर्वमिति पदविभागो ज्ञेयः ॥

भावरत्नकोशः (सु.टि.)– ॥ बाधकाच्च नित्यत्वम् । इत्यत्रेति ॥ 'रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशङ्का स्यात्' (गी.भा. २.१३) इति पूर्वाध्याये रचयितृपुरुषे

श्लोकः १५

अज्ञानविप्रलम्भविपर्ययादिसम्भवेन तस्य विपर्ययादिमूलत्वं किं न स्यात् ? इति दोष उक्त इति भाष्यार्थ इति भावः ।

'उत्पन्नानि' इति विशेषणश्रवणात् तद्विशेष्यं संयोजयन् उत्तरभाष्यमवतारयति– **ननु वेदाक्षराणीति ॥** पुरुषरोगघुणाक्षराणीवेति भावः । 'अस्य महतो भूतस्य'इत्यत्र महाभूत-शब्दस्य 'एको विष्णुर्महद्भूतम्' इति परब्रह्मपरत्वादाह– **ब्रह्मण इति ॥** ऋग्वेदादे-र्निस्सृतत्त्वानुपपत्तेः 'परत्र परशब्दः प्रयुज्यमानोऽन्तरेणापि वतिं वत्यर्थं गमयति' इति न्याय-मनुसन्दधदाह– **निःश्वसितमिव निःश्वसितमिति ॥** इवार्थश्च सादृश्यम् । 'वत् वा यथा तथा इव एवं साम्ये' इत्यमरे, 'इवेति सादृश्ये' इति मनोरमायां चोक्तेः, 'इवोभये च सादृश्ये' इत्यनुव्याख्यानोक्ताभिधानाच्चेति हृदि निधायात्र विवक्षितं सादृश्यं दर्शयति –**अबुद्धिपूर्वक-मुत्पन्नत्वमिति ॥ प्रमाणेति ॥** अबुद्धिपूर्वमुत्पन्नस्य निःश्वसितशब्दो वाचक इत्येतन्न युक्तम् । अभिधानादेरभावादिति भावः । **निस्सरणस्यापीति ॥** इवशब्दार्थः सादृश्यम् इहाक्लेशेन निस्सृतत्वमिति निस्सरणस्यापीवार्थस्येत्यर्थः । निःश्वसितशब्दार्थनिश्चयाभावात् 'नाबुद्धि-पूर्वाभिप्रायः' इति भाष्ये कथं तत्पक्षदूषणमिति दोषं परिहरन्नाहेति भावेनोत्तरभाष्यमवतारयति– **न चेति ॥**

**॥ इच्छापूर्वकत्वमिति ॥** 'सोऽकामयत' इत्यत्र कमिधातोः कान्त्यर्थत्वात् 'कान्तिरिच्छा' इति वैयाकरणैरुक्तत्वाद् 'ऐच्छत्' इत्यर्थादिति भावः । तथाऽप्यबुद्धिपूर्वमुत्पन्नत्वं नार्थ इत्यत्रैतच्छ्रुतेरुपयोगाय आह– **इच्छा चेति ॥** तद्विषयकज्ञानाभावे तदिच्छायाः काप्यदर्शनादिति भावः । **इति श्रुतिरिति ॥** 'अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदस्सामवेदो-ऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि' इति श्रुतिः । ऋग्वेदादेर्भारतादेश्चापौरुषेयपौरुषेयग्रन्थजातस्य निःश्वासितत्वं वक्ति । 'सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तञ्च' इत्यादिश्रुतिस्त्वर्थात्मक-प्रपञ्चस्येच्छापूर्वमुत्पत्तिं वक्तीति भिन्नविषयत्वान्न विरोध इत्यर्थः ।

**॥ इष्टमित्यादि । इष्टं** यजनम् । **हुतं** हवनम् । **आशितं** अन्नादनम् । **पायितं** पानीय-पानम् । **अयं लोकः** पृथिवी । **परो लोकः** स्वर्गश्चेत्यर्थः । **सहाभिधानादिति** । यद्यपि

तुरीयाध्याये 'निःश्वसितमेतद् यद् ऋग्वेदः' इत्युदाहृतश्रुतौ 'इष्टं हुतमाशितम्' इत्यादिवाक्यमेव नास्तीति न रूपप्रपञ्चस्य सहाभिधानमस्ति । तथाऽपि षष्ठाध्याये 'ऋग्वेदो यजुर्वेदः' इति पठित्वा 'इष्टं हुतमाशितम्' इत्यादि पठ्यते । तत्र च तुरीयाध्यायोक्तार्थस्यैव प्रत्यभिज्ञानात् तुरीये च 'निःश्वसितम्' इति निःश्वसितशब्दश्रवणादर्थैक्येनैक्यम् अभिसन्धायैव 'निःश्वसितम्' इति श्रुतौ नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानादित्युक्तमिति वेदितव्यम् । **निर्विषयैवेति** ॥ सा हि ब्रह्मणः सर्वसृष्टेरिच्छापूर्वकत्वमाह ।

**भावदीपिका (श्री.टि.)**– ॥ **रचितत्वे चेति** ॥ 'रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशङ्का स्याद्' इति द्वितीयाध्याये धर्मादिसाधकस्य वेदरूपप्रमाणस्य सकर्तृकत्वाङ्गीकारे तत्कर्तुरज्ञानविपर्ययादिदोषशङ्कया तन्मूलकत्वशङ्कनेन अप्रामाण्यशङ्का वेदे स्यादिति दोष उक्त इत्यर्थः ॥ **अबुद्धिपूर्वमिति** ॥ बुद्धिपूर्वमुत्पन्नत्वे हि विपर्ययादिमूलकत्वशङ्केति भावः ॥ **गौण्या वृत्त्येति** ॥ अबुद्धिपूर्वकत्वं श्वासे वेदे च गुण इति भावः ॥ **तदभिप्राय इति** ॥ निःश्वसितशब्दोऽबुद्धिपूर्वमुत्पन्नत्वाभिप्राय इत्यर्थः ॥ **प्रमाणेति** ॥ अभिधानादिरूपेत्यर्थः । **अक्लेशेनेति** ॥ यथा निःश्वासेऽक्लेशेन निःसरणं तथा वेदेऽप्यस्तीति निःश्वसितशब्दो वेदेऽन्यथासिद्ध इति न तेन वेदस्याबुद्धिपूर्वकत्वनिश्चय इति भावः । **तदभिप्रायतेति** ॥ अक्लेशेन निःसरणाभिप्रायतेत्यर्थः ॥ **न च परस्येति** ॥ अक्लेशेन निःसरणस्यापि इवार्थस्य सम्भवेन निःश्वसितशब्दस्य तदभिप्रायतोपपत्तौ न बुद्धिपूर्वोत्पत्त्यभिप्रायत्वत्वनिश्चय इत्युच्यते, एव [ अबुद्धिपूर्वमुत्पन्नत्वस्यापि इवार्थस्य सम्भवेन निःश्वसितशब्दस्य तदभिप्रायतोपपत्तौ नाक्लेशेन निःसरणाभिप्रायकत्वनिश्चय इति नेत्यर्थः । **ब्रह्मणः सकाशात्** ।

नन्वत्र सृष्टेरिच्छापूर्वकत्वोक्तावपि बुद्धिपूर्वकत्वं कथमागतम्? इत्यत आह– **इच्छा चेति** ॥ इच्छापूर्वकत्वोक्तौ बुद्धिपूर्वकत्वं लब्धमेव, तदविनाभूतत्वादित्यर्थः । यथोक्तम् 'कुत इच्छाऽचेतनस्य' इति । **नामप्रपञ्चस्येति** ॥ ऋग्वेदादीनां शब्दरूपत्वेन नामप्रपञ्चत्वादिति भावः । **इच्छापूर्वम्** 'उत्पत्तिं वक्ति' इति वर्तते । **न विरोध इति** ॥ भिन्नविषयत्वादिति भावः । 'निःश्वसितम्' इत्यादिश्रुतौ वेदादिनामप्रपञ्चस्य 'इष्टं हुतम्' इति वाक्ये रूपप्रपञ्चेन सहाभिधानाद् एकप्रकरणे सहाभिधानाद् एकप्रकरणे सहपाठादित्यर्थः । **प्राप्ताविति** ॥ अन्यथा

सहपाठविरोधापत्तेरिति भावः । निर्विषयैवेति ॥ नामरूपप्रपञ्चव्यतिरिक्तस्येच्छापूर्वोत्पन्नस्य तच्छ्रुतिविषयस्याभावादित्यर्थः ।

## भाष्यम्

**महातात्पर्यविरोधाच्च । तच्चोक्तं पुरस्तात् (गी.भा.२.२४) । न ह्यस्वातन्त्र्येण उत्पत्तिकर्तुः प्राधान्यम् । अस्वातन्त्र्यं च तदमतिपूर्वकत्वेन भवति । यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि ॥**

भावप्रदीपिका (प.टी.)– इतश्च नाबुद्धिपूर्वं भगवत्सृष्टिरित्याह– **महातात्पर्येति** ॥ किं तन्महातात्पर्यम् ? इत्यत आह– **तच्चेति** ॥ विष्णोः सर्वप्राधान्यानिराकरणात् कथं महातात्पर्यविरोधः ? इत्यत आह– **न हीति** ॥ अबुद्धिपूर्वकत्वमेवोच्यते नास्वातन्त्र्यमित्यत आह– **अस्वातन्त्र्यं चेति** ॥ अत्र दृष्टान्तमाह– **यथेति** ॥ पुरुषस्य 'अस्वातन्त्र्यम्' इति शेषः ।

भावप्रकाशिका (न.टी.)– इतोऽपि नाबुद्धिपूर्वकाभिप्राये निःश्वसितशब्द इत्याह– **महातात्पर्येति** ॥ किं तन्महातात्पर्यम् ? इत्याकाङ्क्षायामाह– **तच्चेति** ॥ भगवत्प्राधान्ये सर्वागमतात्पर्यमुक्तं द्वितीयाध्याये । ननु कथमबुद्धिपूर्वसृष्टत्वेऽपि तद्विरोधः ? इत्यत आह– **न हीति** ॥ ननु निःश्वसितमात्रेणोत्पत्तिकर्तुः कथमस्वातन्त्र्यम् ? इत्यत आह– **अस्वातन्त्र्यं चेति** ॥ 'विमता जनिर्न जनकाधीना, अबुद्धिपूर्वकजनित्वात् रोगादिजनिवत्' इत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– इतोऽपि नाबुद्धिपूर्वा ब्रह्मणः सृष्टिरित्याह– महातात्पर्येति ॥ परब्रह्मणः सर्वोत्तमत्वे यत् सर्ववेदानां महातात्पर्यं तद्विरोधाच्चेत्यर्थः । तदेव कुतः? इत्यत आह– **तच्चेति** ॥ उक्तं साधितम् । कथं तद्विरोधः? इत्यत आह– **न हीति** ॥ **प्राधान्यं** सर्वोत्तमत्वम् ।

अस्वातन्त्र्येणोत्पत्तिकर्तृत्वस्य प्राधान्यविरोधित्वेऽप्यबुद्धिपूर्वमुत्पादकत्वस्य किमायातम्? इत्यत आह– **अस्वातन्त्र्यं चेति** ॥ कार्यस्य पुरुषमतिपूर्वकत्वाभावे तत्र तस्य

**पुरुषस्यास्वातन्त्र्यं भवति । तत्र दृष्टान्तमाह– यथेति ॥ रोगादीनां पुरुषजन्यत्वेऽपि बुद्धिपूर्वकत्वाभावात्, तत्र पुरुषस्यास्वातन्त्र्यं यथेत्यर्थः । ततश्चाबुद्धिपूर्वमुत्पादकत्वा-दस्वातन्त्र्यम् । अस्वातन्त्र्यादप्राधान्यं प्रसज्येत इति। तथाच महातात्पर्यविरोध** इत्युक्तं **भवति । साक्षात् प्रसङ्गसम्भवेऽपि व्युत्पादनार्थमेवमुक्तम् ॥**

**भावबोधः (र.टि.)– ॥ साक्षात्प्रसङ्गसम्भवेऽपीति ।** अबुद्धिपूर्वमुत्पन्नत्वे तथोत्पाद-कत्वस्य दोषत्वेन गुणोत्कर्षे महातात्पर्यविरोधः स्यादिति साक्षात्प्रसङ्गसम्भव इति भावः । अबुद्धिपूर्वमुत्पन्नत्वेनान्तरङ्गत्वादिति भावः । तत्पुरुषमतिवर्तिपदार्थप्रधानत्वेनान्तरङ्गत्वादित्यर्थः ॥ १६ ॥

**भावदीपः (रा.टि.)– ॥ साधितमिति ॥** 'पूर्वाध्याये' इति योज्यम् ॥ **साक्षात् प्रसङ्ग-सम्भव इति ॥** अबुद्धिपूर्वं भगवतः सृष्टिहेतुत्वे रोगोत्पत्तौ पुरुषस्येवास्वातन्त्र्यं स्यादिति साक्षात्प्रसङ्गशब्दितानिष्टापादन-सम्भवे सत्यस्वातन्त्र्ये चाप्राधान्यम् । अप्राधान्ये च प्रागुक्त-महातात्पर्यविरोध इति आपाद्यस्य अनिष्टताव्युत्पादनायैवंपरम्परोक्तेत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)–** इच्छा च बुद्ध्यविनाभूतेत्यबुद्धिपूर्वमुत्पन्नत्वं न केनापि प्रकारेण शक्यं वक्तुमिति विषयाभावादप्रमाणं स्यादित्यर्थः । कस्य क तात्पर्यम्?इति न ज्ञायत इत्यत आह– **सर्ववेदानां ब्रह्मणः सर्वोत्तमत्व इति ॥ तदेव** तात्पर्यमेव । कुतः? इति साधकं **पृष्टम्** । तत्र च 'उक्तम्' इत्ययुक्तम् । उक्तिमात्रस्यासाधकत्वादित्यत आह– **साधितमिति ॥** 'मोक्षो हि महापुरुषार्थः' इत्यादिना द्वितीयाध्याय इति शेषः । **तद्विरोधः** महातात्पर्यविरोधः । सर्वोत्तमत्वस्यैव तात्पर्यविषयत्वेन प्रस्तुतत्वात् 'प्राधान्यं सर्वोत्तमत्वम्' इत्युक्तम् । 'पुरुषस्य' इति वक्ष्यमाणमत्रापि सम्बध्यत इति भावेन 'तदमतिपूर्वं' इति भाष्ये तच्छब्दार्थमाह– **पुरुषमतीति ॥** 'यथा' इत्येतद्वाक्यशेषोऽपीत्यभिप्रायेणाह– **यथेत्यर्थ इति ॥** अबुद्धिपूर्व-मुत्पादकत्वस्य स्वातन्त्र्यविरोधित्वं कथमित्यर्थकेन 'किमायातम्' इत्यनेन कृतचोद्यं परिहर्तुं 'तदमतिपूर्वकत्वेन' इति तृतीयाविभक्तिभावमाह– **ततश्चेति ॥ तत्र** अबुद्धिपूर्वकत्वेऽ-स्वातन्त्र्यमित्यत्र । अस्वातन्त्र्यं यथेति पूर्वोक्तदृष्टान्तः सामान्यात्मा । एतद्भाष्योक्तस्तु विशेषात्मेति ज्ञातव्यम् । तच्छब्दार्थः– **पुरुषेति । तत्र** रोगादिषु । 'महातात्पर्यविरोधाच्च' इत्यादिघट्टतात्पर्यमाह– **ततश्चेत्यादि ॥** 'न ह्यस्वातन्त्र्येणोत्पत्तिकर्तुः प्राधान्यम्' इति भाष्यतात्पर्यम्– **अस्वातन्त्र्यादप्राधान्यं प्रसज्येतेति ॥**

नन्वेवंप्रसञ्जनस्य भाष्याभिप्रायविषयत्वे यदि ब्रह्मणोऽबुद्धिपूर्वमुत्पादकत्वं स्यात् तर्ह्य-स्वातन्त्र्यं स्यात् । रोगाद्युत्पादकपुरुषे तद्दृष्टेरिति साक्षादेवानिष्टापादनरूपतर्कावतारे सम्भवति किमित्यस्वातन्त्र्ये चाप्राधान्यम्, अप्राधान्ये च महातात्पर्यविरोध इति परम्परयाऽऽपादनम् ? इत्याशङ्क्य समाधत्ते साक्षात्– **प्रसङ्गसम्भवेऽपीति** ।। यद्यप्युक्तरीत्या साक्षादापादनं शक्यं कर्तुम् । तावतैव परपक्षप्रतिक्षेपात् । तथाऽपि शिष्यान् व्युत्पादयितुं मध्येऽस्वातन्त्र्यमप्राधान्यं च सदृष्टान्तम् अभिनिवेशितमित्यर्थः । एवंसति भगवतोऽस्वातन्त्र्यम्, अस्वातन्त्र्याद् अप्राधान्यम्, अप्राधान्यात् महातात्पर्यं न स्यादिति परपक्षे बहूनि दूषणान्युद्भावितानि भवन्तीति ।

प्राचीनटीकायां तु 'विमता जनिर्जनकाधीना न अबुद्धिपूर्वकजनित्वाद् रोगादिजनिवद्' इत्यनुमानोक्तिपरतयेदं भाष्यं योजितम् ।

**भावदीपिका (श्री.टि.)**– महातात्पर्यमेव कुतः? इति शङ्किते 'महातात्पर्यं पुरस्ताद् द्वितीयेऽध्याये उक्तम्' इति वचनमात्रस्य तत्साधकत्वाभावादाह– **उक्तं साधितमिति** ।। 'प्रमाणैः' इति शेषः । अबुद्धिपूर्वमुत्पादकत्वस्य । तथा च प्राधान्यविरोधित्वाभावादिति भावः ।

**भावप्रकाशः (कृ.टि.)**– ननु 'कुतः ?'इति साधकप्रश्ने तदेव वाच्यम् । 'उक्तम्' इत्युक्तिरसङ्गता । उक्तिमात्रस्याप्रयोजकत्वादित्यत आह– **उक्तं साधितमिति** ।। 'मोक्षो हि महापुरुषार्थ इत्यादिना' इति शेषः । **साक्षात्प्रसङ्गेति** ।। यदि विष्णोरबुद्धिपूर्वकर्तृत्वं स्यात् तर्हि सर्वोत्तमत्वाभावेन तत्र वेदस्य महातात्पर्यविरोध इति साक्षात्प्रसङ्गसम्भवेऽपीत्यर्थः । एवमुक्त-मिति ।। मध्येऽस्वातन्त्र्यादिकमपादितमित्यर्थः ।

## भाष्यम्

**उत्पत्तिवचनान्यभिव्यक्त्यर्थानि, अभिमानिदेवताविषयाणि च । 'नित्या' इत्युक्त्वा 'उत्सृष्टा' इति वचनात् । अभिव्यञ्जके कर्तृवचनं चास्ति । 'ऋग्वेद एवाग्नेरजायत । वायोर्यजुर्वेदः' 'कृत्स्नं शतपथं.........चक्रे'** (म.भा.१२. ३१८.१६) **इति । कथमादित्यस्था वेदाः तेनैव क्रियन्ते? वचनमात्राच्च निर्णयात्मकशारीरकोक्तं बलवत् ।।**

भावप्रदीपिका (प.टी.)– वेदनित्यत्वमिव तदुत्पत्तावपि वचनानि सन्तीत्यत आह– **उत्पत्तीति** ।। कुत इयं व्यवस्था ? इत्यत आह– **नित्येति** ।। एतद्वाक्यप्रामाण्यानुपपत्त्येत्यर्थः । अभिव्यञ्जके कर्तृवचनवदभिव्यक्ते कृतकत्ववचनमुपपन्नमित्याह– **अभिव्यञ्जक इति** ।। शतपथकर्तैव किं न स्यात् ? इत्यत आह– **कथमिति** ।। इतश्चोत्पत्तिवचनस्यार्थान्तरमेवेत्याह– **वचनेति** ।।

भावप्रकाशिका (न.टी.)– ननूत्पत्तिवचनानामप्रामाण्यं स्यादित्यत आह– **उत्पत्तीति** ।। वचनसूचितैवेयं व्यवस्थेत्याह– **नित्येति** ।। **उत्सृष्टा** उत्पन्ना । नित्यस्योत्पत्तिर्नामाभिव्यक्तिः, अभिमानिदेवतोत्पत्तिर्वा । साऽपि यथायोग्यम् । एवमभिव्यङ्ग्ये कार्यशब्दप्रदर्शनेन 'ऋचः सामानि जज्ञिरे' इत्यादि व्याख्यातं भवति । न केवलमेतावत् । किं तर्हि ? इत्याकाङ्क्षायामाह– **अभिव्यञ्जक इति** ।। तथा हि मोक्षधर्मे याज्ञवल्क्यवचनम्–

> 'ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
> चक्रे सपरिशेषं च हर्षेण परमेण ह ।।' इति ।

ननु याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यात् ? इत्यत आह– **कथमिति** ।। पूर्वमादित्यस्थत्वं तेषां वेदानाम्, ततो याज्ञवल्क्यप्राप्तिश्च 'मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप' इत्याद्युपक्रमाद् (एव) अवगम्यते । एतेन 'आदिविद्वान् वेदकर्ता' इत्यादि व्याख्यातं भवति । न केवलं नित्यवचनं निरवकाशत्वात् प्रबलम्, किन्तु निर्णयात्मकत्वादपीत्याह– **वचनेति** ।।

प्रमेयदीपिका (ज.टी.)– ननु वेदनित्यत्ववत् तदुत्पत्तावपि 'ऋचः सामानि जज्ञिरे' इत्यादि वचनानि सन्ति । तत्कथं निर्णयः? इत्यतो विपक्षे बाधकोपेतानां नित्यत्ववाक्यानां प्राबल्याद् उत्पत्तिवचनान्यन्यथा व्याख्येयानीत्याह– **उत्पत्तीति** ।। उत्पत्तिवाची शब्दोऽभिव्यक्तौ क दृष्टः? इत्यत आह– **नित्येति** ।। 'अनादिनिधनतया नित्या न तूपचारेण' इति मुख्यं नित्यत्वम् उक्त्वा पुनः 'उत्सृष्टा' इत्युच्यते । तत्र गत्यन्तराभावाद् व्यक्तिरेव ग्राह्येत्यर्थः ।।

श्लोकः १९

**अन्यत्रापि प्रयोगं दर्शयति– अभिव्यञ्जक इति ॥ शतपथाभिव्यञ्जकतया निश्चिते याज्ञवल्क्ये कर्तृशब्दोऽस्तीत्यर्थः । याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यात्? इत्यत आह– कथमिति ॥ प्रागादित्ये स्थितास्ततो याज्ञवल्क्येनाधीता इत्येतत् प्रमितमित्यर्थः॥ इतोऽपि नित्यत्वपक्ष एव बलवानित्याह– वचनेति ॥ 'ऋचः सामानि' इत्यादिकं वचनमात्रम् । 'अत एव च नित्यत्वम्' (ब्र.सू.१.३.२९) इति शारीरकोक्तं वाक्यं निर्णयात्मकम् । वचनं च वृत्त्यन्तरेणापि सम्भवति इति । न तूपचरितो वाक्यार्थावधारणात्मको निर्णयः । अतस्तस्मादिदं बलवदित्यर्थः ॥**

**भावदीपः (रा.टि.)– ॥ विपक्ष इति ॥** 'सकर्तृकत्वे दोषश्चोक्तः' इति प्रागुक्तविपक्षबाधकोपेतानां 'वाचा विरूप नित्यया' इत्यादीनामित्यर्थः ॥ अपौनरुक्त्यायाऽऽह– **अनादिनिधनतया नित्येति ॥**

**भावरत्नकोशः (सु.टि.)– ॥ नित्यत्ववत्** अनुत्पन्नत्व इव । 'ऋचः सामानि जज्ञिरे' इत्यादीनि अभिव्यक्तिः अर्थः तात्पर्यविषयो येषां तानि तथोक्तानि । **अभिमानिदेवताविषयाणि** अवान्तराभिमानिदेवताशरीरजन्मविषयाणि । 'चशब्दः' वाशब्दार्थ इति भाष्यार्थः । तथा चोक्तम्–

> 'वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया ।
> अवान्तराभिमानानां देवानां वा व्यपेक्षया ॥' (ब्रह्माण्डे) इति ।

प्राचीनटीकायां च 'अभिमानिदेवतोत्पत्तिर्वा' इति । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा' इति भाष्योपात्तवाक्ये 'अनादिनिधना' इति विशेषणं हेत्वर्थगर्भमिति तदर्थमाह– **अनादिनिधनतयेति ॥ मुख्यं नित्यत्वं** वेदवाक्य इति योज्यम् । तत्र 'उत्सृष्टा' इति पदे । **गत्यन्तरेति ॥** उत्पत्तेरेव ग्रहणे पूर्ववाक्यविरोधो दुर्वार इति व्यक्तिरेवार्थतया उपादातव्येत्यर्थः । **प्रयोगम्** उत्पत्तिवाचिशब्दस्य अभिव्यक्तौ । 'कर्तृवचनम्' इत्यस्यार्थः– **कर्तृशब्द इति ॥** तथा हि मोक्षधर्मे–

> 'ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
> चक्रे सपरिशेषं च हर्षेण परमेण ह ॥'

इति प्राचीनटीकायाम् उदाहृतयाज्ञवल्क्यवचनावमर्शे अभिव्यञ्जकतया निश्चितेऽपि कर्तृवाचकः 'चक्रे' इति शब्दोऽस्तीत्यर्थः । अत्र 'चक्रे' इति लिडात्मनेपदोत्तमपुरुषैकवचनम् । कृतवानहमित्यर्थः । तथा च मोक्षधर्मे–

'सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ।
कर्तुं शतपथं वेदमपूर्वं च कृतं मया ॥'

इति याज्ञवल्क्यवचनम् । भाष्यं त्वन्वयप्रदर्शनपरमिति ज्ञातव्यम् ।

'आदित्यस्थाः' इत्यस्य तात्पर्यं –**प्रागादित्ये स्थिता इति ॥ ततः** आदित्यात् । **प्रमितमिति ॥ तथा** च प्राचीनटीकायां 'मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिपेत्युपक्रमात्' इति प्रमाणमुपन्यस्तम् । अनेनैव भाष्ये वेदशब्दो यजुर्विशेषपरः, शतपथाभिव्यञ्जकत्वेन मोक्षधर्मे याज्ञवल्क्यस्योपस्थितत्वात् तेनैव याज्ञवल्क्येनेत्यर्थोऽवगम्यते । 'एवमुक्तौ ददौ तस्मै यजूंषि भगवान् रविः' इति विष्णुपुराणवाक्येन प्रमितमित्यर्थ इत्यपि आहुः । भाष्ये चशब्दश्रवणादाह– **इतोऽपीति ॥ शारीरकेति ॥** 'शारीरः परमात्मा । तद्विचारकं शास्त्रं शारीरकम्' इति सुधायां व्याख्यातम् इति, अत्र शारीरकशब्देन ब्रह्मसूत्राण्युच्यन्ते । तत्रोक्तं वाक्यम् 'अत एव च नित्यत्वम्' (ब्र.सू. १३२९) इत्येवंरूपम् । **निर्णयात्मकम्** अवधारणात्मकज्ञानसाधनमित्यर्थः । **अत एव** शब्दस्य नित्यत्वादेव देवप्रवाहनित्यत्वं युक्तमिति ब्रह्मसूत्रार्थः । **वृत्त्यन्तरेण** पूर्वोक्तगौण्यादिरूपेण । **सम्भवति** अर्थान्तरे प्रवर्तयितुम् । **उपचरितः** वृत्त्यन्तरेणान्यत्र नीतः । **अवधारणात्मकोऽपीति ॥** भाष्यगतद्वितीयचशब्दार्थः । न निर्णयः उपचरितः सम्भवतीत्यन्वयः । तथात्वे च सन्देहाद्यापादकत्वापत्त्या 'असन्दिग्धम्' इति शारीरकस्योक्तं लक्षणं न स्यादिति भावः । **अतः** शारीरकस्य वृत्त्यन्तरेण प्रवर्तयितुमशक्यत्वादित्यर्थः । **तस्मात्** वचनमात्रात् । **इदं** शारीरकवाक्यम् ।

**भावदीपिका (श्री.टि.)**– नन्वबुद्धिपूर्वमुत्पादकत्वाङ्गीकारे 'गुणोत्कर्षे महातात्पर्यं न स्यात्' इति साक्षात् प्रसङ्गसम्भवेऽस्वातन्त्र्यापादनं मध्ये कुतः? इत्यत आह– **साक्षादिति ॥ व्युत्पादनार्थमिति ॥** अबुद्धिपूर्वमुत्पादकत्वेऽपि गुणोत्कर्षे महातात्पर्यं कुतो न? इत्यतोऽबुद्धिपूर्वमुत्पादकत्वेऽस्वातन्त्र्यं प्राप्तम् । ततश्च न प्राधान्यमिति तदुपपादनार्थम् एवमुक्तम् अस्वातन्त्र्यरूपं द्वारमुक्तमित्यर्थः ।

श्लोकः १५

भाष्ये **अभिव्यक्तर्थानीत्यादि** ॥

'वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया ।
अवान्तराभिमानानां देवानां वा व्यपेक्षया ॥'

इति वचनादिति भावः । **आहेति** ॥ उदाहृश्रुतावेव प्रयोगं दर्शयतीत्यर्थः । **अनादिनिधनतयेति** ॥ **'नित्या'** इत्येतावता पूर्णे यत् 'अनादिनिधना' इत्युच्यते तद् बहुकालीनत्वमात्रेणौपचारिकं न भवतीति ज्ञापनायेत्यर्थः ॥ **शतपथेति** ॥ 'शतपथ' इति काण्ववेदानां सञ्ज्ञा। **कृत्स्नं शतपथं** समग्रं काण्ववेदं चक्र इति प्रमाणवाक्यार्थः । **कर्तृशब्द इति** ॥ कर्तृत्वार्थकः **'चक्रे'** इति शब्द इत्यर्थः । **कर्तैवेति** ॥ तथा च शतपथाभिव्यञ्जकतया निश्चितत्वमेवासिद्धम्, निश्चायकाभावादिति भावः । **स्थिताः** वेदाः । **ततः** वाजिरूपधरादादित्यात् । **प्रमितमिति** ॥ **यथोक्तं** भागवते अयातयामयजुष्कामेन याज्ञवल्क्येन सूर्योपस्थानकरणानन्तरमुच्यते–

'एवंरूपः स भगवान् वाजिरूपधरो हरिः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥' इति ।

तथा बृहद्भाष्योदाहृतवराहपुराणेऽप्युक्तम्–

'यथा तुष्टाव लक्ष्मीशं सर्गादौ चतुराननः ।
तथा जगाद सूर्याय याज्ञवल्क्याय सोऽब्रवीत् ॥' इति ।

॥ **वचनमात्रमिति** ॥ अभिव्यक्त्याद्यर्थकत्वेन सावकाशत्वादनिर्णायकमित्यर्थः ॥ **अत एव चेति** ॥ अत एव शब्दस्य नित्यत्वादेव प्रवाहनित्यत्वं च युक्तमिति सूत्रार्थः । ननु निर्णयात्मकादपि वचनमात्रस्यैव प्राबल्यं कस्मान्न स्यात्? इत्यत आह– **वचनं चेति** ॥ **वृत्त्यन्तरेणापीति** ॥ जन्याजन्यसाधारणाभिव्यक्तिरूपगुणयोगेनापि 'जज्ञिरे' इत्येतद्वचनं सावकाशमित्यर्थः । निर्णयः उपचरितो न त्वित्यन्वयः । **तस्मात्** वचनमात्रात् । **इदं** शारीरकमीमांसासूत्रम् ।

**भावप्रकाशः (कृ.टि.)**– ॥ **इत्येतत्प्रमितमिति** ॥ 'एवमुक्तो ददौ तस्मै यजूंषि भगवान् रवि'रित्यादि विष्णुपुराणवाक्येनेति शेषः । **अत एव च नित्यत्वमिति** ॥ शब्दस्य नित्यत्वादेव देवप्रवाहनित्यत्वं युक्तमिति सूत्रार्थः ॥

## भाष्यम्

**शास्त्रं योनिः यस्य तत् (इति तु) शास्त्रयोनित्वम् । 'जन्माद्यस्य'** (ब्र.सू. १.१.२) **इत्युक्ते प्रमाणं हि तत्रापेक्षितम् । न तु तस्य जातत्वं वेदकारणत्वं वा । नहि वेदकारणत्वं जगत्कारणत्वे हेतुः ॥**

भावप्रदीपिका (प.टी.)– 'अत एव च नित्यत्वम्' इतिवच्छारीरक एव 'शास्त्रयोनित्वात्' इति वेदोत्पत्तिः श्रूयत इत्यत आह– **शास्त्रमिति** ॥ ननु शास्त्रस्य योनिरिति किं न स्यात् ? अन्यथा ब्रह्मणो जातत्वापातादित्यत आह–**जन्मादीति** ॥ उभयमपि पूर्वसूत्रासङ्गतमित्यर्थः । अशक्यवेदस्रष्टुर्जगत्स्रष्टुत्वं किमुतेति जन्मादिकारणत्वे हेतुतयोच्यते शास्त्रयोनित्वमित्यत आह– **न हीति** ॥

भावप्रकाशिका (न.टी.)– **शारीरकं** ब्रह्मसूत्राणि । ननु शारीरक एव शास्त्रयोनित्वादिति वेदोत्पत्तिः श्रूयत इत्यत आह– **शास्त्रमिति** ॥ ननु समासबलीयस्त्वेन तत्पुरुष एव भवेत् । ब्रह्मण एव जातत्वापत्तेश्चेत्यत आह– **जन्मेति** ॥ पूर्वसूत्रासङ्गतत्वात् बहुव्रीहिप्रातीतिकार्थः, तत्पुरुषश्च न युक्त इत्यर्थः ॥

प्रमेयदीपिका (ज.टी.)– ननु शारीरके 'शास्त्रयोनित्वात्' (ब्र.सू.१.१.३) इति ब्रह्मणो वेदकारणत्वमुच्यत इत्यत आह– **शास्त्रमिति** ॥ ननु तत्पुरुषं परित्यज्य कुतो बहुव्रीहिरङ्गीक्रियते? तथात्वे च ब्रह्मणो वेदात् जातत्वं प्रसज्येतेत्यत आह– **जन्मादीति** ॥ लक्षणप्रमाणाभ्यां हि वस्तुनिर्णयः । तत्र 'जन्माद्यस्य' इति सूत्रेण लक्षणेऽभिहिते कुतः प्रमाणादेवं प्रतिपत्तव्यम्? इति ब्रह्मणो जगज्जन्मादिकारणत्वे प्रामाणाकाङ्क्षा स्यात् । न तु तस्य वेदाज्जातत्वं वेदकारणत्वं वाऽऽकाङ्क्षितम् । आकाङ्क्षादिवशाच्च वाक्यार्थोऽवसेयः । अतो योनिशब्दं प्रमाणवाचिनमङ्गीकृत्य बहुव्रीहिरेवायं प्रतिपत्तव्यो न तु तत्पुरुषः । वेदकारणत्वं च जगत्कारणत्वे हेतुत्वेनात्रोच्यते । अतो नानाकाङ्क्षिताभिधानमेतदित्यत आह– **न हीति**॥ अन्वयाभावादेकदेशकारणत्वेन समुदायकारणत्वानुमानेऽतिप्रसङ्गाच्चेति हेरर्थः ॥

भावदीपः (रा.टि.)– ॥ तत्पुरुषमिति ॥ समस्यमानपदार्थत्यागेनान्यपदार्थप्रधानाद् बहुव्रीहेः, तत्पुरुषस्य तदत्यागेनोत्तरपदार्थप्रधानस्य प्राबल्यादिति भावः । तत्र 'हि'शब्दसूचितं

श्लोकः १५

हेतुद्वयं स्वयमाह– **अन्वयाभावादिति** ।। 'ईश्वरो विश्वकर्ता तदेकदेशवेदकर्तृत्वात्' इत्यन्वितं भविष्यति; वेदकारणत्वादित्यत आह– **एकदेशेति** ।। कुलालादेरपि विश्वकर्तृत्वापत्तेरिति भावः ।। १५ ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। तत्पुरुषं परित्यज्येति ।।** उत्तरपदार्थप्रधानत्वेन वर्तिपदार्थ प्रधानात् तत्पुरुषादन्यपदार्थप्रधानस्य बहुव्रीहेः जघन्यत्वेन तत्पुरुषासम्भव एवागतिकतया तस्याङ्गीकार्यत्वादिति भावः ।

**भावरत्नकोशः (सु.टि.)– ।। शारीरक एव** ब्रह्ममीमांसाशास्त्र एव । भाष्ये 'इति'शब्दात् पूर्वं 'तद्'शब्दो योज्यः । तस्य भावस्तत्त्वमिति शास्त्रयोनित्वं विवक्षितमिति योजना । **तत्पुरुषं** समस्यमानपदार्थप्रधानतया प्रबलमपि । **कुतः** अन्यपदार्थप्रधानतया दुर्बलः कस्मादङ्गीक्रियत इत्यर्थः । न केवलं समासबलीयस्त्वात् तत्पुरुषोऽङ्गीकार्यः, किन्त्वजत्वेन प्रमितस्य परब्रह्मणो वेदादुत्पत्त्यङ्गीकारप्रसङ्गाच्चेत्याह– **तथात्वे चेति** ।। सूत्रद्वयतात्पर्यमनुवदन्भाष्यं योजयति– **लक्षणेति** ।। 'अथातो ब्रह्मजिज्ञासा' इति ब्रह्मणो जिज्ञास्यत्वेऽभिहिते किं तस्य लक्षणम् ? किञ्च तत्र प्रमाणम् ? इत्याकाङ्क्षा जायते । लक्षणप्रमाणाभ्यामेव वस्तुनो निर्णेतव्यत्वादित्यर्थः । तत्र लक्षणप्रमाणयोर्मध्ये । **लक्षणे** जगज्जन्मादिकारणत्वरूपलक्षणे । एवं लक्षणलक्षितत्वेन । 'जातत्वम्' इति भाष्यार्थः– **वेदाज्जातत्वमिति** ।। 'अपेक्षितम्' इत्यस्यार्थः– **आकाङ्क्षितमिति** ।। **वाक्यार्थः** 'शास्त्रयोनित्वात् इति वाक्यार्थः । **प्रमाणवाचिनमिति** । 'योनिः स्त्रीणां भगे स्थाने गुह्ये कारणतन्त्रयोः' इत्यभिधानेन कारणाभिधायकमेव प्रमाकरणवाचिनमङ्गीकृत्य 'शास्त्रं योनिः प्रमाकरणमस्य' इति बहुव्रीहिरेव ज्ञातव्य इत्यर्थः । **तत्पुरुषः** 'शास्त्रस्य योनिः शास्त्रयोनिः' इति षष्ठीतत्पुरुषो न प्रतिपत्तव्यः । पूर्वसूत्रासङ्गतत्वादिति भावः ।

असङ्गतिं शङ्कते– **वेदेति** ।। **जगत्कारणत्वे** पूर्वसूत्रोक्ते । **अत्र** शास्त्रयोनिसूत्रे । वेदकारणत्वरूपो हेतुरन्वयी व्यतिरेकी वा । नाद्य इत्याह– **अन्वयाभावादिति** ।। 'यत्र वेदकर्तृत्वं तत्र जगत्कर्तृत्वम्' इत्यन्वयसहचारग्रहस्य दृष्टान्ताभावेनायोगान्नान्वयानुमानत्वमित्यर्थः । न द्वितीय इत्याह– **अन्वयाभावादिति** ।। व्याप्तिर्ह्यनुमानाङ्गम् । सा च न व्यतिरेकिणि हेतावन्वेति । साध्याभावनिष्ठताऽङ्गीकारात् । साध्याभावनिष्ठायाश्च व्यतिरेकव्याप्तेर्वेदकारणत्वहेतावन्वयाभावात् । व्याप्तिपक्षधर्मतावत एव च हेतुत्वान्न व्यतिरेकिणो हेतुत्वमित्यर्थः । न हि भावेन भावसाधनेऽभावस्याभावेन व्याप्तिरुपयुज्यत इति भावः ।।

ननु वेदकारणत्वाद् जगत्कारणत्वमिति नानुमीयते । किन्तु ब्रह्म जगत्कर्तृ तदेकदेश-वेदकर्तृत्वात् । यो यदेकदेशकर्ता स तत्सर्वकर्ता । यथा पटैकदेशकर्ता कुविन्दः पटकर्ता इत्यनुमीयते । न चात्रोक्तदोष इत्याह– **एकदेशेति ॥ अतिप्रसङ्गादिति ॥** कुविन्दकुलालादेरपि विश्वकर्तृत्वापत्तेरित्ययमर्थो भाष्ये हिशब्दसूचित इत्यर्थः । तथा च कुलालादौ हेतोर्व्यभिचार इति भावः ।

**भावदीपिका (श्री.टि.)– ॥ तत्पुरुषमिति ॥** 'शास्त्रस्य योनिः' इति षष्ठीतत्पुरुष-मित्यर्थः । वर्तिपदार्थप्रधानत्वेन तत्पुरुषस्य अन्यपदार्थप्रधानबहुव्रीह्यपेक्षयाऽन्तरङ्गत्वादिति भावः । **तथात्वे चेति ॥** 'शास्त्रं योनिर्यस्य' इति बहुव्रीह्यङ्गीकारे योनिशब्दस्य कारणार्थकत्वाद् ब्रह्मणो वेदाख्यशास्त्रजन्यत्वं प्रसज्यत इत्यर्थः । वेदाज्जातत्वं वेदकारणत्वं वेति बहुव्रीहि-तत्पुरुषाङ्गीकारेणेति ज्ञेयम् । ननु प्रमाणाकाङ्क्षायामपि तदनुसारेण कुतो वाक्यार्थोऽवसेयः? इत्यत आह– **आकाङ्क्षादीति ॥ प्रमाणेति ॥** ज्ञप्तिकारणेत्यर्थः। **अन्वयाभावादिति ॥** व्यतिरेकव्याप्तेः साक्षादनुमानानङ्गत्वाद् अन्वयव्याप्त्यामेवावश्यं वक्तव्यायां तत्र च दृष्टान्ताभावाद् व्याप्त्यसिद्धि-रिति भावः । नन्वन्वयव्याप्त्यभावेऽपि 'यो यदेकदेशकर्ता स तत्समुदायकर्ता' इति सामान्य-व्याप्तिमूलकमिदमनुमानम् इत्युच्यत इत्यत आह– **एकदेशेति ॥ अतिप्रसङ्गाच्चेति ॥** कुला-लस्यापि जगदेकदेशघटकारणत्वेन सर्वजगत्कारणत्वप्रसङ्ग इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ॥ ननु तत्पुरुषमिति ॥** वर्तिपदार्थप्रधानत्वेन तत्पुरुषस्य प्राबल्यादिति भावः । **अन्वयाभावादिति ॥** दृष्टान्ताभावेनान्वयसहचाराभावादित्यर्थः ॥

## भाष्यम्

**न हि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे । नच सर्वज्ञत्वे । यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा सर्वज्ञः? तस्माद् वेदप्रमाणकत्वमेवात्र विवक्षितम् । अतो नित्यान्यक्षराणि । यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म, तस्मात् तत् नित्यं यज्ञे प्रतिष्ठितम् ॥**

भावप्रदीपिका (प.टी.)– जन्माद्यस्येत्यर्थातिशयं न । सर्वज्ञे हेतुः शास्त्रयोनित्वमित्यत आह– **न चेति ॥** इतोऽपि सार्वज्ञस्यादिसूत्र एव सिद्धेर्द्वितीयसूत्रवैयर्थ्यमित्यर्थः ।

सूत्रार्थस्तर्हि कः ? इत्यत आह– **तस्मादिति** ॥ तानि च इत्याद्युक्तमुपसंहरति– **अत इति** ॥ 'तस्मात् सर्वगतम्' इत्येतत्परामृष्टहेतुप्रदर्शनपूर्वकं व्याचष्टे– **यत इति** ॥ यज्ञे ब्रह्मणः प्रतिष्ठितत्वात् तत्करणे ब्रह्मप्रतिमानिर्माणं भवतीति भावः ॥

**भावप्रकाशिका** (न.टी.)– ननु जगत्कारणत्वं वेदकारणत्वेन साधयतीति कथमसङ्गतिः ? यस्त्वन्याशक्यमपि वेदं सृजति, किमुतासौ न जगत् ? इति कैमुत्यन्यायादित्यत आह– **न हीति** ॥ सृज्यत्वपक्ष इत्यर्थः ।

ननु सर्वज्ञत्वसाधकत्वेन वेदकर्तृत्वं सङ्गच्छत इत्याशङ्क्य, 'निःश्वसितम्' इत्यबुद्धिपूर्वकत्वाङ्गीकारात् तदयुक्तमिति भावेनाह– **न चेति** ॥ इतोऽपि तत्र युक्तमित्याह– यदीति । एवमन्यथा गत्यभावादयमेव भगवद्विवक्षितसूत्रार्थ इत्याह– **तस्मादिति** ॥ उपसंहरति– **अत इति** ॥ अतो नोद्भवशब्दमुख्यार्थत्वायापि ब्रह्माक्षरशब्दयोर्व्यत्यास इत्यर्थः । 'तस्मात्' इत्यत्रोक्तहेतोरप्रसिद्धत्वात् तत्प्रकाशयन् योजयति– **यत इति** ॥ अतो न केवलं यज्ञार्थं सङ्गरहितं कर्म न बन्धकम्, किन्त्वेवं ब्रह्मज्ञानाङ्गत्वेन मोचकमपीति भावः ॥

**प्रमेयदीपिका** (ज.टी.)– मा भूदयं निश्चयहेतुः । तथाऽप्यशक्यसृष्टेर्वेदस्य कर्तुर्ब्रह्मणो जगत्सृष्टिकर्तृत्वं सम्भवतीति सम्भावनाहेतुरयं स्यादित्यत आह– **न हीति** ॥ सम्भावना ह्यधिकेनाल्पस्य भवति । यथा सहस्रेण शतस्य । नच समुदायसृष्टेस्सकाशात् तदेकदेशसृष्टिरधिका इति भावः । सृज्यत्वे वेदस्य । कार्यत्वपक्ष इत्यर्थः । जगत्कारणत्वोक्त्या ब्रह्मणः सर्वज्ञत्वं प्रतीतम् । तत् स्फुटीकर्तुं तत्र वेदकारणत्वं हेतुरनेनोच्यते । अतो नासङ्गतिरित्यत आह– **न चेति** ॥ 'वेदकारणत्वं हेतुः' इत्यनुवर्तते । अबुद्धिपूर्वमुत्पन्नत्वाङ्गीकारादिति भावः ॥

किञ्च यदि जगदेकदेशस्य वेदस्य स्रष्टा परमेश्वरः सर्वज्ञः सिद्ध्येत् तर्ह्यन्तर्भावितवेदस्य जगतस्स्रष्टा सुतरां सर्वज्ञः सिद्ध्येदेव । तथा चार्थादपि जन्मादिसूत्रेणैव सार्वज्ञस्य स्फुटं प्रतीतत्वात् पुनर्हेत्वाकाङ्क्षाऽभावेनासङ्गतिस्तदवस्थेति भावेनाऽह– **यदीति** ॥ सूत्रार्थमुपसंहरति– **तस्मादिति** ॥ 'ब्रह्मणः' इति शेषः ॥ 'तानि च' इत्यादिनोक्तमुपसंहरति– **अत इति** ॥ तथाच न समुद्भवशब्दस्य मुख्यार्थत्वलाभाय ब्रह्माक्षरशब्दार्थयोर्व्यत्ययः कार्य

इति । **'तस्मात्' इति परामर्शविषयाप्रतीतेः तद्दर्शयन् वाक्यं व्याख्याति– यत इति ॥ प्रतिष्ठितम् 'इत्युच्यते' इति शेषः ॥**

**भावरत्नकोशः (सु.टि.)– ॥ अयं** वेदकारणत्वम्, हेतुशब्दापेक्षया पुंलिङ्गत्वम् । अशक्या सृष्टिर्यस्येति अशक्यसृष्टिः, तस्य । **'कर्तुः'** इत्यत्र 'तृतीयादिषु भाषितपुंस्कम्' इति पक्षे नुमभावः । **इति सम्भावनाहेतुरयमिति** । । वेदकारणत्वमित्यर्थः । वाक्यान्तरत्वात् पुनः **'अयम्' इति । यथा सहस्रेणेति ॥** एकस्मिन्नेव मुहूर्तेऽनेन शतं पद्यानि रचितानीत्युक्ते असम्भावनाशङ्कायां यदा तेनैव पुरुषेण रचितानि सहस्रं पद्यानि पश्यति तदा सम्भवत्येवानेन शतं पद्यानि रचितानीति सहस्रेणाधिकेनाल्पस्य शतस्य सम्भावना यथा तथेत्यर्थः । न चैवं प्रकृते सम्भावनोपपद्यत इति भावः ।

'न हि विचित्र' इति भाष्यभावमाह– **न च समुदायेति ॥** 'सृज्यत्वे' इति भाष्यमनूद्य तत्र योग्यतया प्राप्तं योजयंस्तदर्थमाह– **सृज्यत्वे वेदस्येति** । । यदुक्तम् 'अनाकाङ्क्षिताभिधानात् 'शास्त्रयोनित्वात्' इति सूत्रमसङ्गतम्' इति, तन्न । पूर्वसूत्रे प्रतीतस्य सार्वज्ञस्य स्फुटीकरणार्थं शास्त्रयोनिसूत्रमिति पक्षेऽनाकाङ्क्षिताभिधानाभावादिति शङ्कां परिहरदुत्तरभाष्यमवतारयति– **जगत्कारणत्वोक्त्येति** । । उपादानापरोक्षज्ञानाभावे कारणत्वमेव नोपपद्यत इति तदुक्त्याऽर्थात् सार्वज्ञ्यं प्रतीतमित्यर्थः । **तत्र** अर्थलब्धसर्वज्ञत्वे । **अनुवर्तते** न हि वेदकारणत्वं जगत्कारणत्वे हेतुरिति पूर्वभाष्यात् । नन्वशेषार्थप्रतिपादकवेदकारणत्वं कथं न सार्वज्ञ्यं साधयेत् ? अर्थं बुद्ध्वा वाक्यरचयितृत्वस्य कारणशब्दार्थत्वादित्यत आह– **अबुद्धिपूर्वमिति ॥ अङ्गीकारादिति ॥** 'निःश्वसितमेतद् यद् ऋग्वेदः' इति श्रुतिर्वेदानां ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वमाहेत्यबुद्धिपूर्वत्वाङ्गीकारात्, अर्थं बुद्ध्वा शब्दरचयितृत्वरूपं वेदकारणत्वं नास्तीति न तस्य तत्र हेतुत्वं युक्तमित्यर्थः ।

दूषणान्तरपरत्वेनोत्तरभाष्यमवतारयति– **किञ्चेति ॥ अर्थादपीति ॥** वेदादिसकलगर्भस्य विचित्रस्य जगतः स्रष्टा उपादानापरोक्षज्ञानवानेव । अन्यथा सृष्टिरेव न युक्ता इत्यन्यथाऽनुपपत्तिबलादपीत्यर्थः । 'आनुमानिकमपि.....' इत्यादाविवात्रापिशब्द एवार्थ इति आहुः । **असङ्गतिः** शास्त्रयोनिसूत्रे वेदकारणत्वाभिधानस्य । 'शास्त्रं योनिर्यस्य' इति प्राक् सूत्रार्थस्य भाषितत्वादाह– **उपसंहरतीति ॥** तस्मात् तत्पुरुषपक्षस्यासङ्गतत्वापत्त्याऽयुक्तत्वादिति भाष्यार्थः । **इति शेष इति ॥** 'वेदप्रमाणकत्वमेव इत्यनन्तरम्' इति शेषः ।

श्लोकः १५

॥ **तानि चेत्यादिनोक्तमिति** ॥ **'तानि चाक्षराणि नित्यानि'** इत्यादिनोपपादितमक्षराणां नित्यत्वमित्यर्थः । वर्णानित्यत्वे प्रमाणाभावात्, बाधकतयोक्तानाम् अन्यथाव्याख्यातत्वेन बाधकाभावाच्चेति 'अतः' इति भाष्यार्थः । यदर्थमक्षरनित्यत्वं साधितं तत्फलमाह– **तथा चेति** ॥ **व्यत्ययः** ब्रह्मशब्दस्याक्षरार्थत्वम्, अक्षरशब्दस्य ब्रह्मार्थत्वमिति व्यत्यासः । **इति परामर्शेति** ॥ 'तस्मात् सर्वगतं ब्रह्म नित्यम्' इति श्लोके तच्छब्देन परामृश्यमानाप्रतीतेरित्यर्थः । (भाष्ये) **परम्परया यज्ञाभिव्यङ्ग्यमिति** ॥ यज्ञेन पर्जन्यः, पर्जन्येनान्नम्, अन्नेन भूतानि, भूतैर्वक्ष्यमाणरीत्याऽक्षराणि, अक्षरेभ्यो ब्रह्माभिव्यङ्ग्यमिति परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्मेति भाष्यार्थः । 'प्रतिष्ठितम्' इति पदमनूद्य तत्र शेषं पूरयति– **प्रतिष्ठितमिति** ॥ तेन 'ब्रह्मणो यज्ञप्रतिष्ठितत्वं यज्ञाभिव्यङ्ग्यमिति कथम् ? स्वतः सिद्धत्वात्' इति चोद्यं परिहृतम् । 'यज्ञे ब्रह्मणः प्रतिष्ठितत्वात् तत्करणे ब्रह्मप्रतिमानिर्माणं भवतीति भावः' **इति भावप्रदीपिका** ॥

**गीताक्षरार्थस्तु**— कर्म ब्रह्मोद्भवं परब्रह्मजन्यं विद्धि जानीहि । परब्रह्म अक्षरसमुद्भवं वेदाक्षराभिव्यङ्ग्यम् । तानि चाक्षराणि भूताभिव्यङ्ग्यानीति शेषोक्त्या चक्रं ग्राह्यम् । तस्माद् उक्तपरम्परया यज्ञाभिव्यङ्ग्यत्वात् सर्वगतम् अपि ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् । इत्युच्यत इति शेषः । एवं च भगवतो यज्ञे प्रतिष्ठितत्वाद् यज्ञानुष्ठानेन चक्रप्रवर्तने भूतस्थितिहेतुत्वनिमित्त-सुकृतमिव भगवदभिव्यक्तिनिमित्तं च सुकृतं भवतीत्यवश्यं कर्म कार्यम् ॥

**भावदीपिका (श्री.टि.)**– ॥ **'समुदायसृष्टेः सकाशाद्'** इति 'विचित्रजगत्सृष्टेः' इत्यस्य तात्पर्यम् । 'तदेकदेशसृष्टिः' इति 'वेदसृष्टिः' इत्यस्य । **अधिकेति** ॥ येनैकदेशसृष्ट्या समुदायसृष्टिः सम्भाविता स्यादिति भावः । तत्र सार्वज्ञ्ये । ननु वेदकारणत्वं सार्वज्ञ्ये कुतो न हेतुः? इत्यतोऽप्रयोजकत्वाद् इत्याशयेनाऽह– **अबुद्धीति** ॥ यदि वेदोऽबुद्धिपूर्वमीश्वरोत्पन्न इत्यङ्गीक्रियते तर्हि तत्प्रतिपाद्याशेषार्थज्ञानप्राप्त्या सार्वज्ञ्यं भवेत् । न चैवमङ्गीकृतम् । अतोऽ-प्रयोजकमनुमानमिति भावः । ब्रह्माक्षरशब्दार्थयोर्व्यत्ययो वेदपरब्रह्मरूपः । भाष्ये – **परम्परया यज्ञाभिव्यङ्ग्यमिति** ॥ यज्ञ-पर्जन्य-अन्न-भूत-अक्षरद्वाररूपपरम्परया यज्ञाभिव्यङ्ग्यमित्यर्थः । भाष्ये – **प्रतिष्ठितमिति** ॥ यज्ञे भोक्तृत्वेन प्रतिष्ठितमित्यर्थः ॥

## भाष्यम्

**तानि चाक्षराणि भूताभिव्यङ्ग्यानीति चक्रम् ॥**

भावप्रदीपिका (प.टी.)– नन्वत्रान्नादिपरम्परैव श्रूयते न चक्रमित्यत आह– **तानीति** ॥ अत्र कर्मादौ तत्सजातीयमात्रग्रहणेऽपि भवत्येव चक्रम् । भूतचक्रस्यापि कर्मविध्युपयोगित्वादिति ॥

भावप्रकाशिका (न.टी.)– नन्वत्राक्षरादिभूतान्तानां कार्यकारणभाव एवोक्तो न चक्रम् । चक्रं च भूतानामक्षरशब्दोक्तब्रह्मत्व एव भवतीति ब्रह्माक्षरशब्दार्थयोर्व्यत्यास एव भगवतोऽभिप्रेत इत्याशङ्कां स्वमते तत्साधनेनैव परिहरति– **तानि चेति** ॥ इति चक्रं नान्यथेत्यर्थः । न च भूतानामक्षरशब्दोक्तपरब्रह्मत्वं भगवदभिप्रेतम् । 'क्षरः सर्वाणि भूतानि' इति वक्ष्यमाणत्वात् । नाप्यद्वैतवाक्यात् तत्सिद्धिः । उपजीव्यप्रमाणविरोधात् । अतः पूर्वोक्तदोषात् न कथञ्चित् ब्रह्माक्षरशब्दार्थव्यत्यासः । स्वाभिमतं चक्रं भगवान् नारदीये प्रकटमाह– **'जननात् परसस्यादेः' इत्यादिना** ॥ अत एवाक्षरशब्दोक्तं ब्रह्म भूतैर्ज्ञायत इति ईदृश्यपि चक्रता निरस्तेति भावः ॥

प्रमेयदीपिका (ज.टी.)– नन्वत्र कार्यकारणपरम्परैवोक्ता न चक्रम् । तत्कथमुच्यते 'एवं प्रवर्तितं चक्रम्' इति? तत्राह– **तानि चेति** ॥ तानि **वेदाख्यानि** ।

भावरत्नकोशः (सु.टि.)– ॥ अत्र 'अन्नाद् भवन्ति' इत्यादौ । उच्चारणध्वनिद्वारा भूतानां वेदाक्षराभिव्यञ्जकत्वात् 'भूताभिव्यङ्ग्यानि' इति भाष्यम् ॥

भावदीपिका (श्री.टि.)– **'न चक्रम्'** इति । 'तान्यक्षराणि भूतेभ्यो भवन्ति' इति यदि गीतायामुच्येत तर्ह्येव चक्रोक्तिलाभ इति भावः ॥ **तत्राऽहेति** ॥ अक्षरभूतयोः कार्यकारणभावोक्त्यध्याहारेण गीतायां चक्रोक्तिर्द्रष्टव्येत्याहेत्यर्थः ॥

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥**

## भाष्यम्

**तदेतज्जगच्चक्रं यो नानुवर्तयति स तद्विनाशकत्वाद् अघायुः । पाप-निमित्तमेव यस्याऽयुः सः अघायुः ॥ १६ ॥**

**भावप्रदीपिका (प.टी.)– 'एवं प्रवर्तितम्' इति श्लोकं व्याचष्टे– तदेतदिति** ॥१६॥

**भावप्रकाशिका (न.टी.)– उक्तोपयोगस्य प्रकृतोपयोगं दर्शयन् श्लोकं व्याचष्टे– तदेतदिति ॥ पापस्य निमित्तम्, पापं निमित्तमस्येति चेत्यर्थः ॥ १६ ॥**

**प्रमेयदीपिका (ज.टी.)– चक्राप्रवृत्तौ कथमघायुष्ट्वादिकम्? इत्यतो व्याचष्टे– तदेतदिति ॥ आयुषोऽघत्वाभावात् कथमघायुः? इत्यत आह– पापेति ॥ तादर्थ्यात् ताच्छब्द्यमित्यर्थः ॥ १६ ॥**

**भावरत्नकोशः (सु.टि.)– ॥ तद्विनाशकत्वात्** जगच्चक्रविनाशकत्वेन विश्वहन्तृत्वादिति भाष्यार्थः । **तादर्थ्यादिति ॥** आयुषोऽघार्थत्वात् पापफलकत्वात् पापवाचकाघशब्देन विशेषण-मुपपद्यत इति ताच्छब्द्यम् । स शब्दो यस्य तत् तच्छब्दं, तस्य भावस्ताच्छब्द्यम् । तच्छब्दार्थत्वमित्यर्थः ॥ १६ ॥

**गीताक्षरार्थस्तु–** एवं पुरातनैर्भगवतैव वा प्राणिनामिष्टसिद्धये प्रवर्तितं जगच्चक्रम् इह अधिकृतलोके यो नानुवर्तयति नानुतिष्ठतीति यावत्, सः अघायुः तादर्थ्यात् ताच्छब्द्यम् । विश्वस्य चक्रेऽन्तर्भावात्, कर्माकरणेन चक्राप्रवर्तनाद्, विश्वविनाशकतया विश्वहन्तृत्वाद् अघनिमित्तम् आयुः जीवनमस्येति तथा । इन्द्रियारामः इन्द्रियैरारामो रमणं विषयेषु यस्य स तथा । इन्द्रियैः आ समन्ताद् रामो रमणं विषयेषु यस्य स तथेति वा । हे पार्थ मोघं वृथा जीवति स्वजीवनं नरकपातहेतुं वहतीति । संन्यासिनामपि तात्पर्ये यज्ञदानाद्यस्तीत्युक्तत्वान्न आश्रमान्तरविरोधः ॥ १६ ॥

**भावदीपिका (श्री.टि.)– ॥ कथमघायुरिति ॥** सामानाधिकरण्यं कथमित्यर्थः । ननु कथमनेन सामानाधिकरण्योपपत्तिः? इत्यत आह– **तादर्थ्यादिति ॥** आयुषोऽघसाधनत्वात् **ताच्छब्द्यम्** अघशब्दवाच्यत्वम् । 'आयुर्वै घृतम्' इत्यादिप्रयोगदर्शनादित्यर्थः । अयमत्र

चक्रप्रकारः । आदौ भूतानि प्राणिजातानि अन्नाज्जायन्ते, तेन तेषां बलोपचयात् । तदन्नं पर्जन्याज्जायते । स च पर्जन्यो यज्ञात् । आदित्याभिप्राये बलाभिवृद्धेः, मेघसन्तत्यभिप्राये च वार्षुकत्वादिविशिष्टमेघानां यज्ञेन जननात् । स च यज्ञः कर्मणो जायते । तच्च कर्म परब्रह्मणः । तच्च परं ब्रह्म वेदरूपाक्षराभिव्यङ्ग्यत्वात् तज्जातमित्युच्यते । तानि चाक्षराणि भूतेभ्यो जायन्ते, सम्यगन्नादिनाऽभिवृद्धबलैर्हि भूतैरुच्चारणे कृते वेदाख्याक्षराणि व्यज्यन्ते । तानि च भूतानि पुनरन्नाद् इत्येवं भूत-अन्न-पर्जन्य-यज्ञ-कर्म-परब्रह्म-वेदानां कार्यकारणभावेन पुनः पुनः परिवर्तनाच्चक्रं द्रष्टव्यम् । भाष्ये – **नित्यं यज्ञे प्रतिष्ठितमिति** ॥ तथा चैवं स्ववर्णाश्रमोचित-यज्ञादिकर्माकरणे चक्रविघातप्रसक्त्या पापप्राप्तेः पूर्वैरेवं यज्ञादिकरणेन चक्रस्यानुवर्तितत्वाच्चावश्यं स्वस्ववर्णाश्रमोचितं कर्म कार्यमित्येवं स्वस्ववर्णाश्रमोचितकर्मणः कर्तव्यत्वेऽनेन निन्दा-रूपोऽर्थवाद उक्तो भवतीत्याशयः ॥ १६ ॥

**भावप्रकाशः (कृ.टि.)– तादर्थ्यादिति** ॥ आयुषः पापफलकत्वात् पापवाचकाघशब्द-प्रतिपाद्यत्वं लाङ्गलं जीवनमितिवदित्यर्थः ।

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**

## भाष्यम्

**तर्ह्यतीव मनस्समाधानमपि न कार्यमित्यत आह– यस्त्विति ॥ रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिः अन्यत्रालम्बुद्धिः । सन्तोषः तज्जनकं सुखम् । 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानात् ॥**

भावप्रदीपिका (प.टी.)– ननु यदि कर्माकरणेऽघायुष्ट्वं तर्हि नेश्वरेऽत्यन्तमन-स्समाधानं कार्यम् । कर्मलोपापातादित्याशङ्क्य, उत्तरत्वेन श्लोकमवतारयति– **तर्हीति** ॥ रत्यादिशब्दान् सामान्यतो व्याचष्टे– **रमणमिति** ॥ 'तोष' 'रमण' शब्दयोरर्थभेदे प्रमाणमाह– **सन्तोष इति** ॥

श्लोकः १७

**भावप्रकाशिका** (न.टी.)– **नन्वेवं चेदसम्प्रज्ञातसमाधौ सत्यां तत्कालीनकर्मलोपेना-धायुष्ट्वप्रसङ्गात्, हरावतीव मनःसमाधानमपि न कार्यमित्याशङ्क्याह– तर्हीति** ।। तत्र तावत् 'तृप्ति' 'सन्तोष' शब्दयोरर्थभेदोऽप्यस्तीति सप्रमाणकं वदति । 'तृप्ति' 'सन्तोष' शब्दार्थानसाधारणानाह– **रमणमित्यादिना** ।।

**प्रमेयदीपिका** (ज.टी.)– 'एवमज्ञानिनः कर्म कर्तव्यमित्युक्तम् । इदानीं ज्ञानिनः कर्तव्याभावमाह' इति परव्याख्यानमसदिति भावेन सङ्गतिमाह– **तर्हीति** ।। यद्येवं कर्माकरणे हानिः, तत्करणे च लाभः, तर्हीत्यर्थः । परमेश्वरे अतीवमनस्समाधानम् असम्प्रज्ञातसमाधिरित्यर्थः । न कार्यं 'प्रसज्येत' इति शेषः । तत्र कर्मलोपस्यावश्यम्भा-वादिति भावः ।।

अत्र रतितृप्तिसन्तोषशब्दांस्तावद्व्याचष्टे– **रमणमिति** ।। 'पर' इति स्वरूपकथनम् । न शब्दार्थान्तर्भूतम् । तथाच पञ्चमेऽभिधानं वक्ष्यते । तथात्वे आत्मशब्देन जीवनिराकरणं च व्यर्थं स्यात् । यद्दर्शनादिनिमित्तं सुखं ततो अन्यत्र । तज्जनकं तृप्तेर्जनकम् । तृप्तिकारणं 'सुखम्' इति शेषः ।।

**भावबोधः** (र.टि.)– ननु सुखनिमित्तदर्शनविषयस्य परस्य रतिशब्दार्थान्तर्गतत्वे 'आत्मरतिः' इत्यत्र दर्शनविषयपरात्मेति पदमनन्वितं स्यादित्यत आह– **परेति स्वरूप-कथनमिति** ।। **पञ्चम इति** ।। 'दर्शनस्पर्शसम्भाषाद्यत् सुखं जायते नृणाम् । आराम' इत्यत्र दर्शनादिमात्रग्रहणादिति भावः । 'पर' इत्यस्य रतिशब्दार्थान्तर्गतत्वे बाधकं चाह– **तथात्व इति** ।। दर्शननिमित्तकसुखस्यैव रतिशब्दार्थत्वे दर्शनविषयतया आत्मशब्देन जीवस्यापि प्राप्तौ 'परमात्मदर्शनादिनिमित्तम्' इति 'परमात्मरतिश्च' इति च करिष्यमाणमात्मशब्दार्थत्वेन जीवनिराकरणं व्यर्थं स्यादिति भावः ।।

**भावदीपः** (रा.टि.)– उत्तरश्लोकसङ्गतिभाष्यमवतारयितुं परमतमाह– **एवमित्यादिना** ।। **इत्युक्तमिति** ।। 'अन्नात्' इत्यादि श्लोकैरित्यर्थः । 'न कर्मणामनारम्भात्' इत्यादेस्तात्पर्या-र्थोक्तिः– **कर्माकरणे हानिरिति** ।। 'सहयज्ञाः' इत्यादेः भावार्थोक्तिस्तत्करणे च लाभ इति ।।

'दर्शनस्पर्शसम्भाषाद्यत् सुखं जायते नृणाम् ।
आरामः स तु विज्ञेयः सुखं कामक्षयात्'

इति पञ्चमे (५.२४ नारदीयवचनम्) वक्ष्यमाणवचनाविसंवादायाऽह– **परेतीति** ॥ परत्वस्यापि रतिपदार्थान्तर्गतौ बाधकं चाह– **तथात्व इति** ॥ परत्वस्य रतिपदार्थान्तर्भूतत्वे वा 'परदर्शन' इत्युक्त्यैव स्वात्माख्यजीवदर्शनसुखस्य निरासप्राप्तेरुत्तरभाष्ये 'परमात्मदर्शनादि' इत्यादिना आत्मपदस्य जीवपरत्वभ्रमनिराकरणं च व्यर्थं स्यात् । न केवलं वक्ष्यमाणाभिधान-विसंवाद इति वाऽर्थः ॥ 'अन्यत्र' इत्यत्रावधिमाह– **यद्दर्शनेत्यादि** ॥ 'तज्जनकम्' इत्यत्र तच्छब्दार्थमाह– **तज्जनकं तृप्तेर्जनकमिति** ॥

**भावरत्नकोशः (सु.टि.)– ॥ इति परव्याख्यानमिति॥** तथा च सङ्करभाष्यम् 'यज्ञार्थात्' इत्यादिना 'मोघं पार्थ स जीवति' इत्यनेनाधिकृतस्यानात्मविदः कर्मानुष्ठाने बहु कारणमुक्तम् । तदकरणे दोषश्चोत्कीर्तितः । अथेदानीमात्मज्ञाननिष्ठानां तन्निष्ठाव्यतिरेकेण नान्यत् कर्तव्य-मस्तीति 'यस्त्वात्मरतिः' इत्यनेन आह' इति ।

**असम्प्रज्ञातसमाधिः** बाह्यार्थज्ञानशून्यतया भगवति मनःप्रणिधानम् । तेन 'निर्द्वन्द्वो नित्यसत्त्वस्थः' इति गीतायामेव कर्मकरणकाले भगवति मनोऽवस्थापनस्योक्तत्वात् कथ-मापादनमेवं कृतम् ? इति चोद्यं निरसनीयमित्युक्तं भवति । तथा च वक्ष्यति 'असम्प्रज्ञात-समाधिस्थस्यैव' (३.१७) इति भाष्ये । तत्र असम्प्रतज्ञातसमाधौ क्रियमाणे । अत्र गीतायाम् । **रतितृप्तिसन्तोषशब्दानिति** ॥ रतिशब्दः तृप्तसन्तुष्टशब्दप्रकृतिभूतौ चेत्यर्थः । परमात्मदर्शनादि-निमित्तं सुखं प्राप्त इत्यादिरूपेण आत्मरत्यादिशब्दार्थस्य वक्ष्यमाणत्वात् 'तावत्' इत्युक्तम् । अन्यथा 'सन्तोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः' इति 'रतिः कामप्रियाप्रीत्योः' इति चाभिधानेन शब्दानां पुनरुक्तिः स्यादिति भावः । 'स्वरूपकथनम्' इत्येतत्कुतः ? इत्यत आह– **तथा चेति** ॥

'दर्शनस्पर्शसम्भाषाद् यत्सुखं जायते नृणाम् ।
आरामः स तु विज्ञेयः ॥ (नारदीये)'

इत्यभिधाने दर्शनादिभेदग्रहमात्रग्रहणात् तन्निमित्तं सुखमेव रतिशब्दार्थो दर्शनादि-कर्मतयाऽन्वितः, परन्तु तत्र परिचायकतयोक्त इत्यर्थः । परस्यापि शब्दार्थत्वे आत्मनि रतिर्यस्येति विग्रहे परस्यान्वयायोग इति भावः । 'आरामः परदर्शनादिनिमित्तं सुखम्' इति

श्लोकः १७

पश्चमभाष्ये वक्ष्यमाणत्वाद् आरामशब्देन रमणपर्याया रतिरेव प्रतिपिपादयिषितेति न तद्भाष्यविसंवादशङ्काऽवकाशः ।

'पर' इत्यस्य रतिशब्दार्थान्तर्गतत्वे बाधकमप्याह– **तथात्व इति** ॥ सुखदर्शनादेरिव परस्यापि शब्दार्थत्वाय प्रवेशेऽङ्गीक्रियमाणे 'परमात्मदर्शनादि' इत्यग्रिमभाष्ये करिष्यमाणं जीवनिराकरणं व्यर्थं स्यात् । 'पर' इत्यनेनैव स्वाख्यजीवनिराकरणात् । असम्प्रज्ञातसमाधिस्थत्वेनान्यदर्शनप्रसक्तेरभावाच्चेति भावः । चशब्दस्य 'तथात्वे' इत्यनेन सम्बन्धः । 'न केवलं वक्ष्यमाणाभिधानविसंवाद इति चशब्द' इति स्वस्थान एव चशब्दं योजयन्ति च । भाष्ये 'अन्यत्र' इत्यस्य प्रतियोग्याकाङ्क्षां पूरयति– **यद्दर्शनेति** ॥ 'तज्जनकम्' इत्यत्र तच्छब्देन सन्तोषग्रहणे स्वस्य स्वजनकत्वं विप्रतिषिद्धम् । परदर्शनादिनिमित्तसुखग्रहणे दूरस्थत्वम् । 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानविसंवादश्च, इत्यतस्तच्छब्दार्थमाह– **तज्जनकं तृप्तेर्जनकमिति** ॥ अभिधाने 'तृप्तिकारणम्' इत्यनन्तरं प्रकृतार्थान्वयित्वाय शेषमाह– **तृप्तिकारणमिति** ॥ भाष्याभिधानयोर्भिन्नकर्तृकत्वाद् भाष्यस्थं सुखपदं नानुवर्तयितुं शक्यमिति टीकायां 'शेष' इत्युक्तम् ।

**भावदीपिका (श्री.टि.)– ॥ हानिरिति** ॥ चक्रविघातेन प्रत्यवायरूपा । ननु कर्माकरणकरणयोर्हानिलाभसद्भावेऽसम्प्रज्ञातसमाधिः कुतो न कार्यः? इत्यत आह– **तत्रेति** ॥ असम्प्रज्ञातसमाधावित्यर्थः ॥ **कर्मलोपस्येति** ॥ तथा च प्रत्यवायप्रसङ्ग इति भावः । **व्याचष्ट इति** ॥ 'पौनरुक्त्यपरिहाराय' इति शेषः । कुतः? इत्यत आह– **तथा चेति** ॥ **पञ्चम इति** ॥ 'योऽन्तःसुखोऽन्तरारामः' इत्येतद्व्याख्यानसमये

'दर्शनस्पर्शसम्भाषाद् यत् सुखं जायते नृणाम् । आरामः स तु विज्ञेयः ।' (नारदीये)

इत्यत्र दर्शनमात्रग्रहणात् तद्विरोधः स्यादिति भावः । 'पर' इत्यस्य रतिशब्दार्थान्तर्गतत्वे बाधकं चाऽह– **तथात्व इति** ॥ दर्शननिमित्तकसुखस्यैव रतिशब्दार्थत्वाङ्गीकारे 'आत्मरतिः' इत्यत्र दर्शनविषयतया आत्मशब्देन जीवस्यापि प्राप्तौ 'परमात्मरतिश्चात्र विवक्षिता' इति व्याकरिष्यमाणम् आत्मशब्दार्थत्वेन जीवनिराकरणं सार्थकं स्यात् । अन्यथा रतिशब्दार्थान्तर्गतेन परमात्मवाचिपरशब्देनैव जीवस्य निराकृतत्वात् पुनरात्मशब्दार्थतया जीवनिराकरणं व्यर्थं स्यादिति भावः । 'अन्यत्र' इत्यस्यावधिसापेक्षत्वात् तं दर्शयति– **यद्दर्शनादीति** ॥

**भावप्रकाशः (कृ.टि.)**– ननु कर्मणोऽवश्यकर्तव्यत्वे परमेश्वरेऽतीवमनःसमाधानमपि न कार्यं स्यात् इत्यापदनमयुक्तम् । 'निर्द्वन्द्वो नित्यसत्त्वस्थः' इत्यादिगीतायां नित्यसत्त्वस्थ इत्यादिना कर्मकरणकाल एव परमेश्वरे अतीवमनस्समाधानस्य विहितत्वेन तयोर्विरोधाभावात् इत्यत आह– **असम्प्रज्ञेति** ।। साधने प्रमाणबाध इत्यत आह– **प्रसज्येतेति शेष इति** ।। **व्याचष्ट इति** ।। अन्यथा 'सन्तोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः' इत्यभिधानात् तृप्ति-सन्तोषशब्दयोरेकार्थत्वेन 'रतिः कामप्रियाप्रीत्योः' इति कोशाद् रतिशब्दस्य तृप्तिपर्याय-प्रीतिवाचकत्वेन च पुनरुक्तिप्रसङ्गादिति भावः । 'पर' इति स्वरूपकथनमित्येतत् कुतः ? इत्यत आह– **तथा च पञ्चम इति** ।।

'दर्शनस्पर्शसम्भाषाद्यत् सुखं जायते नृणाम् । आरामः'

इत्यभिधानमित्यर्थः । तथा च वक्ष्यमाणाभिधाने दर्शनादिमात्रग्रहणात् 'परेति स्वरूप-कथनम्' इत्युक्तं भवति । 'पर' इत्यस्य रतिशब्दार्थान्तर्गतत्वे बाधकं चाह– **तथात्व इति** ।। परदर्शनादिजन्यसुखस्य रतिशब्दार्थत्वे 'परमात्मदर्शनात्' इत्यग्रिमभाष्येण करिष्यमाणं जीव-निराकरणं व्यर्थं स्यादित्यर्थः । 'पर' इत्यनेनैव स्वाख्यजीवनिराकरणात् असम्प्रज्ञातसमाधि-स्थत्वेनान्यजीवदर्शनप्रसक्तेरभावाच्चेति भावः । अभिधानस्थं तृप्तिकारणपदमनूद्य शेषं पूरयति– **तृप्तिकारणमिति** ।।

## भाष्यम्

**परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । अन्यत्र सर्वात्मना अलम्बुद्धिं च।**

**भावप्रदीपिका (प.टी.)**– तत्र 'आत्मरति' पदं व्याचष्टे– **परमात्मेति** ।। 'आत्म-रतिरेव' इत्यवधारणादन्यत्रालम्बुद्धिसिद्धेः किं द्वितीयविशेषणेन ? इत्यत आह– **अन्यत्रेति** ।।

**भावप्रकाशिका (न.टी.)**– स्वान्यमात्रे परशब्दप्रसिद्धेः, प्रस्तुते परः कः ? इत्यत आह– **परमात्मेति** ।। ईषदलम्बुद्धावपि तृप्तिशब्दप्रयोगात् तद्व्यावृत्त्यर्थं योग्यं विशेष-माह– **अन्यत्रेति** ।।

श्लोकः १७

**प्रमेयदीपिका (ज.टी.)**– इदानीमात्मशब्दस्य जीवविषयत्वप्रतीतिनिरासार्थं 'आत्मरतिः' इति समस्तं पदं व्याख्याति– **परमात्मेति** ॥ प्राप्तः'आत्मरतिः' इति शेषः । अनेन आत्मनि रतिः यस्येति विग्रहः सूचितः । आत्मनो रतिर्यस्येति वा । एवमुत्तरा-वप्यात्मशब्दौ परमात्मार्थौ ज्ञातव्यौ । नन्वेवं सति तृप्तिशब्दस्य परमात्मनोऽन्यत्रा-लम्बुद्धिरर्थः स्यात् । ततश्चेदं न वक्तव्यम् । 'आत्मरतिरेव' इत्यवधारणेनान्यरतिनिरासेन पौनरुक्त्यप्रसङ्गादित्यत आह– **अन्यत्रेति** ॥ अलम्बुद्धिं च प्राप्तः 'तृप्तशब्देनोक्तः' इति शेषः ॥

अलम्बुद्धिः इति पाठे 'तृप्तिशब्दार्थः' इति शेषः । अवधारणेनैवान्यत्र रत्यभावे लब्धेऽपि सर्वात्मनाऽन्यत्रालम्बुद्धिं वक्तुं 'तृप्तः' इति पुनर्वचनम् । अवधारणस्यान्यत्रा-लम्बुद्धिमात्रद्योतनेन चरितार्थस्य 'सर्वात्मना' इत्यत्राप्रवृत्तेरिति भावः ॥

**भावबोधः (र.टि.)**– ॥ **आत्मनीति** ॥ रतिशब्दार्थान्तर्गतदर्शनापेक्षया विषयसप्तमीयम् । एवम् ' आत्मनः' इत्यत्रापि विषयविषयिभावसम्बन्धः षष्ठ्यर्थः ॥

**भावदीपः (रा.टि.)**– ॥ **आत्मनीति** ॥ आत्मविषयकदर्शनजन्यसुखं यस्येत्यर्थः ॥ **आत्मन** इति विषयविषयिभावसम्बन्धः षष्ठ्यर्थ इति भावः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **जीवविषयत्वेति** । 'आत्मार्कचन्द्रवाताग्निजीवेषु परमात्मनि' इत्यभिधानाद् जीवोऽप्यात्मशब्दार्थः प्रतीयत इत्यर्थः । भाष्यस्य साकाङ्क्षत्वादाह– **आत्मरतिरिति शेष इति** ॥ **इति विग्रह इति** । 'सप्तमी विशेषणे बहुव्रीहौ' इति ज्ञापकाद् व्यधिकरणपदोऽपि बहुव्रीहिरस्तीति 'समानाधिकरणानां बहुव्रीहिरिष्यते' इति नाऽद्रियत इति भावः । आत्मविषयकदर्शनजन्या रतिर्यस्येति विग्रहनिष्कर्षः । **आत्मनो रतिर्यस्येति वेति** ॥ 'आत्मनः' इति षष्ठ्या विषयविषयिभावरूपसम्बन्धार्थत्वाद् आत्मविषया रतिर्यस्येति विग्रह इत्यर्थः ।

भाष्ये निमित्तपदेन हेतोरभिधानात् 'आत्मनः' इति हेतौ पञ्चमी । ततो रतिर्यस्येति वेति पञ्चम्यन्तेन बहुव्रीहिः । 'सप्तमीविशेषणे बहुव्रीहौ' इत्यस्य सामान्यज्ञापकत्वादित्यपि आहुः । उत्तरौ 'आत्मतृप्तः', 'आत्मन्येव च सन्तुष्टः' इत्यत्र विद्यमानौ । **एवं सति** आत्मशब्दस्य परमात्मार्थत्वे । इष्टापत्तिरित्यत आह– **ततश्चेति** ॥ इदम् आत्मतृप्त इति विशेषणम् ।

उपपादयति– **आत्मेति** ।। 'प्राप्तः' इति पूर्वभाष्यादनुवर्तत इति, तत्राकाङ्क्षितं पूरयति– **प्राप्तस्तृप्तेति** ।। पुनरुक्तिप्रसङ्गदोषं भाष्यभावव्यञ्जनेन परिहरति– **अवधारणेनैवेति** ।। इत्यत्र एतदर्थप्रतिपादने ।

**भावदीपिका (श्री.टि.)**– ननु 'तृप्तिजनकं सुखं सन्तोषः' इत्यत्र नेदमभिधानं सङ्गतम् । तत्र तृप्तिकरणस्य यस्य कस्यचिदेव सन्तोषशब्दार्थत्वेनोक्तेरित्यत आह– **सुखमिति शेषः इति** ।। **समस्तं पदमिति** ।। समासं प्राप्तं पदमित्यर्थः । **आत्मनीति** ।। रतिशब्दार्थान्तर्गत-दर्शनापेक्षया विषयसप्तमीयम् । एवम् 'आत्मनः' इत्यत्रापि विषयविषयिभावसम्भबन्धः षष्ठ्यर्थो द्रष्टव्यः । **उत्तराविति** ।। 'आत्मतृप्तः' 'आत्मन्येव सन्तुष्टः' इत्यत्रत्यावित्यर्थः ।। **एवं सतीति** ।। आत्मरतिशब्दस्यैव व्याख्यान इत्यर्थः । 'अन्यत्र' इत्यस्यावधिपूरणम्– **परमात्मन इति** ।। **इदं न वक्तव्यमिति** ।। 'आत्मतृप्तश्च' इत्येतन्न वक्तव्यमित्यर्थः । कुतः? इत्यत आह– **आत्मरतिरेवेत्यवधारणेनेति** ।। अवधारणेनैव तदपि लब्धमिति चेत्, तत्राऽऽह– **अवधारण-स्येति** ।। **सर्वात्मनेति** ।। रतिसहचरितत्वाभावस्तदर्थः ।। **इत्यत्राप्रवृत्तेरिति** ।। इत्येतदर्थ-प्रतिपादने सामर्थ्याभावादिति भावः ।

**भावप्रकाशः (कृ.टि.)**– ननु 'आत्मनि' इति विषयसप्तमी । प्रकारान्तरायोगात् । तथा 'आत्मनि' इत्यस्य रतिशब्दार्थैकदेशेन दर्शनेनैवान्वयो वाच्यः, विशिष्टार्थेन सह विषर्या-भावायोगात् । न च विशेषणस्यैकदेशेनान्वयो युक्तः । श्वशुरपदोपात्तभार्यायां सुशीलेत्यादि-विशेषणान्वयादर्शनादित्यत आह– **आत्मनो रतिर्यस्येति वेति** ।। तथा च सम्बन्धमात्रस्य षष्ठ्यर्थत्वाद्रतिशब्दार्थेन विशिष्टेनापि आत्मनो दर्शनद्वारा सम्बन्धसम्भवान्नानुपत्तिरिति भावः । **विरोधादिति** ।। विषयजन्यस्य सुखविषयेष्वनलम्बुद्धिं प्रत्येव हेतुत्वादिति । **चशब्दो हेता-विति** ।। यस्मात्तस्मादित्यर्थः । अव्ययानामनेकार्थत्वादिति भावः ।

## भाष्यम्

**महच्च तत्सुखम् । तेनैवान्यत्रालम्बुद्धिरिति दर्शयति– । आत्मन्येव च सन्तुष्ट इति ।। तत्स्थ एव सन् सन्तुष्ट इत्यर्थः । नान्यत् किमपि सन्तोष-कारणमित्यवधारणम् ।।**

श्लोकः १७

**भावप्रदीपिका (प.टी.)**– किं निमित्तमन्यत्रालम्बुद्धेः ? इत्यतस्तृतीयपादमवतार्य व्याचष्टे– **महच्चेति** ॥ तत् इत्यात्मरत्याख्यम् ।

**भावप्रकाशिका (न.टी.)**– अथ भगवदन्यत्र सर्वात्मनाऽलम्बुद्धौ किं कारणम् ? इत्याकाङ्क्षोत्तरत्वेन तृतीयपादमवतारयति– **महदिति** ॥ 'सं'शब्दव्याख्या महच्छब्दः । 'तत्' इत्यात्मरत्याख्यं सुखम् । ननु यदात्मरत्याख्यमहत्सुखमन्यत्रालम्बुद्धिकारणम्, तत् केन हेतुना सिद्ध्यति? इत्याकाङ्क्षोत्तरत्वेन 'आत्मन्येव' इति शब्दं योजयति– **तत्स्थेति** ॥ एतदेव विवृणोति– **नान्यदिति** ॥ तस्मिन्नेव श्रवणाद्यभ्यासलक्षणात् तत्स्थत्वादन्य-दर्शनादिनिमित्तसन्तोषप्राप्तौ न कारणमित्यर्थः ॥

**प्रमेयदीपिका (ज.टी.)**– ननु 'सन्तुष्टः' इत्यनेनालम्बुद्धिजनकं सुखं प्राप्त इत्युच्यत इत्युक्तम् । तत्किं विषयजन्यम्? उतात्मरत्याख्यम्? नाद्यः । विरोधात् । न द्वितीयः । तस्यात्मरतिशब्देनोक्ततया पुनरुक्तिप्रसङ्गात् । कथं च तस्यान्यत्रालम्बुद्धिजनकत्वम्? इत्यत आह– **महच्चेति** ॥ चशब्दो हेतौ । तत् आत्मरत्याख्यम् । प्रागुक्तमेव सुखं पुनरन्यत्रा-लम्बुद्धिकारणत्वेनोच्यते । अतो न दोषः । तस्य च महत्त्वं संशब्देनोक्तम् । अतस्तत-त्कारणत्वं चोपपन्नमित्यर्थः ॥

आत्मरतिः सन्तोषशब्देन गृह्यते चेत् पुनः 'आत्मनि' इति व्यर्थमित्यत आह– **तत्स्थ एवेति** ॥ सन्तोषाख्यात्मरतिः केनास्य जाता? इत्यपेक्षायामसम्प्रज्ञातसमाधिलक्षणया परमात्मनि स्थित्येति ज्ञापयितुम् 'आत्मनि' इत्युक्तमित्यर्थः । अवधारणस्य प्रयोजनमाह– **नान्यदिति** ॥ अन्यत् असम्प्रज्ञातसमाधिरूपात् तत्स्थत्वात् ॥ एतेन 'आत्मरतिरेव' इत्यवधारणेनास्य पुनरुक्तता परिहृता ॥

**भावबोधः (र.टि.)**– ॥ **विरोधादिति** । विषयजन्यसुखस्य विषयेष्वनलम्बुद्धिं प्रत्येव हेतुत्वादित्यर्थः । **एतेनेति** ॥ 'आत्मन्येव' इत्यवधारणस्य आत्मरत्याख्यसन्तोषं प्रत्यसम्प्रज्ञात-समाधिव्यतिरिक्तकारणान्तरव्यवच्छेदपरत्वव्याख्यानेनेत्यर्थः । 'आत्मरतिरेव' इत्यवधारण-स्यान्यत्रालम्बुद्धिमात्रद्योतकत्वेन प्रागेव व्याख्याततत्वादिति भावः ।

**भावदीपः (रा.टि.)**– ॥ **विरोधादिति** ॥ विषयजन्यसुखस्य विषयेषु तृष्णाहेतुत्वेना-लम्बुद्धावहेतुत्वादिति भावः ॥ 'चशब्दो हेतौ' इत्युक्तम् । तस्यान्वयं दर्शयति– अतो न दोष

**इति** ॥ 'ननु' इत्यादिना शङ्कितदोषो नेत्यर्थः ॥ **एतेनेति** ॥ आत्मरतावसम्प्रज्ञातसमाधिस्थत्वमेव कारणं नान्यदित्यस्य विवक्षितत्वेनेत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **तदिति** । अन्यत्रालम्बुद्धिजनकं सुखमित्यर्थः । **विरोधादिति** ॥ विषयजन्यसुखस्य विषयेषु प्रत्युत अनलम्बुद्धिं प्रत्येव हेतुत्वेन विरोधादित्यर्थः । तस्य आत्मरत्याख्यस्य । **हेताविति** ॥

'चश्चेदर्थे णकारे स्यादवधारणभेदयोः ।
पादस्य पूरणे हेतौ तुल्ययोगानुयोगयोः ॥'

इत्यमरशेषाद् 'यस्मात्' इत्यर्थे वर्तत इत्यर्थः । **न दोषः** रूपविशेषावच्छिन्नत्वेन वक्तव्यतया न पुनरुक्तिदोष इत्यर्थः । 'कथं च' इत्युक्तं दोषमुद्धरति– **तस्य चेति** ॥ **संशब्देन** 'सन्तुष्टः' इत्यत्र संशब्देन । **तत्कारणत्वम्** अन्यत्रालम्बुद्धिकारणत्वम् । अनेन यस्मादात्मरत्याख्यं सुखं महत्, तस्मात् तस्यालम्बुद्धिजनकत्वमुपपन्नम् । यस्माच्च तेनैवान्यत्रालम्बुद्धिरिति दर्शयति तस्मान्न पुनरुक्तिश्चेति भाष्ययोजना सूचिता । पुनरुक्तिपरिहारं भाष्यारूढमाह– **सन्तोषेति** ॥ **अवधारणस्य** 'आत्मन्येव' इत्यवधारणार्थकैवशब्दस्येत्यर्थः । 'अन्यत्' इत्यत्र प्रतियोग्याकाङ्क्षायामाह– **अन्यदसम्प्रज्ञातेति** ॥ **तत्स्थत्वात्** परमात्मनि मनःप्रणिधानात् ॥ **एतेनेति** ॥ आत्मरतावसम्प्रज्ञातसमाधिस्थत्वमेव कारणं नान्यदित्यवधारणार्थस्य भाषणेनेत्यर्थः । **अस्य** 'आत्मन्येव' इत्येवशब्दस्य । 'आत्मरतिरेव' इत्यवधारणम् अन्यत्रालम्बुद्धिमात्रद्योतनेन चरितार्थम् । 'आत्मन्येव' इत्यवधारणं तु आत्मरतावसम्प्रज्ञातसमाधेरन्यस्य हेतुत्वप्रतिषेधकमिति न तेनास्य पुनरुक्ततेत्यर्थः ।

**भावदीपिका (श्री.टि.)**– ॥ **तत्** अलम्बुद्धिजनकं सुखम् ॥ **विरोधादिति** ॥ विषयजन्यसुखस्य विषयेष्वलम्बुद्धिजनकत्वाभावस्यैवानुभवसिद्धत्वात् तज्जनकत्वाङ्गीकारे तद्विरोधादित्यर्थः ॥ **तस्येति** ॥ आत्मरत्याख्यसुखस्येत्यर्थः ॥ **पुनरुक्तीति** ॥ आत्मरत्याख्यसुखोक्त्यंश एव पुनरुक्तिर्द्रष्टव्या ॥ **कथं चेति** ॥ केन प्रकारेणेत्यर्थः । **तस्य** आत्मरत्याख्यसुखस्य । **हेताविति** ॥ 'यस्मात् महत्' इति हेतावित्यर्थः । **प्रागुक्तम्** आत्मरतिपदेन । **तत्कारणत्वम्** अन्यत्रालम्बुद्धिकारणत्वम् । **आत्मनीतीति** ॥ सप्तम्यन्तात्मेति पदमित्यर्थः ॥

**सन्तोषाख्यात्मरतिरिति** ॥ अन्यत्रालम्बुद्धिजनकं परमात्मदर्शननिमित्तं सुखमित्यर्थः ॥ **अवधारणस्येति** ॥ 'आत्मन्येव' इत्यवधारणस्येत्यर्थः । नन्वथापि पुनरुक्तिः । 'आत्मरतिरेव' इत्यवधारणेनान्यत्रालम्बुद्धेः प्राप्तत्वात् 'आत्मन्येव च सन्तुष्टः' इत्यत्राप्यवधारणेन तस्य एवोक्तेरित्यत आह– **एतेनेति** ॥ 'आत्मन्येव' इत्यवधारणस्याऽत्मरत्याख्यसन्तोषं प्रत्य-सम्प्रज्ञातसमाधेरेव कारणत्वेन तद्व्यतिरिक्तकारणान्तरव्यवच्छेदपरत्वव्याख्यानेनेत्यर्थः । **अस्य** 'आत्मन्येव' इत्यवधारणस्य । न चैतदपि 'आत्मरतिरेव' इत्यवधारणेनैव लब्धमिति वाच्यम् । तस्यावधारणस्यान्यत्रालम्बुद्धिमात्रद्योतनेन चरितार्थतायाः पूर्वमेव व्याख्यातत्वादिति भावः ।

**भावप्रकाशः (कृ.टि.)**– ॥ **एतेनेति** ॥ 'आत्मन्येव' इत्यवधारणस्यात्मरत्याख्यसन्तोषं प्रति असम्प्रज्ञातसमाधिव्यतिरिक्तकारणान्तरव्यवच्छेदपरत्वव्याख्यानेनेत्यर्थः । 'आत्मरतिरेव' इत्यवधारणस्यान्यत्रालम्बुद्धिमात्रद्योतकत्वेन प्रागेव व्याख्यातत्वादिति भावः ।

## भाष्यम्

**आत्मना तृप्तः । न ह्यात्मन्यलम्बुद्धिर्युक्ता ।**

भावप्रदीपिका (प.टी.)– ननु 'तृप्ति'पदस्यान्यत्रालम्बुद्धिवाचित्वे कथम् 'आत्म' शब्देन समासः ? इत्यत आह– **आत्मनेति** ॥ न केवलमात्मरत्याऽन्यत्रालम्बुद्धिः, किन्तु तत्प्रसादादेवेत्यर्थः । प्रथमतृतीयात्मशब्दवत् मध्यमात्मशब्दोऽपि सप्तम्यन्तः किं न स्यात् ? इत्यत आह– **न हीति** ॥

भावप्रकाशिका (न.टी.)– न केवलं स्वकृततद्विषयश्रवणाद्यभ्यासरूपतत्स्थितत्वात् (अन्यत्र)तद्दर्शनादिनिमित्तं सुखमन्यत्रालम्बुद्धिकारणं प्राप्नोति । किन्त्वनन्तप्रसादादेवेति भावेन 'आत्मतृप्त'पदं व्याचष्टे– **आत्मनेति** ॥ नन्वितरवन्मध्यात्मशब्देऽपि सप्तमी किं न स्यात् ? इत्यत आह– **न हीति** ॥

प्रमेयदीपिका (ज.टी.)– ननु 'आत्मतृप्तः' इति कोऽयं समासः? इत्यत आह– **आत्मनेति** ॥ न केवलेन आत्मरत्याख्येन सुखेन, किन्तु प्रसन्नेन परमात्मनैवेत्यर्थः । पञ्चमीसमासः कथं न स्यात्? इति चेन्न । असामर्थ्यात् । 'अन्यत्र' इत्यनेन ह्यस्य

**सामर्थ्यम् । न तु तृप्तशब्दार्थेन। तृप्तशब्दार्थ एवान्यत्रार्थान्तर्भूतोऽस्तीति चेन्न । तस्य प्रकरणलब्धस्य तदन्तर्भावाभावात् । अन्यथा 'वयं तु न वितृप्यामः' इत्यत्र 'ततो अन्यत्रालम्बुद्धिं न प्राप्नुमः' इत्यर्थप्रसङ्गात् । अस्तु तर्हि सप्तमीसमास इति, नेत्याह– न हीति ॥ पूर्वविशेषणविरोधात्, प्रमाणान्तरविरोधाच्चेति भावः ॥**

**भावबोधः (र.टि.)– ॥ पूर्वविशेषणेति** । 'आत्मरति'रित्युक्तविशेषणेत्यर्थः । न हि तद्दर्शननिमित्तसुखवानेव तत्रालम्बुद्धिमान् सम्भवतीति भावः । **प्रमाणान्तरेति** ॥ पुनः पुनः मोक्षादिहेतुदर्शनादिविधायकप्रमाणान्तरविरोधादित्यर्थः ।

**भावदीपः (रा.टि.)– असामर्थ्यादिति** ॥ तृप्तपदेनाऽकाङ्क्षाराहित्यादित्यर्थः । तदेव व्यनक्ति– **अन्यत्रेति** ॥ **'आत्मनः'** इत्यस्यावधिवाचित्वादिति भावः । **प्रकरणलब्धस्येति** ॥ भगवत्प्रीतिमात्रोद्देशेन कर्मानुष्ठानापादनस्य प्रकृतत्वेन तृप्तिपदोक्तालम्बुद्धिशब्दितविरागस्य विषयतया भगवतो अन्यस्यैव प्रकरणप्राप्तेरिति भावः ॥ **पूर्वविशेषणेति** ॥ 'आत्मरतिरेव नत्वन्यत्र रतिमान्' इत्युक्तविशेषणविरोधाद्वा 'वयं तु' इति प्रमाणान्तरविरोधाच्चेत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ न केवलेनेति** ॥ परमात्मदर्शनादिनिमित्तं हि सुखम् आत्मरतिः । तया चान्यत्रालम्बुद्धिशब्दिता तृप्तिरिति केवलं तदसाधारणकारणिका न, किन्तु भगवत्प्रसादासाधारणकारणिका चेति वक्तुम् 'आत्मना' इति करणे तृतीयायाः 'कर्तृकरणे कृता बहुलम्' इति समास इत्यर्थः । **पञ्चमीसमास इति** ॥ 'चोरभीतः' इत्यादाविव अत्रापि 'आत्मनः तृप्त आत्मतृप्तः' इति पञ्चमीसमासः कथं न स्यादित्यर्थः । असामर्थ्यमुपपादयति– **अन्यत्रेत्यनेन हीति** ॥ 'अन्यत्र' इत्येतदवधित्वेन 'आत्मनः' इत्येतदन्वेतीति तत्रैव समर्थं साकाङ्क्षं, न 'तृप्तः' इत्यनेनेति तेन न समासः । 'समर्थः पदविधिः' इति शास्त्रादिति भावः । **तृप्तशब्दार्थेन** अलम्बुद्धिरूपेण । सामर्थ्यमित्यन्वयः । **तृप्तशब्दार्थ इति** ॥ तृप्तिरन्यत्रालम्बुद्धिः तद्युक्तस्तृप्त इति तृप्तशब्दार्थे 'अन्यत्र' इति शब्दस्यार्थोऽन्तर्गतः । अतः आत्मशब्दोऽन्यत्रेत्यनेन न साकाङ्क्षः । किन्त्वन्तर्भावित तदर्थेन तृप्तशब्देनैवेति पञ्चमीसमासोपपत्तिरिति शङ्कितुर्हृदयम् ।

॥ **प्रकरणलब्धस्येति** । भगवत्प्रीतिमात्रोद्देशेन कर्मानुष्ठानचोदनस्य प्रकरणलब्धत्वेन तृप्तिपदार्थालम्बुद्धिशब्दितविरागस्य सविषयतया भगवतोऽन्यस्यैव तद्विषयं वक्तव्यमिति तस्य न

श्लोकः १७

पदार्थान्तर्भाव इति भावः । **अन्यथा** तृप्तशब्दार्थ एवान्यत्रार्थोऽन्तर्भूतोऽस्तीति पक्षे । 'न वितृप्यामः' इत्यस्य 'नालम्बुद्धिं प्राप्नुमः' इत्यर्थत्वे हि सामञ्जस्यम् । 'अन्यत्र' इत्यस्यापि तदर्थान्तर्गतत्वे भगवतोऽन्यत्रालम्बुद्धिं न प्राप्नुम इत्यर्थप्रसङ्गान्न तस्यान्तर्भावो युक्त इत्यर्थः । **सप्तमीसमास इति** ।। आत्मनि रतिर्यस्येति पूर्वत्र, 'आत्मन्येव च सन्तुष्टः' इत्युत्तरत्र च सप्तमीदर्शनेन तत्साहचर्यादिति भावः । अयुक्तत्वमुपपादयति– **पूर्वेति** ।। 'आत्मरतिरेव' इति विशेषणेन भगवद्दर्शनादिजन्यसुखस्याभिहितत्वेन तस्मिन् सति तत्र भगवत्यलम्बुद्ध्यसम्भवा-दित्यर्थः । न हि कामुकस्य कामिनीदर्शनादिजन्यसुखे सति तत्रालम्बुद्धिर्दृष्टचरीति भावः ।। **प्रमाणेति** ।।

'वयं तु न वितृप्यामः', 'को नाम तृप्येद् रसवित् कथायां महत्तमैकान्तपरायणस्य'
'भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्'

इत्यादिबहुप्रमाणविरोधाच्च इत्यर्थः । 'पूर्व' इत्यन्तरङ्गानुपपत्तिः, 'प्रमाण' इति वहिरङ्गानु-पपत्तिश्चोद्धाटिता ।

**भावदीपिका (श्री.टि.)**– 'सुखेन' इत्यस्य 'तृप्तः' इति मूलेनान्वयः ।। **पञ्चमीसमास इति** ।। आत्मनः सकाशात् तृप्त आत्मतृप्त इति पञ्चमीसमास इत्यर्थः । असामर्थ्यमेवो-पपादयति– **अन्यत्रेत्यनेन हीति** ।। अन्यत्रालम्बुद्धिं प्राप्तस्तृप्त इत्युक्तत्वात्, कस्मादन्यत्र? इत्यवध्यपेक्षायाम् 'आत्मनः' इति पञ्चम्यन्तपदस्यावध्यर्थकत्वेन तदाकाङ्क्षापूरकत्वात् तेनैव ह्यस्य पञ्चम्यन्तात्मशब्दस्य सामर्थ्यम् । तथा च 'समर्थः पदविधिः' इति वचनात् तेनैव समासो युक्तः, न त्वलम्बुद्धिमात्रार्तकतृप्तशब्देन । तज्जनिताया कुत्रेत्याकाङ्क्षाया 'अन्यत्र' इत्यनेनेव 'आत्मनः' इत्यनेनापूरणेनासामर्थ्यादिति भावः । नन्वन्यत्रालम्बुद्धिमत एव तृप्तशब्दार्थत्वात् पञ्चम्यन्तात्मशब्दस्य 'अन्यत्र' इत्यनेन सामर्थ्ये तृप्तशब्दार्थेनैव सामर्थ्यप्राप्त्या युक्तस्तेन समास इत्याशङ्कते– **तृप्तेति** ।। तृप्तशब्दार्थ एवान्यत्रान्तर्भूत इत्यपि पाठः । तत्र 'अन्यत्र इति पदमन्तर्भूतं यस्मिन्नसावन्यत्रान्तर्भूतः' इत्यर्थो द्रष्टव्यः ।। **प्रकरणेति** ।। अलम्बुद्धेरेव तृप्तिशब्दार्थत्वेन, कुत्र? इत्याकाङ्क्षायां परमात्मप्रकरणबलादेव 'अन्यत्र' इत्यस्य लभ्यमानत्वेन तृप्तशब्दार्थान्तर्भावाभावादित्यर्थः ।। **अन्यथेति** ।। 'अन्यत्र' इत्यस्यापि तृप्तिशब्दार्थान्तर्गतत्वे इत्यर्थः ।। **ततोऽन्यत्रेति** ।। उत्तमश्लोकविक्रमादन्यत्रेत्यर्थः । **इत्यर्थप्रसङ्गादिति** ।। न चात्रेष्टापत्तिः । तथात्वे–

'अथाऽख्याहि हरेर्धीमन्नवतारकथाः शुभाः ।'
'यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥'

इत्यनेन विरोधापत्तेरिति द्रष्टव्यम् ।

॥**सप्तमीसमास इति** ॥ 'आत्मनि तृप्तः' इति सप्तमीसमास इत्यर्थः ॥ **पूर्वविशेषणेति** ॥ 'आत्मरतिः' इत्युक्तविशेषणेत्यर्थः । न हि तद्दर्शननिमित्तसुखवान् तत्रालम्बुद्धिमानिति सम्भवतीति ॥ **प्रमाणान्तरेति** ॥ 'परमात्मन्यलम्बुद्धिर्न कार्या' इत्यर्थप्रतिपादकेन 'को नाम तृप्येद् रसवित् कथायां महत्तमैकान्तपरायणस्य' इत्यादिप्रमाणान्तरेण विरोधाच्चेत्यर्थः ॥

**भावप्रकाशः (कृ.टि.)**– असामर्थ्यमेव दर्शयति– **अन्यत्रेति** ॥ **तृप्तिं** प्रत्यात्मनोऽपादानत्वाभावात् 'आत्मनः' इति पञ्चम्याः कारकविभक्तित्वाभावेन 'अन्यत्र' इत्येवंरूपोपपद-विभक्तित्वस्यैवाश्रयणीयत्वादिति भावः । **पूर्वविशेषणेति** ॥ 'आत्मरतिः'इत्युक्तविशेषणेत्यर्थः । तद्दर्शनादिजन्यसुखे सति तत्रालम्बुद्ध्यसम्भवादिति भावः । **प्रमाणान्तरेति** ॥ 'को नाम तृप्येद्रसवित् कथायां महत्तमैकान्तपरायणस्य' इत्यादिविरोधादित्यर्थः ।

## भाष्यम्

**तद्वाचित्वं च - 'वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः'** (भाग.१.१.१९) **इति प्रयोगात् सिद्धम् । अध्याहारस्त्वगतिका गतिः ॥**

भावप्रदीपिका (प.टी.)– 'तृप्ति'शब्दस्यालम्बुद्धिवाचित्वे भवेद्युक्तिः । तदेव कुतः ? इत्यत आह– **तद्वाचित्वं चेति** ॥ उत्तमश्लोकविक्रमैः, तदन्यत्र न वितृप्याम इत्यर्थेना-लम्बुद्धिवाचितेत्यत आह–**अध्याहारस्त्विति** ॥

भावप्रकाशिका (न.टी.)– ननु 'तृप्ति'शब्दस्यालम्बुद्धिवाचित्वे सप्तम्ययुक्ता । तदेव कुतः ? इत्यत आह– **तद्वाचित्वं चेति** ॥ **ननूत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैः 'अन्यत्र न वितृप्यामः'** इत्यध्याहारे सति नालम्बुद्धिवाचित्वं 'तृप्ति' शब्दस्येत्यत आह– **अध्याहारस्त्विति** ।

श्लोकः १७

**प्रमेयदीपिका (ज.टी.)– स्यादयं दोषो यदि तृप्तिशब्दस्यालम्बुद्धिवाचित्वं स्यात् । तदेव कुतः? इत्यत आह– तद्वाचित्वं चेति ॥ नन्वत्र तृप्तिशब्दः प्रीत्यर्थः । न चैवं सत्यर्थानुपपत्तिः । उत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र प्रीतिं न प्राप्नुम इत्यध्याहारेणोपपत्तेरित्यत आह– अध्याहारस्त्विति ॥ गत्यन्तररहिता गमनिका । अध्याहारो ह्यश्रुतशब्दकल्पनम् । तच्च कल्पकसद्भावे न दोषः । अन्यथा दोष एव । कल्पकं च गत्यन्तरराहित्यम् । अन्यथाऽनुपपत्तिरिति यावत्। अत्र त्वलम्बुद्ध्यर्थत्वे गृहीते विनाऽप्यध्याहारेण वाक्यार्थोपपत्तेरयुक्तोऽसाविति भावः । षष्ठीसमासस्तु 'पूरणगुणसुहितार्थ' (२.२.११) इति प्रतिषिद्धः ॥**

**भावबोधः (र.टि.)– ॥ पूरणेति ॥** अलम्बुद्धेः पूरणरूपत्वादित्यर्थः । तृप्तिशब्दस्य सुहितार्थत्वादिति भावः । **समासस्त्विति** ॥ षष्ठ्यर्थे सप्तम्यर्थे वा बहुव्रीहिरन्यपदार्थभूतरतिकर्तारमेवाचष्टे । न तु कालमित्यर्थः ॥

**भावदीपः (रा.टि.)– ॥ पूरणेति ॥** 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' (पा.धा.२.२.११) इति द्वितीयाध्यायद्वितीयपादे सूत्रम् । द्वन्द्वैकवद्भावेनैकवचनम् । अर्थशब्दः प्रत्येकमन्वेति । पूरणार्थेन गुणार्थेन सुहितार्थेन तृप्त्यर्थकेन च शब्देन तथा सत्सञ्ज्ञकशत्रन्तेन सत्सञ्ज्ञकशानजन्तेनाव्ययेन तव्यप्रत्ययान्तेन समानाधिकरणशब्देन च षष्ठ्यन्तं न समस्यते इति सूत्रार्थः ॥ छात्राणां पञ्चमः, बलाकायाः शौक्ल्यं, फलानां तृप्तेः, ब्राह्मणस्य कुर्वन्, ब्राह्मणस्य कुर्वाणः, ब्राह्मणस्य कृत्वा, ब्राह्मणस्य कर्तव्यः, राज्ञः पाटलिपुत्रकस्य' इति क्रमादुदाहरणानि । तथाच प्रकृते सुहितार्थकेन तृप्तपदेन समासो निषिद्ध इत्यर्थः । अत एव 'सुहितार्थ' इत्यन्तप्रतीकोक्तिः ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** अस्तु तर्हि 'आत्मनस्तृप्तः' इति षष्ठीसमास इत्यत आह– **षष्ठीसमासस्त्विति ॥ पूरणेति ॥** पूरण-गुण-सुहितार्थ-सत्-अव्यय-तव्य-समानाधिकरण इत्येतैः सह न षष्ठी समस्यते । अर्थशब्दश्च प्रत्येकमभिसम्बन्ध्यते । ततश्च पूरणार्थादिभिः समासनिषेधो ज्ञेयः । ततश्चास्मिन् सूत्रे सुहितार्थकशब्देन षष्ठीसमासनिषेधात् 'सुहितार्थास्तृप्त्यर्थाः' इति वृत्तिकृतोक्तेः न तृप्तशब्देन समासो भवति । फलानां सुहितः फलानां तृप्त इत्यादाविवेति भावः । ननु बहुव्रीहिसमास एव कालवाचक इत्यत आह– **समासस्त्विति ॥** षष्ठ्यर्थे सप्तम्यर्थे बहुव्रीहिः । अन्यपदार्थभूतकर्तारमेवाहुः । नतु कालिमित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **अयं दोषः** सप्तमीसमासायुक्तिदोषः ॥ **प्रीत्यर्थ इति** ॥ 'सन्तोषस्तृप्तिरापूर्तिः प्रीतिः' (गी.ता.३.१७) इति तात्पर्योदाहृताभिधानादिति भावः । एवं **सति** उत्तमश्लोकविक्रमैः प्रीतिं न प्राप्नुम इत्यर्थाङ्गीकारे ॥ **अर्थानुपपत्तिः** भगवद्विषयकप्रीतेरर्थनीयत्वादिति भावः । **अध्याहारेण** 'अन्यत्र' इति पदाध्याहारेण । 'अगतिका' इत्यस्यार्थः– **गत्यन्तररहितेति** ॥ 'गतिः' इत्यस्यार्थः– **गमनिकेति** ॥ अवतारिकेत्यर्थः । तृप्तिशब्दः प्रीत्यर्थ इति कृतचोद्यस्य कथमनेन परिहारः? इत्यतो भाष्यभावमाह– **अध्याहारो हीति** ॥ ननु कल्पकत्वं नाम प्रमापकत्वम् । तच्च प्रमाणधर्मः । कल्पकराहित्यं न प्रमाणम् । अभावरूपत्वादित्यत आह– **अन्यथाऽनुपपत्तिरिति** ॥ **अलम्बुद्ध्यर्थत्वे** सिद्धान्तरीत्या । **विनाऽपि** 'अन्यत्र' इति पदाध्याहारेण विनाऽपि । 'पृथग्विनानानाभिस्तृतीया' इति तृतीया । असौ अध्याहारः । **षष्ठीसमासस्तु** 'आत्मतृप्तः' इत्यत्र । षष्ठी तु करणस्य शेषत्वविवक्षायामिति वैयाकरणाः । **पूरणेति** ॥ 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इति सूत्रेण पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यत इत्यर्थकेन सुहितार्थेन तृप्त्यर्थेन समासप्रतिषेधो व्याकरणशास्त्रोक्त इत्यर्थः । अत एव 'तृप्तानां तृप्तः' इत्युदाहरणमिति भावः ।

**भावदीपिका (श्री.टि.)**– ॥ **अर्थानुपपत्तिरिति** ॥ महत्तमानाम् उत्तमश्लोकविक्रमेष्वेव प्रीतेः सत्त्वाद् उत्तमश्लोकविक्रमैः श्रुतैस्तत्र प्रीतिं न प्राप्नुम इत्यर्थानुपपत्तिरित्यर्थः ॥ **गमनिका** व्याख्या ॥ **अश्रुतेति** ॥ अश्रुतस्य 'ततोऽन्यत्र' इत्यस्य कल्पनमित्यर्थः । ननु 'आत्मनस्तृप्तः' इति षष्ठीसमासोऽप्याशङ्क्य कस्माद् भाष्यकारैर्न दूषितः? इत्यत आह– **षष्ठीसमासस्त्विति** ॥ 'पूरण-गुण-सुहितार्थ-सद्-अव्यय-तव्य-समानाधिकरणेन' एतदर्थैः षष्ठी न समस्यत इति सूत्रार्थः । पूरणे-सतां षष्ठः । सतां सङ्ख्यापूरणः षष्ठ इत्यर्थः । गुणे पटस्य शौक्ल्यम् । सुहितं नाम तृप्तिः । फलानां तृप्तः । 'सत्' इति शतृशानचोः सञ्ज्ञा । 'तौ सत्' तौ शतृशानचौ सत्संज्ञौ स्त इत्युक्तत्वात् । तत्र शतरिद्विजस्य कुर्वन् । शानचि - सतां कुर्वाणः । अव्यये– सतां कृत्वा । तव्ये– सतां कर्तव्यम् । समानाधिकरणे– राज्ञो नलस्येत्युदाहरणानि । एवं च प्रकृते तृप्तशब्दस्य सुहितार्थकत्वात् तद्योगे षष्ठ्याः समासप्रतिषेधेन 'अत्मनस्तृप्तः इत्येव वाच्यतया आत्मतृप्तः' इति समासो न सम्भवति, अतो भगवत्पादैराशङ्क्य न दूषित इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ॥ **निमित्तैरिति** ॥ 'हेतौ' इति सूत्रेण तृतीयेति भावः । ननु प्रमाकरणत्वं कल्पकत्वं प्रमाणधर्मः । नच कल्पकराहित्यं प्रमाणम् । प्रमाणाभावरूपत्वात् ।

श्लोकः १७
अतस्तस्य कथं कल्पत्वम्? इत्यत आह– **अन्यथानुपपत्तिरिति यावदिति** ॥ **षष्ठीसमास इति** ॥ फलानां तृप्त इतिवत् । तृप्तिकारणस्यात्मनः शेषत्वविवक्षायां षष्ठी । तेन षष्ठीसमास-प्रसक्तिरिति बोध्यम् । **पूरणगुणेति** ॥ 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणे' इत्यत्र 'सुहितार्थ' इत्यनेन तृप्तिवाचिशब्देन षष्ठ्याः समासः प्रतिषिद्ध इत्यर्थः ॥

## भाष्यम्

**आत्मरतिरेवेत्यवधारणादसम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यते ।**

**'स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा ।**
**स्वधर्मो मम तुष्ट्यर्थः सा हि सर्वैरपेक्षिता ॥'**

**इति वचनाच्च पञ्चरात्रे । अन्यदाऽन्यरतिरपीषत् सर्वस्य भवति ।**

भावप्रदीपिका (प.टी.)– नन्वात्मरतेः कार्याभावे ज्ञानिमात्रस्य कार्याभावापात इत्यत आह– **आत्मेति** ॥ अत्रैव प्रमाणमाह– **स्थितेति** ॥ अवधारणेन कथमन्यनिरासः ? इत्यत आह– **अन्यदेति** ॥

भावप्रकाशिका (न.टी.)– ननु 'आत्मरति' शब्देन परमात्मदर्शननिमित्तं सुखम्, आदिशब्देन तत्स्मृतिनिमित्तं च सुखमुच्यते । तत्र सम्प्रज्ञातसमाधेः स्मृतिनिमित्तसुख-सम्भवेन तस्यापि कार्याभाव इत्यत आह– **आत्मेति** ॥ एतदेव द्रढयति– स्थितेति ॥ सम्प्रज्ञातसमाधेः स्थितप्रज्ञस्यापि कार्यमस्ति किमुत सम्प्रज्ञातसमाधिमात्रस्येत्यर्थः । ननु परमात्मानं ध्यायतो देहादिदर्शनेऽपि रत्यभावात् कथं तस्य न कार्यम् ? इत्यत आह– **अन्यदेति** ॥

प्रमेयदीपिका (ज.टी.)– अपव्याख्यानं निराचष्टे– **आत्मरतिरेवेति** ॥ 'न ज्ञानि-मात्रस्य' इत्येवार्थः ॥ इतोऽपि न ज्ञानिमात्रस्य कार्याभाव इत्याह– **स्थितप्रज्ञस्यापीति** ॥ स्वधर्मः कार्य इति सम्बन्धः । **'आत्मरतिरेव'** इत्यवधारणेऽपि कुतो न ज्ञानिमात्रविषय-मेतत्? इत्यत आह– **अन्यदेति** ॥ अवधारणेन ह्यनात्मरतिर्व्यावर्त्यते । असम्प्रज्ञात-

**समाधिकालात् अन्यदा सर्वस्य ज्ञानिनः अपि ईषदन्यरतिः भवति इत्युपपादितम् । अतोऽसम्प्रज्ञातसमाधिस्थव्यतिरिक्तानां ज्ञानिनामप्यवधारणेन व्यावर्तितत्वान्न तद्विषयमेतदिति भावः ॥**

**भावदीपः (रा.टि.)– ॥ उपपादितमिति ॥** 'किमासीत व्रजेत किम्' (२.५४) इत्येतत्तात्पर्यवर्णनप्रस्तावे पूर्वाध्याय इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)– ॥ अपव्याख्यानमिति ।** 'आत्मज्ञाननिष्ठानां कर्तव्याभावप्रतिपादनार्थोऽयं श्लोकः' इति परकीयव्याख्यानमित्यर्थः । परव्याख्याननिरासकत्वस्फोरणाय आह– **न ज्ञानीति ॥ एवार्थः** 'असम्प्रज्ञातसमाधिस्थस्यैव' इति भाष्यगतैवशब्दार्थ इत्यर्थः । **'अवधारणात्'** इति भाष्ये प्रमाणोपन्यासात् स्मृतिः परपक्षप्रतिक्षेपे प्रमाणान्तरमिति द्योतयितुमाह– **इतोऽपीति ॥** अनेन भाष्ये चशब्दार्थो व्याख्यातः । 'कार्यः' इत्यस्य देहादिविशेषणत्वप्रतीतिं व्युदस्यन्नन्वयमाह– **स्वधर्मः कार्य इति ॥** 'कृत्यानां कर्तरि वा' इति स्मरणात् **'स्थितप्रज्ञस्यापि'** इति भाष्ये षष्ठी । **देहादिः** देहेन्द्रियादिरित्यर्थः । **दृश्यते** तदा देहेन्द्रियादावभिमानो भवतीति यावत् । **सा हि मम तुष्टिर्हि ।** सर्वैः मुमुक्षुभिः अपेक्षिता इति प्रमाणार्थः । असम्प्रज्ञातसमाधियोगिनोऽपि तदभावदशायां कार्यमस्तीत्युक्त्या ज्ञानिमात्रस्यासम्प्रज्ञातसमाध्यभावात् तेन सर्वेणापि कर्म कर्तव्यमित्यावेदनान्न परव्याख्यानं युक्तमिति भावः । **ज्ञानिमात्रविषयं** ज्ञानिमात्रस्य कर्माभावप्रतिपादनपरम् । **अनात्मरतिः** अनात्मनि रतिर्यस्य स पुरुषस्तथा । **'कालात्'** इति वदन् 'सर्व एक अन्य किं यद् तदः काले दा' इति शास्त्राद् अन्यशब्दात् काले दाप्रत्यय इति विभावयति । 'सर्वस्य' इत्यनन्तरं 'ज्ञानिनः' इति विशेष्यं संयोज्य तेन 'अपि'शब्दस्य सम्बन्धः कार्य इति भावेनोक्तम्– **सर्वस्य ज्ञानिनोऽपीति ॥ उपपादितं** 'प्रारब्धकर्मणेषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धिपूर्विका प्रवृत्तिः सम्भवति' इत्यादिभाष्येण द्वितीयाध्याय इति शेषः । **तद्विषयमेतत्** ज्ञानिमात्रस्य कर्माभावप्रतिपादकम् 'आत्मरतिः' इति वचनमित्यर्थः ।

**भावदीपिका (श्री.टि.)– ॥ अपव्याख्यानमिति ॥** 'ज्ञानिनः कर्तव्याभावो श्लोकेनोच्यते' इत्यपव्याख्यानमित्यर्थः । **एवार्थ इति ॥** 'असम्प्रज्ञातसमाधिस्थस्यैव' इत्यत्रत्यस्य एवकारस्यार्थ इत्यर्थः । व्यवहितत्वादन्वयमाह– **स्वधर्मः कार्य इति ॥ आहेति ॥** ज्ञानिमात्र

आत्मरतित्वं नास्तीत्याहेत्यर्थः ॥ इत्युपपादितमिति ॥ 'प्रारब्धकर्मणेषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धिपूर्विकाप्रवृत्तिः सम्भवतीत्याशयवान् परिहरति' (गी.भा. २-५५) इति द्वितीयाध्याय उपपादितमित्यर्थः ॥

**भावप्रकाशः (कृ.टि.)–** ॥ उपपादितमिति ॥ द्वितीये 'प्रारब्धकर्मणैव ईषत्तिरोहित-ब्रह्मण' इत्यादिभाष्येणेति शेषः ।

## भाष्यम्

**नच तत्रालम्बुद्धिमात्रमुक्तम् । आत्मतृप्तः इति पृथगभिधानात् । कर्तृ-शब्दः कालावच्छेदेऽपि चायं प्रसिद्धः- 'यो भुङ्क्ते स तु न ब्रूयात्' इत्यादौ ।**

**भावप्रदीपिका (प.टी.)–** नन्वन्यरतित्वेऽप्यन्यत्रेषदलम्बुद्धिमत्त्वादात्मरतिरेव सर्वोऽपि ज्ञानीत्यत आह– **न चेति** ॥ न चात्र कार्याभावायालम्बुद्धिमात्रमुक्तम् । तथा सतीष-दलम्बुद्धेः प्रथमविशेषणेनैव सिद्धेः पृथगभिधानवैयर्थ्यम् । अतः सर्वात्मनाऽलम्बुद्धिमत एव कार्याभाव इत्यर्थः । ननु तथाऽपि यदाकदाचिद् असम्प्रज्ञातसमाधीनां ज्ञानिनां न कार्यं कदापि । 'तत्काल एव' इत्यवच्छेदकशब्दाभावादित्यत आह– **कर्तृशब्द इति** ॥

**भावप्रकाशिका (न.टी.)–** ननु परमात्मानं ध्यायतोऽन्यत्रालम्बुद्धेर्विद्यमानत्वात् मनश्चापल्येनेपद्रत्यां सत्यामप्यसौ 'आत्मरतिरेव' इत्युच्यते । अतो न कार्यं तस्येत्यत आह– **न चेति** ॥ ननु मा भूदवधारणमात्रविषयम्, किन्त्वात्मरतिविषयम् । तथाविधो यः सकृदात्मरतिरेव स्यात् तस्य कदाऽपि कार्यं न स्यात् । अत्र कालावच्छेदक-शब्दा-भावादित्यत आह– **कर्तृशब्द इति** ॥ तत्र यथा यावद्भुङ्क्ते तावदेव मौनम्, तद्वद् यावदात्मन्येव रमते तावदेव तस्य कार्यं नेत्यर्थः ।

**प्रमेयदीपिका (ज.टी.)–** ननु ज्ञानिनामन्यरतौ विद्यमानायामपि तत्रालम्बुद्धि-रप्यस्तीति 'आत्मरतिरेव' इत्यवधारणमुपपद्यत इत्यत आह– **न चेति** ॥ तत्र श्लोके । तत्र कार्याभावे । प्रयोजकत्वेनात्मनोऽन्यत्र अलम्बुद्धिमात्रम् अल्पालम्बुद्धिः । रतिसहचरितालम्बुद्धिरिति यावत् । नोक्ता किं तर्हि? सर्वात्मनाऽलम्बुद्धिः । कुतः? इत्यत

आह– **आत्मेति** ॥ अवधारणेनान्यत्रालम्बुद्धौ लब्धायामपि यत् पृथक् 'आत्मतृप्तः' इत्यभिधत्ते, तेन सर्वात्मनाऽलम्बुद्धिरवधारणेनाभिप्रेतेति ज्ञायत इति प्रागुक्तम् । अतो ज्ञानिमात्रे नेदमुपपद्यत इत्यर्थः ॥

'यस्त्वात्मरतिरेव' इत्येतदसम्प्रज्ञातसमाधिस्थ एव सम्भवि । तथाऽपि 'यत् पतति कदाचित्, तद् गुरु इतिवत् 'य एवंविधः कदाचित्तस्य सर्वदा कार्यं न विद्यते' इत्येवं व्याख्याने ज्ञानिमात्रस्य कार्याभावः सेत्स्यति । न ह्यत्र यदैवं तदेति कालावच्छेदक-शब्दोऽस्ति । आत्मरतिरिति समासस्तु रतेः कर्तारमेवाचष्ट इत्यत आह– **कर्तृशब्द इति** ॥ अयं च यदा तदेति रहितोऽपीत्यर्थः । आदिग्रहणेन 'यो दारान् परिगृह्णाति स गृही' इत्यादेः परिग्रहः ॥

**भावदीपः (रा.टि.)**– ॥ **समासस्त्विति** ॥ आत्मनि रतिर्यस्य स आत्मरतिरिति समासस्त्वित्यर्थः । रतिकर्तृत्वस्य समासलभ्यत्वात् 'समासस्तु' इत्युक्तम् ॥

**भावरत्नकोशः (सु.टि.)**– 'तत्र' इति भाष्यपदमावर्त्य व्याचष्टे– **तत्र श्लोके तत्र कार्याभाव इति** ॥ भाष्ये मात्रशब्दोऽल्पार्थ इति भावेनोक्तम् –**अल्पालम्बुद्धिरिति** ॥ यद्यपि 'सुप्प्रतिना मात्रार्थे' इति सूत्रवृत्तौ 'मात्रा स्तोकम् अल्पमिति पर्यायः' इति स्त्रीलिङ्ग एव मात्राशब्दोऽल्पार्थ इत्युक्तम् । विश्वप्रकाशे च 'मात्रा कर्णविभूषणे । अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे' इति स्त्रीलिङ्ग एवाल्पार्थ इत्यभिहितम् । तथाऽपि 'लिङ्गमशिष्यम् । लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यवचनान्नपुंसकत्वेऽप्यल्पार्थत्वमिति भावेनैवमुक्तमिति आहुः । केचित्तु, 'मात्रं कार्त्स्न्येऽवधारणे' इत्यभिधानान्मात्रशब्दोऽवधारणार्थः । अलम्बुद्धिमात्रम् अलम्बुद्धिरेव केवलालम्बुद्धिरेव तृप्तिशब्देनोच्यते, न पुनरन्यरतिसहितालम्बुद्धिः । 'अल्पालम्बुद्धिः' इति तु तात्पर्यवर्णनम् । पूर्वपक्ष्यभिमतस्य 'अन्यत्र रतौ विद्यमानायामपि तत्रालम्बुद्धिरप्यस्ति' इत्यस्यार्थस्य लाभाय भाष्यभावमाह– **रतिसहचरितेति** ॥ अन्यत्र रति-सहिता । 'नोक्तम्' इत्यस्य 'बुद्धिशब्दापेक्षया स्त्रीलिङ्गेनानुवादो 'नोक्ता' इति' इति व्याचक्षते । **सर्वात्मनाऽलम्बुद्धिरिति** ॥ विषयरतिं विना कृताऽलम्बुद्धिरित्यर्थः । यद्यप्यव-धारणस्यान्यत्रालम्बुद्धिमात्रद्योतनेन चरितार्थस्य 'सर्वात्मना' इत्यत्राप्रवृत्तेरिति प्रागुक्तम् । तथाऽपि 'आत्मतृप्तः' इति पृथगभिधानोपोद्बलितस्यावधारणस्य 'सर्वात्मना' इत्यत्र

प्रवृत्तिरुपपद्यत इति तात्पर्यान्न दोषः । अत एव 'अभिप्रेतेति' इत्याह। 'प्रागुक्तम्' इति वदन्नुक्तार्थस्मरणार्थत्वाद् 'अपौनरुक्त्यम्' इत्यभिसन्धत्ते ।

'एवंविधः असम्प्रज्ञातसमाधिस्थः' इत्युक्तिसामानाधिकरण्याय 'स सर्वदा कार्यं न कुर्यात्' इति वक्तव्येऽपि यत् 'तस्य सर्वदा' इति वचनं तद् गीतासङ्गत्यर्थम् । नन्वात्मनि रममाणो ह्यात्मरतिरुच्यते । शानचा च रमणस्य वर्तमानकालावच्छिन्नत्वं बोध्यते । 'लटः शतृशानचौ' इति शास्त्रात् । आरब्धापरिसमाप्तक्रियोपलक्षिते काले हि लडनुशिष्टः । तथा च 'आत्मनि रतिर्यस्येत्यात्मरतिः' इति समासवृत्त्यैव कालावच्छेदो ज्ञायत इत्यत आह– **आत्मरतिरिति समासस्त्विति** ।। बहुव्रीहेरन्यपदार्थतात्पर्यकत्वाद् अन्यपदार्थं रतेः कर्तारमेव समासवृत्तिराचष्ट इत्यर्थः । न पुनः कालमपीत्येवकारार्थः । रममाणशब्दस्योक्तभङ्ग्या कथञ्चित् कालावबोधकत्वेऽपि रतिशब्दस्य न तदवबोधकत्वम् । रमेः स्त्रियां क्तिनि भावे तस्य निष्पन्नत्वात् । आत्मशब्दस्य च भगवदर्थत्वात् । समासस्य चोक्तरीत्या सामर्थ्याभावात् 'तस्य कार्यं न विद्यते' (३.१७) इत्यत्र न कालावगतिः सम्भवति । अतः पूर्वपक्ष्यभिमतव्याख्याने नानुपपत्तिरिति भावः । 'चायम्' इत्यत्र 'अयं च' इत्यन्वयः । तदर्थश्च– **यदा तदेति रहितोऽपीति** ।। यदा तदेति शब्दरहितोऽपीत्यर्थः ।

**भावदीपिका (श्री.टि.)**– ।। **अवधारणमिति** ।। 'आत्मरतिरेव' इत्यवधारणेनान्यरतिर्न व्यावर्तिता । किन्त्वन्यरतौ सत्यामपि तत्रालम्बुद्धेरपि सत्त्वाद् विद्यमानाऽपि रतिरप्रयोजिका, अतोऽवधारणमुपपन्नमित्यर्थः ।। **प्रागुक्तमिति** ।। 'अन्यत्र सर्वात्मनाऽलम्बुद्धिः' इति वाक्येनेत्यर्थः । तथाऽवधारणार्थ एव 'आत्मतृप्तः' इत्यनेन विव्रियत इति भावः ।।

**यत् पततीति** ।। यत् कदाचित् पतति तत् सर्वदा गुर्वित्यर्तः । यो ज्ञानी एवंविधः नियमेनाऽत्मरतित्वादिमान् । **कदाचिद्** असम्प्रज्ञातसमाध्यवस्थायाम् । सर्वदा सम्प्रज्ञातसमाध्यवस्थायामनपीत्यर्थः । ननु 'यदाऽऽत्मरतित्वादिमान् तदैव तस्य कार्यं न विद्यते' इति व्याख्यानाद् असम्प्रज्ञातसमाध्यवस्थावत एव कार्याभावो लभ्यत इति चेत्, तत्राऽह– **न ह्यत्रेति** ।। **कालावच्छेदकशब्दः** कालमर्यादाप्रतिपादकः शब्दः । ननु 'आत्मन आत्मनि वा रतिर्यस्य यदा स आत्मरतिः' इति समासबलात् 'तस्य कार्यं न विद्यते' इत्युक्ते कार्याभावस्याऽत्मरतित्वादिसमानकालीनत्वं लभ्यत इति चेत् तत्राऽह– **आत्मरतिरिति समास-**

**स्त्विति** ॥ आत्मन आत्मनि वा रतिर्यस्येति षष्ठ्यर्थे सप्तम्यर्थे वा बहुव्रीहिरन्यपदार्थभूतं रतिकर्तारमेवाऽचष्टे, न तु कालावच्छेदमित्यर्थः । 'यदा'इत्यस्य समासान्तत्वस्याश्रूयमाणत्वादिति भावः । 'अपि चायम्' इत्येतेषां व्युत्क्रमेणान्वयमभिप्रेत्याऽह– **अयं चेत्यादि** ॥ 'यदा तदा' इति रहितोऽप्ययं रतिकर्तृत्ववाची आत्मरतिशब्दः । 'इत्यादेः' इत्यादिपदेन 'यो दारान् परित्यजति स यतिः' इत्यादेर्ग्रहणम् । भाष्ये 'यो भुङ्क्ते' इत्यस्यायमर्थः । यः यत्कालावच्छिन्नः भुङ्क्ते सः तत्कालावच्छिन्नः न ब्रूयादित्युक्ते यदा भुङ्क्ते तदा न ब्रूयादिति लभ्यते यथा, एवं यः आत्मरतिः यत्कालावच्छिन्नः आत्मरत्यादिमान् तस्य तत्कालावच्छिन्नस्य 'कार्यं न विद्यते' इत्येवं कर्तृवाची आमरतिशब्दः कालावच्छेदेऽपि प्रसिद्ध इति ।

**भावप्रकाशः (कृ.टि.)**– 'मात्रं कार्त्स्न्येऽवधारणे' इति उक्तार्थद्वयायोगादाह– **अल्पालम्बुद्धिरिति** ॥ यद्यपि 'मात्रा कर्णविभूषणे । अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे' इति विश्वकोशात् स्त्रीलिङ्गो मात्राशब्दोऽल्पार्थः। तथाऽपि 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति महाभाष्यानुरोधात् क्लीबत्वेऽप्यविरोध इति भावेनैवमुक्तम् । नन्वेवमपि पूर्वपक्ष्यभिमतार्थालाभ इत्यत आह– **रतिसहितेति** ॥ विषयरतिसहितेत्यर्थः । **अवधारणेनाभिप्रेतेतीति** ॥ न चात्रावधारणस्यान्यत्रालम्बुद्धिमात्रद्योतनेन चरितार्थस्य सर्वात्मनेत्यपि प्रवृत्तेरिति पूर्ववाक्यविरोधः । 'आत्मतृप्त' इति पुर्नवचनरूपसहकारिसामर्थ्येनावधारणस्योक्तार्थाभिप्रायकत्वोपपत्तेः । तदिदमुक्तम्– **अभिप्रेतेति** ॥ **समासस्त्विति** ॥ बहुव्रीहेरन्यपदार्थमात्रे तात्पर्यादिति भावः ।

## भाष्यम्

**अतोऽसम्प्रज्ञातसमाधावेवैतत्** ॥

भावप्रदीपिका (प.टी.)– **'आत्मरतिरेव'** इत्युक्तमुपसंहरति– **अत इति** ॥

भावप्रकाशिका (न.टी.)– उपसंहरति– अत इति ॥

**प्रमेयदीपिका** (ज.टी.)– अयं भावः । **'तस्य कार्यं न विद्यते'** इत्युक्तेऽतिप्रसक्तौ सत्यामन्यव्यावर्तकं यस्त्वात्मरतिरेव स्यात् इत्यनेनोक्तम् । व्यावर्तकं च द्विविधं भवति । विशेषणमुपलक्षणं चेति । तत्र व्यवच्छेद्यसमानकालं विशेषणम् । यथा सिद्धान्त्युदाहृतं

**भोजनम् । अन्यथा तूपलक्षणम् । यथा पूर्वपक्ष्युदाहृतं पतनम् । तत्र विशेषणं मुख्यम् । विशेषज्ञानहेतुत्वात् । अन्यदमुख्यम् । वैपरीत्यात् । मुख्यामुख्ययोश्च मुख्ये कार्यसम्प्रत्ययः। नचात्र विशेषणत्वग्रहणे बाधकमस्ति । येनोपलक्षणमेतदिति प्रतीम इति ॥**

**कर्तृशब्द इत्युक्तस्य फलमाह–** अत इति ॥ **एतत्** कार्यराहित्यम् । **'समाधावेव'** इत्युक्त्या समानकालतां सूचयति ॥

**भावदीपः (रा.टि.)–** ननु 'यो भुङ्क्ते'इत्यादि दृष्टान्त इव 'यत् पतति तद्गुरु' इत्यपि दृष्टान्तोऽस्ति । तथाच कथं निर्णयः? इत्यत आह– **अयं भाव इति** ॥ 'भाष्यकारस्य' इति योज्यम् । **व्यवच्छेद्यसमकालमिति** ॥ स्वसमकालाननुव्यवच्छिनत्ति व्यावर्तयति, यत् तद् व्यवच्छेद्यसमकालभोजनं स्वसमानकालीनं वचनं व्यावर्तयतीति तद् विशेषणम् । पतनं तु स्वसमकालीनमेव गुरुत्वं न व्यावर्तयति । पतनस्य कादाचित्कत्वात्, गुरुत्वस्यान्यदाऽपि सत्वात् । अतस्तदुपलक्षणमित्यर्थः ॥ **विशेषज्ञानेति** ॥ यावत्कालमन्यव्यावृत्तिबुद्धिहेतुत्वादित्यर्थः । यद्वा स्वप्रकारधर्मिज्ञानहेतुत्वादित्यर्थः ॥

**भावरत्नकोशः (सु.टि.)–** ॥ **कर्तृशब्दः** 'भुङ्क्ते' इत्यत्र भोजनकर्तृवाचक आख्यातशब्दः । कालावच्छेदे भोजनकालावच्छिन्ने कर्तर्यपि प्रसिद्ध इति शिष्टभाष्यार्थः 'यदा तदा' इति शब्दाभावे कालावच्छेदबोधः कथम् ? इति कृतचोद्यपरिहाराय भाष्यभावमाह– **अयं भाव इति** ॥ **अतिप्रसक्ताविति** ॥ 'तस्य' इत्यस्य सर्वनामतया समाधिस्थअसमाधिस्थसर्वज्ञानिपुरुषग्राहकत्वेन सर्वस्यापि कार्याभावप्रसक्तावित्यर्थः । 'विशेषणमुपलक्षणं च' इत्यनन्तरमितिशब्दोऽध्याहार्यः । **व्यवच्छेद्यसमानकालम्** व्यवच्छेद्येन इतरव्यावृत्ततया बोधनीयेन विशेष्येण समानः कालो यस्य तत् तथा । भोजनं च भोक्तारं देवदत्तम् अभोक्तुर्यज्ञदत्तादेरभोजनकालावच्छिन्नात् स्वात्मनश्च व्यावर्तयत् स्वप्रत्याय्यव्यावृत्त्यधिकरणदेवदत्तसमानकालमेवेति भवति विशेषणमिति भावेनाह– **यथा सिद्धान्त्युदाहृतमिति** ॥ **अन्यथा** तु स्वप्रत्याय्यव्यावृत्त्यसमानकालत्वे । न तु व्यावर्तकमिति योज्यम् । **पतनमिति** ॥ पतनस्य कादाचित्कत्वेन तस्य स्वप्रत्याय्यव्यावृत्त्यधिकरणगुरुपदार्थासमानकालत्वाद् उपलक्षणत्वमित्यर्थः ।

तत्र विशेषणोपलक्षणयोः कुत इत्यत आह– **विशेषज्ञानहेतुत्वादिति** ॥ स्वानधिकरणाधिकरणकव्यावृत्तिविलक्षणव्यावृत्तिलक्षणोऽतिशयो अत्र विशेषः । तज्ज्ञानहेतुत्वात् मुख्यं

विशेषणम्। यथा 'दण्डी देवदत्तः' इत्यत्र दण्डरूपं विशेषणम् । उपलक्षणं तु स्वानधिकरणेऽपि व्यावृत्तिज्ञानं जनयतीत्यमुख्यम् । 'काकवद् देवदत्तगृहम्' इत्यत्रोपरि भ्राम्यतः काकस्योपलक्षणस्य स्वानधिकरणेऽपि देवदत्तगृहे यज्ञदत्तादिगृहव्यावृत्तिबोधकत्वमेवेति न तस्योक्तरूपविशेषज्ञानहेतुत्वमित्यमुख्यत्वमेवेति भावः । स्वप्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्तकं विशेषणम् । अनेवम्भूतं व्यावर्तकमुपलक्षणम् । 'दण्डी देवदत्तः' इत्यत्र दण्डप्रत्याय्यादण्डिव्यावृत्त्यधिकरणता पुरुषस्य दण्डेनावच्छिद्यते, न पुरुषत्वेन । अतिव्याप्तेः । 'काकवद् देवदत्तगृहम्' इत्यत्र काकप्रत्याय्यगृहनिष्ठव्यावृत्त्यधिकरणता न काकेनावच्छिद्यते । तदभावेऽपि व्यावृत्तिप्रतीतेः । 'किन्तु संस्थानविशेषवत्त्वादिना' इति वदन् मणिकारोऽपि विशेषणोपलक्षणस्वरूपं व्यवस्थापयन् उक्तहेतुभावाभावाभ्यां मुख्यत्वामुख्यत्वे अभिसन्धत्ते ।

अत्र 'यस्त्वात्मरतिः' इत्यत्र । **विशेषणत्वग्रहणे** रतेः पुरुषविशेषणत्वग्रहणे । एतत् 'आत्मरतिः' इत्येतद् व्यावर्तकम् ।' इत्ययं भावः' इत्यन्वयः । 'कर्तृशब्द' इत्युक्तस्य नेदं फलम्। तत्र कालावच्छेदकशब्दसद्भावानभिधानादित्यत आह– **समाधावेवेत्युक्त्येति** ॥ कार्याभावस्य समाध्यधिकरणकत्वानुपपत्तेः समाधिकाल एवेति विवक्षायां समाधिकार्याभावयोरेककालत्वं ज्ञायत इत्यर्थः ॥

**भावदीपिका (श्री.टि.)–** कथमयमर्थः प्राप्तः? इत्यतः 'आत्मरतिः' इत्यस्य विशेषणत्वेन व्यावर्तकत्वाद् इत्याशयेनाऽऽह– **अयं भाव इति ॥ अतिप्रसक्तौ सत्यामिति** ॥ सम्प्रज्ञातावस्थाऽऽपन्नज्ञानिन्यतिप्रसक्तावित्यर्थः। ननूपलक्षणत्वेन व्यावर्तकं किं न स्यात्? इत्यतः विशेषणत्वेनेदं व्यावर्तकमिति भावेन विभागमाह– **व्यावर्तकं चेति ॥ भोजनमिति** ॥ 'यो भुङ्क्ते स तु न ब्रूयात्' इत्यत्रान्यदाऽपि वचनाभावप्रसक्तौ सत्यां तद्व्यावर्तनाय 'यो भुङ्क्ते' इति भोजनं विशेषणमुपात्तम् । तत्रान्यदा व्यवच्छेद्यो यो वचनाभावस्तत्समानकालीनत्वाद् भवति भोजनं विशेषणम् । तथा च 'यदा भुङ्क्ते तदा न ब्रूयाद्' इत्यर्थो लभ्यते । तथा गृहित्वस्य यत्यादावतिप्रसक्तिपरिहारायोपात्तो दारपरिग्रहोऽन्यत्र व्यवच्छेद्यगृहित्वसमानकालीनत्वाद् भवति गृहस्थविशेषणमित्यपि द्रष्टव्यम् ।

श्लोक: १७

।। **अन्यथेति** ।। व्यवच्छेद्यासमानकालीनमुपलक्षनमित्यर्थः । तदुदाहरति– **यथेति** ।। भूमौ फलपातानन्तरं प्रयुक्ते 'यत् पतति तद् गुरु' इत्यत्र गुरुत्वस्यान्यत्रागुरुण्यतिप्रसक्तौ सत्यां तद्व्यावर्तनाय पतनमुपलक्षणमुपात्तम् । तत्र पतनस्य क्रियारूपत्वेन चिरविनष्टस्य अन्यत्रागुरुणि व्यवच्छेद्यगुरुत्वसमानकालीनत्वाभावाद् उपलक्षणत्वमित्यर्थः । तथा च विशेषणत्वं व्यवच्छेद्यं यावत् पर्यन्तमस्ति तावत्पर्यन्तं सत्त्वगर्भम् । उपलक्षणत्वं तु न तथेति भावः ।

विशेषणलक्षणाय उपलक्षणान्मुख्यहेतुमाह– **विशेषेति** ।। भोजनादेर्व्यवच्छेद्यसमानकालीनत्वेन 'भोजनविशिष्टो वचनाभाववान्' 'दारपरिग्रहवान् गृही' इत्येवं स्वविशिष्टज्ञानजनकत्वादित्यर्थः । तत्र हेतुमाह– **वैपरीत्यादिति** ।। पतनस्य व्यवच्छेद्यासमानकालीनत्वेन पतनबहुत्वे गुर्वीति स्वविशिष्टज्ञानाजनकत्वादित्यर्थः । ननु प्रकृतेऽसम्प्रज्ञातसमाधिस्थेऽप्यात्मरतित्वादेरन्यदा व्यवच्छेद्यकार्याभावसमानकालीनत्वमङ्गीकृत्य विशेषणत्वोक्तौ बाधकसद्भावाद् व्यवच्छेद्यकार्याभावासमानकालीनत्वेनोपलक्षणत्वमेवास्त्विति चेत्, तत्राऽह– **न चात्रेति** ।। भाष्ये 'अतः' इत्यस्य आत्मरतित्वादीनां बाधकाभावेन विशेषणत्वस्य सिद्धत्वादित्यर्थः ।। **समानकालताम्** अन्यत्राव्यवच्छेद्यकार्याभावसमानकालीनताम् । तथा च प्रकृते आत्मरतित्वस्य विशेषणत्वेन व्यावर्तकत्वे वाच्ये अन्यदा व्यवच्छेद्यकार्याभावसमानकालीनत्वप्राप्त्या यदा आत्मरतिस्तदैव कार्याभाव इति कालावच्छेदः प्राप्त इति भावः ।

**भावप्रकाशः (कृ.टि.)**– ।। **व्यवच्छेद्येति**।। यावद्व्यावर्त्यभावीत्यर्थः। **अन्यथा त्विति** ।। व्यवच्छेद्यासमानकालमित्यर्थः । **विशेषज्ञानहेतुत्वादिति** ।। स्वकालावच्छिन्नतयाः व्यावर्त्यज्ञानहेतुत्वादित्यर्थः । विशेषणं 'यत् यस्मात्' इत्यादिगीतातात्पर्योदाहृतप्रमाणाद् इतरव्यावृत्त्यतिरिक्तविशेष्यगतस्वाभाविकविशेषबोधकत्वमेव विशेषज्ञानहेतुत्वमुपलक्षणे तु नैवम् । इतरव्यावृत्तिमात्रबाधकत्वादित्यप्याहुः ।

## भाष्यम्

**'मानवः' इति ज्ञानिन एवासम्प्रज्ञातसमाधिर्भवतीति दर्शयति । 'मनु अवबोधने' (पा.धा.१४७१) इति धातोः । परमात्मरतिश्चात्र विवक्षिता । 'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि' इति वचनात् ।। १७ ।।**

भावप्रदीपिका (प.टी.)– **'मानव'**पदं न देवादिव्यावृत्त्यर्थमित्याह– **मानव इति** ॥ अपरोक्षज्ञानशून्यानां कर्माभावो दूरोत्सारित इति ज्ञापनार्थमेतत् । आत्मपदेन जीव इत्यपव्याख्यां प्रत्याख्याति– **परमात्मेति** ॥ १७ ॥

भावप्रकाशिका (न.टी.)– अपरोक्षज्ञानात् प्रागसम्प्रज्ञातसमाधिरेव नास्ति । अन्यथा विशेषणवैयर्थ्यं स्यादित्याह– **मानव इति** ॥ विषयान् परित्यज्य यः स्वात्मन्येव रमते तस्य कार्यं नेत्येतन्निरीश्वरसाङ्ख्यमतं निरस्यति– **परमात्मेति** ॥ न केवलमसम्प्रज्ञातसमाधिरेव विवक्षिताऽत्र, किन्तु परमात्मरतिश्चेत्यर्थः ॥ १७ ॥

प्रमेयदीपिका (ज.टी.)– नन्वसम्प्रज्ञातसमाधिस्थस्य कार्याभावे व्याख्यायमाने कदाचिद् अपरोक्षज्ञानरहितस्याप्यसम्प्रज्ञातसमाधिसम्भवात् कार्याभावप्रसङ्ग इति चेन्न । अपरोक्षज्ञानिन एवासम्प्रज्ञातसमाधिर्भवति नान्यस्य इत्यस्यार्थस्य 'मानवः' इति पदेन भगवतैव दर्शितत्वादित्याह– **मानव इति** ॥

'मानवः' इति कथं ज्ञानिनो वाचकम्? इत्यत आह– **मन्विति** ॥ धातोः 'व्याख्यानात्' इति शेषः । अस्माद् धातोः भावे उप्रत्ययः । ततो मनुः अवबोधः अस्यास्तीत्यस्मिन्नर्थे, मनोरयमाश्रय इत्यर्थे वाऽणूप्रत्ययः । यद्वा धातोरेवावणूप्रत्ययः । 'मनुष्यः' इति व्याख्यायाम् ऋष्यादिव्यावृत्तिर्वैयर्थ्यं चापद्येत ॥

आत्मशब्दस्याप्यन्यथाव्याख्यां निराकरोति– **परमात्मेति** ॥ चशब्दोऽवधारणे । न स्वात्मरतिरित्यर्थः । तस्यैवेत्यवधारणादिति ॥ १७ ॥

**भावबोधः** (र.टि.)– ॥ **अणूप्रत्यय इति** । 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे णित्वादादिवृद्धौ च मानव इति रूपनिष्पत्तिरिति भावः । कृत्तद्धितप्रत्ययकल्पनागौरवात् पक्षान्तरमाह– **यद्वेति** ॥ अणः सार्वधातुकत्वाद्यभावेन गुणनिमित्तत्वासम्भवात् पक्षान्तरमाह– **यद्वेति** ॥ मत्त्वर्थ इत्याद्यत्रानुवर्तते णित्वादादिवृद्धिरिति भावः । **ऋष्यादिव्यावृत्तिरिति** ॥ तेषामसम्प्रज्ञातसमाधिसद्भावेन व्यावृत्तिरनिष्टेति भावः । **वैय्यर्थ्यं चेति** ॥ मानवपदस्येति शेषः । **तस्यैवेति** ॥ विष्णावेवेति प्रमाणवाक्य इति शेषः ॥ १७ ॥

श्लोकः १७

**भावदीपः (रा.टि.)– उप्रत्यय इति ॥** औणादिक इति भावः ॥ **अण्प्रत्यय इति ॥** 'तद्धिताः' (पा.सू ४.१.७६) इति बहुवचनोक्तिबलादिति ज्ञेयम् । तथा च 'ओर्गुणः' (पा.सू.६.४.१४६) इति गुणे, अवादेशे, णित्वात् 'तद्धितेष्वचामादेः' (पा.सू.७.२.११२) इत्यादिवृद्धौ रूपमिति भावः ॥ **अवण्प्रत्यय इति ॥** 'उणादयो बहुलम्' (पा.सू.३.३.१) इत्युक्तेः औणादिके कर्त्तरि अवण्प्रत्यये णित्वात् 'अत उपधायाः' (पा.सू.७.२.११६) इति वृद्धौ मन्यत इति वा, मनुत इति वा, मानव इति रूपमिति भावः ॥ **ऋष्यादिव्यावृत्तिरिति ॥** तेषामप्यसम्प्रज्ञातसमाधिमत्वाज्ज्ञानित्वाच्च तद्व्यावृत्तिरनिष्टेति भावः । तथा व्याख्याने च व्यर्थमेव मानवपदम्। 'यस्तु तस्य' इत्येतावता पूर्तेरित्याह– **वैयर्थ्यं चेति ॥** कुत एवं व्याख्या? इत्यतो ज्ञापकमाह– **तस्यैवेतीति ॥** प्रमाणवचने **'तस्यैव'** इत्यवधारणाद् विष्णुरतिरेवात्र विवक्षिता न स्वात्मरतिः, तस्या कार्यान्तरसत्वादिति भावः ॥ इतिशब्दो 'यस्तु' इति (१७) श्लोकव्याख्यासमाप्तौ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ भावे उप्रत्यय इति ॥** 'उणादयो बहुलम्' इति बहुवचनात् अन्यतोऽपि 'उ'प्रत्यय इति उणादिवृत्तावुक्तत्वात् उप्रत्यय इति भावः । **अण्प्रत्यय इति ॥** 'विचित्रा तद्धितगतिः' इति वचनात् अस्यास्तीत्यस्मिन्नप्यर्थे अणित्यर्थः । तथा च मनुधातोः उप्रत्यये पश्चादस्यास्मीत्यर्थे अणि 'ओर्गुण' इति उवणीततया गुणे अकादेशे णित्वात् 'तद्धितेष्वचामादेः' इत्यादि वृद्धौ च सत्यां मानव इति रूपनिष्पत्तिरिति भावः । मत्वर्थे अण्प्रत्ययविधानकुसृष्टिमसहमानः पक्षान्तरमाह– **यद्वेति ॥** 'उणादयो बहुलम्' इति धातोरेवावण्प्रत्ये णित्वात् 'अत उपधायाः' इत्यादिवृद्धौ मानवशब्दनिष्पत्तिरिति भावः । 'तद्धिताः' इति सूत्रे 'प्रत्यय' इतिवत् एकवचने कर्तव्ये बहुवचनेन संज्ञिनां बहुत्वसूचनात् 'अनुक्तोपि तद्धितः परिगृह्यते' इति पदमञ्जर्यामुक्तत्वात् 'विचित्रा तद्धितगतिः' इरति न्यायेन धातोः अवण्प्रत्यये णित्वात् 'तद्धितेषु' इति आदिवृद्धौ मानव इति रूपसिद्धिरित्याद्युह्यम् ।

**भावरत्नकोशः (सु.टि.)–** भाष्ये ज्ञानिपदेनापरोक्षज्ञानी ग्राह्यः । मुख्ये कार्यसम्प्रत्ययात् । एवशब्देनापरोक्षज्ञान्यन्यो व्यावर्त्यत इति भावेनाह– **अपरोक्षेत्यादि ॥** ननु मनुधातुरवबोधनेऽर्थे वर्तत इत्यर्थकस्य 'मनु अवबोधने' इति वाक्यस्य धातुत्वायोगाद् भाष्ये कथं 'धातोः' इत्युक्तिः ? इत्यत आह– **धातोर्व्याख्यानादिति ॥** 'धातोः' इत्यनन्तरं

'व्याख्यानात्' इति भाष्ये शेषपूरणे नोक्तशङ्काऽवकाश इति भावः । एवं व्याख्यानेऽपि मानवपदेन कथं ज्ञानिनो लाभः ? इत्यतस्तल्लाभप्रकारं दर्शयितुमाह– **अस्मादिति** ॥ भावे शुद्धधात्वर्थेऽभिधेये । उप्रत्ययः । 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' इति वर्तमाने 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इति सूत्रेण मनेः कर्तरि विधीयमानोऽपि बाहुलकाद् भावे औणादिक उप्रत्यय उत्पादनीय इत्यर्थः । ततः उप्रत्ययनिष्पत्त्यनन्तरम् । 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वे सोरुत्पत्तौ मनुः = अवबोध इत्यर्थः । **अणप्रत्यय इति** ॥ 'तद्धिताः' इति बहुवचनज्ञापितः । यद्वा, सोऽस्यास्तीत्याद्ये मत्वर्थे 'शेषे' इति शैषिकोऽणप्रत्ययः । द्वितीये 'तस्येदम्' इत्यणप्रत्यय इत्यर्थः । **'आश्रयः'** इत्युक्तिः सौत्र-षष्ठ्याश्रयाश्रयिभावसम्बन्धार्थेति दर्शयितुम् । तथा च मनुशब्दात् तद्धितेऽणप्रत्यये 'ओर्गुणः' इति गुणे 'एचोऽयवायावः' इत्यवादेशे णित्त्वात् 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'मानवः' इति रूपमिति भावः ।

कृत्तद्धितप्रत्ययद्वयकल्पनानुशयादाह– **यद्वेति** ॥ मनुते अवबुध्यते इति कर्तरि 'उणादयो बहुलम्' इति बहुलग्रहणज्ञापितऔणादिकेष्वणप्रत्यये णित्त्वात् 'अत उपधायाः' इति वृद्धौ 'मानवः' इति रूपे तस्य ज्ञान्यर्थकत्वमिति भावः । मानवपदस्य स्वोक्तार्थस्थेम्ने यदुक्तं सङ्करेण 'मानवो मनुष्यः' इति तद् दूषयति– **मनुष्य इति व्याख्यायामिति** ॥ ऋषिगन्धर्वादीनामपि असम्प्रज्ञातसमाधिसत्त्वेन तेषामपि सङ्ग्राह्यत्वं वक्तव्यम् । परपक्षे च तद्व्यावृत्तिरापद्येत । सा च अनुचिता । मानवपदस्य व्यर्थता चापद्येत । 'यस्त्वात्मरतिस्तस्य कार्यं न विद्यते' इत्येतावतैव वाक्यार्थपर्यवसानादिति भावः । **आत्मशब्दस्यापीति** ॥ न केवलं 'ज्ञानिनः कर्तव्याभावमाहेति' श्लोकस्य तात्पर्यं निराकृतवान् । नापि मानव इति पदस्यान्यथा व्याख्यानम् । मनु अवबोधन इति योगं वदन्, अपि त्वात्मशब्दस्यापीत्यर्थः ।

यद्यपि 'परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः आत्मरतिः' इति भाष्य एव आत्मशब्दः परमात्मपरो व्याख्यातः । तथाऽपि तदर्थस्य स्मारणाय पुनः आत्मशब्दस्तात्पर्यद्योतनाय, प्रमाणोपन्यासाय च परमात्मार्थ इत्युक्तमिति । अवधारणव्यावर्त्यमाह– **न स्वात्मेति** ॥ कुत एवं व्याख्यानम् ? इत्यतो ज्ञापकमाह– **तस्यैवेत्यवधारणादिति** ॥ 'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि' इति वचने तस्यैव क्रिया सन्ध्यावन्दनाग्निहोत्रादिरूपा स्ववर्णाश्रमोचिता

नास्ति । अन्यस्य तु स्वात्मरतस्यापि विद्यत एवेत्यावेदनाद् आत्मशब्दस्य विष्ण्वर्थत्वमेव युक्तम्, न स्वात्मार्थत्वमिति भावः । इतिशब्दः 'यस्तु' इति श्लोकव्याख्यानसमाप्तौ ॥ १७ ॥

**गीताक्षरार्थस्तु**— यद्येवं कर्माकरणे हानिस्तत्करणे च लाभः, तर्ह्यसम्प्रज्ञातसमाधिरूपं परमेश्वरेऽतीवमनस्समाधानमपि न कार्यं प्रसज्येत । तदनुष्ठाने कर्मलोपावश्यम्भावादित्यत उच्यते यस्त्विति । तुशब्दः समाधिस्थत्वविशेषसूचनार्थः । यः असम्प्रज्ञातसमाधियुक्तो मानवः अपरोक्षज्ञानी आत्मरतिरेव परमात्मविषयकदर्शनादिनिमित्तसुखवान् नान्यत्र रतिमान् इति एवार्थः । भगवतोऽन्यत्र रतिराहित्यं न प्रायेण । किन्तु सर्वात्मनेत्याह– **आत्मतृप्त इति** ॥ **आत्मना** परमात्मप्रसादेनैवान्यत्र सर्वात्मनाऽलम्बुद्धिमान् । केनालम्बुद्धिः ? इत्याशङ्क्य पूर्वोक्तात्मरत्याख्यसुखेनेति वक्तुमुक्तम्– **सन्तुष्ट इति** ॥ सम्यक् तुष्टिः केन जाता ? इत्यपेक्षायाम् असम्प्रज्ञातसमाधिलक्षणया परमात्मनि स्थित्या इति ज्ञापयितुम् 'आत्मनि' इत्युक्तम् । आत्मनि स्थित्यैव तुष्टः, न पुनरन्येन इति एवशब्दः । य एवंविशेषणः तस्य कार्यं कर्तव्यं सन्ध्यावन्दनादिरूपं नित्यं नैमित्तिकं न विद्यते ॥ १७ ॥

**भावदीपिका (श्री.टि.)**– ननु 'मन्' इत्यस्यैव धातुत्वम्, न तु 'मनु अवबोधने' इत्यस्य । तत् कथं विशिष्टस्य धातुत्वोक्तिः? इत्यत आह– **धातोर्व्याख्यानादिति** ॥ **भाव इति** ॥ भावो धात्वर्थोऽवबोधनरूपः, तस्मिन् विवक्षिते सति उप्रत्यय इत्यर्थः । तथा च मननं मनुरिति भावार्थो द्रष्टव्यः । इत्यर्थे 'तदस्यास्त्यस्मिन्' इति विधानान्मत्वर्थ इत्यर्थः ॥ **आश्रय इति** ॥ 'तस्येदम्' इति सूत्रेण सम्बन्धार्थेऽणो विधानात् आश्रय इति सम्बन्धो व्याख्यातः । तथा च 'मन्' अस्मादुप्रत्यये 'मनु' इति जाते पश्चान्मनुशब्दान्मत्वर्थे सम्बन्धार्थे वा तद्धितेऽण्प्रत्यये अचो ञ्णिति इत्यनुवर्तमाने तद्धितेष्वचामादेरिति णित्वादादिवृद्धौ 'ओर्गुणः' इत्युकारस्य ओकाररूपे गुणे 'एचोऽयवायावः' इति तस्यावादेशे 'मानव' इति रूपम्, न तु धातोरुपरि उप्रत्ययमुत्पाद्य तस्य शब्दतां सम्पाद्य तद्धिताण्प्रत्यय इत्यर्थः । अतः पक्षान्तरमाह– **यद्वेति** ॥ मनुरवबोधोऽस्यास्तीत्याद्यत्रानुवर्तते । तथा च 'मन्' अस्मात् अवणप्रत्ये 'अत उपधायाः' इत्यनेनोपधाभूतस्य मकारस्थाकारस्याऽकाररूपवृद्धौ 'मानव' इति रूपं द्रष्टव्यम् ॥ **ऋष्यादिव्यावृत्तिरिति** ॥ तेषामसम्प्रज्ञातसमाधिसद्भावेन तद्व्यावृत्तिरनिष्टेति भावः ॥ **वैयर्थ्यं चेति** ॥ 'मानवपदस्य' सति शेषः । अन्यथाव्याख्यां जीवपरत्वरूपाम् । **तस्यैवेति** ॥ यदि

स्वात्मरतिमतः क्रियाभाव उच्यते तर्हि 'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि' इति प्रमाणवाक्ये तस्यैव विष्णौ रतिमत एव क्रिया निषिध्यते, तन्न स्यादित्यर्थः ॥ १७ ॥

**भावप्रकाशः (कृ.टि.)**– 'मनु अवबोधने' इत्यस्य धात्वर्थबोधकत्वेन धातुत्वाभावादाह– **धातोर्व्याख्यानादिति शेष इति** ॥ **उप्रत्यय इति** ॥ औणादिक इति शेषः । **अण्प्रत्यय इति** ॥ आद्यर्थे शेष इति शैषिकोऽण्प्रत्ययः । द्वितीये 'तस्येदम्'इत्यनेनेत्यर्थः । 'आश्रयः' इति तु फलितार्थप्रदर्शनायोक्तम् । तथा च मनुशब्दादण्प्रत्यये 'ओर्गुणः' इति गुणेऽवादेशे णित्वादादिवृद्धौ च मानव इति रूपमिति भावः । कृत्तद्धितप्रत्ययद्वयकल्पनागौरवात् पक्षान्तरमाह– **यद्वेति** ॥ मनुतेऽसौ मानवः । कर्तरि औणादिकोऽवण्प्रत्ययः, णित्वात् 'अत उपधायाः' इति उपधावृद्धिश्चेति भावः । **ऋष्यादीति** ॥ तेषामप्यसम्प्रज्ञातसमाधिसत्त्वेन सङ्ग्राह्यत्वात् तद्व्यावृत्तिरनुचितेति भावः । **वैय्यर्थ्यं चेति** ॥ मानवपदस्येति शेषः । **तस्यैवेतीति** ॥ विष्णावेवेति प्रमाणवाक्य इति शेषः ॥ १७ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

## भाष्यम्

**तस्य 'कर्मकाले वक्तव्योऽहम्' इति कश्चित् प्रत्युक्त्वा तत्कृतावात्मरत्यधिकः समो वाऽर्थो नास्ति ॥**

भावप्रदीपिका (प.टी.)– ज्ञानिनोऽपि कर्मकरणेनाऽऽनन्दवृद्धेरसम्प्रज्ञातसमाधिनाऽपि तदनुष्ठेयमित्याशङ्क्य उत्तरत्वेनोत्तरश्लोकं व्याचष्टे– **तस्येति** ॥

भावप्रकाशिका (न.टी.)– ननु कथं तस्य कार्यं न विद्यते ? करणे मुक्तावानन्दवृद्धिः, अकरणे च तदभावः प्रत्यवायो वाऽऽनन्दह्रासकर इति । अतोऽसावसम्प्रज्ञातसमाधिः प्राग्विवक्षिता स्यात् । 'कर्मकालोऽयमिति त्वयाऽहं वक्तव्यः' इति कश्चित्प्रत्युक्त्वा समाधिं कुर्वंस्तद्वचनाद् उत्थाय कर्म कुर्यादित्याशङ्क्योत्तरत्वेनोत्तरार्धं च व्याचष्टे– **तस्येति** ॥ 'कश्चन' इति पदं 'कृतेनार्थः' इत्यत्राप्यभिकृष्य व्याचष्टे– **अधिकः समो**

श्लोकः १८

**वेति ।। आत्मरतेर्वाऽऽत्मरत्या वा यावत्प्रयोजनम्, तदधिकं तत्समं वा न कर्मणेत्यर्थः । न कश्चिदिति आनन्दहासकरो नरकाद्यापादकश्च नेत्यर्थः ।**

**प्रमेयदीपिका (ज.टी.)– यद्ययं कार्याभावो न ज्ञानिमात्रस्य किन्त्वसम्प्रज्ञातसमाधिस्थस्यैव तर्हि 'नैव तस्य कृतेनार्थः' इत्युत्तरं वाक्यं न सङ्गच्छते । असम्प्रज्ञातसमाधेः करणस्यैवाभावेन तत्प्रयोजनाभावकथनस्यैवायोगात् । ज्ञानिनस्तु करणसम्भवेन तत्प्रयोजन प्रतिषेधोपपत्तेरिति चेन्न । तर्ह्यतीव मनस्समाधानमपि न कार्यमित्याक्षेपस्य 'तस्य कार्यं न विद्यते' इत्युत्तरं कस्मादुक्तम्? कर्मकृतिकाले त्वयाऽहमुद्बोधनीय इति कश्चित् प्रत्युक्त्वा समाहितः, तेन योगशास्त्रोदितोपायैरुद्बोधितः कर्म करोतीति कुतो नोक्तम्? इत्याशङ्कानिरासायेदमेवमुच्यत इत्यभिप्रेत्य व्याचष्टे– तस्येति ।। तस्य असम्प्रज्ञातसमाधिस्थस्य । अर्थो नास्तीति सम्बन्धः। उक्त्वा 'उद्बुद्धस्य' इति शेषः । एवं तर्हि तस्यैव महत्सुखत्वात् इत्याद्युक्तिविरोध इत्यत उक्तम्– आत्मेति ।। समो वा आत्मरत्या । समप्रतिषेधः कैमुत्यार्थः । नतु समव्ययफलं कर्मानुष्ठीयते ।।**

**भावबोधः (र.टि.)**– ननु कर्मादिकृतौ अर्थो नास्तीति कथम् ? तस्यैव महत्सुखत्वात् तेषां तेषामप्युपासनादिफलस्य साधितत्वादित्यादिना द्वितीयाध्याये श्रवणादेरर्चनादिकर्मणः फलस्योक्तत्वादित्याशङ्कच परिहरति – **एवं तर्हीति** ।। नन्वधिकफलनिषेधस्यैव समाध्यपरित्यागहेतुत्वम् । कर्मकरणेनाधिकफलसद्भावे समाधिपरित्यागस्यावश्यकत्वात् । नतु समफलनिषेधस्य । समाधिकर्मणोः समफलकत्वे पूर्वप्राप्तसमाधिपरित्यागायोगात् । ततश्च कथं समो वेति तन्निषेधः? इत्यत आह– **समप्रतिषेध इति** ।। तदुपपादयति– **न त्विति** ।। 'समव्ययफलम्' इति हेत्वर्थगर्भं विशेषणम् । समफलसत्त्वेऽपि समाधित्यागेन कर्मकरणे तत्समसमाधिफलहानेन समव्ययफलत्वात् । कर्म न क्रियत इति समाध्यत्यागस्यान्यथासिद्धत्वान्न तत्र समप्रतिषेधो हेतुरिति भावः । अत एव वक्ष्यति 'अधिकस्यैव पूर्वपरित्यागोपयोगित्वात्' इति ।

**भावदीपः (रा.टि.)**– क्त्वाश्रुतिनिर्वाहाय समानकर्तृकक्रियान्तरमाह– **उद्बुद्धस्येति शेष इति** ।। **एवं तर्हीति** ।। कर्मकृतावर्थो नास्तीति पक्षे– 'यदा ते मोहकलिलम्' (२.५२) इति श्लोके 'तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च' (२.५२) इत्यस्य 'निर्वेदं नितरां लाभं नतु वैराग्यम्' इति व्याख्यावसरे 'तस्यैव भगवच्छ्रवणादिकर्मण एव महत्सुखत्वात् तदेव

ज्ञानिनाऽप्यवश्यं **कार्यम्**' इत्युक्तेः, तद्विरोध इत्यर्थः ॥ **बुद्ध्या** विभज्यानुषङ्गेणान्वयमाह– **समो वा आत्मरत्येति** ॥ अप्रसक्तनिषेधदोषनिरासायाऽह– **समप्रतिषेध इति** ॥ अप्रसक्तिमेवाह– **नतु समेति** ॥ **व्ययपदं** दृष्टान्तार्थम् ॥ **उक्तविरोधादिति** ॥ 'मा भूदल्पस्य' इत्यादिना उक्तविरोधात् इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– ॥ **अयम्** 'तस्य कार्यं न विद्यते' इत्यत्रोक्तः । 'यदीयं कार्याभावोक्तिः' इत्यपि क्वचित् पाठः । असङ्गतिमुपपादयति– **असम्प्रज्ञातेति** ॥ **करणस्य** कर्मानुष्ठानस्य । **तत्प्रयोजनेति** ॥ कर्मकरणप्रयोजनेत्यर्थः । एवं सिद्धान्तं दूषयित्वा पूर्वपक्षी स्वमते तत्सङ्गतिं दर्शयति– **ज्ञानिनस्त्विति** ॥ **'इति चेत्, न'** इत्यनन्तरं 'यतः' इति शेषः । तेन 'पश्चम्यभावात् नेति साध्यान्वयानुपपत्तिः' इति चोद्यं परास्तम् । **कर्मकृतिकाले** सन्ध्यावन्दनश्रवणमननादिकर्मानुष्ठानसमये । **समाहितः** समाधिं प्राप्तः । **तेन** वचनकर्मणा पुरुषेण । भेरीताडनादिनाऽपि बाह्यप्रज्ञाऽभावे ह्यसम्प्रज्ञातसमाधिस्थत्वमिति कथं तस्योद्बोधः ? इत्यत उक्तम्– **योगशास्त्रोदितोपायैरिति** ॥ अवयवविशेषस्पर्शादिः समाधिस्थस्याप्युद्बोधोपाय इति योगशास्त्र एवाभिधानात् तदुक्तोपायैः सम्भवत्युद्बोध इति भावः । **इदमेवमिति** ॥ इदं समाधानम् एवं करणादौ प्रयोजनं नास्तीति प्रकारेणोच्यत इत्यर्थः । यद्वा **इदं** 'नैव तस्य' इति वाक्यम् । **एवं** 'तत्कृतावात्मरत्यधिकः समो वाऽर्थो नास्ति' इति भाष्यभाषितप्रकारेणोच्यत इति व्याख्येयम् । **व्याचष्टे** 'नैव तस्य कृतेनार्थः' इति श्लोकमिति शेषः ।

समानकर्तृकत्वनिर्वाहाय आह– **उद्बुद्धस्येति शेष इति** ॥ 'उद्बोधितस्य' इत्यपि क्वचित् पाठः । **उक्तम्** 'तत्कृतौ' इति यथाश्रुतभाष्ये । समानकर्तृकत्वसम्भवेऽपि उक्त्वा समाहितस्य कर्मानुष्ठानमेव न सम्भवतीत्यन्यथाऽनुपपत्त्याऽध्याहारः कृतः । **एवं तर्हि** असम्प्रज्ञातसमाधिस्थस्यार्थो नास्तीति पक्षे । **इत्युक्तविरोध इति** ॥ ज्ञानिकृतश्रवणध्यानादेः फलमस्तीति 'तस्यैव महत्सुखत्वात् तेषाम्' (गी.भा.२.५२) इति द्वितीयाध्यायभाष्योक्तविरोधः । अत्र फलाभावकथनादित्यर्थः । 'आत्मरत्यधिकः' इत्यस्य समासत्वेन आत्मरतिशब्दस्य समपदेनान्वयायोगात् तत्र प्रतियोग्याकाङ्क्षायामाह– **समो वाऽऽत्मरत्येति** ॥ ननु 'अधिकस्य पूर्वपरित्यागोपयोगित्वात्' इति वक्ष्यमाणरीत्याऽधिकफलनिषेधः समाध्यपरित्यागे हेतुरस्तु । समफलनिषेधस्तु न प्रयोजनवानित्यत आह– **समप्रतिषेध इति** ॥ समप्रयोजनमेव नास्ति । अधिकं तन्नास्तीति

श्लोकः १८

किमु वक्तव्यम् ? इति कैमुत्यप्रदर्शनार्थ इत्यर्थः । समफलस्य पूर्वपरित्यागहेतुत्वमेव किं न स्यात् ? इत्यत आह– **न त्विति** । पूर्वं परित्यज्य तत्समफलं कर्मानुष्ठेयं न तु भवति । पूर्वफलहानेनैतदनुष्ठानेऽपि समव्ययफलत्वात् । तस्य च–

> 'व्यसनानि दुरन्तानि समव्ययफलानि च ।
> अशक्यानि च वस्तूनि नाऽरभेत विचक्षणः'

इति प्रेक्षावतोऽनुचितत्वात् । ततश्च समफलस्य पूर्वत्यागाप्रयोजकत्वान्न तन्निषेधो युक्त इति भावः । तुशब्दो हिशब्दार्थः । व्ययपदं च दृष्टान्तार्थमिति वा ।

**भावदीपिका (श्री.टि.)– ॥ असम्प्रज्ञातसमाधेरिति ॥** तद्वतः पुरुषस्येत्यर्थः ॥ **करणस्यैवाभावेनेति ॥** कर्मकरणप्रसक्तेरेवाभावेनेत्यर्थः ॥ **तत्प्रयोजनाभावकथनस्येति ॥** 'नैव तस्य कृतेनार्थः' इति कर्मकरणप्रयोजानाभावकथनस्येत्यर्थः । **करणसम्भवेन** कर्मकरण-सम्भवेनेत्यर्थः ॥ **तर्हीति** ॥ यदि कर्मकरणाकरणयोर्लाभहानी तर्ह्यसम्प्रज्ञातसमाधिर्न कर्तव्या । तत्र कर्मलोपावश्यम्भावादित्याक्षेपस्येत्यर्थः ॥ **समाहितः** असम्प्रज्ञातसमाधिं प्राप्तः । ननु भेरीताडनादावुद्बोधनायोगात् कथमुद्बोधनम् ? इत्यत आह– **योगशास्त्रेति** ॥ ननु 'उक्त्वाऽर्थो नास्ति' इत्यत्रोक्तिरूपक्रियायां पुरुषस्य कर्तृत्वात्, 'नास्ति' इत्यत्र तु अर्थस्य कर्तृत्वेन समानकर्तृकत्वाभावात् कथम् 'उक्त्वा' इति क्त्वाप्रत्ययः? 'समानकर्तृकयोः पूर्वकाले क्त्वा' इति स्मरणादित्यत आह– **उद्बुद्धस्येति** ॥ तथा चोद्बोधनरूपक्रिययोक्तिरूपक्रियायाः समानकर्तृ-कतासद्भावाद् युक्तः क्त्वाप्रत्यय इत्यर्थः ।

ननु कर्मादिकृतावर्थो नास्तीति कथम्? 'तस्यैव महत्सुखत्वात् तेषाम् । तेषामप्युपासनादि-फलस्य साधितत्वाद्' (गी.भा. २-५२) इत्यादिना द्वितीयाध्याये ज्ञानिकृतश्रवणादेरर्चनादि-कर्मणश्च फलस्योक्तत्वादित्याशङ्क्य परिहरति– **एवं तर्हीति** ॥

नन्वसम्प्रज्ञातसमाध्यपरित्यागहेतुत्वमधिकफलनिषेधस्यैव । कर्मकरणेनाधिकफलसद्भावे समाधिपरित्यागस्याऽवश्यकत्वात् । न तु समफलनिषेधस्य । समाधिकर्मणोः समफलकत्वे पूर्वप्राप्तसमाधिपरित्यागायोगात्, ततश्च कथं 'समो वा' इति तन्निषेधः? इत्यत आह– **समप्रतिषेध इति** ॥ यदा समोऽर्थो नास्ति तदाऽधिको नास्तीति किं वक्तव्यम्? इति कैमुत्यार्थ

इत्यर्थः । अत एव वक्ष्यति– **'आधिक्यस्यैव पूर्वपरित्यागोपयोगित्वात्'** इति । ननु 'समो वाऽर्थो नास्ति' इति कैमुत्यार्थमपि समप्रतिषेधः कस्मात् कर्तव्यः? समफललाभेन पूर्वपरित्यागः कस्मान्न स्यात्? इत्यत आह– **न त्विति ॥ समफलत्वे** समाधित्यागेन कर्मकरणे ततः समान-समाधिफलहानेन समव्ययफलत्वप्राप्तेः, अस्त्विति चेन्न । समव्ययफलं तु कर्म न हि लोकैरनुष्ठीयते ।

'असत्यानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च वस्तूनि नाऽरभेत विचक्षणः ॥

इति वचनादिति भावः ॥ **सन्निधानादिति ॥** एकस्मिन्नेवार्थे सत्त्वेन शब्दसन्निधानादिति भावः ॥

**भावप्रकाशः (कृ.टि.)– प्रतिषेधोपपत्तिरिति चेन्नेति ॥** इतः परं 'यतः' इत्यध्याहृत्यैव-मुच्यत इत्यनेनान्वयोऽनुसन्धेयः । तेन पञ्चम्यभावादनन्वय इति परास्तम् । 'भेरीताडनादावपि परमानन्दमग्नत्वात्' इत्यन्तेन समाधिस्थस्योद्बोधाभावोक्तेः स कथमुद्बोध्यः? इत्यत उक्तम् – **योगशास्त्रेति ॥** एतादृशावयविशेषस्पर्शे समाधिस्थस्योद्बोधो भवतीत्येवं योगशास्त्रोदितोपायै-रित्यर्थः । **व्याचष्ट इति ॥** 'नैव तस्य कृतेनार्थः' इतिवाक्यमिति शेषः । **समानकर्तृकयोः पूर्वकाल इति ॥** समानकर्तृकक्रिययोः मध्ये पूर्वकालीनक्रियावाचकात् क्त्वाप्रत्ययविधानात् समानकर्तृकतानिर्वाहार्थमाह– **उद्बुद्धस्येति शेष इति ॥ एवं तर्हीति ॥** ननु 'तस्यैव' इत्यादिना श्रवणादेः फलं साधितम् । अत्र त्वसम्प्रज्ञातसमाधिस्थकृतकर्मणः फलं नास्ती-त्युच्यते । तत्कथं विरोधः? इत्थम् । निवृत्तकर्म द्विविधम् । उपासना यज्ञादिश्चेति । यथोक्तं चतुर्थटीकायाम् । 'निवृत्त एव कर्मणि उपासना यज्ञादिरूपो भेद' इति । एवं चोपासनाया अपि निवृत्तकर्मत्वात् कर्मकृतावर्थो नास्तीत्युक्ते 'तस्यैव' इत्यनेन विरोध इति । नन्वधिकस्यैव पूर्वपरित्यागोपयोगित्वादिति वक्ष्यमाणरीत्याऽधिकफलनिषेधः समाध्यपरित्यागे हेतुरस्तु ,समफलनिषेधस्तु व्यर्थ इत्यत आह– **समप्रतिषेध इति ॥** हेतुरेव किं न स्यादित्यत आह– **न त्विति ॥** पूर्वं परित्यज्य तत्समफलं कर्मानुष्ठेयमेव न भवति । **पूर्वफलहानेन** समव्ययफलहानेन समव्ययफलत्वात् । तस्य च–

श्लोकः १८

'विफलानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि च वस्तूनि नारभेत विचक्षणः'

इत्यनारम्भोक्तेः । ततश्च समफलस्य पूर्वत्यागेऽप्रयोजकत्वात् तन्निषेधोऽत्र पूर्वापरित्यागे हेतुरिति भावः ।

## भाष्यम्

**नच सन्ध्यायकृतौ कश्चिद्दोषोऽस्ति । न चैतदपहाय सर्वभूतेषु कश्चित् प्रयोजनाश्रयः । अर्थो येन दर्शनादिना भवति सोऽर्थव्यपाश्रयः ॥**

भावप्रदीपिका (प.टी.)– सर्वभूतानि गुर्वादीनि । प्रयोजनाश्रयो 'व्यापारः' इति शेषः ॥

भावप्रकाशिका (न.टी.)– यथाऽन्येषु कर्मसु गुर्वागतिरुत्थानकारणम्, तदपि नासम्प्रज्ञतसमाधेरिति भावेनोत्तरार्धं व्याचष्टे– **न चेति** ॥ **कश्चित्** 'व्यापारः' इति शेषः ॥

प्रमेयदीपिका (ज.टी.)– नन्वत्र 'कश्चन' इत्यस्य विशेष्याकाङ्क्षायां सन्निधानात् 'अर्थः' इति सम्बद्ध्यते । तथा चेदमयुक्तम् । न हि कर्माकरणेऽर्थप्राप्तिरस्ति । येन प्रतिषेधः सङ्गच्छेत । अथसन्निधानादपि योग्यताया बलवत्त्वात् कश्चन 'दोषः' इत्यध्याह्रियते । तथाप्यश्वमेधायकृतौ प्रत्यवायाप्राप्तेः प्रतिषेधोऽसङ्गत एवेत्यतो 'नाकृतेन' इत्येतद्व्याचष्टे– **न चेति** ॥ मा भूद् यज्ञादिकरणार्थमुत्थानम् । नित्यनैमित्तिकाकरणे प्रत्यवायप्राप्तेः तदर्थं तु स्यात् इत्याशङ्कानिरासार्थम् एतत् । 'सन्ध्या' इति तत्कालेऽनुष्ठेयं कर्मोच्यते ॥

माभूदल्पस्य यज्ञादेरनुष्ठाने प्रयोजनाभावः, सन्ध्याकृतौ प्रत्यवायश्च । तथाऽपि गुरुदेवतादिपूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । अतस्तत्सन्निधिप्राप्तावुत्थानमावश्यकमेवेत्याशङ्कानिरासार्थं 'न चास्य' इत्युक्तम् । तद्युक्तम् । उक्तविरोधादेवेत्यतो व्याचष्टे– **न चैतदिति** ॥ एतत् असम्प्रज्ञातसमाधानम् । **अपहाय** 'उत्थितस्य' इति शेषः । 'अपहाय' इत्यनेन गुर्वादिपूजाया अपि आधिक्यं निषेधति । आधिक्यस्यैव पूर्वत्यागोपयोगित्वात्। **सर्वभूतेषु** गुर्वादिषु ॥

**नन्वर्थव्यपाश्रयः नाम अर्थप्राप्तिः । तथाच सर्वभूतेभ्य इति स्यादित्यत आह– अर्थ इति ।। अनेनार्थस्य व्यपाश्रयः प्राप्तिः येन दर्शनादिना व्यापारेण भवति इति व्यधिकरणो बहुव्रीहिरयमित्युक्तं भवति । तथा च दर्शनादेर्विषया गुर्वादय इति सप्तम्युपपत्तिः ।** अनेन **अर्थव्यपाश्रयोऽप्युपलक्ष्यते ।।**

**भावबोधः (र.टि.)– ।। उक्तविरोधादेवेति ।** 'अर्थप्रत्यवायौ स्याताम्' इत्युक्त-विरोधादित्यर्थः । यथाश्रुतगीतावाक्येन शङ्कापरिहाराभावादिति भावः ।। १८ ।।

**भावदीपः (रा.टि.)–** ल्यबन्तनिर्वाहाय समानकर्तृकक्रियान्तरमाह– **उत्थितस्येति** शेष **इति ।।** 'इति स्यात्' इति प्रयोजनावाप्तौ तेषामवधित्वप्राप्तेरिति भावः । पुंल्लिङ्गनिर्वाहायोक्तम्– **व्यापारेणेति ।। इत्यप्युपलक्ष्यत इति ।।** गुरुदेवताविषयकदर्शनस्पर्शनवन्दनपूजादिव्यापारः कश्चिदप्यर्थप्राप्तिहेतुर्न भवति तथा तत्करणाभावोऽपि अनर्थव्यपाश्रयप्रत्यवायप्राप्तिहेतुर्न भवतीत्युपलक्षणीयमित्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। व्यधिकरणो बहुव्रीहिरयमित्युक्तं भवतीति ।** नच 'समानाधिकरणानां बहुव्रीहिरिष्यते' इति एकविभक्तित्वादिरूपसामानाधिकरण्य एव बहुव्रीहि-नियमनात् 'पञ्चभिर्भुक्तं यस्य' इत्यादौ वैयधिकरण्ये च तददर्शनात् कथमत्र वैयधिकरण्ये तदङ्गीकारः? इति वाच्यम् । असत्यपि सामानाधिकरण्ये 'कण्ठे कालः' इत्यादौ विग्रहवाक्यात् प्रतीयमानस्यार्थस्य समासेनाभिधानेन समासदर्शनात् सामानाधिकरण्यतदभावयोः समास-तदभावप्रयोजकत्वाभावात् गमकत्वागमकत्वयोरेव तत्प्रयोजकत्वात् प्रकृते च सत्यपि वैयधि-करण्ये गमकत्वात् युक्तः समासः । सम्मतश्चायमर्थो ग्रन्थकारस्य । अत एव सर्वभारतार्थस्य सङ्ग्रहो यस्यामिति व्यधिकरणो बहुव्रीहिः गमकत्वादिति प्रागुक्तमिति ध्येयम् ।

**भावरत्नकोशः (सु.टि.)– ।।** इदम् अर्थशब्दसम्बन्धेन योजनम् । अत्र हेतुमाह– **न हीति ।।** हिशब्दो हेतौ । **सन्निधानादपीति ।** 'आनन्तर्यमचोदना' इति पूर्वतन्त्राधिकरणे दर्शपूर्णमासयोः 'हस्तावनेनिक्ते । उलपराजिं स्तृणाति' इति श्रुतम् । ज्योतिष्टोमे च 'मुष्टीकरोति । वाचं यच्छति । दीक्षितमावेदयति' इति श्रुतम् । तत्र हस्तप्रक्षालनम् आस्तरण-मात्राङ्गं मुष्टीकरणवाग्यमौ च दीक्षितावेदनमात्राङ्गम् उत करिष्यमाणसर्वकर्माङ्गम् इति सन्दिह्य

श्लोकः १८

सन्निधानलक्षणक्रमप्रमाणेन हस्तावनेजनम् अनन्तरश्रुतोलपराज्यास्तरणमात्राङ्गम् । तथा मुष्टीकरणवाग्यमने च सन्निधानाद् दीक्षितावेदनमात्राङ्गमिति पूर्वपक्षं प्रापय्य लिङ्गप्रकरणाभ्यां प्रामाणिकसर्वकर्माङ्गत्वयोग्यताऽवगमाद् योग्यतारूपलिङ्गेन सन्निधिबाधेन करिष्यमाण-सर्वकर्माङ्गमेव हस्तप्रक्षालनादीति सिद्धान्तितम् । तथा चात्राप्यर्थशब्दस्य सन्निहितत्वेऽपि तस्येहान्वयायोगस्याप्रसक्तप्रतिषेधापत्तिरूपबाधकेन सिद्धौ अबाधितान्वयप्रतियोगिसमर्पकस्य दोषशब्दाध्याहारस्य अन्वयप्रमापकत्वरूपयोग्यताबलादत्र न्याय्यत्वम् । उक्तं च चन्द्रिकायाम्–

'सन्निकृष्टमयोग्यं चेद् योग्यं दूरेऽपि संस्थितम् ।
गृह्यते सन्निधानाद्धि योग्यतैव बलीयसी ॥' इति ।

ततो दोषशब्दोऽध्याहर्तव्य इति भावः । **प्रत्यवायाप्राप्तेरिति** ॥ नित्याकरणस्यैव प्रत्यवाय-हेतुत्वादिति भावः । **तथाऽपि** प्रतिषेधोऽसङ्गत एवेति सम्बन्धः ।

**तदर्थं** नित्यनैमित्तिककरणार्थम् । **तु स्यात्** 'उत्थानम्' इति वर्तते । **एतत्** 'नाकृतेनेह कश्चन' इति गीतावाक्यम् । सम्यग् ध्यायन्त्यस्यां वेलायाम् इति सन्ध्या । सम्पूर्वाद् ध्यै चिन्तायाम् इत्यतोऽधिकरणे 'आतश्चोपसर्गे' इत्यङ् इति कोशादौ सन्ध्याशब्दस्य काल-विशेषार्थत्वोक्तेः, कालस्य च करणाप्रसक्त्या 'सन्ध्याद्यकृतौ' इति कथम् ? इत्यतः सन्ध्या-शब्देन लक्षणया कर्म ग्राह्यमित्याह– **सन्ध्येति तत्काल इति** ॥ अनेन लक्षणाबीजं सम्बन्ध उक्तः । **उच्यते** प्रतिपाद्यत इत्यर्थः ।

गीतामवतारयन् 'न चैतदपहाय' इति भाष्यमवतारयति– **मा भूदिति** ॥ **अल्पस्य** अल्प-फलस्य । **प्रयोजनाभावः** आत्मरत्यधिकप्रयोजनाभावः । **प्रत्यवायश्च** मा भूत् । **तत्सन्निधीति** ॥ गुरुदेवतासन्निधीत्यर्थः । **उक्तविरोधात्** 'अर्थप्रत्यवायौ स्याताम्' इत्युक्तविरोधात् । 'एतद्' इति नपुंसकलिङ्गं निर्वोढुमाह– **असम्प्रज्ञातेति** ॥ 'अपहाय' इत्यस्य समानकर्तृकक्रियाऽन्तरम् अन्वयं समर्पयितुमध्याहरति– **उत्थितस्येति** ॥ आधिक्यनिषेधे किं निमित्तम् ? इत्यत आह– **आधिक्यस्यैवेति** ॥ 'गुरुदेवतापूजाकरणयोरर्थप्रत्यवायौ स्याताम्' इति कृतचोद्यस्य परिहाराय 'सर्वभूतेषु' इति भाष्यार्थमाह– **गुर्वादिष्विति** ॥ **इति स्यादिति** ॥ 'पुत्रात् प्रमोदो जायते' इत्यादाविवात्रापि पञ्चमी श्रूयेत, न सप्तमीत्यर्थः । **अनेन** भाष्येण **अर्थस्य** प्रयोजनस्य ।

पुंल्लिङ्गघटनाय आह– **व्यापारेणेति** ॥ तथा च भावप्रदीपिका– 'व्यापार इति शेषः' इति ॥ **व्यधिकरण इति** ॥ 'सप्तमीविशेषणे बहुव्रीहौ' इति ज्ञापकात् 'समानाधिकरणानां बहुव्रीहिः' इतीष्टिः नातीव आदर्तव्येति भावः । 'सर्वभूतेभ्यः' इति स्यात् ? इति चोद्यं परिहरति– **तथा च दर्शनादेरिति** ॥ **'सर्वभूतेषु'** इति विषयसप्तमीत्यर्थः । 'गुरुदेवतापूजाद्यकरणे प्रत्यवायः स्यात्' इति चोद्यं परिहर्तुम् उक्तमुपलक्षणं मन्तव्यमित्याह– **अनर्थेति** ॥

**भावदीपिका (श्री.टि.)– ॥ इदमयुक्तमिति** ॥ 'नाकृतेनेह कश्चन' इत्यकरणेनार्थ-निराकरणमयुक्तमित्यर्थः । तदुपपादयति– **न हीति** ॥ **प्रतिषेधः** 'नाकृतेनेह कश्चन' इति प्रत्यवायप्रतिषेधः ॥ **अप्राप्तेरिति** ॥ अप्रसक्तेरित्यर्थः । **प्रत्यवायेति** ॥ 'नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहीर्षया' इति वचनादिति भावः । ननु 'सन्ध्याद्यकृतौ' इति कथम्? सन्ध्याशब्दस्य कालवाचित्वादित्यत आह– **सन्ध्येतीति** ॥ **उच्यते** लक्षणया प्रतिपाद्यते । लक्षणबीजसम्बन्धो-पपादनाय– **'तत्कालेऽनुष्ठेयम्'** इत्युक्तम् ।

॥ **उक्तविरोधादेवेति** ॥ गुरुदेवतापूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामित्युक्तविरोधा-दित्यर्थः । यथाश्रुतगीतावाक्यस्य शङ्कापरिहाराक्षमत्वादिति भावः । ननु 'एतदपहाय प्रयोजनाश्रयो नास्ति' इत्यत्र कथं समानकर्तृकत्वम्? अपहानेऽसम्प्रज्ञातसमाधिस्थपुरुषस्य कर्तृत्वात् । 'नास्ति' इत्यत्र त्वर्थव्यपाश्रयस्य कर्तृत्वात् । तथा च कथम् 'अपहाय' इति समानकर्तृत्वार्थकः क्त्वाप्रत्ययः? ननु 'अपहाय' इति ल्यप्, न क्त्वेति चेत्- न । 'क्त्वो ल्यप्' इति ल्यपः क्त्वाऽऽदेशत्वात् । अत आह– **उत्थितस्येति शेष इति** ॥ अपहान-उत्थानक्रिययोः समानकर्तृकत्वाद् युक्तः क्त्वाऽऽदेशभूतो ल्यबिति भावः । तदुपपादयति– **आधिक्यस्यैवेति** ॥ एतदपहाय गुर्वादिवन्दनेन प्रयोजनं नास्तीति पूर्वप्राप्तसमाध्यपरित्याग उच्यते । तेन तस्यै-वाऽधिक्यं, न गुर्वादिवन्दनस्येति ज्ञायते । कुतः? पूर्वपरित्यागे आधिक्यस्यैवोपयोगित्वा-दित्यर्थः । **तथा चेति** ॥ प्रयोजनप्राप्तिः कस्माद्? इत्याकाङ्क्षापूरणसामर्थ्यं पञ्चम्यन्तपदस्यैव न सप्तम्यन्तपदस्येति भावः । 'दर्शनादिना' इत्यत्राऽदिपदेन वन्दनादिग्रहणम् ॥ **तथा चेति** ॥ अर्थव्यपाश्रयोऽर्थप्राप्तिसाधनीभूतं दर्शनादिकं नास्तीत्युक्ते केषु विषयेषु? इत्याकाङ्क्षायां 'सर्वभूतेषु' इति विषयसप्तम्यन्तपदम् उक्तम् । एवं च सर्वभूतविषये प्रयोजनसाधनीभूत-दर्शनादिकं नास्तीत्युक्तेऽर्थाद् गुर्वादिदर्शनवन्दनादेः प्रोजनहेतुत्वाभाव उक्तो भवतीति द्रष्टव्यम् ।

श्लोकः १८

पुंलिङ्गोपपत्त्यर्थं **'व्यापारेण'** इत्युक्तम् । नन्वकरणे प्रत्यवायविरोधस्योक्तत्वात् स न परिहृत इत्यत आह– **अनेनेति** ॥ 'न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः' इत्यपि द्रष्टव्यम् । तथा च तदा गुर्वादिवन्दनाद्यकृतावनर्थप्राप्तिर्नास्तीति भावः ॥

**भावप्रकाशः (कृ.टि.)– ॥ बलवत्त्वादिति ॥** योग्यतायाः प्रमाणमात्रप्रयोजनत्वात् । सन्निधेश्च भ्रमप्रमासाधारणज्ञानमात्रप्रयोजकत्वादिति भावः । कल्पतरौ तु 'स्थानाल्लिङ्गस्य बलवत्त्वात् सन्निधियोग्यतयोश्च स्थानलिङ्गात्मकत्वाद्बलाबलम्' इत्युक्तम् । स्थानलिङ्गात्मकत्वं चेत्थम् । सामर्थ्यं लिङ्गं, वाक्यार्थाबाधरूपयोग्यताऽपि अर्थं सामर्थ्यमेव । एवं समानदेशत्वं स्थानम् अविलम्बेनोच्चरितत्वरूपसन्निधिरपिशब्दतः । **समानदेशकत्वमेवेति** ॥ 'न च' इति भाष्यं सङ्गमयति– **मा भूद्यज्ञादीति** ॥ ननु 'सन्ध्याकृतौ' इत्ययुक्तम् । सन्ध्यायाः कालविशेषत्वेन करणाप्रसक्तेरित्यत आह– **सन्ध्येतीति ॥ उक्तविरोधादीति** ॥ 'अर्थप्रत्यवायौ स्याताम्' इत्युक्तेरित्यर्थः । यथाश्रुतगीतावाक्येन शङ्कानिरासाभावादिति भावः । समानकर्तृकतानिर्वाहार्थमाह– **उत्थितस्येति शेष इति ॥ सर्वभूतेभ्य इति स्यादिति** ॥ 'जनिकर्तुः प्रकृतिः' इति सूत्रेण जायमानं प्रति हेतुत्वादपादानत्वे पुत्रात् प्रमोदो जायत इतिवत् पञ्चमीप्राप्तेरिति भावः ।

## भाष्यम्

**ज्ञानमात्रेण यद्यपि प्रत्यवायो न भवति । तदर्जुनस्यापि सममिति न तस्य कर्मोपदेशोपयोग्येतद् भवति । ईषत्प्रारब्धानर्थसूचकं च तद् भवति । महच्चेद् वृत्रहत्यादिवत् ॥ १८ ॥**

भावप्रदीपिका (प.टी.)– ज्ञानिमात्रस्य विकर्मणा प्रत्यवायाभावात् कथञ्चित् तद्विषयं श्लोकद्वयं किं न स्यात्? इत्यत आह– **ज्ञानमात्रेणेति** ॥ प्रत्यवायाभावेऽपि तत्प्रतिनिधिरस्त्येवेत्याह– **ईषदिति** ॥ १८ ॥

भावप्रकाशिका (न.टी.)– नन्वपरोक्षज्ञानिमात्रस्य प्रत्यवायाभावात्, मुक्तेश्च सिद्धत्वात्, श्लोकद्वयमिदं कथञ्चित् तद्विषयमेव स्यात् । नासम्प्रज्ञातसमाधिविषयमित्यत आह– **ज्ञानेति ॥** यद्यपीत्यस्यार्थं प्रकटयति– **ईषदित्यादिना ॥ तदिति ॥** ज्ञानिकृतविकर्मापीत्यर्थः ॥ १८ ॥

**प्रमेयदीपिका (ज.टी.)– स्यादेतत् । किमनेनायासेन? ज्ञानिमात्रविषयमेतत् किं न स्यात्? ज्ञानमात्रेण प्रत्यवायाभावात् । तत्राप्यस्यार्थस्य सम्भवात् । अवधारणादेश्चोप-चरितार्थत्वसम्भवादित्यत आह– ज्ञानेति ।। तद् ज्ञानमात्रम् । इतिशब्दो हेतौ । एतत् कार्याभाववचनम् । प्रत्युत विरोधीति हृदयम् । 'प्रत्यवायो न भवति' इत्यङ्गीकृत्योक्तम्। वस्तुतस्तु ज्ञानिनोऽप्यस्ति प्रतिषिद्धकर्मकरणादिनाऽनिष्टप्राप्तिरित्याह– ईषदिति ।। सूचितं च तदैव चित्तखेदः । उपलक्षणं चैतत् । मुक्तावानन्दह्रास इत्यपि द्रष्टव्यम् । तथा विहितकरणे नानन्दवृद्धिरपीति ।। १८ ।।**

भावदीपः (रा.टि.)– **तत्राप्यस्यार्थस्येति** ।। ज्ञानिमात्रेऽपि 'कार्यं न विद्यते' इत्यादि-नोक्तार्थस्येत्यर्थः ।। आत्मरतिरेव इत्यवधारणात् 'असम्प्रज्ञातसमाधिस्थस्यैव' इत्युक्तस्य गतिमाह– **अवधारणादेश्चेति** ।। आदिपदेन 'आत्मतृप्तः, आत्मन्येव च सन्तुष्टः' (३.१७) इत्यस्य ग्रहणम् ।। १८ ।।

भावरत्नकोशः (सु.टि.)– ।। **स्यादेतत्** एतच्चोद्यं तु स्यादित्यर्थः । तद् दर्शयति– **किमनेनेति** ।। **एतत्** 'यस्त्वात्मरतिरेव' इत्यादिश्लोकद्वयम् । **ज्ञानमात्रेण** अपरोक्षज्ञानमात्रेण । **प्रत्यवायाभावादिति** ।। ज्ञानेन 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' (ब्र.सू. ४।१।१३) इति सूत्रे उत्तराघाश्लेषोक्तेरिति भावः । **अस्यार्थस्य** 'तस्य कार्यं न विद्यते' इत्युक्तार्थस्य, 'नाकृतेनेह कश्चन' इत्युक्तार्थस्य च । 'आत्मरतिरेव' इत्यवधारणाद् असम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यत इति भाष्यमप्यन्यथयति– **अवधारणादेरिति** ।। **अवधारणम्** आत्मरतिरेवेत्येवशब्दः । आदिपदेन आत्मतृप्तत्वम् आत्मन्येव सन्तुष्टत्वं च गृह्यते । 'स्थितप्रज्ञस्यापि कार्यो देहादिः' इति प्रमाणं वा ग्राह्यम् । **उपचरितार्थत्वेति** ।। आत्मरतिरिव ज्ञान्यपि न कर्म कुर्यादित्यव-धारणस्य । स्थितप्रज्ञवत् स्थितस्य ज्ञानिनोऽप्यस्ति कर्म, किमु वक्तव्यम् अज्ञानिनोऽस्तीत्येव-मुपचरितार्थत्वसम्भवादित्यर्थः । 'तद्' इति भाष्यपदमनूद्यार्थमाह– **तज्ज्ञानमात्रमिति** ।। **इति शब्द इति** ।। 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' (अमरे) इत्यभिधानादिति भावः । **'तस्य' इति** भाष्यस्य अर्जुनस्येत्यर्थः । **कार्याभाववचनं** 'तस्य कार्यं न विद्यते' (३.१७) इति कार्याभावप्रतिपादकं गीतावचनम् । **विरोधि** कर्मोपदेशविरोधि ।

।। **प्रतिषिद्धकरणादिनेति** ।। अत्र प्रतिषिद्धकर्माण्यष्टविधानि । क्षुद्रपापानि, पापानि, उपपातकानि, पातकानि, महापातकानि, सुमहापातकानि, स्वतिमहापातकानि, स्वतिमहत्तम-

पातकानीत्येकादशतात्पर्यरीत्या ज्ञातव्यानि । तत्र च क्षुद्रपापादिचतुष्टयेन ज्ञानिनामपि मानुषादीनामेवानिष्टप्राप्तिः ।

'ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा ।
भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः ॥'

'वृद्धिह्रासौ विमुक्तिगौ । नृणाम्' इत्याद्यणुभाष्याद्युक्तेः । न पुनर्देवानामपि । 'देवानामल्पेन विकर्मणा न किञ्चिद्धीयते' इति सुधोक्तेः । महापातकादिचतुष्टयेऽपि महापातकसुमहापातकयोरेवानिष्टापादकत्वम् । स्वतिमहापातकस्य स्वतिमहत्तमपातकस्य च 'तत्पराणां तु पापानां फलमन्धन्तमः स्मृतम् ।' इति तमस्साधनत्वावेदनान्मुक्तियोग्येष्वप्रसक्तेः । अर्जुनश्च ज्ञान्युत्तमः । तत्र महापातकं वृत्रहत्यादिरूपं भाष्ये तच्छब्देनोक्तं विकर्म ईषत्प्रारब्धानर्थसूचकम् इत्यनिष्टप्राप्तिरिति कैमुत्याद् ज्ञानिमात्रस्यापि ज्ञानोत्तरविकर्मणाऽनिष्टप्राप्तिरस्तीत्यर्थः । विहिताकरणम् आदिपदार्थः । वृत्रहत्यादिवन्महापातकं चेत् तद् विकर्म ईषत्प्रारब्धानर्थसूचकं च भवतीति भाष्यार्थः स्पष्ट इति नोक्तः । अत्र सूचकत्वं नाम प्रारब्धभाव्यमहाऽनर्थानुमापकत्वे सति नान्तरीयचित्तखेदादिकारकत्वम् अभिमतम् । 'विषादनं यथा' इति निर्णये, 'व्रणहेतुर्यथा रणः' इति तात्पर्ये च विषादनरणयोः दृष्टान्तत्वहेतुत्वयोरुक्तेरिति आहुः ॥

ननु वृत्रहत्यादिरूपमहापातकस्य ईषत्प्रारब्धानर्थसूचकत्वमस्तु । तथाऽपि कथमनिष्टप्राप्तिः ? न हि सूचनमेवानिष्टम्, अदुःखरूपत्वादित्यत आह– **सूचिते चेति** ॥ तात्कालिकचित्तखेदो वृत्रहत्यादिरूपविकर्मजन्य इत्यस्त्येवानिष्टप्राप्तिरित्यर्थः । वृत्रहत्यादिना चाशुचित्वासम्भाष्यत्वादिरैहिकः, नरकादिरामुष्मिकोऽनर्थश्च न भवतीति सूचयितुं 'चित्त' इत्युक्तम् । अन्यथा खेदस्य चित्ताविनाभावेन व्यभिचाराभावात् चित्तपदानर्थक्यं स्यादिति आहुः ।

ननु महतो विकर्मणस्तात्कालिकचित्तखेदहेतुत्वमुक्तमयुक्तम् ।

'ज्ञानादिव्यक्तिरव्यक्तिः सुखदुःखादिकं तथा ।
सुदृष्टब्रह्मतत्त्वानां भवत्यारब्धकर्मणा ॥' (ब्रह्मवैवर्ते)

इति प्रथमतात्पर्यवचने खेदशब्दिततदुःखस्य प्रारब्धकर्मफलत्वावेदनादिति चेन्न । ज्ञानोत्तरभाविदुःखानुभवः प्रारब्धपापफलमित्युत्सर्गः । अपवादसद्भावे साधनान्तरेणापि तदनुभवः

सम्भवतीत्यङ्गीकारे विरोधाभावात् । 'आरब्धकर्मणैव' इत्यवधारणाभावाच्च । प्रमाणे तथाशब्दस्य समुच्चयार्थस्य आरब्धकर्मणा, तथाऽन्येनापि साधनेन ज्ञानोत्तरभाविना वृत्रहत्यादि-रूपमहापातकेन दुःखादिकं भवतीत्यन्वयसम्भवाच्च । अन्यथा ज्ञानोत्तरकाले समनुष्ठितस्य काम्यस्य पुण्यस्य स्वातन्त्र्येण फलसाधनत्वाभ्युपगमो न युक्तः स्यात् । उक्तं च तात्पर्यनिर्णये कर्णस्य वालिमारणरूपमहापातकदोषेण सहस्रवर्मनामकासुरदूषितत्वम् ।

केचित्तु, 'सुखदुःखादिकं आरब्धफलम्' इति वचने प्रारब्धकर्मणः साक्षात् परम्परया दुःखादि-हेतुत्वमभिप्रेतम् । एवञ्च प्रारब्धकर्मणा वृत्रहत्यादिरूपमहापातकम्, तेन च तात्कालिकचित्तखेदः असुरदूषितत्वम् इत्यादिफलमिति प्रारब्धकर्मणः प्रयोजकत्वेनापि तृतीयोपपत्तिरिति न तद्विरोध इति आहुः ॥

नन्वेवमपि– धर्मवृद्ध्यर्थमेवैतत् पापमासीच्छचीपतेः ॥
न हि लोकावनं पापं त्रैलोक्येशस्य वज्रिणः ।
वृत्रं हत्वा महानासेत्यादिवेदपदं च यत् ॥
कचित् पापं च पुण्यानां वृद्धये भवति स्फुटम् ।
वृत्रहत्या यथेन्द्रस्य जाता पुण्यस्य वृद्धये ॥'

इति तात्पर्यनिर्णये महेन्द्रस्य वृत्रहत्या पुण्याभिवृद्धिद्वारा महाफलहेतुरित्यावेदनेन कथम् अनर्थहेतुत्वमुक्तम्? इति चेन्न । महातिशयापादिकाया अपि वृत्रहत्यायाः तात्कालिकचित्तखेद-रूपानिष्टापादकत्वेऽपि उक्तप्रमाणाविरोधाद् महासुखोत्पत्तिनान्तरीयकदुःखस्य भोजनादौ श्रमादेरिव, सन्ध्यार्घ्यप्रदानस्य महाफलहेतुत्वेऽपि पापत्वस्येव च वृत्रहत्यादेः किञ्चित्पापरूपत्वं युक्तम् । श्रूयते च जलाञ्जलिरूपार्घ्यप्रदानस्य 'तेन पाप्मानमवधून्वन्ति' इति पापत्वम् । अत एव निर्णये पापशब्दाभ्यासः । 'न हि लोकावनम्' इत्यत्र सयुक्तिकं पापत्वस्य वर्णनम्, प्रत्युत महत्त्वापादक-श्रुत्युदाहरणं चोपपद्यते । भागवते च–

'स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः ।
इष्ट्वापि यज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः ॥' (६.१३.२१)

इति वृत्रहत्याया ईषदनिष्टापादकत्वेन पापरूपत्वमुक्तम् । उक्तश्च तत्रैव–

श्लोकः १८

'ह्रीमन्तं हत्यया तप्तं निर्वृतिर्नामुमाविशत् ।'

इति चित्तखेदः । यद्यपि–

'श्रेष्ठापराधान्नान्यदोषस्य लेपस्तेजीयसां निर्णयोऽयं हि शास्त्रे ।'

इति निर्णये देवानां श्रेष्ठापराधादन्यदोषस्य लेपो नास्तीत्युक्तत्वेन इह वृत्रहत्यया नानिष्टप्राप्तिः शक्याऽङ्गीकर्तुम् । तथाऽपि तत्र लेपशब्दस्य मुक्तौ प्रसक्तानन्दाभावरूपह्रासार्थत्वाभावेऽपि ऐहिकतात्कालिकेषच्चित्तखेदरूपानिष्टार्थकत्वाभ्युपगमेऽपि न विरोधः ।

केचित्तु तमोयोग्यवृत्रहत्यायाः सर्वात्मनाऽनिष्टप्रसञ्जकत्वं नास्तीति 'न हि लोकावनं पापम्' 'वृत्रं हत्वा महानास' इत्यादितात्पर्यनिर्णयादिवाक्यप्रवृत्तिः । तत्रैव पापत्वोक्तिस्तु लोकदृष्ट्या पापवदवभासमानत्वेनैव । गीताभाष्यभागवतादिवाक्यप्रवृत्तिस्तु वैष्णववृत्रहत्याविषया । वृत्रद्वैविध्यं च 'पापात्माऽसौ वैष्णवस्त्वष्टृजातः' इति ऋग्भाष्यटीकादौ स्फुटमित्याहुः ॥

ननु भाष्ये ब्रह्महत्यादिरूपमहापातकस्यैव फलमुक्तम् । महच्छब्दप्रयोगात् । तथा च तदनुसारेण 'ज्ञानिनो महापातकेनानिष्टप्राप्तिरस्ति' इत्येवावतारयितव्ये कथं 'प्रतिषिद्धकरणादिना' इत्युक्तम् ? इत्यत आह– **उपलक्षणं चैतदिति** ॥ वृत्रहत्यादिरूपमहापातकम् 'ईषत्प्रारब्धानर्थसूचकम्' इति भाष्यम् उत्तमापराधरूपसुमहापातकादिना ततोऽप्यनर्थस्य मानान्तरेणावगतत्वाद् उपलक्षणमित्यर्थः । कोऽसावुक्ताद् 'अधिकोऽनर्थः' इत्यत आह– **मुक्तावानन्देति** ॥ ज्ञानिषु मानुषादीनां क्लृप्तस्याप्यानन्दस्य ह्रासः अनभिव्यक्तिः । देवानां तु सुमहापातकादिरूपविकर्मणा स्वोत्तमापराधाख्येन प्राप्तव्यस्यैवानन्दादिगुणस्य ह्रासः । 'स्वयोग्यपरिपूर्तये यावत् साधनमनुष्ठेयं ततोऽतिरिक्तेन साधनेनानुष्ठितेन यथाऽनन्दादिकं प्रसक्तं तस्याभावो भवति । यथा चन्द्रसुग्रीवयोः' इति सुधायां स्पष्टम् । तथा चोक्तं पञ्चमतात्पर्ये

'अशुभाभावजोन्नाहो महाधीकारिणामपि ।
अशुभे कृते न भवति ......॥' इति ।

'देवानां नाशुभाद् ह्रासः' (ब्रह्माण्डे)

इति पञ्चमतात्पर्यमपि ज्ञानोत्तरकाले कृतेनाशुभकर्मणा क्लृप्तस्य हानिर्नास्तीत्येवंपरमिति न

तद्विरोधः । तथा च सुधा 'यस्य देवस्य यावद्गुणत्वं क्लृप्तं तस्य तु कथञ्चन केनापि विकर्मणा हानिर्न भवति' इति ।

एवमस्य श्लोकस्य ज्ञानिमात्रविषयत्वे 'नाकृतेन' इत्यंशोऽनुपपन्न इत्युक्तवा 'नैव तस्य कृतेनार्थः' इत्यंशोऽप्ययुक्त इति भावेन भाष्य उपलक्षणीयान्तरमाह– **तथेति** ।।

'ऋष्युत्तमा देवताश्च विमुक्तौ परिनिष्ठिताः ।
तथाऽप्यधिकसौख्याय यतन्ते शुभकर्मसु ।।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वाऽभिवर्धते ।।' (ब्रह्माण्डे)

इति तात्पर्यादिवचनात्

'देवानां नाशुभाद् ह्रासः शुभात् काचित् सुखोन्नतिः ।।' (ब्रह्माण्डे)

इति वचनं स्वयोग्यपूर्त्यर्थसाधनातिरिक्तशुभस्य क्लृप्ताधिकसुखोन्नतिसाधनत्वाभावपरमिति न तद्विरोध इति भावः ।

'इति द्रष्टव्यम्' इत्यन्वयः । देवानामानन्दवृद्धिः समुद्रतरलोपमा । मानुषादीनां तु यावत्स्वरूपाभिव्यक्तिरिति विवेकोऽन्यतोऽवसेयः । केचित्तु 'ईषत्' इत्यादिभाष्यम् अर्जुनमधिकृत्य प्रवृत्तमपि टीकायां ज्ञानिमात्रविषयतया व्याख्यानात् तदनुसारेण 'मुक्तावानन्दह्रासः' इति 'आनन्दवृद्धिः' इति च टीकावाक्यं मानुषमात्रविषयम् । 'वृद्धिह्रासौ विमुक्तिगौ । नृणाम्', 'अल्पाधिकारिणां तत्र ह्रासोऽपि भवति ध्रुवम्' इति वचनादित्याहुः ।। १८ ।।

**गीताक्षरार्थस्तु–** ननु अतीव मनस्समाधानम् असम्प्रज्ञातसमाधिरूपमपि न कार्यम् । तत्र कर्मलोपावश्यम्भावाद् इत्याक्षेपस्य 'तस्य कार्यं न विद्यते' (३.१७) इत्युत्तरं कस्मादुक्तम् ?' कर्मकृतिकाले त्वयाऽहमुद्बोधनीयः' इति कश्चित् प्रत्युत्त्वा समाहितः, तेन योगशास्त्रोदितोपायैरुद्बोधितः कर्म करोतीत्येव कुतो नोक्तम् ? इत्याशङ्कानिरासार्थमुक्तम्– **नैवेति** ।। तस्य असम्प्रज्ञातसमाधिस्थस्य समाधिं विना इह कृतेन यज्ञादिकर्मणा आत्मरत्यधिकः अर्थः पुरुपार्थो नास्ति, यदुद्देशेन समाधिविरमः स्यात् । मा भूद् यज्ञादिकरणार्थमुत्थानम्, नित्यनैमित्तिकाकरणे प्रत्यवायप्राप्तेः, तदर्थे तु स्यादित्याशङ्का निरस्यते नाकृतेनेति । तस्य समाधिस्थस्य

श्लोकः १८

अकृतेन सन्ध्यावन्दनादिरूपतत्तत्कालानुष्ठेयकर्माभावेन कश्चन योग्यतया 'दोषः' इत्यध्याहारः, नास्ति । मा भूदल्पस्य यज्ञादेरनुष्ठाने प्रयोजनाभावः, सन्ध्याद्यकृतौ प्रत्यवायश्च । तथाऽपि गुरुदेवतादिपूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । ततस्तत्सन्निधौ तत्पूजार्थम् उत्थानमावश्यकमेवेत्यत उक्तम् न चास्येति । सर्वभूतेषु गुर्वादिषु । विषयसप्तमी इयम् । अर्थस्य व्यपाश्रयः प्राप्तिर्येन दर्शनसम्भाषणपूजनादिव्यापारेण स व्यापारः अर्थव्यपाश्रयः । गुर्वादिविषयकदर्शनादिव्यापारः समाध्यपेक्षयाऽधिकप्रयोजनहेतुर्नास्ति । अधिकलाभे पूर्वं त्यजन्ति प्रेक्षावन्तः । एवं गुरुदेवतापूजाद्यकरणमप्यसम्प्रज्ञातसमाधिस्थस्यैव नानर्थप्राप्तिहेतुरित्युपलक्षणीयमिति ॥ १८ ॥

**भावदीपिका (श्री.टि.)–** ॥ एतत् 'यस्त्वात्मरतिरेव' इत्यादिवाक्यम् । ननु 'तस्य कार्यं न विद्यते' इति कार्याभावोक्तेर्ज्ञानिनश्च कर्माकरणे प्रत्यवायसद्भावेन कार्याभावरूपतदुक्तार्थस्य ज्ञानिन्यसम्भवात् कथं तद्विषयमेतद्वाक्यं स्यात्? इत्यत आह– **ज्ञानमात्रेणेति** ॥ ननु 'आत्मरतिरेव' इत्यवधारणेनासम्प्रज्ञातसमाधिस्थस्यैव कार्याभावावगमेन, तदितरस्य ज्ञानिनस्तत्सद्भावावगमात् कथं तद्विषयमिदं वाक्यं स्यात्? इत्यत आह– **अवधारणादेश्चेति** ॥ अयोगव्यवच्छेदमङ्गीकृत्येति भावः । **विरोधीति** ॥ तथा च ज्ञानिनः कार्याभावस्य त्वयोक्तत्वेन ममापि ज्ञानित्वाद् युद्धादिकर्माहं न करिष्य इत्येवार्जुनो ब्रूयादित्याशयः । भाष्ये 'तद् भवति' इत्यत्र तच्छब्दस्य प्रतिषिद्धकरणमर्थः । तथा च तन्महच्चेद् ईषत्प्रारब्ध-फलभूतानर्थसूचकमित्यन्वयः ।

॥ **मुक्तावानन्दह्रास इत्यादि** ॥ तथा हि । अस्त्यत्र सिद्धान्ते रहस्यविशेषः । उत्तमाधिकारिव्यतिरिक्तानाम् आनन्दस्य ह्रासो नाम यावत्स्वरूपानभिव्यक्तिः । अपरोक्षज्ञानोत्तरकृतसत्कर्मणा यावत्स्वरूपसुखाभिव्यक्तिर्वृद्धिः । ननु कथं मोक्षे सुखानभिव्यक्तिः ? आवरणाभावादिति चेन्न । द्विविधं ह्यावरणम् । एकमीश्वरेच्छारूपम्, अपरं प्रकृत्यादि । तत्र द्वितीयं मुक्तौ नास्त्येव । समूलं घातितत्वात् । आद्यं त्वस्त्येव । तच्च ज्ञानोत्तरं स्वोत्तमद्रोहादिरूपं पापं निमित्तीकृत्य यावत्स्वरूपानन्दानुभवं प्रतिबध्नातीति युक्तः सुखानभिव्यक्तिरूपो ह्रासः । तथा पापवद् भगवत्पूजात्मककर्माकरणमपि ह्रासे निमित्तम् । यथोक्तम्–

'..........................कृष्णोपास्तिमकुर्वतः ।
ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम् ॥' (नारदीये) इति ।

तथाऽविद्यायां निवृत्तायामपि स्वस्वरूपभूतमप्यानन्दादिकम् ईश्वरेच्छाशक्त्याऽऽवृतं सत् कर्माभावे नानुभवितुं शक्यम् । कृते च कर्मणि तेन तुष्टो भगवान् इच्छाशक्तिमपसारयति । ततः पूर्वमनुभूयमानानन्दापेक्षयाऽप्यधिकानन्दानुभवलाभाद् आनन्दवृद्धिरित्युच्यते । एतदेवाभिप्रेत्योक्तम् अणुभाष्ये–

'गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ।
नृणाम्......................................॥' इति । (३-७)

ननु 'ईषत्' इत्यादिग्रन्थे सर्वज्ञानिसाधाण्यात् 'सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्' इत्यणुभाष्योक्तेर्देवानाम् आनन्दवृद्धिह्रासयोरुक्तविधयोरभावात् कथमेतत्? इति चेत्, उच्यते । तेषामप्यपरोक्षज्ञानेन प्रकृत्याद्यावरणनिवृत्त्यनन्तरम् ईश्वरेच्छारूपावरणस्याप्यपसरणं भवति । ततो यावत्स्वरूपसुखं तावतः सर्वस्याप्यभिव्यक्तिः जातैव । क्लृप्तस्य च तस्यासत्प्रवृत्त्या हानिः कदाऽपि नास्ति । तथाऽप्यसत्प्रवृत्त्या विशेषोऽस्ति । स कीदृशः? इति चेत्, उच्यते । येन देवेन स्वयोग्यसुखपरिपूर्त्यै यावत्साधनमनुष्ठेयं ततोऽतिरेकेणानुष्ठितेन साधनेन तस्य यदानन्दादिकं प्रसक्तं तद्धानिरेवासत्प्रवृत्तिजन्यो विशेषः । अयमेव चात्र ह्रासशब्दार्थः, नान्यः पूर्वोक्तः । यथोक्तमनुव्याख्याने–

चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् ।
प्राप्तहानिरभून्नैव क्लृप्तहानिः कथञ्चन ॥' इति ।

॥ प्राप्तहानिः प्रसक्तहानिः । इदं च हिरण्यगर्भेतरदेवविषयम् । तस्यासत्प्रवृत्तेरेवाभावात् । यथोक्तम् - 'ब्रह्मणस्त्वविकर्मतः' इति ।

'न भारती मेऽङ्ग मृषोपलक्ष्यते न कर्हिचिन्मे मनसो मृषा गतिः ।
न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥'

इति भागवते नारदं प्रति ब्रह्मवचनाच्चेति ध्येयम् ।

श्लोकः १८

यद्वा सम्यगभिव्यक्ते क्लृप्ते देवतासुखे निरुक्तवृद्धिह्रासयोरभावेऽपि विद्यमानस्यैव सुखस्य भोगादिविशेषादिना निमित्तेन विशेषबलात् चन्द्रोदयेन समुद्रतरलाभिवृद्धिवद् वृद्धिर्भवति । तथा ज्ञानोत्तरकृतविकर्मणा स्वरूपदुर्लक्षणादिना च निमित्तेन विद्यमानस्यैव सुखस्य विशेषबलात् चन्द्रोदयाभावे समुद्रतरलह्रासवत् ह्रासश्च भवति । इममेव वैवक्षिकं ह्रासमभिप्रेत्यैवोक्तं श्रीमन्महाभारततात्पर्यनिर्णये–

'उदरस्य किञ्चिदाधिक्यं वृषणाधिक्यमेव च ।
सव्यबाहोस्तथाऽऽधिक्यं दुर्लक्षणमथार्जुने ॥
नैवोक्तं वासुदेवेन दृश्यमानमपि स्फुटम् ।
ज्ञानानन्दह्रासकरा ह्येते दोषाः सनातनाः ॥' इति ।

उक्तं च भाष्ये–

'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कादाचित्कविशेषस्तु तेन तेषां निषिध्यते ॥' इति ।

'भोगानां तु विशेषे तु वैचित्र्यं लभ्यते क्वचित् ।' इति । (ब्र.सू.भा. ४-४-२२)

उक्तं चानुव्याख्याने–

'मुक्तानां तु तदन्येषां समुद्रतरलोपमा ।' इति । (अनु.४-२ पा-२०(१७७३) श्लो)

एतदवतार्य व्याख्यातं सुधायाम्– 'ब्रह्मणः' इति विशिष्याभिधाने को हेतुः? इत्यत आह– मुक्तानां त्विति ॥ विशेषबलेन वृद्धिह्रासवतीत्यर्थः । यथोक्तम्– 'अवृद्धिह्रासरूपत्वमित्यादि' इति । अयमपि प्रकारो ब्रह्मव्यतिरिक्तदेवानमेव, न ब्रह्मणः । यथोक्तमनुव्याख्याने 'ब्रह्मणस्तु प्राय एवं श्रियो यथा ।' इति । तदेतत्सर्वमभिप्रेत्योक्तं टीकाकारैः – 'मुक्तावानन्दह्रास इत्यपि द्रष्टव्यम् । तथा विहितकरणेनाऽनन्दवृद्धिरपि' इति ॥ १८ ॥

**भावप्रकाशः (कृ.टि.)– ॥ एतत् किं न स्यादिति ॥** यस्त्वात्मरतिरित्यादिवाक्य-मित्यर्थः । **तत्रापि ॥** ज्ञानिन्यपि । **अस्य** नाकृतेनेत्याद्युक्तस्य । **अवधारणादेश्चेति ॥** 'आत्मरतिरेव' इत्यवधारणादेरित्यर्थः । आदिपदात् 'स्थितप्रज्ञस्यापि' इति प्रमाणग्रहणम् ।

**प्रतिषिद्धकरणादिनेति ॥** प्रतिषिद्धमष्टाविधम् । क्षुद्रपापं पापम् उपपातकं पातकं महापातकं सुमहापातकम् अतिसुमहापातकम् अतिसुमहामहापातकञ्चेति । तत्र महापातकादिकमेवात्र प्रतिषिद्धशब्देन विवक्षितम् । क्षुद्रपापादिचतुष्टयस्य 'प्रमादात्तु कृतं पापं स्वयं भस्मीभविष्यति' इत्यलेपोक्तेः । आदिपदेन विहिताकरणसङ्ग्रहः । भाष्ये । **प्रारब्धानर्थसूचकमिति ॥** प्रारब्धानर्थसूचकत्वं नाम प्रारब्धपापोद्बलकत्वम् । ब्रह्मापरोक्षेऽपि कर्म सूचकं प्रारब्धपापस्य विषाशनं यथेत्यत्र प्रारब्धकर्म न त्वेषां क्लृप्तदुःखस्य सूचकम् । 'इदानीन्तनकर्म स्यात् व्रण-हेतुर्यथा रणः' इति । तत्र च विषाशनरणदृष्टान्तोक्त्ययोगात् । विषाशनादेः पूर्वपापो-द्बलकत्वेऽपि तज्ज्ञापकत्वाभावादिति बोध्यम् ।

नन्वस्तु सूचकत्वम् । तथाऽपि कथमनिष्टप्राप्तिः?। न हि सूचकत्वमेवानिष्टमित्यत आह– **सूचिते चेति ॥** ननु खेदस्य प्रारब्धजन्यत्वात् कथं वृत्रहत्यादिफलत्वम्?इत्यत उक्तम् – **तदैवेति ॥** यदा कदाचित् भावी खेदो वृत्रहत्यादिना स्वोत्पत्त्यनन्तरमेवोत्पादित इति प्रारब्धजखेदस्यापि वृत्रहत्यादिफलत्वमुक्तमिति भावः । अत्र च विषाशनादिदृष्टान्तो लिङ्गम् । पूर्वपापजन्यदुःखस्य विषाशनाद्यनन्तरमेवोत्पत्तेः । सूचकपदप्रयोगश्च मानम् । सूचकवत् सूचकम् । यथा चौर्यादिदोषे सूचकेन राजादीन् प्रति सूचिते तदैव ताडनादिदुःखं भवति । तद्वत् वृत्रहत्याद्यपि सूचकमिति ज्ञापनादिति बोध्यम् । वृत्रहत्यादिना अपाङ्क्तेयत्वाद्यैहिको नरका-द्यामुष्मिकश्चानर्थो न भवतीति सूचयितुं चिन्तेत्युक्तम् । अन्यथा खेदस्य चिन्ताऽव्यभिचारात् तद्वैय्यर्थ्यं स्यात् । यद्वा नरकादिखेदव्यावृत्त्यै 'तदैव' इत्युक्तम् अपाङ्क्तेयत्वादिजन्यखेद-व्यावृत्त्यै 'चिन्ता' इत्युक्तमिति मन्तव्यम् ।

ननु भाष्ये ब्रह्महत्यादिमहापातकस्यैव फलमुक्तम् । महच्छब्दप्रयोगात् षष्ठे

'आदिराजैस्तथादेवैर्ऋषिभिः क्रियते कियत् ।
बाहुल्यात् कर्मणस्तेषां दुःखसूचकमेव तत्'

इत्यत्र 'महत्' इति शेषपूरणेन महापातकस्यैव दुःखसूचकत्वनिर्णयाच्च न तु सुमहा-पातकादिप्रतिषिद्धस्य विहिताकरणस्य च । तत् कथं प्रतिषिद्धकरणादिनाऽनिष्टप्राप्तिरित्युक्तम्? इत्यत आह– **उपलक्षणमिति ॥**

'आनन्दो मुक्तिगो ह्रासं विकर्मकरणाद् व्रजेत्' इति ।

'कृष्णोपास्तिमकुर्वतः । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम्'

इति च प्रमाणाभ्यां प्रतिषिद्धस्य विहिताकरणस्य चानन्दह्रासहेतुत्वावगमादिति भावः । द्वितीयप्रमाणे 'विहितकर्मणा' इत्यध्याहारादिष्टसिद्धिरिति बोध्यम् ।

यद्यप्यानन्दह्रासोऽपि देवेषु न ज्ञानोत्तरप्रतिषिद्धमात्रफलम् इन्द्रकृतवृत्रहत्याया भारत-तात्पर्यनिर्णये द्वाविंशाध्याये पुण्यवृद्धिहेतुत्वोक्तेः । किन्तु ब्रह्महत्यादिना चित्तखेदस्वोत्तमा-पराधत्वेन क्रोडीकृतसुमहापातकादिना तु आनन्दह्रासः । 'श्रेष्ठापराधान्नान्यदोषस्य लेपस्ते-जीयसाम्' इत्युक्तेः । तथाऽप्यैहिकामुष्मिकसाधारणमात्रमनिष्टमात्रं भवतीत्यत्राभिप्रेतम् । अत एव प्राक् 'अनिष्टप्राप्तिः' इत्येवोक्तम् । मानुषादिषु तु आनन्दह्रासो ज्ञानोत्तरप्रतिषिद्धमात्रफलं भवत्येव ।

'ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा ।
भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः'

इत्युक्तेः । अतस्तद्विवक्षयाऽनन्दह्रासस्य साधारणत्वं बोध्यमिति दिक् ।

अत्र मनुष्योत्तमेषु ह्रासो नाम यावत्स्वरूपानभिव्यक्तिः । 'वृद्धिह्रासौ विमुक्तिगौ नृणाम्' इत्युक्तेः । देवेषु तु स्वयोग्यपूर्तये यावत्साधनमनुष्ठेयं तदधिकसाधनानुष्ठानेन मुक्तौ यदधिकं सुखं प्रसक्तं तद्ह्रास एव ह्रासशब्दार्थः ।

'अशुभाभावजोन्नाहो महाधीकारिणामपि । अशुभे कृते न भवति'

इत्युक्तेरिति विवेकः । न च सुखस्यैवानुत्पादात् कथं ह्रासः? इति वाच्यम् । तज्जनकपुण्यह्रासस्यैव तद्ह्रासत्वेन विवक्षितत्वात् ।

अन्ये तु देवानां मुक्तौ सम्यगभिव्यक्तं यत्सुखं तस्यैव भोगविशेषभावे विशेषबलात् ह्रासो भवति । चन्द्रापचये समुद्रतरलापचयवत् । स एव देवानामानन्दह्रासो नाम ।

'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कादाचित्कविशेषस्तु नैव तेषां निषिध्यते' इति ।

'भोगानां तु विशेषे तु वैचित्र्यं लभ्यते क्वचित्'

इति चोक्तेरित्याहुः ।

एवमस्य श्लोकस्य ज्ञानिमात्रविषयत्वे 'नाकृतेनेह कश्चन' इत्यंशोऽनुपपन्न इत्युक्त्वा 'नैव तस्य कृतेनार्थः' इत्यंशोऽप्ययुक्त इति भावेनाह– **तथा विहितेति ॥ आनन्दवृद्धिरपीति** ॥ देवानामानन्दवृद्धिः समुद्रतरलोपमा, मानुषादीनां यावत्स्वरूपाभिव्यक्तिरिति विवेक्तव्यम् ॥ १८,१९ ॥

**तस्मादसक्तस्सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

## भाष्यम्

**यतोऽसम्प्रज्ञातसमाधेरेव कार्याभावः, तस्मात् कर्म समाचर ॥ १९ ॥**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकं परामृष्टहेतुप्रदर्शनपूर्वकं व्याचष्टे– **यत इति** ॥

भावप्रकाशिका (न.टी.)– असम्प्रज्ञातसमधिविषयत्वे तु श्लोकद्वयस्यार्जुनं प्रति कर्मोपदेशोपयोगित्वं दर्शयन्नेवोत्तरं श्लोकं व्याचष्टे– **यत इति** ॥ १९ ॥

प्रमेयदीपिका (ज.टी.)– **'तस्मादसक्तः'** इति परामर्शविषयो न प्रतीयते । अतः तं दर्शयन् व्याख्याति– **यत इति** ॥ 'त्वं चेदानीमसम्प्रज्ञातसमाधिर्न भवसि' इति शेषः । **कर्मणोऽवश्यकर्तव्यत्वेऽसम्प्रज्ञातसमाधिविलोपप्रसङ्गान्नेदमवश्यं कर्तव्यमित्यतः अहमपि न कुर्याम् इति परिचोदनायाम् असम्प्रज्ञातसमाधिस्थविलोपप्रतिबन्दीं मोचयितुं तस्य वैलक्षण्य-मुक्त्वा तत्फलमिदमुच्यत इति नासङ्गतिः** ॥ १९ ॥

भावदीपः (रा.टि.)– ननु 'कर्मकृतावकृतौ वाऽर्थानर्थौ न स्तः' इत्युक्त्वा पुनरत्र 'कर्म समाचर' इत्युक्तिर्न सङ्गतेति शङ्कां निराह– **कर्मणोऽवश्यकर्तव्यत्व** इत्यादिना ॥ **परिचोद-नायामिति** ॥ अर्जुनेन कृतायामिति योज्यम् ॥ **उक्त्वेति** ॥ 'यस्तु' इत्यादिश्लोकद्वयेनेति योज्यम् ॥ १९ ॥

श्लोकः १९

**भावरत्नकोशः (सु.टि.)– ॥ इति परामर्शेति** । इति गीतायां तच्छब्दपरामर्शविषय इत्यर्थः । पूर्वश्लोकद्वये **'तस्य कार्यं न विद्यते'** (३.१७), **'नैव तस्य कृतेनार्थः'** (३.१८) इति कर्मणोऽकर्तव्यत्वमभिधाय, इह तत्कर्तव्यत्ववचनम् असङ्गतमित्याशङ्क्य भाष्ये शेषमाह– **त्वं चेदानीमिति ॥** एवंसति असङ्गतिपरिहारप्रकारं मूलावतारप्रदर्शनव्याजेनाह -**कर्मण इति ॥ परिचोदनायाम्** अर्जुनेन कृतायाम् । **वैलक्षण्यम्** असम्प्रज्ञातसमाधिस्थत्वाभावरूपम् । **तत्फलं** वैलक्षण्योक्तिफलम् । **इदं** 'कर्म समाचर' इतिकर्तव्याचरणम् ॥

**गीताक्षरार्थस्तु–**यतोऽसम्प्रज्ञातसमाधेरेव कर्तव्याभावः, त्वं चेदानीमसम्प्रज्ञातसमाधिस्थो न भवसि, तस्मादसक्तः फलस्नेहरहितः । जिज्ञासोर्ज्ञानिनश्च कर्मणा प्रयोजनाभावात् कार्याभावः स्यादित्यत उक्तम्– **असक्त इति ॥** जिज्ञासुः असक्तः पुरुषः कर्माऽचरन्नेव ज्ञानद्वारा परं ब्रह्म आप्नोति । ज्ञानी तु कर्माऽचरन् परं परिपूर्णम् आनन्दम् आनन्दवृद्धिं प्राप्नोति । अतोऽ-सम्प्रज्ञातसमाधिस्थविलक्षणेन कर्म फलभावात् कार्यमिति गीताक्षरार्थः ॥ १९ ॥

**भावदीपिका (श्री.टि.)–** नन्वधुनाऽपि कर्मणः कर्तव्यत्वे वक्तव्यस्यावशिष्टत्वाद्, एतदन्तरमेव 'तस्मात्' इत्युपसंहारोऽसङ्गत आह– **कर्मण इति ॥ विलोपप्रसङ्गादिति ॥** तत्र कर्मलोपावश्यम्भावादिति भावः । **इदं** कर्म । इत्यतः असम्प्रज्ञातसमाधिस्थदृष्टान्तात् । **न कुर्यां** युद्धादिकर्म । **प्रतिबन्दीम्** असम्प्रज्ञातसमाध्यवस्थाऽऽपन्नवत् अहमपि कर्म न कुर्यामिति प्रतिबन्दीम् । **तस्य** असम्प्रज्ञातसमाधिमतः । **वैलक्षण्यमुक्त्वा** 'यस्त्वात्मरतिरेव स्यात्' (३-१७) इत्यादिना कार्याभावरूपं वैलक्षण्यमुक्त्वा । **तत्** फलम् । **इदम्** इत्यव्ययम् । **अनेन** 'तस्मादसक्तः' इति श्लोकेनोच्यत इत्यर्थः । तथा चावान्तरोपसंहारोऽयमिति नासङ्गतिरिति भावः ॥ १९ ॥

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि ॥ २० ॥**

## भाष्यम्

**आचारोऽप्यस्तीत्याह– कर्मणैवेति ॥ कर्मणा सहैव कर्म कुर्वन्त एवेत्यर्थः । कर्म कृत्वैव, ततः ज्ञानं प्राप्य इति वा ॥**

भावप्रदीपिका (प.टी.)– हेत्वन्तरेण कर्मविधायकप्रघट्टकमवतारयति– **आचारोऽपीति** ॥ ननु ज्ञानान्मोक्षं वदता भगवता कथं कर्मणो मोक्षसाधनत्वमुच्यते ? इत्यत आह– **कर्मणेति** ॥ तृतीयायाः सहार्थत्वेऽवधारणान्वयः क ? इत्यत आह– **कर्मेति** ॥ करणार्थेऽपि तृतीया युक्तेत्याह– **कर्मेति** ॥

भावप्रकाशिका (न.टी.)– इतोऽप्यसम्प्रज्ञातसमाधेरेव कार्याभावो न तु ज्ञानिमात्राणाम् । तेषामपि कर्माचरणदर्शनादिति भावेनोत्तरं प्रघट्टकमवतारयति– **आचार इति** ॥ यतो हि ज्ञाननिष्ठा अपि जनकादयः कर्म कुर्वन्ति लोकसङ्ग्रहाय, लोकसङ्ग्रहेण च भगवत्तुष्ट्या मुक्तावानन्दवृद्धिः । अतः सिद्धत्वान्मुक्तेः ज्ञाननिष्ठस्य मम न कर्मफलमिति न मन्तव्यम् । सर्वथा स्वप्रयोजनाभावस्तु भगवत एव सदा स्वत एवाप्तकामस्य । तथाऽप्यसौ जगद्रक्षादिकर्मणि प्रवर्तते । अतस्तदिच्छानुसारिणाऽऽधिकारिकेण कर्म विशेषतः कर्तव्यम्, युद्धादिकमपीति भावः ।

ननु न कर्मैव मुक्तिसाधनं प्रतीयते । तत्कथं ज्ञानिनां कर्माप्यनुष्ठेयमिति वर्ण्यते ? इत्याशङ्क्य सहार्थेयं तृतीया न करणार्थेति तावदाह– **कर्मणा सहैवेति** ॥ तर्ह्यवधारणान्वयः क ? इत्यत आह– **कर्म कुर्वन्त एवेति** ॥ ज्ञाननिष्ठा अपि कर्मणा सहैव मुक्तिं गता इति कर्म कुर्वन्त एव, न तु परित्यज्येत्यर्थः । ज्ञानकरणत्वात् कर्मणः, करणे वेयं तृतीया, न साक्षात् मोक्षकरणत्वेनेत्याह– **कर्म कृत्वेति** ॥

प्रमेयदीपिका (ज.टी.)– 'कर्मण एव मुक्तिसाधनत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासाय 'कर्मणैव हि' इत्यस्य तात्पर्यं तावदाह– **आचारोऽपीति** ॥ 'विहितस्य कर्मणः कर्तव्यतायां प्रमाणम्' इति शेषः । अपिः पूर्वोक्तहेतुसमुच्चये । कर्मण एव 'मोक्षकारणत्वं तृतीययोच्यते' इति प्रतीतिनिरासाय व्याचष्टे– **कर्मणेति** ॥

नन्वेवं सहयोगे तृतीयायां व्याख्यायमानायां जनकादयः कर्मणा सहैव मुक्तिमास्थिता इति वाक्यार्थः स्यात् । न चायं युक्तः । 'पुत्रेण सहैवागतः पिता' इत्यत्र यथा पुत्रस्याप्यागमनान्वयः प्रतीयते तथा कर्मणोऽपि मुक्तिमास्थितत्वप्रसङ्गादित्यत आह– **कर्मेति** ॥

श्लोकः २०

**यद्यपि श्रूयमाणक्रियायां सहयोगो नोपपद्यते । तथाप्यध्याहृतावान्तरक्रियायामुपपद्यत एव। ततश्च यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र दशभिः पुत्रैः सहैव वर्तमानाप्येकैव भारं वहतीत्यर्थः, तथाऽत्रापि कर्मणा सहैव वर्तमानाः कर्म कुर्वन्त एव इत्यर्थ उपपद्यत इति भावः । द्विधा अपि सहयोगमभिप्रेत्य समासविधौ पाणिनिरपि विशेषणमभाणीत् 'तेन सहेति तुल्ययोगे'** (पा.सू.२.२.२८) **इति ॥**

**भावबोधः (र.टि.)–** ननु 'सहयुक्तेऽप्रधाने' इत्यत्राप्रधानं द्विविधम् । विशेषणमुपलक्षणं चेति । तत्र विशेषणस्य क्रियायां सहयोगनियमेऽपि नोपलक्षणस्य तन्नियमः । तथा च पुत्रोपलक्षिता गर्दभी भारं वहतीतिवत् कर्मोपलक्षिता मुक्तिमास्थिता इति व्याख्यातुं शक्यत्वात् किमिति 'कर्म कुर्वन्त एव' इत्यध्याहृतावान्तरक्रियायां सहयोगोपपादनम्? इत्यत आह– **द्विधाऽपीति** ॥ उपलक्षणत्वेन क्रियायां सहयोगाभावे सपुत्र आगत इतिवत् सपुत्रा गर्दभी वहतीति समासो न स्यादिति भावः। **विशेषणमिति** । प्रधानक्रियाया अवान्तरक्रियाया वा तुल्ययोग इति विशेषणमित्यर्थः ॥

**भावदीपः (रा.टि.)– पूर्वोक्तहेत्विति** ॥ 'तस्मात्' इति श्लोकोक्तहेत्वित्यर्थः ॥ **श्रूयमाणक्रियायामिति** ॥ संसिद्धिशब्दितमुक्तिप्राप्तिरूपक्रियायामित्यर्थः ॥ **अध्याहृतेति** ॥ वर्तमानत्वरूपावान्तरक्रियायामित्यर्थः । 'सहयुक्तेऽप्रधाने' (पा.सू.२.३.१९) इत्यत्र सहयोगः प्रधानक्रियायामवान्तरक्रियायां च द्वेधा विवक्षित इत्यत्र ज्ञापकमाह– **द्विधा अपीत्यादिना** ॥ कुत्र विशेषणमवादीत्? इत्यत आह– **तेन सहेति तुल्ययोग इतीति** ॥ द्वितीयाध्याय-द्वितीयपादे 'तेन सह' इति बहुव्रीहिसमासविधायकं सूत्रम् । तुल्ययोगः समानसम्बन्धः सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेनेति तृतीयान्तेन समस्यते । 'सपुत्र आगतः' इति । तुल्ययोग इति किम्? 'सहैव दशभिः पुत्रैः' इत्यादौ 'सपुत्रा गर्दभी' इति न भवति । भारवहनक्रियायां सहभावाभावात् । वर्तमानक्रियायामेव सहभावात्' इति वृत्त्यादावुक्तेः । अतः 'तुल्ययोग' इति विशेषणं वदन् पाणिनिः 'अतुल्ययोगेऽप्यस्ति सहयोगः' इत्यभिप्रैतीति भावः ॥

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु 'सहयुक्तेऽप्रधाने' इत्यत्राप्रधानं द्विविधम् । विशेषण-मुपलक्षणञ्चेति ।। तत्र विशेषणस्य क्रियायां सहयोगे नियमेऽपि नोपलक्षणस्य तन्नियमः । तथा च पुत्रोपलक्षिता गर्दभी भारं वहतीतिवत् कर्मोपलक्षिता मुक्तिमास्थिता इति व्याख्यातुं

शक्यत्वात् किमिति 'कर्म कुर्वन्त एव' इत्यध्याहृतावान्तरक्रियायां सहयोगोपपादनम्? इत्यत आह– **द्विधा अपीति ॥ विशेषणमिति ॥** प्रधानक्रियया अवान्तरक्रियया वा तुल्ययोग इति विशेषणमित्यर्थः । उपलक्षणत्वेन क्रियायां सहयोगाभावे सपुत्र आगत इतिवत् सपुत्रा गर्दभी वहति इति समासो न स्यादिति भावः । **विशेषणमिति ॥** अन्यथा द्विधासहयोगाभावे व्यावृत्त्यभावात् 'सह' इत्यस्य 'तुल्ययोग' इति विशेषणं नोपादीयेतेति भावः । 'सह' इत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं 'तेन' इति तृतीयान्तेन समस्यते बहुव्रीहिश्च समासो भवतीति सूत्रार्थः ।

**भावरत्नकोशः (सु.टि.)– ॥ अपिरिति ॥** 'आचारोऽपि' इति भाष्यगतापिशब्दः विहितस्य कर्मणः कर्तव्यत्वे स्तुत्याद्यात्मकार्थवादः, 'जगच्चक्रप्रवर्तकत्वरूपहेत्वन्तरं च' इति 'सहयज्ञाः' (३.१०) इति 'अन्नाद् भवन्ति भूतानि' (३.१४) इत्यादिना चोक्तं यद्धेतुद्वयं तत्समुच्चये वर्तत इत्यर्थः । 'अपि शब्दः' इति वाच्येऽपि 'अपिः' इत्युक्तिः 'अपिः पदार्थसम्भावनअन्ववसर्गगर्हासमुच्चयेषु' इति पाणिनिवचनम् 'अपिशब्दः समुच्चये वर्तते' इत्यत्र प्रमाणमिति दर्शयितुम् । तेन च 'अपिशब्दस्याव्ययत्वात् 'अव्ययादाप्सुपः' इति सुपो लुकि 'अपि' इत्येव निर्देष्टव्यम्' इति चोद्यं परिहृतम् । शब्दपरस्वरूपत्वेऽव्ययत्वाभावात् । अत एव 'अपिः पदार्थ' इत्यादि पाणिन्युक्तिरिति । **तृतीययोच्यत इति ॥** 'कर्तृकरणयोस्तृतीया' इति स्मरणादिति भावः । **सहयोग इति ॥** सहशब्दयोग इत्यर्थः । 'सहयुक्तेऽप्रधाने' सहार्थेन युक्तेऽप्रधाने तृतीयाविभक्तिर्भवतीति पाणिनीयवचनं मनसि निधायैवमुक्तम् । यद्यप्यत्र सहशब्दो न गीतायामस्ति । तथाऽपि 'विनाऽपि सहशब्देन तृतीया भवति 'वृद्धो यूना' इति निपातनात्' इति वृत्तिवचनाद् भवत्येवात्र तृतीयेति भावः । संसिद्धिपदार्थोक्तिः– **मुक्तिमिति ॥**

**॥ आगमनान्वय इति ।** पितुरागमनक्रियाऽन्वयः शाब्दः । पुत्रस्य तु सहार्थान्यथाऽनुपपत्त्येति हरदत्तवचनाद् आगमनक्रियाऽन्वयोऽप्रधानत्वाद् आर्थ इति भावः । 'नन्वेवम्' इति कृतचोद्यमनूद्य परिहरति– **यद्यपीत्यादिना ॥** श्रूयमाणक्रियायाम् 'आस्थिताः' इति शब्दोपस्थापितास्थानक्रियायाम् । **अध्याहृतावान्तरक्रियायामिति ॥** 'वर्तमाना' इत्यध्याहृतावान्तरक्रियायाम्, उपपद्यते कर्मणा सहयोगः । अवान्तरक्रियामध्याहृत्य दर्शयति– **सहैव वर्तमाना इति ॥** अत्र भाष्यं तात्पर्यरूपमिति भावेन तद् घटयति– **कर्म कुर्वन्त एवेतीति ॥**

श्लोकः २०

'सहयुक्तेऽप्रधाने' इत्यत्र सहयोगः श्रूयमाणक्रियायाम् अवान्तरक्रियायां चान्वेतीत्येतत् पाणिनिसम्मत्याऽप्याह– **द्विधाऽपि सहयोगमिति** ॥ 'द्विविधं हि' इत्यपि कचित् पाठः । **अभाणीत्** अवादीत् ।

**केचित्तु,** प्रथमप्रतीतार्थत्यागपूर्वकं गृहीतत्वम् अध्याहृतत्वमत्र विवक्षितम् । सहशब्द-बोध्याया अध्याहारायोगात् । अश्रुतपदकल्पनं ह्यध्याहारः । वर्तमानक्रिया चात्र तादृशीति तस्यामुपपद्यत एवान्वय इत्यर्थः । प्रकृतं दर्शयति– **ततश्चेति** ॥ सहैव वर्तमानाऽपीति । वर्तमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थो वक्तव्यः । 'विद्यमानैरेव पुत्रैर्भारं वहतीत्यर्थः' इति वृत्तिकारवचनात् । 'कर्मणा सहैव' इत्यत्रापि वर्तमानेन कर्मणेत्यर्थः । तस्य तात्पर्यकथनरूपं 'कर्म कुर्वन्तः' इति भाष्यमिति ।

अयमिह 'यद्यपि' इत्यादिघट्टस्य निर्गलितोऽत्यर्थः । सहशब्दो ह्यर्थद्वये वर्तते । तत्र 'तुल्ययोगः' एकोऽर्थः । 'तुल्ययोगे वर्तमानम्' इति वृत्तिवचनात् । विद्यमानशब्दितं 'वर्तमानत्वम्' अपरोऽर्थः। 'विद्यमानतावाची सहशब्दः' इति कौस्तुभकारवचनात् । तथा च प्रकृते यद्यपि सहशब्दस्तुल्ययोगार्थो न भवति । 'कर्मणो मुक्तिमास्थितत्वप्रसङ्गः' इत्युक्त-दोषात् । तथाऽपि वर्तमानक्रियाघटितवर्तमानतार्थः सम्भवत्येव । ततश्च यथा 'सहैव दशभिः' इत्यत्र वर्तमानेष्वेव पुत्रेषु स्वयमेकैव भारं वहतीत्यर्थः, तथा कर्मणा वर्तमानेन कर्मणि वर्तमान एवेत्यर्थः सम्पद्यते । अतो नोक्तदोषावकाशः । भाष्यमप्युक्तार्थतात्पर्यकमिति । सहशब्दस्यार्थ-द्वयवाचित्वे पाणिनीयमुपष्टम्भकं दर्शयति– **द्विविधं हीति** ॥ उक्तार्थयोर्द्वयोरपि सहशब्द-वाच्यत्वमस्तीत्यभिप्रेत्येत्यर्थः । **समासविधौ** समासविधिप्रकरणे । विशेषणं सहशब्दस्य क ? इत्यत आह– **तेन सहेति तुल्ययोग इतीति** ॥ सहेति पदं तुल्ययोगे वर्तमानं तृतीयान्तेन समस्यते स बहुव्रीहिः । सपुत्र आगतः । 'तुल्ययोगे वर्तमानम्' इति विशेषणात् । 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र 'सपुत्रा' इति न समास इति सूत्रं व्याख्यातं वृत्तौ । तथा च 'तेन सहेति तुल्ययोगे' इति विशिंषन् पाणिनिस्तस्य तुल्ययोगं वर्तमानतां चार्थ-मभिसन्धत्त इति ज्ञायत इति विभावितं भवति' **इति व्याचक्षते** ॥

**भावदीपिका (श्री.टि.)– ॥ पूर्वोक्तेति ॥** अर्थवादस्य, तथाऽसम्प्रज्ञातसमाधिस्थस्यैव कार्याभावात् तव च सम्प्रज्ञातसमाधिस्थत्वात् त्वया विहितं कर्म कर्तव्यम् इत्येव न । किन्तु

विहितस्य कर्मणः **कर्तव्यत्वे** जनकाद्याचारोऽपि प्रमाणमस्तीति **'तस्मादसक्तः'** इति पूर्वोक्त-हेतुसमुच्चय इत्यर्थः ॥ **तृतीययेति** ॥ 'कर्मणा' इति करणत्वार्थकतृतीययेत्यर्थः । कारण-विशेषत्वात् करणत्वस्येति द्रष्टव्यम् ॥ **सहयोगे तृतीयायामिति** ॥ 'सहयुक्तेऽप्रधाने' सहार्थेन साहित्येन युक्तेऽप्रधाने तृतीया स्यात् । 'पुत्रेण सहाऽगतः पिता' इत्युदाहरणम् । एवं चानेन सूत्रेण तृतीयायां व्याख्यायमानायामिति भावः । **श्रूयमाणक्रियायाम्** 'आस्थिताः' इत्युक्ता-स्थानरूपक्रियायाम् । **नोपपद्यते** 'कर्मणः' इति शेषः । **उपपद्यत एवेति** ॥ 'कर्मणः' 'सहयोगः' इति वर्तते । तथा च तत्र तृतीया युक्तेति भावः ।

नन्वध्याहृतावान्तरक्रियायां सहयोगेन तृतीया कुत्र दृष्टा? इत्यतस्तां दर्शयन् प्रकृतेऽ-प्यध्याहृतावान्तरक्रियायां कर्मणः सहयोगेन तृतीयामुपपादयति– **ततश्चेयादिना** ॥ **वर्तमानाऽ-पीति** ॥ वर्तमानक्रियायां पुत्रैः सहयोगो गर्दभ्या अस्तीत्यप्रधाने पुत्रपदे 'पुत्रैः' इति तृतीया युक्तेत्यर्थः । 'सहैव वर्तमानाः' इत्यनन्तरमपि 'स्वयमेव मुक्तिमास्थिताः' इति शेषः । 'सहैव वर्तमानाः' इत्यस्य तात्पर्यकथनम्– **कर्म कुर्वन्त एवेति** ॥ एवं चात्राप्यध्याहृतवर्तन-रूपावान्तरक्रियायां कर्मणः सहयोगोऽस्तीति युक्ता तृतीयेति भावः । ननु सहयोगः प्रधानक्रिययैव विवक्षितः, न त्वध्याहृतावान्तरक्रिययाऽपि । ज्ञापकाभावात् । अतः कर्मणोऽपि मुक्तिमास्थितत्वप्रसङ्गस्तदवस्थ एवेत्यत आह– **द्विधाऽपीति** ॥

प्रधानक्रिययाऽध्याहृतावान्तरक्रियया चेति द्विधाऽपीत्यर्थः । **समासविधौ** बहुव्रीहिसमास-विधौ । **तेन सहेति तुल्ययोग इतीति** ॥ सहेत्येतत् तृतीयान्तेन समस्यते । तुल्ययोगे प्रधानक्रिययाऽध्याहृतावन्तरक्रियया च योगः तुल्ययोगः, तस्मिन् विवक्षिते सति बहुव्रीसमासो भवतीति सूत्रार्थः । पुत्रेण सहाऽगतः सपुत्र आगत इत्युदाहरणम् । अत्र सहस्य सो द्रष्टव्यः । यद्यत्र सूत्रे प्रधानक्रिययैव योगस्तुल्ययोगशब्दार्थो विवक्षितः, न त्वध्याहृतावान्तरक्रिययेति स्यात् तदा 'सपुत्र आगतः पिता' इति यथाऽऽगमनरूपप्रधानक्रियया पुत्रस्य योगात् 'सह' इत्यस्य तृतीयान्तपुत्रपदेन बहुव्रीसमासोऽनेन सूत्रेण जातः, तथा 'सपुत्रा गर्दभी वहति' इति समासो न स्यात् । वहनरूपप्रधानक्रियया पुत्राणां योगाभावेन 'सह' इत्यस्य तृतीयान्तपुत्रपदेन समासो न सम्भवति । 'तेन सह' इति सूत्रेणात्र समासायोगात् । सूत्रान्तरस्य चाभावात् । दृश्यते च समासः सपुत्रा गर्दभी वहतीति । तेन ज्ञायतेऽध्याहृतावान्तरक्रिययाऽपि योगस्तुल्य-

योगशब्दार्थ इति । तथा च सति 'सपुत्रा गर्दभी' इत्यत्र पुत्रैः सह वर्तनाऽपीत्यध्याहृत-वर्तमानरूपावान्तरक्रियया तुल्ययोगाद् युक्तः समासः । एवमेव प्रकृतेऽपीति भावः । एतत्सूचयितुमेव 'समासविधौ' इत्युक्तम् । सपुत्र आगतः, सपुत्रा गर्दभीत्यादिः सहपूर्वपद-बहुव्रीहिः । बहुव्रीहेर्द्विपद-बहुपद-सहपूर्वपदादिभेदेन सप्तविधत्वोक्तेरित्यवधेयम् ।

**भावप्रकाशः (कृ.टि.)– ॥ पूर्वोक्तहेतुसमुच्चय इति ॥** असम्प्रज्ञातसमाधिस्थस्यैव कार्याभावोक्त्याऽन्यस्य प्रयोजनसत्वसूचनं कर्माकरणे पूर्वोक्तजगच्चक्रव्याघातप्रसङ्ग इत्यादि-हेतुसमुच्चय इत्यर्थः । **सहयोग इति** ॥ सहशब्दयोग इत्यर्थः । **श्रूयमाणक्रियायां सहयोग इति** ॥ श्रूयमाणक्रियया तुल्ययोगे सहशब्दप्रयोगोऽनुपपन्न इत्यर्थः ॥ **अध्याहृतेति** ॥ प्रथम-प्रतीतार्थं परित्यज्य गृहीतत्वमध्याहृतत्वं प्रधानक्रियापेक्षयावान्तरा वर्तनक्रिया तस्यां तद्घटिते वर्तमानत्व इति यावत् । **पुत्रैः सहैव वर्तमानपीऽति** ॥ पुत्रेषु वर्तमानेष्वेवेत्यर्थः ॥ **कर्मणा सहैवेति** ॥ कर्मणि वर्तमाने सत्येवेत्यर्थः । ततश्च यद्यपीत्यादेरयमर्थः । सहशब्दस्य द्वावर्थौ तुल्ययोगो वर्तमानता च । तत्र प्रकृते यद्यपि सहशब्दस्तुल्ययोगार्थो न भवति । उक्तदोषात् । तथाऽपि वर्तमानातार्थः सम्भवत्येव । ततश्च यथा 'सहैव' इत्यत्र दशपुत्रेषु वर्तमानेष्वपि स्वयमेकैव भारं वहतीत्यर्थः । तथा कर्मणा वर्तमाना एवेत्यर्थः सम्पद्यते । तत्तात्पर्यार्थः– **कर्म कुर्वन्त एवेतीति** ॥ वृत्त्यादिबहुशाब्दिकग्रन्थानुसारायैवं व्याख्यातमिति मन्तव्यम् । सहशब्द-स्यार्थद्वयवाचित्वे पाणिनिज्ञापकमाह– **द्विधाऽपीति** ॥ द्वयोरपि सहशब्दवाच्यत्वमभि-प्रेत्येत्यर्थः । **विशेषणमिति** ॥ वर्तमानताव्यावर्तनायेति शेषः । तुल्ययोगवाचिसहशब्दस्तृतीया-न्तेन समस्यत इति सूत्रार्थः । 'सहैव दशभिः' इत्यत्र वर्तमानतार्थकसहशब्दस्य समासव्यावृत्त्यै तुल्ययोग इति विशेषणमित्यर्थः ।

**प्रमेयदीपिका (ज.टी.)– कर्मसाहित्यं च मुक्तावानन्दवृद्ध्यर्थमिति ज्ञातव्यम् । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति चेत् – सत्यम् । वक्ष्यमाणवाधात् तत्परिग्रहोपपत्तेः । अथवा करणे तृतीया । तथाऽपि 'लाङ्गलेन वयं जीवामः' इतिवत् पारम्पर्येण कर्मणो मुक्तौ कारणत्वमित्याह– कर्मेति॥** सिद्धिमास्थिता इति वेत्यर्थः ॥ **सिद्धिशब्दो ज्ञानार्थः, 'वा'** इत्यस्याप्युपलक्षणमेतत् ॥

भूतैस्तत्कार्यैः देहेन्द्रियमनोभिः क्रियमाणानि सर्वाण्यपि कर्माणि 'अहं कर्ता, तानि स्वातन्त्र्येण कर्तुं मम शीलमस्ति' इत्यहङ्कारविमूढात्मा सन् अज्ञानी मन्यत इति श्लोकार्थो द्रष्टव्यः । प्रतिबिम्बस्य क्रियाऽभावे शास्त्रवैयर्थ्यप्रसङ्गादाह- **स्वातन्त्र्येणेति** ॥ २७ ॥

**भावप्रकाशः** (कृ.टि.)- ॥ **अनेकार्थत्वादिति** ॥ 'शब्दाद्या इन्द्रियाद्याश्च' इति वक्ष्यमाणाभिधानादिति भावः । **शरीरमनसोरिति** ॥ इन्द्रियपदेन मनसो ग्रहणसम्भवेऽपि कुरुपाण्डवन्यायेन पृथग्ग्रहणं बहुवचनोपपत्त्यर्थमिति बोध्यम् । दृष्टश्च पृथग्ग्रहणं 'मनः सर्वेन्द्रियाणि च । इन्द्रियाणि मनो बुद्धिः' इत्यादौ । **द्रव्याणामिति** ॥ इदञ्च हेत्वर्थगर्भ-विशेषणम् ॥ २७ ॥

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

## भाष्यम्

**कर्मभेदस्य गुणभेदस्य च तत्त्ववित् । गुणाः इन्द्रियादीनि । गुणेषु विषयेषु ॥ २८ ॥**

भावप्रदीपिका (प.टी.)- द्वितीयं व्याचष्टे- **कर्मेति** ॥ 'मुख्यतः परमात्मनः कर्म, अस्वतन्त्रः जीवः' इति कर्मविभागः । 'इन्द्रियाणि मुख्यतः परमात्मकरणानि, जीवस्या-मुख्यतः' इति गुणविभागः ॥ २८ ॥

भावप्रकाशिका (न.टी.)- द्वितीयं व्याचष्टे- **कर्मभेदस्येति** ॥ 'स्वतन्त्रकर्तृत्वं विष्णोरेव, तदधीनस्वतन्त्रकर्तृत्वं स्थावरापेक्षयैव जीवस्य, विकारलक्षणमेव कर्तृत्वं प्रकृतेः' इति कर्मभेदः । 'ब्रह्मादीनां सर्वेषामिन्द्रियाणि शरीरं च भगवतैव प्रयोज्यानीति तस्यैव गुणभूतानि, भगवतैव क्वचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि गुण-भूतानि, तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानि' इति गुणभेदः । एवमनयोः तत्त्ववित् भगवतैव प्रेरिता इन्द्रियादिगुणास्तदधीनेषु शब्दादिगुणेषु प्रवर्तन्त इति मत्वा न सक्तः स्यादिति भावः ॥ २८ ॥

श्लोकः २८

**प्रमेयदीपिका (ज.टी.)– गुणानां कर्मणां चान्योन्यं यो विभागस्तस्मिन् वक्तव्ये एकवचनेनालम् । कथं द्विवचनम्? केन वाऽस्यान्वयः? इति शङ्कां विभागशब्दस्यार्थं वदन् परिहरति– कर्मेति ॥ जीवेश्वरप्रकृतिलक्षणसम्बन्धिभेदात् कर्मणामिन्द्रियादीनां च भेदोऽत्र विवक्षितो ग्रन्थान्तराद् अवगन्तव्यः । 'गुणाः' 'गुणेषु' इति पदद्वयस्य विवक्षितमर्थमाह– गुणा इति ॥ २८ ॥**

**भावदीपः (रा.टि.)– ॥ जीवेश्वरेति ॥** गीतायां प्रकृतिपदेन जीवस्वभाव–ईश्वर–जड-प्रकृतिरूपाः त्रयोऽर्था विवक्षिताः । तथाच प्रकृतेः जीवस्य स्थावरापेक्षायेश्वरायत्तस्वतन्त्रकर्तृकं कर्म, ईश्वरस्य तु परानधीनस्वतन्त्रकर्तृकं कर्म, प्रकृतेस्तु विक्रियारूपं कर्मेति कर्मणां भेदः, तथा प्रकृतेर्जीवस्वभावस्य गुणा गुणानीन्द्रियाणि, प्रकृतेरीश्वरस्य गुणा इच्छादयः, प्रकृतेर्गुणाः सत्वादय इति गुणशब्दितेन इन्द्रियादीनां भेदम् ॥ **ग्रन्थान्तरात्** गीतातात्पर्यरूपग्रन्थान्तरात् 'यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव' इत्यादिरूपादित्यर्थः ॥ २८ ॥

**भावरत्नकोशः (सु.टि.)– ॥ अस्य** 'गुणकर्मविभागयोः' इत्यस्य । ननु गुणकर्म-विभागयोस्तत्त्वज्ञानी गुणा इन्द्रियाणि गुणेषु विषयेषु प्रवर्तन्त इति मत्वा नाभिमानवान् भवतीति गीतायाम् इन्द्रियकर्मविभागज्ञानस्याभिमानाभावं प्रति प्रयोजकत्वमुक्तमयुक्तम् । 'प्रत्यक्षं सप्तविधम् , साक्षिषडिन्द्रियभेदेन । उत्क्षेपण–अपक्षेपण–आकुञ्चन–प्रसारण–गमन-भेदात् कर्म पञ्चविधम्' इत्युक्तेन्द्रियकर्मविभागज्ञानवतोऽभिमानाभावादर्शनादित्यत आह– **जीवेश्वरेति** ॥ गुणकर्मविभागशब्देन नोक्तो विभागो विवक्ष्यते । किन्तु स्वतन्त्रकर्तृत्वं विष्णोरेव । तदधीनस्वतन्त्रकर्तृत्वं स्थावरापेक्षयैव जीवस्य । विकारलक्षणमेव कर्तृत्वं प्रकृतेरिति कर्मभेदः । ब्रह्मादीनां सर्वेषां जीवानाम् इन्द्रियाणां शरीरं च भगवतैव प्रयोज्यानीति भगवत एव गुणभूतानि । भगवतैव कचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि गुणभूतानि । तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानीति गुणभेदः, इत्येवं गुणकर्मविभागयोस्तत्त्ववित्' इति प्राचीनटीकारीत्या गुणकर्मविभाग एव विवक्ष्यते । तथा च भगवतैव प्रेरिता इन्द्रियादिगुणाः तदधीनेषु शब्दादिगुणेषु वर्तन्त इति मत्वा न सज्जते । इन्द्रियेषु स्वातन्त्र्येणेश्वरस्वामिकत्वाज्ञाने ममैवैतानि करणानीति मिथ्यामतिरूपेन्द्रियाभिमानवान् भवति । कर्मणि च स्वातन्त्र्येणेश्वर-कर्तृकत्वज्ञाने सति स्वस्य स्वातन्त्र्याभिमानवान्न भवति । विप्रतिषेधात् । तत एवंविधगुणकर्म-

विभागज्ञानवान् इन्द्रियेषु शोभनाध्यासनिमित्तकस्नेहरूपाभिमानवान् कर्माभिमानवांश्च न भवतीति भावेन तत्र प्रमाणं दर्शयितुमुक्तम् – **ग्रन्थान्तरादिति ॥**

**'यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।**
**तदधीनस्वतन्त्रत्वं स्थावरापेक्षयैव तु ॥**
**जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।**
**पुमान् दोग्धाऽथ गौर्दोग्ध्री स्तनो दोग्धेतिवत् क्रमात् ॥' (ब्रह्मतर्के)**

इति गीतातात्पर्यनिर्णयाख्यग्रन्थान्तराद् इत्यर्थः । एतेन **'विभागे वक्तव्ये एकवचनेनालम्'** इत्यपि निरस्तम् । जीवादिप्रतिसम्बन्धिभेदेन गुणानां कर्मणां च विभागानां द्वैराश्येन द्विवचनोपपत्तेः । तदाह **'कर्मणामिन्द्रियादीनां च भेदः' इति ।** केन चास्यान्वयः ? इति शङ्काऽपि 'कर्मभेदस्य, गुणभेदस्य च तत्त्ववित्' इत्यन्वयप्रदर्शनेन भाष्य एव परिहृतेति । **विवक्षितमिति** । तस्य नानार्थत्वादिति भावः । इन्द्रियादीनि **इन्द्रियशरीरमनांसि** । विषयेषु शब्दादिष्विति भाष्यार्थः ॥ २८ ॥

**अक्षरार्थस्तु–** गुणकर्मविभागयोस्तत्त्ववित्तु ब्रह्मादीनां सर्वेषां जीवानाम् इन्द्रियाणि शरीरं च भगवतैवेच्छया प्रयोज्यानीति भगवत एव गुणभूतानि, भगवतैव कचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि गुणभूतानि, तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानीति गुणभेदः । स्वतन्त्रकर्तृत्वं विष्णोरेव, तदधीनस्वतन्त्रकर्तृत्वं स्थावरापेक्षयैव जीवस्य, विकार-लक्षणमेव कर्तृत्वं प्रकृतेः, इत्येवंरूपयोर्गुणकर्मविभागयोर्याथार्थ्यं विजानन् विद्वांस्तु गुणाः भगवदधीनानीन्द्रियादीनि गुणेषु शब्दादिविषयेषु वर्तन्ते । न पुनर्जीवस्य कापि स्वातन्त्र्यम् इति मत्त्वा न सज्जते स्वात्मनः कर्तृत्वाभिमानेन संसारमग्नो न भवतीति विद्वत्कर्मोक्तम् ॥ २८ ॥

**भावदीपिका (श्री.टि.)– ॥ एकवचनेनेति** ॥ 'गुणकर्मविभागस्य' इत्येकवचनेनेत्यर्थः । **द्विवचनं** 'गुणकर्मविभागयोः' इति द्विवचनम् । ननु कथं कर्मभेदः? कथं च गुणशब्दो-क्तेन्द्रियाणां च भेदः? इत्यत आह– **जीवेश्वरेति ॥ ग्रन्थान्तरात्** गीतातात्पर्यात् ॥ **विवक्षित-मर्थमाहेति ॥** तथा च गुणा इन्द्रियाद्या ईश्वरप्रेरिताः सन्तो गुणेषु विषयेषु वर्तन्ते प्रवर्तन्ते । तत्र न मम किञ्चित् स्वातन्त्र्यमस्तीति मत्वा न सज्जते इति गीतार्थो द्रष्टव्यः ॥ २८ ॥

श्लोकः २८

**भावप्रकाशः (कृ.टि.)–** ननु 'तत्त्ववित्' इति श्लोकेऽभिमानाभावं प्रतीन्द्रियाद्यवान्तरभेदज्ञानस्य प्रयोजकत्वमुक्तम् । इन्द्रियाद्यवान्तरभेदस्य कर्मावान्तरभेदस्य च तत्त्वज्ञानवानिन्द्रियादीनि विषयेषु प्रवर्तन्त इति मत्वा तत्राभिमानवान्न भवतीति । न च तद्युक्तम् । 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम्' इत्याद्युक्तेन्द्रियाद्यवान्तरभेदज्ञानेनाभिमानाभावाद् इत्यत आह– **जीवेश्वरेति** ॥ स्वातन्त्र्येणेश्वरकर्तृकत्वं, तदधीनतया जीवकर्तृकत्वं, प्रकृतिकार्यत्वं चेति कर्मणि धर्मभेदः । स्वातन्त्र्येणेश्वरस्वामिकत्वं, तदधीनतया जीवस्वामिकत्वं, प्रकृत्युपादानकत्वं चेति इन्द्रियादिषु धर्मभेदश्च भेदशब्दार्थः । अयं च जीवादिसम्बन्धिभेदे निमित्तकः । तथा च 'प्राकृतम्' इत्याद्युक्तावान्तरभेदज्ञानाद् अभिमानाभावाभावेऽप्युक्तरूपधर्मभेदज्ञानात् स्यादेव ।

तथा हि । यदेन्द्रियेषु 'स्वातन्त्र्येणेश्वरस्वाकित्वम्' इत्यादिधर्मभेदज्ञानं तदा 'ममैवैतानि स्वातन्त्र्येण करणानि' इति भ्रमरूपेन्द्रियाभिमानो न भवति । एवं शरीरमनसोरपि ज्ञेयम् । तथा कर्मणि स्वातन्त्र्येणेश्वरकर्तृकत्वादिज्ञाने स्वातन्त्र्यभ्रमरूपोऽभिमानो न भवति । विरोधात् । इन्द्रियाभिमानाभावे कर्माभिमानासम्भवाच्च । यद्वक्ष्यति । 'इन्द्रियाद्यभिमानाद्धि विषयादिसङ्ग' इति । ततश्चोक्तविषयेन्द्रियादिभेदतत्त्वज्ञानवान् इन्द्रियादीनि विषयेष्वीश्वरप्रेरणया प्रवर्तन्त इति मत्वेन्द्रियाद्यभिमानवान् शोभनाध्यासनिमित्तकस्नेहरूपविषयाद्यभिमानवान् कर्माभिमानवांश्च न भवतीति गीतार्थ इति भावः । अयं सर्वोऽप्यर्थो–

'यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।
तदधीनस्वतन्त्रत्वं स्थावरापेक्षयैव तु ।
जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ॥

नाहं कर्ता हरिः कर्ता' इत्यादिगीतातात्पर्यनिर्णयादवदसेयमित्याह– **ग्रन्थान्तरादिति**

॥ २८ ॥

**प्रकृतेर्गुणसम्मूढास्सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

## भाष्यम्

**प्रकृतेः गुणेष्विन्द्रियादिषु सम्मूढाः । इन्द्रियाद्यभिमानाद्धि विषयादिषु सङ्गः । गुणकर्मसु विषयेषु कर्मसु च ।**

भावप्रदीपिका (प.टी.)– तृतीयं व्याचष्टे– **प्रकृतेरिति ॥**

भावप्रकाशिका (न.टी.)– तृतीयं व्याचष्टे– **प्रकृतेर्गुणेष्विति ॥**

प्रमेयदीपिका (ज.टी.)– 'प्रकृतेर्गुणसम्मूढाः' इत्यत्र गुणशब्दस्य विवक्षितमर्थं वदन् विग्रहं दर्शयति– **प्रकृते-रिति ॥** नित्यसापेक्षत्वाद् गुणशब्दस्य न असामर्थ्यमिति प्रदर्शनाय 'प्रकृतेः' इत्यनु वादः, देवदत्तस्य गुरुकुलमिति यथा । प्रकृतेर्गुणसम्मूढत्वात् सज्जन्ते गुणकर्मसु इति हेतुहेतुमद्भावोऽत्र विवक्षितः । अन्यथा वैयर्थ्यापत्तेः । तमुप-पादयति– **इन्द्रियादीति ॥**

अभिमानः ममैवैतानि स्वातन्त्र्येण करणानीति भ्रमः । 'विषयादि' इत्युक्त्या गुण-शब्दोऽत्र विषयार्थ इति दर्शयति । आदिशब्देन कर्मग्रहणम् । विषयेषु सङ्गः स्नेहादिः । कर्मसु स्वातन्त्र्यभ्रमः । 'गुणानां कर्मसु' इति केनचिद्व्याख्यातम् । तदसदिति भावेन द्वन्द्वोऽयमिति दर्शयति– **गुणेति ॥** द्वन्द्वपरिग्रहेऽधिकार्थलाभात् । अनेन 'विपयादि' इत्येतदपि समर्थितं भवति ॥

भावदीपः (रा.टि.)– ॥ अनेनेति ॥ 'गुणकर्मसु' इत्यत्र द्वन्द्वव्याख्यानेन आदिपदं कर्मार्थकमिति व्याख्यात-मित्यर्थः ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ नित्यसापेक्षत्वाद्गुणशब्दस्येति ॥ गुणशब्दस्य प्रकृते-रित्येतत्सापेक्षत्वात् सापेक्षस्य च सापेक्षमसमर्थं भवतीति न्यायेन वृत्तौ उपसर्जनपदस्य प्रधाना-र्थाभिधायिना भाव्यत्वेन अप्रधानत्वस्य स्वविशेषणापेक्षया च प्रधानत्वस्य आवश्यकत्वात् एकस्यैव एकदा प्रधानत्वएकार्थीभावयोरसम्भवेनासमर्थत्वात् न सम्मूढशब्देन 'गुणसम्मूढाः' इति समासः सम्भवति । 'समर्थः पदविधिः' इति समासविधौ सामर्थ्याधिकारेनिरपेक्षस्यैव तद्विधानात् इत्यतः पूर्वकायो नाभेदः 'देवदत्तस्य गुरुकुलम्' इत्यादौ समासदर्शनेन

नित्यसापेक्षस्य तत्सिद्ध्या पूर्वादिशब्दवत् सम्बन्धिशब्दत्वेन नित्यसापेक्षतया गुणशब्दस्य सम्मूढशब्देन समासो युक्त इति दर्शयितुं प्रकृतेरित्यनुवादः कृत इत्यर्थः ।

**भावरत्नकोशः (सु.टि.)**– ननु 'प्रकृतेर्गुणसम्मूढाः' इत्यत्र प्रकृतिपदसापेक्षस्य गुण-सम्मूढपदस्य समासो न युक्तः । सापेक्षस्यासमर्थत्वात् । 'समर्थः पदविधिः' इति पद-सम्बन्धविधेः समर्थाश्रितत्वस्मरणादित्याशङ्क्य अत्र समासं समर्थयमानो भाष्ये मूलस्थस्य 'प्रकृतेः' इति पदस्यानुवादे प्रयोजनं दर्शयति– **नित्यसापेक्षत्वादिति** ॥ सापेक्षस्याप्यसामर्थ्यं नास्तीत्यत्र वैयाकरणाभिमतमुदाहरणं दर्शयति– **देवदत्तस्येति** ॥ अत्र कुलेनैव देवदत्त-शब्दोत्तरषष्ठ्यर्थस्यान्वयः, न पुनर्गुरुणा । देवदत्तस्य सम्बन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः, न तु तदितरः । उक्तं च–

> 'समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
> संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥' इति ।

अथवा ससम्बन्धिकपदार्थस्यैकदेशत्वेऽपि सम्भवत्येव विशेषेणान्वयः । 'चैत्रनप्ता' इत्यादौ तथा दर्शनात् । 'नप्ता' इत्यस्य 'पुत्रपुत्रः' इत्यर्थकत्वात् । उक्तं च–

> 'सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
> स्वार्थवत् सा व्यपेक्षाऽत्र वृत्तावपि न हीयते ॥' इति ।

अयमेव समर्थसूत्रमञ्जर्यामुक्तोऽर्थः शब्दकौस्तुभे प्रपञ्चितः । अत्र च नित्यसापेक्षत्वं नाम ससम्बन्धिकत्वं विवक्षितमिति तद्वदेव समासोपपत्तिरित्यर्थज्ञापनाय भाष्ये तत्पदानुवाद इति ।

हेत्वर्थगर्भं विशेषणमिति भावेनाह– **प्रकृतेर्गुणसम्मूढत्वादिति** । **अन्यथा** हेतुहेतुमद्भावा-विवक्षायाम् । **वैयर्थ्यापत्तेः** 'प्रकृतेर्गुणेषु सम्मूढाः' इति विशेषणस्य । ये गुणकर्मसु सज्जन्ते तान् अकृत्स्नविदो मन्दान्न विचालयेद् बुध इति पूर्णत्वादिति भावः । तं हेतुहेतुमद्भावम् । **'इन्द्रियादि'** इति भाष्यगतादिपदेन शरीरमनसोर्ग्रहणम् । श्रोत्रादीन्द्रियाभिमानिदेवानां शब्दादि विषयसङ्गप्रसङ्ग इत्यतोऽत्र विवक्षितं संसारमज्जनानुकूलमभिमानं निरूपयति– **अभिमान इति** । देवानां तु भगवदधीनतया नियमनं कुर्वतामपि मिथ्यामतेरभावान्न जीवसंसारमग्नत्वापत्तिरिति

भावः । **आदिशब्देन** 'विषयादि' इत्यत्र आदिशब्देन । **विषयेषु** शब्दादीन्द्रियार्थेषु । **'स्नेहादिः'** इत्यत्र आदिपदेनारित्वादिभ्रमनिमित्तको द्वेषो ग्राह्यः । **कर्मसु** क्रियारूपेषु । मयैवैतानि कर्माणि निष्पाद्यन्ते न पुनरन्योऽत्र कर्ताऽस्तीति स्वातन्त्र्यभ्रम एव सङ्गशब्दार्थ इत्यर्थः । अस्वकर्तृके स्वकर्तृकत्वाध्यासस्यापि सङ्गरूपत्वादिति भावः ।

प्रकृतेर्गुणैः सम्यङ्मूढाः सज्जन्ते गुणानां कर्मस्विति भाषणादाह– **केनचिदिति** । परव्याख्यानस्यासत्त्वे हेतुमाह– **द्वन्द्वेति** । **अधिकेति** । सङ्गाधिकरणस्य नानात्वलाभादित्यर्थः। **अनेन** द्वन्द्वपरिग्रहेण । **इत्येतत्** 'विषयादिसङ्गः' इति पूर्वभाष्य आदिपदं कर्मार्थकतया व्याख्यातमित्यर्थः । एतेन 'इन्द्रियाद्यभिमानाद्धि विषयसङ्गः' इत्यनेनैव संसार-निमग्नत्ववर्णनसम्भवाद् आदिपदस्य न प्रयोजनमिति चोद्यं परिहृतम् । तदिदमुक्तम्– **समर्थितमिति** ।

**भावदीपिका (श्री.टि.)**– ननूत्तरत्र गुणशब्द एव व्याख्यायते, न प्रकृतिशब्दः । अतः 'प्रकृतेः' इत्यनुवादो व्यर्थ इत्यत आह– **नित्यसापेक्षत्वादिति** ॥ गुणशब्दस्य प्रकृतिपदे-नैवापेक्षा, न सम्मूढपदेन । अतः सामर्थ्याभावान्न सम्मूढपदेन समासो युक्तः । 'सापेक्षम-समर्थवद् भवति' इति वचनाद् इत्याशङ्कायां गुणपदस्य सम्मूढपदेन समासेऽपि न प्रकृति-पदेनापेक्षा विहन्यत इत्येवं नित्यसापेक्षत्वान्नासामर्थ्यम् । वचनं त्वनित्यसापेक्षविषयम्, अतो न दोष इति सूचयितुं 'प्रकृतेः इत्यनुवादः' इत्यर्थः । 'नित्यसापेक्षत्वान्नासामर्थ्यम्' इत्यत्रोदाहरणमाह– **देवदत्तस्येति** ॥ **तमिति** ॥ विवक्षितं हेतुहेतुमद्भावम् । **अधिकार्थः** उभयत्रासक्तिरूपः ॥ **अनेनेति** ॥ अधिकार्थलाभाय द्वन्द्वस्यात्र विवक्षितत्वे पूर्वं 'विषयादि' इत्यत्राऽदिपदेन कर्मग्रहणं तदपि समर्थितं भवति । द्वन्द्वपरिग्रहाभावे तत्राऽदिपदेन कर्मग्रहणानुपपत्तेरिति भावः ।

**भावप्रकाशः (कृ.टि.)**– नित्यसापेक्षत्वान्नासामर्थ्यमित्यत्रोदाहरणमाह– **देवदत्तस्येति** ॥ तथा च यथा गुरुपदस्य देवदत्तपदसापेक्षत्वेऽपि न विशिष्टैकार्थवाचित्वरूपसामर्थ्यभङ्गः । गुरोर्नित्यसापेक्षत्वेन शक्यैकदेशत्वेऽपि 'चैत्रस्य नप्ता' इत्यादिवद्विशेषणान्वयोपपत्तेः तथा प्रकृतेऽपीत्यर्थः ।

## भाष्यम्

'शब्दाद्या इन्द्रियाद्याश्च सत्वाद्याश्च शुभानि च ।
अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ॥' इत्यभिधानात् ।

सत्वाद्यङ्गीकारे 'गुणा गुणेषु'(३.२८) इत्ययुक्तं स्यात् ॥ २९ ॥

भावप्रदीपिका (प.टी.)– 'गुण'शब्दस्येन्द्रियार्थत्वे प्रमाणमाह– **शब्दाद्या इति** । 'गुण'शब्देन सत्वादिगुणत्रयं सर्वत्र किं न स्यात् ? इत्यत आह– **सत्त्वादीति** ॥ २९ ॥

भावप्रकाशिका (न.टी.)– इन्द्रियादीनां गुणत्वे प्रमाणमाह– **शब्दाद्या इति** । सत्त्वादीनामेव गुणत्वाङ्गीकारे दूषणमाह– **सत्त्वेति** । न हि सत्त्वादिगुणानामेव कर्तृकर्मभावः । गुणशब्दस्येन्द्रियादौ लक्षणा चेत् स एव दोषः । अतो यथाभिधान-मिन्द्रियादयोऽत्र गुणशब्दार्था इति भावः ॥ २९ ॥

प्रमेयदीपिका (ज.टी.)– गुणशब्दस्योक्तानेकार्थत्वं कुतः? इत्यत आह– **शब्दाद्या इति** ॥ निरुच्यत इति निरुक्तिः शब्दार्थः । निरुक्तिं गच्छन्त्यवगच्छन्तीति निरुक्तिगाः । अस्तु गुणशब्दस्यानेकेष्वर्थेषु शक्तिः । तथाऽपि विवक्षाऽत्रैकस्यैवार्थस्य युक्ता । अन्यथा 'न ह्येकशब्देन' (३.१५) इत्युक्तविरोधात् । शब्दो हि यमर्थमादौ स्मारितवान् स एवार्थो बुद्धौ सन्निहितः पुनरुच्चारितेन स्मारयितुं युक्तः । तथा चात्र सर्वत्र सत्वादय एव ग्राह्याः । तद्ग्रहणे शब्दादीनामपि तदात्मकानां ग्रहणसम्भवादित्यत आह– **सत्वादीति** ॥ कर्तृत्वाधारत्वयोरेकत्र विरोधादिति भावः । तदात्मकानाम् (इन्द्रियादीनाम्) उपलक्षणे सति वृथा प्रयासः । अनयैवानुपपत्त्या अनेकार्थग्रहणोपपत्तेः ॥ २९ ॥

भावदीपः (रा.टि.)– **निरुक्तिगा इति** ॥ शब्दार्थज्ञा इत्यर्थः ॥ **इत्युक्तविरोधादिति** ॥ 'ब्रह्माक्षरसमुद्भवम्' (३.१५) इत्येतद्व्याख्यावसरे 'नह्येकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते' इत्युक्तविरोधादित्यर्थः ॥ **कर्तृत्वाधारत्वयोरिति** ॥ 'वर्तन्ते' इत्युक्त-वर्तनक्रियाकर्तृत्वस्य, 'गुणेषु' इत्युक्ताधारस्य एकत्र सत्वादिगुणेषु विरोधादिति भावः ॥ **उपलक्षणमिति** ॥ 'गुणा इत्यनेन' इति योज्यम् ॥ २९ ॥

**भावरत्नकोशः (सु.टि.)– शब्दाद्या इतीति ।** शब्द आद्यो येषां स्पर्शरूपरसगन्धानां विषयाणां ते तथोक्ताः, इन्द्रियमाद्यं येषु गुणेष्विन्द्रियशरीरमनोरूपेषु तथोक्ताः, सत्त्वाद्याः सत्त्वरजस्तमांसि, शुभानि सौख्यसौशील्यसौकुमार्यादीनि, अप्रधानानि च, गुणाः गुण-शब्दार्थाः इति भाष्यार्थस्यातिरोहितत्वात् 'निरुक्तिगैः' इत्येतद् व्याकुर्वन् निष्पूर्वाद् 'वच परिभाषणे' इत्यतः कर्मणि बाहुलकात् क्तिनि निरुक्तिशब्दो निष्पन्न इति तदर्थमाह– **निरुच्यत इतीति ।** 'निरुक्तिगाः' इत्यत्र निरुक्तिशब्दोपपदाद् गमेः कर्तरि 'अन्यत्रापि दृश्यते' इति डप्रत्ययः । **तैः** । 'शब्दार्थतत्त्वविद्भिः' इति शेषः । 'निगद्यन्ते' इति भाष्येणान्वयः । **विवक्षा** ग्राह्यत्वेनाभिप्रायविषयता । एकस्यैवार्थस्य ग्राह्यत्वाभावे बाधकमाह– **अन्यथेति । इत्युक्तेति ।** 'ब्रह्माक्षरसमुद्भवम्' इत्येतदर्थवर्णनप्रस्तावे 'न ह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते' इत्युक्तविरोधादित्यर्थः । एकशब्देन वस्तुद्वयग्रहणे को दोषः? इत्यतस्तद्भाष्ये हिशब्दसूचितां युक्तिमाह– **शब्दो हीति ।** एवं बाधकमुक्त्वा साधकमप्याह –**शब्दो हीति ।** स एवार्थः स्मारयितुं युक्त इत्यत्रोपपत्तिकथनम्– **बुद्धौ सन्निहित इति ।** हेत्वर्थगर्भमेतदित्यपि आहुः ।

ननु गुणशब्दस्य सत्त्वादिगुणमात्रार्थत्वे शब्दादिविषयस्य कथमत्र ग्रहणम् ? इत्यत आह– **तद्ग्रहण इति । तदात्मकानां** तत्परिणामानाम् । अयुक्तत्वमुपपादयति– **कर्तृत्वेति ।** 'वर्तन्ते' इत्याख्यातोपात्तक्रियायां स्वतन्त्रो हि कर्तेति न तस्याधारत्वमुपपद्यते । न हि क्रियाऽधारः अधिकरणम् । किं नाम ? कर्तृकर्मणोः क्रियाऽऽश्रयणयोर्धारणक्रियां प्रति य आधार-स्तत्कारकम् । तथैव वृत्त्युक्तस्य युक्तिपादीयसुधायामनुवादात् । एवञ्च क्रियाश्रयभूतस्य तत्र स्वतन्त्रस्य कर्तुर्य आधारस्तदेवाधिकरणम् इति गुणशब्देन क्रियाकर्तुरभिधानेन तस्यैव पुनस्तेनैव गुणशब्देन सप्तम्यन्तेन आधारत्वेनाप्यभिधानं विप्रतिषिद्धमिति 'गुणा गुणेषु' इत्ययुक्तमिति भाष्यभाव इत्यर्थः । तेन 'क्रियायां स्वतन्त्रस्य क्रियां प्रत्याधारत्वरूपम् अधिकरणत्वं कुला-लादौ सुप्रसिद्धमिति कथं कर्तृत्वाधारत्वयोर्विरोधः?' इति चोद्यं परिहृतं भवति । 'आधारोऽधिकरणम्' इत्यत्र क्रियाश्रयाधारस्याधिकरणत्वेन व्याख्यानात् ।

ननु गुणशब्देन सत्त्वादयो मुख्यवृत्त्या ग्राह्याः । तदात्मकानीन्द्रियाणि तु लक्षणया गृह्यन्ते । तथा च गुणाः गुणात्मकानीन्द्रियाणि गुणेषु सत्त्वादिगुणात्मकेषु शब्दादिषु वर्तन्त

श्लोकः २९

इत्यर्थाङ्गीकारे कर्तृत्वाधारत्वयोरेकत्र विरोध इत्युक्तदोषानवकाश इत्यत आह– **तदात्मकानामिति ।** इन्द्रियादीनां शब्दादीनां च प्रमाणप्रमितेष्वप्यनेकेष्वर्थेष्वेकस्यैव ग्रहणं न्याय्यम् इत्यनेकमुख्यार्थग्रहणाद् बिभ्यत् परः कथं नाम लक्षणामङ्गीकुर्यात्? इति तस्यैकमुख्यार्थ-ग्रहणप्रयासोऽपेक्षामात्रे पर्यवस्येदित्यर्थः ।

यदुक्तं शङ्काग्रन्थे 'अन्यथा न ह्येकशब्देनेत्युक्तविरोधात्' इत्यनेकार्थग्रहणे दूषणं तदुद्धरति – **अनयैवेति ।** 'असति हि बाधके न ह्येकशब्देन द्विरुक्तेन वस्तुद्वयं कुत्रचिदुच्यते' इति भाषितम् । अस्ति चात्र गुणशब्दस्यैकार्थग्रहणे कर्तृत्वाधारत्वयोरेकत्र विरोध इत्युक्तं बाधक-मिति युक्तं प्रमाणप्राप्तानेकार्थग्रहणमिति नोक्तदोषः । अत एव तत्र भाष्ये 'भेदश्रुतिम् अनेकार्थग्रहणप्रमाणं विना'इत्युक्तमिति भावः ॥

**अक्षरार्थस्तु–** स्वात्मनः स्वतन्त्रकर्तृतां मन्यमाना अविद्वांसो विदुषा बोधनीयाः किं न स्युः ? इत्यत उच्यते– **प्रकृतेरिति ।** गुणैः पूर्ववदर्थः । ममैवैतानि स्वातन्त्र्येण करणानीति भ्रमरूपाभिमानोपहतमनसः, अत एव गुणेषु कर्मसु च शब्दादिषु क्रियासु च सज्जन्ते स्नेहस्वातन्त्र्यभ्रमवन्तो भवन्ति ये तान् अकृत्स्नविदः गुणकर्मविभागाज्ञान् अयोग्यजनान् स्वयं कृत्स्नविद् विद्वान् न विचालयेत् गुणकर्मसु सङ्गं त्याजयित्वा सन्मार्गे न प्रवर्तयेदिति ॥ २९ ॥

**भावदीपिका (श्री.टि.)– उक्तानेकार्थत्वम्** इन्द्रियविषयोभयार्थकत्वम् । **निरुक्तिं** शब्दार्थम् । **अन्यथेति ॥** अनेकार्थविवक्षायां 'न ह्येकेन शब्देन द्विरुक्तेन भेदश्रुतिं विनाऽर्थद्वयं कुत्रचिदुच्यते' इत्युक्त-विरोधापत्तेरित्यर्थः । 'प्रकृतेः क्रियमाणानि गुणैः' इत्यत्र गुणशब्देन सत्त्वादिगुणानामेव वाच्यत्वं सिद्धवत्कृत्य पूर्वपक्ष्याह– **शब्दो हीति ॥ सर्वत्रेति ॥** उत्तरत्र वाक्यगतगुणशब्देनेत्यर्थः ।

ननु तर्हि 'गुणा गुणेषु वर्तन्ते' 'सज्जन्ते गुणकर्मसु' इत्यत्र गुणशब्देन शब्दादिविषय-ग्रहणं न स्यादिति चेत्, तत्राऽह– **तद्ग्रहण इति ॥** सत्त्वादिगुणग्रहण इत्यर्थः । **तदात्मकानां** सत्त्वादिगुणात्मकानां तत्कार्याणामित्यर्थः ॥ **ग्रहणसम्भवात्** 'उपलक्षणया' इति शेषः ॥ **कर्तृत्वाधारत्वेति ॥** 'गुणा वर्तन्ते' इत्युक्तकर्तृत्वस्य, 'गुणेषु' इत्युक्ताधारत्वस्य नैकत्र विरोधादित्यर्थः । ननु 'गुणा गुणेषु वर्तन्ते' इत्यत्र प्रथमगुणशब्देन सत्त्वादिगुणात्मकेन्द्रि-यादिकम् उपलक्षणतया गृह्यते । द्वितीयेन च सत्त्वाद्यात्मकशब्दादिविषया गृह्यन्ते । तथा च

सत्त्वाद्यात्मकेन्द्रियाणि सत्त्वाद्यात्मकविषयेषु वर्तन्ते इत्यर्थाङ्गीकारेण कर्तृत्वाधारत्वयो-र्विरोधाभावादिति चेत्, तत्राऽह– **तदात्मकानामिति** ॥ गुणशब्देन सत्त्वादिकं गृहीत्वा तदनुपपत्तौ लक्षणयेन्द्रियादिग्रहणे वृथाप्रयासः । अस्मदुक्तरीत्या व्याख्याने तु न प्रयास इति भावः ।

नन्वनेकार्थेषु शक्तिसत्त्वेऽपि प्रकृते एक एवार्थोऽङ्गीकार्यः । अन्यथा 'न ह्येकेन शब्देन' इत्युक्तन्यायविरोध इत्युक्तमिति चेत्, तत्राऽह– **अनयैवेति** ॥ कर्तृत्वाधारत्वयोरेकत्र विरोधा-न्यथाऽनुपपत्त्यैवेत्यर्थः । तथा च भेदप्रमाणसत्त्वेनानेकार्थग्रहणं न दोषायेति भावः ॥ २९ ॥

भावप्रकाशः (कृ.टि.)– **स्नेहादिरिति** ॥ आदिपदेनारित्वादिभ्रमनिमित्तको द्वेषो ग्राह्यः । **निरुक्तिगा इति** ॥ निरुक्तिशब्दोपपदाद्गमेरन्येष्वपि दृश्यत इति ड इति भावः । **न ह्येकशब्देनेत्युक्तेति** ॥ 'तस्मात् सर्वगतं ब्रह्म' इति गीतोक्तसमर्थानावसर इति शेषः । 'विवक्षाऽत्रैकैस्य वार्थस्य युक्ता' इत्यत्र बाधकमुक्त्वा साधकमप्याह– **शब्दो हीति** ॥ २९ ॥

**मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

## भाष्यम्

**अतः सर्वाणि कर्माणि मय्येव सन्न्यस्य भ्रान्त्या (भ्रान्तितः) जीवेऽध्यारोपितानि मय्येव विसृज्य भगवानेव सर्वाणि कर्माणि करोतीति मत्पूजेति चात्मानं मामधिकृत्य यच्चेतः तदध्यात्मचेतः । सन्न्यासस्तु भगवान् करोतीति । निर्ममत्वं नाहं करोमीति ॥ ३० ॥**

भावप्रदीपिका (प.टी.)– चतुर्थं व्याचष्टे– **भ्रान्त्येति** ॥ आरोपितानां संन्यासः कीदृशः ? इत्यत आह– **भगवानिति** । संन्यासश्च परमेश्वरपरिचिन्तत एव भवतीत्याह– **आत्मानमिति** ॥ 'संन्यास' 'निर्मम'शब्दयोरर्थभेदमाह– **संन्यासस्त्विति** ॥ ३० ॥

भावप्रकाशिका (न.टी.)– चतुर्थं व्याचष्टे– **अत इति** ॥ यतः स्वतन्त्रकर्म विष्णो-रेव, तं प्रत्येव गुणभूतानि इन्द्रियाणीत्यादिविदेव न सक्तः स्यात्, अतस्तस्मिन्नेव सर्वाणि

श्लोकः ३०

**कर्माणि संन्यस्य युद्ध्यस्वेत्यर्थः । अतःशब्दोक्तहेतुविशेषज्ञानात् स्वकृतं कर्म भगवत्येव समर्प्येत्यपि प्रतीतिः स्यात् । तां व्यावर्तयति– भ्रान्तित इति ॥ ननु** जीवाध्यारोपितत्वे **कर्मणां कथं विसर्गः ? स्वीयस्यैव विसर्जनीयत्वादित्याशङ्क्य, यत्कृतान्येतानि** तत्कृतत्व-**ज्ञानमेवैतेषां विसर्ग** इति भावेनाह– **भगवानिति** । अनेनैव कर्मणां स्वरूपेणारोपितत्वं प्रत्युक्तम् ।

प्रकारान्तरेणापि भगवति कर्मविसर्गमाह– **मत्पूजेति** ॥ मत्कृतान्येवैतानि कर्माणीत्येतदेवारोपितं जीवे । न तु मयि भगवता क्रियन्त इत्येतत् । अतः तत्प्रसादेन आत्मनि प्राप्तकर्मणां तत्पूजात्वेनार्पणं युक्तमिति भावः । परमात्मानमधिकृत्य यच्चेतः, तस्य सर्वोत्तमत्वसर्वनियामकत्वादिज्ञानम्, तेन तत्र सर्वकर्मसंन्यासो घटत इति भावेनाह– **आत्मानमिति** ॥ संन्यासनिर्ममत्वयोर्भेदमाह– **संन्यासस्त्विति** ॥ ३० ॥

प्रमेयदीपिका (ज.टी.)– 'मयि सर्वाणि' इत्यस्य सङ्गतिं दर्शयति– **अत इति** ॥ यतो विद्वत्कर्मैवंविधं, त्वं च विद्वानसि, अतः । ननु सन्न्यासो विसर्गः । स च स्वकीयस्य भवति । नच जीवस्य कर्माणि सन्तीत्युक्तम् । तत्कथं तेषां विसर्गो विधीयते? इत्यत आह– **भ्रान्त्येति** ॥ 'कर्मणां परमेश्वरे सन्न्यासो नाम तदात्मकत्वविज्ञानम्' इति कश्चित् । तदसत् । अशाब्दत्वाद्, प्रमाणविरुद्धत्वाच्चेति भावेन स्वपक्षे तदभिप्रायमाह– **भगवानिति** ॥ इति 'ज्ञात्वा' इति शेषः ॥

प्रकारान्तरं चाह– **मदिति** ॥ इति 'समर्पणं च कर्मणां मयि सन्न्यासः' इति शेषः । 'कर्माणि परमेश्वरात्मकत्वं प्रतिपद्य तत्प्राप्तये कल्प्यन्त इति अध्यात्मचेतसा'इति व्याख्यानम् अशाब्दमिति भावेन व्याचष्टे– **आत्मानमिति** ॥ अनेनाव्ययीभावगर्भः कर्मधारय इत्युक्तं भवति । अस्य निराशीः इत्यनेनान्वयः । परमात्मलाभेन निराशीः आशारहित इत्यर्थः ॥ ननु निर्ममत्वं न मम कर्माणि सन्तीति ज्ञानम् । तच्च 'मयि सर्वाणि कर्माणि सन्न्यस्य' इत्यनेन गतार्थमित्यतो द्वयोर्भेदमाह– **सन्न्यासस्त्विति** ॥ उभयत्र 'इति'शब्दात् परं 'ज्ञानम्' इति शेषः ॥ ३० ॥

भावदीपः (रा.टि.)– ॥ इत्युक्तमिति ॥ 'प्रकृतेः' (३.२७) इति श्लोकभाष्ये 'नहि प्रतिबिम्बस्य क्रिया' इत्यादिनोक्तमित्यर्थः ॥ ३० ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ॥ **अनेनाव्ययीभावगर्भ इति** । विभक्त्यर्थेऽधिकरणत्वे 'अव्ययं विभक्ति' इत्यनेनाव्ययीभावः । ततश्च अध्यात्मम्=आत्मनीत्यर्थः । ततोऽव्ययीभाव-गर्भोऽध्यात्मं च तत् चेतश्चेति तत्पुरुषः समानाधिकरणः कर्मधारय इति **कर्मधारय** इत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– एवंविधं गुणकर्मविभागज्ञानपूर्वमनुष्ठेयत्वाद् अविद्वत्कर्म-विलक्षणमित्यर्थः । 'विसृज्य' इति भाषणादाह– **विसर्ग इति** ॥ **इत्युक्तं** 'न हि प्रतिबिम्बस्य क्रिया' (गी.भा. ३.२७) इत्यत्रेति शेषः । **तेषां कर्मणाम्** । **भ्रान्त्या सर्वकर्मस्वहमेव कर्तेति** स्वातन्त्र्यभ्रमेण । **अध्यारोपितानि** स्वामीयत्वेनाभिमतानीति भाष्यपदार्थः । **प्रमाणेति** ॥ कर्मणां जडत्वेन भगवत्तादात्म्यस्य 'नेति नेति' इत्यादिप्रमाणविरुद्धत्वादित्यर्थः । **तदभिप्रायं** संन्यासशब्दाभिप्रायम् । भाष्यगतम् 'इति'पदमनूद्यानन्तरम् अध्याहार्यमाह– **इति ज्ञात्वेति शेष इति** ॥ तथा च 'संन्यस्य', 'विसृज्य' इत्येतद् भगवानेव मयि स्थित्वा सर्वाणि कर्माणि करोतीति ज्ञात्वेति तात्पर्यतो व्याख्यातं भवतीति भावः । 'युध्यस्व' इति मूलेनान्वयः । 'इति' इत्यनूद्य शेषमाह– **इति समर्पणं चेति** ॥

॥ **प्रतिपद्य** प्राप्य । **तत्प्राप्तये** परमेश्वरप्राप्तये । **व्याचष्टे** अध्यात्मचेतःपदम् । **अनेन** 'आत्मानं माम्' इति भाष्येण । **अव्ययीभावगर्भ इति** ॥ 'आत्मनीत्यध्यात्मम्' इति विभक्त्यर्थेऽव्ययीभावः । 'अनश्च' इति समासान्तष्टच् । 'नस्तद्धिते' इति टिलोपः । 'नाव्ययी-भावादतोऽम् त्वपञ्चम्याः' इत्यम्भावः । ततोऽध्यात्मं च तत् चेतश्चेति कर्मधारय इत्यर्थः । न चाधिकरणशक्तिप्रधानस्याध्यात्मशब्दस्य कथं चेतश्शब्देन सामान्याधिकरण्यम्? इति वाच्यम् । 'शोभनं प्रातः प्रातस्तनकर्मास्य सुप्रातः' इत्यत्र बहुव्रीहौ प्रातश्शब्दस्य तत्कालकर्मलक्षकत्वेन सामानाधिकरण्यवद् अध्यात्मशब्दस्य अध्यात्मविषयकत्वलक्षकत्वेन सामानाधिकरण्य-सम्भवात् । लक्ष्यार्थप्रदर्शनायैव भाष्ये 'आत्मानमधिकृत्य' इति विग्रहो दर्शितः । ल्यपो निर्वाहाय 'वर्तमानम्'इत्यध्याहारे लक्ष्यार्थलाभ इति युक्त एव कर्मधारय इति ।

॥ **अस्य** 'अध्यात्मचेतसा' इत्यस्य । एवमन्वयेन लब्धमर्थमाह– **परमात्मेति** ॥ परमात्मरूप-महाविषयलाभेनातिफल्गुविषयाभिलाषरहित इति 'अध्यात्मचेतसा निराशीः' इत्यस्यार्थो बोद्धव्य इत्यर्थः । 'ममतावाची ममशब्दो विभक्तिप्रतिरूपकमव्ययम्' इति 'पितुर्य-त्पुत्रो मम कस्य' इति ऋग्भाष्यटीकायामुक्तम् । तथा चामरशेषे 'ममत्ववाक्' इत्यत्र

श्लोकः ३०

'ममेत्यव्ययं ममत्वं वक्ति' इति हरिदीक्षितः । ततस्त्वप्रत्यये निर्गतं ममत्वं ममैवैतानि कर्माणीत्यभिमानो यस्मात् स निर्मम इति 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समास इति तदर्थमाह– **निर्ममत्वमिति** ॥ **द्वयोः** संन्यासनिर्ममत्वयोः । **उभयत्रेति** ॥ 'भगवान् कर्माणि करोतीति ज्ञानम्' संन्यासः । निर्ममत्वं 'नाहं करोमीति ज्ञानम्' इत्युभयत्र शेषः । तथा चार्थभेदान्न गतार्थताशङ्केति भावः ॥ ३० ॥

**गीताक्षरार्थस्तु**– यतो विद्वत्कर्मैवंविधं, त्वं च विद्वानसि, अतः सर्वाणि वर्णाश्रमोचितानि कर्माणि नित्यनैमित्तिकानि मयि वासुदेवे संन्यस्य भ्रान्तितो जीवेऽध्यारोपितानि भगवानेव तु सर्वाणि कर्माणि करोतीति भगवत्पूजात्मकानि चेति ज्ञात्वा विसृज्य समर्प्येति यावत् । अध्यात्मचेतसा परमात्मविषयकेण मनसा निराशीः परमात्मलाभेनेतराशारहितः निर्ममः नाहं कर्माणि करोमि मम कर्माणि न सन्तीति ज्ञानवांश्च भूत्वा इति विधेये कर्मणि गुणविधानम् । विगतज्वरः त्यक्तशोको युध्यस्व इति ॥ ३० ॥

**भावदीपिका (श्री.टि.)**– ॥ **एवंविधम्** अविद्वत्कर्मविलणम् । विद्वत्कर्मण एवंविधत्वे मम किम्? इत्यत आह– **त्वं चेति** ॥ **उक्तमिति** ॥ 'न हि प्रतिबिम्बस्य क्रिया' इत्यनेनेत्यर्थः। कथञ्चिच्छाब्दत्वे त्वाह– **प्रमाणेति** ॥ जडेश्वरभेदप्रतिपादकप्रमाणेत्यर्थः । **तदभिप्रायम्** 'सन्न्यस्य' इति शब्दाभिप्रायम् । इति ज्ञात्वेत्यस्य 'युध्यस्व' सति गीतापदेनान्वयः । **अव्ययीभावगर्भ इति** ॥ आत्मानमधिकृत्य विद्यमानं यत् तद् अध्यात्मम् इत्यव्ययीभावः । पश्चादध्यात्मं च तत् चेतश्चाध्यात्मचेतः, तेनेति कर्मधारयो द्रष्टव्यः । ननु भगवानेव सर्वाणि कर्माणि करोति, तत्पूजेति चेत्यनुसन्धानस्य सन्न्यासशब्देनैव लाभात् 'अध्यात्मचेतसा' इत्यस्य 'सन्न्यस्य' इत्यनेनान्वयो न युक्त इत्याशयेनाऽह– **अस्येति** ॥ अन्वयलब्धमर्थं दर्शयति – **परमात्मलाभेनेति** ॥ 'अध्यात्मचेतसा' इत्यस्य तात्पर्यकथनमेतदिति ज्ञातव्यम् ॥ ३० ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **विसर्ग इति** ॥ 'त्यागे विसर्जनीये च विसर्गः स्यात् मलेऽपि च' इति कोशात् त्याग इत्यर्थः । **इत्युक्तमिति** ॥ 'न हि प्रतिबिम्बस्य क्रिया' इत्यनेनेति शेषः । **अव्ययीभावगर्भः कर्मधारय इति** ॥ आत्मन्यधिकृत्याध्यात्मम्, विभक्त्यर्थेऽव्ययीभावः । 'अनश्च' इति समासान्तष्टच् । ततोऽध्यात्मं च तत् चेतश्च इति 'अध्यात्मचेत' इति कर्मधारय इत्यर्थः । नन्वधिकरणशक्तिप्रधानस्याध्यात्मशब्दस्य चेतःशब्दसामानाधिकरण्याभावात् कथं

कर्मधारयः? इति वाच्यम् । प्रातःशब्दस्याधिकरणशक्तिप्रधानत्वेऽपि 'शोभनं प्रातरस्य सुप्रातः' इत्यत्र बहुव्रीहौ प्रातस्तनकर्मलक्षकत्वेन सामानाधिकरण्यवद् अध्यात्मशब्दस्यात्मविषयकत्व-लक्षकत्वेन सामानाधिकरण्योपपत्तेः । लक्ष्यार्थप्रदर्शनायैव च भाष्ये 'आत्मानमधिकृत्य' इति विग्रहः प्रदर्शितः । समानकर्तृकत्वलाभार्थं वर्तमानमित्यध्याहारे लक्ष्यार्थलाभ इति । अस्येति ॥ अध्यात्मचेतस्कस्येत्यर्थः । अन्वयमेवाह– परमात्मेति ॥ ३० ॥

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥**

गीताक्षरार्थस्तु– किं विद्वांस एवं कुर्वन्तीत्येतावता मया कार्यम् ? इत्याशङ्क्य स्वोक्त-करणाकरणयोः फलमुच्यते –'ये मे मतम्' इति श्लोकद्वयेन । ये मानवाः इदं पूर्वोक्तं कर्म आवश्यकमिति मे मतं सिद्धान्तं श्रद्धावन्तः अनेन मम प्रयोजनमस्तीति बुद्धिमन्तः अनसूयन्तः कष्टे कर्मणि किमिति प्रवर्तयतीति दोषदृष्टिमकुर्वन्तः सन्तः अनुतिष्ठन्ति अनुवर्तन्ते तेऽपि कर्मभिः स्वयमनुष्ठितैर्वर्णाश्रमधर्मैर्ज्ञानद्वारा मुच्यन्ते । किम्वपरोक्षज्ञानिन इति कैमुत्यं द्योतयितु-मपिशब्दः ॥ ३१ ॥

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥**

## भाष्यम्

**फलमाह– ये म इति ॥ ये तु एवं निवृत्तकर्मिणः तेऽपि मुच्यन्ते ज्ञान-द्वारा । किम्वपरोक्षज्ञानिनः? न तु साधनान्तरमुच्यते ।**

'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये ।
अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ।
सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।
न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक् ॥'

श्लोकः ३२

**इति ह्युक्तं नारायणाष्टाक्षरकल्पे ।**

**अत एव समुच्चयनियमो निराकृतः ॥ ३१,३२ ॥**

भावप्रदीपिका (प.टी.)– संन्यासकर्मणः फलस्य ज्ञानद्वारा मोक्षाख्यस्य प्रसिद्धत्वेऽपि तद्दार्ढ्याय वाचा वक्तीत्यभिप्रायेणाह– **फलमिति** ॥ ज्ञानिनो मुच्यन्ते निवृत्तकर्मिणोऽपीत्यर्थान्तरभ्रान्तिं निराकर्तुं यथावद्व्याचष्टे– **ये त्विति** ॥ अर्थान्तरं किं न स्यात् ? इत्यत आह– **न त्विति** । आदिपदात् स्वपदपार्थानीन्द्रादिकर्माणि निवृत्तादीनान्त्ये । तदेव विव्रियते– **सर्वं तदिति** ॥ तत्सर्वं निवृत्तकर्मादि भगवद्दृष्टिमन्तराधाय । ननु केवलकर्मणो मोक्षहेतुत्वाभावेऽपि ज्ञानसमुचितस्य किं न स्यात् ? इत्यत आह– **अत एवेति** । 'निवृत्तादीनि' इति प्रमाणादेव ॥ ३१-३२ ॥

भावप्रकाशिका (न.टी.)– एवंविधैः कर्मभिः न स्वर्गादिरूपपुष्पमात्रावाप्तिः, नापि प्रत्यवायपरिहारमात्रम् । किन्तु ज्ञानद्वारा फलं भवति कैवल्यमिति भावेनोत्तरश्लोकमवतार्य व्याचष्टे– **फलमिति** ॥ ननु किं द्वारभूतेन ज्ञानेन ? साधनान्तरमेव कर्म किं न स्यात् ? अपिशब्दबलात् । तथा चान्ये वदन्ति–

> 'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
> नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥' इति ।

इत्याशङ्क्यापिशब्दः कैमुत्यन्यायसूचको, न तु ज्ञानमिव कर्मापि मुक्तिसाधनम् इत्येतदर्थकमित्येतत् सप्रमाणकमाह– **ये त्वेवमिति** । आदिपदेन स्वस्वपदकामाधिकारिकदेवाद्यनुष्ठितं (ध्रुवाद्यनुष्ठितं-इति अपपाठः) तपआदिकर्म (गृह्यते) । ननु मा भून्मुक्तौ साधनान्तरं कर्म ज्ञानात् । समुच्चयनियमस्तु तयोः स्यादेव । ज्ञानिनोऽप्यर्जुनस्य कर्मविधानादित्याशङ्क्य, एतदस्मादेव वचनात् सोऽपि निराकृत इत्याह– **अत एवेति** ॥ ज्ञानिनोऽपि कर्मविधिर्मुक्तावानन्दवृद्ध्य एव । ज्ञानं तूत्पन्नं विनाऽपि कर्म मुक्तिं ददात्येवेति न समुचयनियम इत्यर्थः ॥ ३१,३२ ॥

प्रमेयदीपिका (ज.टी.)– अन्यथाप्रतीतिं निराकर्तुं तावदुत्तरश्लोकद्वयप्रतिपाद्यमाह– **फलमिति** ॥ केचिद् विद्वांस एवं कुर्वन्तीत्येतावता मया कार्यं न वा? इत्याशङ्क्य

स्वोक्तकरणाकरणयोः फलमाहेत्यर्थः । 'मुच्यन्ते तेऽपि कर्मभिः' इत्यपिशब्देन ज्ञानमिव निवृत्तं कर्मापि मोक्षसाधनमुच्यते' इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **ये त्विति** ।। कैमुत्यद्योतनार्थोऽपिशब्दो न समुच्चयार्थ इत्यर्थः । प्रासङ्गिकं चैतत् । समुच्चये यद्यपिशब्दः । स च द्वेधा । ज्ञानमिव कर्मापि पृथक् साधनम् । ज्ञानकर्मसमुच्चय एवेति ।।

तत्रआद्यं पक्षं निराकरोति– **न त्विति** ।। निष्कामत्वादिनाऽनुष्ठितानि यज्ञादीनि निवृत्तानि ।आदिपदेन नित्यनैमित्तिकानां ग्रहणम्। अपरोक्षा च सा ईशदृष्टिश्च । तादर्थ्ये चतुर्थी । मुक्तौ मुक्तिसाधने । किञ्चित् सहकारि ।। कर्मापि मुक्तिसाधनमुच्यत इत्यत उक्तम्– **सर्वमिति** ।। **तत्सर्वं** निवृत्तादिकम्। **अन्तरा** मध्ये । **ज्ञानम्** आधाय **मुक्तये** मुक्तेः । 'अहल्यायै जार' इति यथा । साक्षात् साधनत्वेन श्रुतमपि कर्म यथा व्यवहितं जातं किं ज्ञानमपि तथा? नेत्युक्तम्– **न किञ्चिदिति** ।।

द्वितीयमपि प्रकारमतिदेशेन निराचष्टे– **अत एवेति** ।। 'अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते' इत्युक्तत्वादेवेत्यर्थः ।। ३१,३२ ।।

**भावदीपः** (रा.टि.)– 'कर्मणैव' इत्यादावेव कर्मज्ञानद्वारा मोक्षोपायो न साक्षादिति समर्थनात् पुनरिह 'मुच्यन्ते' इत्यादिकं किमर्थमुच्यते? इत्यत आह–**प्रासङ्गिकमिति** ।। 'कर्मणैव हि' इत्यादिना विद्वांसोऽपि कर्म कुर्वन्तीत्युक्तेऽत्र तावता मया कुतः कार्यम्? इति शङ्कायां करणाकरणयोः फलोक्तेः प्रसङ्गप्राप्तत्वादिति भावः । कैमुत्यद्योतितं प्रमेयं प्रासङ्गिक-मिति वाऽर्थः । **इत्यादि यथेति** ।। 'अहल्यायाः' इति विपरिणामो यथा, 'न वा अरे पत्युः कामाय' (बृ.उ.४.४.५) इत्यादौ कामेनेति यथा तथा 'मुक्तये' इत्यस्य मुक्तेरिति विपरिणाम इत्यर्थः ।। ३१-३२ ।।

**वाक्यार्थप्रदीपः** (पां.टि.)– ।। **तादर्थ्ये चतुर्थीति** ।। 'मुक्तये हरिं भजति' इत्याद्यभियुक्त-प्रयोगमूलकतादर्थ्ये चतुर्थी वाच्येति वार्तिकादिति भावः । **मुक्तये मुक्तेरिति** ।। 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठ्यर्थे चतुर्थी इति भावः । तत्रैव सम्प्रतिपन्नं दृष्टान्तमाह– **अहल्यायै जार इति** ।। तत्र यथा षष्ठ्यर्थे चतुर्थीत्यर्थः । नच चतुर्थ्यर्थे षष्ठीविकल्पनात् नास्य षष्ठ्यर्थे चतुर्थीविधाय-कत्वमिति वाच्यम् । अत्र 'षष्ठी शेषे' इत्यतः 'षष्ठी' इत्यस्यानुवृत्तिम् । 'चतुर्थी अर्थः' इति च योगविभागमाश्रित्य 'चतुर्थी षष्ठी च परस्परार्थे बहुलं भवतः' इत्यभियुक्तव्याख्यानेन षष्ठ्यर्थे चतुर्थी विधायकत्वेनोदाहरणोपपत्तिरिति ध्येयम् ।।

श्लोकः ३१,३२

**भावरत्नकोशः (सु.टि.)**– ॥ **अन्यथाप्रतीतिं** 'कर्मभिर्मुच्यन्ते' इति कर्मणां मोक्ष-साधनत्वमुच्यत इत्यन्यथाप्रतीतिम् । **निराकर्तुं** 'न तु साधनान्तरमुच्यते' इत्युपरितनभाष्येण । **श्लोकद्वयप्रतिपाद्यम्** 'एवंविधैः कर्मभिर्न स्वर्गादिरूपपुष्पमात्रावाप्तिः, नापि प्रत्यवायपरिहारमात्रं फलम् । किन्तु ज्ञानद्वारा कैवल्यमेव' इति प्राचीनटीकोक्तं श्लोकद्वयनिर्गलितार्थमित्यर्थः । इममर्थं सूचयन् भाष्यं परिष्करोति– **किं विद्वांस इति** ॥ तेऽपि निवृत्तकर्मानुतिष्ठन्तोऽपि मुच्यन्त इत्युक्तौ कर्मापि मोक्षसाधनमिति सिद्ध्यतीति भावेन 'अपिशब्दबलात्' इति प्राचीन-टीकोक्तमेवाह– **अपिशब्देनेति** ॥ यद्बलाद् अन्यथाप्रतीतिस्तमन्यथयति– **कैमुत्येति** । निवृत्त-कर्माणोऽपि मुच्यन्ते, किम्वपरोक्षज्ञानिन इति कैमुतिकन्यायसूचनार्थः, न तु ज्ञानमिव कर्मापि मोक्षसाधनमिति कर्मणः साधनत्वसमुच्चयार्थ इत्यर्थः । ननु नात्र कैमुत्यं द्योतनीयम् । विदुषा निवृत्तं कर्म कर्तव्यं फलवत्त्वादित्येतावत्युक्तेऽपि कर्माऽवश्यकमिति स्वमतसिद्धिरित्यत आह– **प्रासङ्गिकमिति** । महाफलहेतुत्वात् कर्म कर्तव्यमिति भगवन्मतम् । तत्र ज्ञानस्य महाफलहेतुत्वं शास्त्रसिद्धमिति कथं कर्म तद्धेतुः? इति शङ्कायां कर्मिणोऽपि मुच्यन्ते किमु ज्ञानिन इत्ये-तदप्युक्तशङ्कां परिहर्तुं प्रसङ्गागतत्वादुक्तमित्यर्थः ।

भाष्ये 'तेऽपि मुच्यन्ते किम्वपरोक्षज्ञानिनः' इत्युक्त्यैव गीतागतापिशब्दार्थकैमुत्यसूचन-सम्भवात् 'ज्ञानद्वारा' इति न वक्तव्यम् । 'कर्मणैव हि संसिद्धिम्' इत्यत्रैव कर्म ज्ञानद्वारैव मोक्षसाधनम् इत्यर्थस्य समर्थितत्वाच्च । अत एव 'न तु समाधानान्तरमुच्यते, न तु निवृत्ता-दीनि' इत्याद्यपि न वक्तव्यमित्यत आह– **प्रासङ्गिकमिति** ॥ एतत् 'ज्ञानद्वारा न तु साधनान्तरमुच्यते' इत्यादिभाष्यं प्रसङ्गप्राप्तस्य कर्मणो मोक्षसाधनत्वस्य समर्थनार्थमित्यर्थ इत्यप्याहुः । एतदपरोक्षज्ञानस्य प्राधान्यमित्यर्थः इति केचित् । समुच्चय एवापिशब्दार्थः किं न स्यात् ? इत्याशङ्क्य तद्दूषणपरं भाष्यमवतारयति– **समुच्चये यदीति** ॥ 'तर्हि' इति शेषः । **स च** समुच्चयः । **द्वेधा** निरूपणीयः । **पृथगिति** ॥ स्वर्गे ज्योतिष्टोमाद् अग्निहोत्रमिव पृथ-गित्यर्थः ॥ **ज्ञानकर्मसमुच्चय इति** ॥ स्वर्गे दर्शपौर्णमासौ समप्राधान्येन यथा साधनम्, तथा ज्ञानं कर्म च समप्राधान्येन मोक्षे साधनमिति समुच्चय इत्यर्थः ।

ननु साधनान्तरं नोच्यत इत्येतत् कुतः ? कर्मणामपि मोक्षसाधनत्वस्य तत्र तत्र श्रवणा-दित्यतः कर्मणो मोक्षसाधनत्ववचनगतिं वर्णयत् प्रमाणमुच्यते भाष्ये– **निवृत्तादीनीति** ॥ तत्र निवृत्तकर्मशब्दस्य विवक्षितमर्थमाह– **निष्कामत्वादिनेति** ॥ **निष्कामत्वं** फलस्नेहराहित्यम् ।

आदिशब्देनेश्वरप्रीत्युद्देश्यकत्वादि ग्राह्यम् । यज्ञादीनि यदकरणे प्रत्यवायाभावः, यानि चानिमित्तेऽप्यनुष्ठेयानि, तानीष्टिपश्वादीनि तत्तत्फलविशेषसाधनतया विहितान्यपि फलमनभिसन्धायेश्वरप्रीत्युद्देशेनानुष्ठितानि च तान्यत्र निवृत्तशब्देन विवक्षितानीत्यर्थः । 'यज्ञादि' इत्यादिशब्देनोक्तविधदानादिग्रहः ।

'निवृत्तादीनि' इत्यत्र आदिशब्दार्थमाह– **आदिपदेनेति** ॥ प्राचीनटीकायां तु 'आदिपदेन स्वस्वपदकामाधिकारिकदेवाद्यनुष्ठितं तपआदि कर्म गृह्यते' इत्युक्तम् । अपरोक्षत्वम् अव्यवधानादीशविशेषणमिति भ्रमं वारयंश्चतुर्थ्यर्थमाह– **अपरोक्षेति** ॥ 'तादर्थ्ये चतुर्थी वक्तव्या' इति वचनात् 'मुक्तये हरिभजनम्' इतिवच्चतुर्थीविभक्तिरित्यर्थः । **मुक्तिसाधने** मुक्तिनिष्पादने । 'किञ्चित्' इत्यनुवादः,'सहकारि' इति व्याख्यानम् । **निवृत्तादिकं** निष्कामत्वादिनाऽनुष्ठितं यज्ञादि नित्यनैमित्तिकं कर्म । **मध्ये** स्वमुक्तयोर्मध्ये । **ज्ञानं** भगवत्साक्षात्कारम् । **आधाय** द्वारीकृत्य । ज्ञानात् पूर्वमनुष्ठितं निवृत्तकर्म ज्ञानं जनयित्वा मोक्षप्रयोजकं भवतीति कर्मणो मोक्षहेतुत्वोक्तिगतिकथनपरं भाष्यवचनमिति भावः ।

ननु प्रापकशास्त्राभावात् कथं 'मुक्तये' इति चतुर्थी ? प्रत्युत साध्यसाधनभावनिबन्धना षष्ठ्येव युक्ता इत्यतः छान्दसत्वादियं चतुर्थी षष्ठ्यर्थे व्याख्यातव्येति सोदाहरणमाह– **मुक्तये मुक्तेरिति** ॥ यथा 'अहल्यायै जार', 'या खर्वेण पिबति तस्यै खर्वः प्रजायै गोपीथाय' इत्यादौ षष्ठ्यां वक्तव्यायामपि 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति वचनाच्चतुर्थीविभक्तिरुच्यते तथाऽत्रापीत्यर्थः ।

**किञ्चित्** निवृत्तादिकम् । अन्तराधाय । **निर्वाणाय** मुक्तेः । 'साधनं भवति' इत्यनुवर्तने ल्यबुपपत्तिः । **द्वितीयमपि** ज्ञानकर्मसमुच्चय एवेति द्वितीयमपि । स च द्वेधेति प्रकारद्वयेन व्याख्यानात् **प्रकारमित्युक्तम्** । पक्षमित्यर्थः । ज्ञानं कर्म विना न मोक्षं साधयितुं समर्थम् । कर्म तु न ज्ञानं विना तथेति ज्ञानकर्मणोरर्थसमुच्चयनियमः सोऽपि न केवलं कर्म पृथक् साधनमिति पक्ष इत्यपिशब्द इति भाष्यार्थः ॥

**गीताक्षरार्थस्तु–** ये तु पुनः एतत् मम मतं अभ्यसूयन्तो नानुवर्तन्ते तान् अचेतसः विवेकशून्यान् अत एव सर्वविषयमिथ्याज्ञानिनः नष्टान् स्वात्मनाशभाजः विजानीहीति ॥३२॥

श्लोकः ३१,३२

**भावदीपिका (श्री.टि.)– ॥ अन्यथाप्रतीतिमिति ॥** 'मुच्यन्ते तेऽपि कर्मभि;' इत्यत्र कर्मभिरपीत्यपिशब्देन ज्ञानवत् कर्मणोऽपि मोक्षसाधनत्वमित्यन्यथाप्रतीतिमित्यर्थः । 'मया कार्यम्' इत्यनन्तरं 'किं फलापेक्षया वा' इति वाक्यशेषो द्रष्टव्यः । **अपिशब्देनेति ॥** समुच्चयार्थकेनेत्यर्थः । वक्तव्यं सर्वमुक्त्वा पश्चात् स्वोक्तकरणाकरणयोः फलं वक्तव्यम् । न ह्यत्र वक्तव्यं सर्वमुक्तम् । अतो न फलकथनमत्र सङ्गतमित्यत आह– **प्रासङ्गिकं चैतदिति ॥** विद्वदविदुषोः कर्मभेदोक्तौ विद्वांस एवं कुर्वन्तीत्येतावता त्वया न कार्यम्, किन्तु मदुक्त-करणाकरणयोः फलमप्यस्तीति प्रमेयस्य स्मृतत्वात्, स्मृतस्य चोपेक्षाऽनर्हत्वरूपप्रसङ्गसङ्गत्येदं फलमत्रोक्तं भगवतेत्यर्थः ।

केचित्तु एतत् 'न तु' इत्यादिनोच्यमानं प्रमेयम्' प्रासङ्गिकमित्यर्थ इत्याहुः । **अपिशब्द इति ॥** गीतागतोऽपिशब्दो न केवलं ज्ञानेन, किन्तु कर्मभिरपीति । **स चेति ॥** समुच्चय इत्यर्थः । **पृथक् स्वातन्त्र्येण ॥ समुच्चय एवेति ॥** परस्परसापेक्षे ज्ञानकर्मणी इति यावत् । 'न तु' इति भाष्यस्य ज्ञानमिव कर्मापि मोक्षे स्वातन्त्र्येण साधनान्तरमित्युच्यते गीतायामपिशब्देनेति न त्वित्यर्थः । कर्मणः स्वातन्त्र्येण मोक्षसाधनत्वाभावे प्रमाणमुच्यते भाष्ये– **निवृत्तादीनीति ॥** तत्र 'निवृत्तानि' इत्यस्य ध्वस्तानीत्यन्यथाप्रतीतिनिरासायाऽह– **निष्कामत्वादिनेति ॥ नित्य-नैमित्तिकानामिति ॥** तेषां काम्यत्वाभावेनाबन्धकतया ज्ञानसाधनत्वादिति भावः ॥

अपरोक्षपदसमभिव्याहाराद् दृष्टिपदेन ज्ञानमात्रमवग्राह्यम् इत्याशयेन विग्रहं दर्शयति– **अपरोक्षा च सेति ॥** सम्प्रदाने चतुर्थीति भ्रमं वारयति– **तादर्थ्य इति ॥** तथा चापरोक्षेश-दृष्ट्यर्थमित्यर्थो द्रष्टव्यः । 'मुक्तौ' मुक्त्यवस्थायाम् इति प्रतीतिनिरासायाऽह– **मुक्तिसाधन इति ॥** साधनशब्दोऽत्र भावसाधनो विवक्षित इति द्रष्टव्यः ॥ **कर्मापीति ॥** 'साक्षात्' इति शेषः । तथा चापरोक्षेशदृष्टेरेव न मोक्षसाधनत्वमित्याशयः । ननु 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इत्युक्तसम्प्रदानसञ्ज्ञायाः प्रकृतेऽसम्भवात् कथं 'मुक्तये' इति चतुर्थी? इत्यत आह– **मुक्तये मुक्तेरिति ॥** तथा च षष्ठ्यर्थे चतुर्थीति भावः । षष्ठ्यर्थे चतुर्थी कुत्र दृष्टा? इत्यतः श्रौतप्रयोगं दर्शयति– **अहल्यायै जारेति ॥** अहल्याया जार इत्यर्थस्तत्र सर्वेषां सम्मतः, तद्वदिहापीत्यर्थः ॥ **न किञ्चिदितीति ॥** अपरोक्षदृक् किञ्चिदन्तराधाय मुक्तये साधनं न भवेत् । किन्तु साक्षात् निर्वाणाय लिङ्गभङ्गरूपमोक्षाय साधनं भवतीत्यर्थो द्रष्टव्यः । **इत्युक्त्वा-देवेति ॥** तत्र ज्ञानस्य सहकार्यन्तरनैरपेक्ष्योक्तेरिति भावः ॥ ३१-३२ ॥

भावप्रकाशः (कृ.टि.)– अहल्यायै जारेति यथेति ॥ 'तादर्थ्ये चतुर्थी वाच्या' इत्यत्र 'तादर्थ्यशब्द उपकार्योपकारकभावपरः' इति कृष्णपण्डिताद्युक्तेः अहल्यायाश्च भोग्यतया जारोपकारकत्वाद्यथोक्तवार्तिकात् चतुर्थी तथा मुक्तेरपि जन्यत्वेन साधनोपकार्यतया तत्र चतुर्थीत्यर्थः । नच सम्बन्धस्य द्विष्ठत्वात् 'जार' इत्यादौ चतुर्थी किं न स्यात्? इति वाच्यम् । षष्ठीवद्विशेषणात् तदुपपत्तेः । यद्वा 'चतुर्थ्यर्थे बहुलं च्छन्दसि' इत्यत्र 'षष्ठ्यर्थे चतुर्थी वाच्या' इति यद्वार्तिकं तेनात्र चतुर्थीति दिक् ॥ ३१-३२ ॥

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

## भाष्यम्

**एवं चेत् किमिति ते मतं नानुतिष्ठन्ति लोकाः? इत्यत आह– सदृशमिति ॥ प्रकृतिः पूर्वसंस्कारः ॥ ३३ ॥**

भावप्रदीपिका (प.टी.)– ननु यदि त्वन्मतानुष्ठाने मोक्षो वैपरीत्ये नाशः, तर्हि त्वन्मतं कुतः सर्वेऽपि नानुतिष्ठन्ति? अतः प्रशंसामात्रमेतदित्याशङ्क्य, उत्तरत्वेन श्लोकमवतार्य व्याचष्टे– **एवमिति** ॥ ३३ ॥

भावप्रकाशिका (न.टी.)– ननूक्तलक्षणं कर्म, ज्ञानद्वारा मुक्तिसाधकत्वादवश्यानुष्ठेयमन्यथाऽनर्थोऽपि चेत्, किमिति सर्वो जनस्ते मतं नानुतिष्ठन्ति ? अतः स्वमतप्रशंसामात्रमेतदिति भावेनाशङ्क्य, तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे– **एवं चेदिति** ॥ पूर्वसंस्कारादेव प्रवर्तते । न तु फललोभादनर्थभयाद्वा निगृहीत इति भावः ॥ ३३ ॥

प्रमेयदीपिका (ज.टी.)– 'सदृशम्' इति श्लोकस्य सङ्गतिर्न प्रतीयते । अतस्तामाह– **एवं चेदिति** ॥ यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथा नाश इत्यर्थः । मूलप्रकृतेरेकत्वात् कथं 'स्वस्याः' इति प्रातिस्विकत्वमुच्यत इत्यत? आह– **प्रकृतिरिति** ॥ तत्कार्यौ रागद्वेषावुपलक्ष्येते ॥ ३३ ॥

श्लोकः ३३

**भावबोधः** (र.टि.)– स्वकीयपूर्वसंस्कारस्यापि साक्षाच्चेष्टकत्वासम्भवात् 'रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्' इत्युत्तरग्रन्थानुरोधाच्चाह - **तत्कार्याविति** ।। ३३ ।।

**भावदीपः** (रा.टि.)– 'ये' इत्यादि श्लोकद्वयार्थमनुवदति– **यदीति** ।। रागद्वेषयोरेव स्वरूपसतोः सर्वचेष्टाहेतुत्वा-दुत्तरश्लोकानुसाराच्चाह– **तत्कार्यौ रागद्वेषाविति** ।। ३३ ।।

**भावरत्नकोशः** (सु.टि.)– 'एवं चेत्' इति भाष्यम् अनन्तरातीतश्लोकद्वयार्थानुवाद-रूपमिति दर्शयति– **यदीति** ।। ननु 'प्रकृतिं स्वात्मसंश्लिष्टाम्', 'अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विके स्थिते' इति भागवततात्पर्यवचने प्रकृतेः प्रातिस्विकत्वावगमात् कथं स्वकीयत्वा-क्षेपः? इत्यत उक्तम्– **मूलेति** ।। दुष्टप्रकृतेः प्रातिस्विकत्वेऽपि मूलप्रकृतेरेकत्वाद् युज्यते शङ्का इति । पूर्वसंस्कारस्यापि साक्षाच्चेष्टकत्वासम्भवात् 'रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्' इति वक्ष्यमाणानुरोधाच्चाह– **तत्कार्याविति** ।। संस्कारशब्दितप्रकृतिकार्याविति लक्षणाबीज-सम्बन्धोक्तिः ।

**गीताक्षरार्थस्तु**– यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथा नाशः, तर्हि किमिति ते मतं नानु-तिष्ठति लोक इत्यत उच्यते– **सदृशमिति** ।। प्रकृतेः पूर्वसंस्कारस्य तत्कार्यरागद्वेषयोरिति यावत् । सदृशम् अनुगुणं यथा तथा चेष्टते कर्म करोति । ज्ञानवानपि भगवन्मतकरणाकरणयोः इष्टानिष्ट-ज्ञानवानपि, किमु अज्ञ इत्यपिशब्दः । मनोनिग्रहे स्वभावानुगचेष्टोपरतिः स्यादित्यत उक्तम्– **प्रकृतिं स्वभावमिति** । भूतानि प्राणिनः । तथा च मनआदीन्द्रियनिग्रहः किं करिष्यति ? न स्वभावानुगुणव्यापारोपरतिं प्रति कारणमिति ।। ३३ ।।

**भावदीपिका** (श्री.टि.)– ।। **नाश इति** ।। 'विद्धि नष्टान्' इत्युक्तेरिति ध्येयम् । पूर्व-संस्कारस्यापि साक्षाच्चेष्टकत्वासम्भवाद् 'रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्' इत्युत्तरग्रन्थानुरोधाच्चाऽह– **तत्कार्येति** ।। गीतायाम्– 'सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि' इत्युक्तं तद्युक्तम् । सम्यग् मनोनिग्रहे प्रकृत्यनुगतचेष्टोपरतिः स्यादित्यत उक्तम् – 'प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति' इति । अत्र सर्वत्र मनोनिग्रहः निग्रहशब्दार्थ इत्यव-धेयम् । यथोक्तं तात्पर्यटीकायाम् – मनोनिग्रहे स्वभावानुगतचेष्टोपरतिः स्यादित्यत आह– **स्वभावमिति** ।। 'स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति' इति तात्पर्यम् । अनेन 'सदृशम्' इति व्याख्यातं भवतीति ।। ३३ ।।

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

## भाष्यम्

**तथाऽपि शक्तितो निग्रहः कार्यः । निग्रहात् सद्यः प्रयोजनाभावेऽपि भवत्येवातिप्रयत्नत इत्याशयवानाह– इन्द्रियस्येति ॥ तथा ह्युक्तम्–**

'संस्कारो बलवानेव ब्रह्माद्या अपि तद्वशाः ।
तथाऽपि सोऽन्यथा कर्तुं शक्यतेऽतिप्रयत्नतः ॥' इति ॥ ३४ ॥

भावप्रदीपिका (प.टी.)– ननु यदि पूर्वसंस्कारादेव प्रवृत्तिर्न फलेच्छया, स च संस्कारश्चेद्बलवान्, तर्हि व्यर्थः पुरुषप्रयत्न इत्याशङ्क्य, उत्तरश्लोकमवतारयति– **तथाऽपीति** ॥ श्लोकद्वयार्थे प्रमाणमाह– **संस्कार इति** ॥ ३४ ॥

भावप्रकाशिका (न.टी.)– ननु यदि निग्रहस्य पूर्वसंस्कारानुसारिप्रवृत्त्यन्यथाकरणसामर्थ्याभावः । तर्हि स्वोक्तकरणाकरणयोरर्थानर्थादिकथनादिवैयर्थ्यं स्यादित्याशङ्क्य, तत्परिहारायोत्तरं श्लोकमवतार्य व्याचष्टे– **तथाऽपीति** ॥ ('सदृशम्' इत्यादि) श्लोकद्वयोक्तार्थे प्रमाणमाह– **तथा हीति** ॥ अतो येऽतिप्रयत्नेन निगृहीतेन्द्रियास्त एव मे मतमनुतिष्ठन्तीत्यर्थः ॥ ३४ ॥

प्रमेयदीपिका (ज.टी.)– 'इन्द्रियस्य' इत्यस्य सङ्गतिमाह– **तथाऽपीति** ॥ एवं तर्हि **'मयि सर्वाणि कर्माणि'**(३.३०) इति विधानं फलकथनं च व्यर्थमित्याशङ्क्येति भावः ॥ यद्यपि **'प्रकृतिं यान्ति भूतानि'** (३.३३) इति निग्रहोऽकिञ्चित्करः । तथाऽपि व्याहतमेतदुच्यत इत्यत उक्तम्– **निग्रहादिति** ॥ 'निग्रहात्' इत्याशयवान् तथाऽपि इत्याहेति **योजना** ॥ अत्राऽगमसम्मतिमाह– **तथा हीति** ॥ ३४ ॥

भावबोधः (र.टि.)– ॥ **व्याहतमिति** । निग्रहः किं करिष्यतीत्यनेन तयोर्न वशमागच्छेदित्येतद्व्याहतमित्यर्थः । अत एव शक्तितो निग्रहः कार्य इत्यस्य व्याहतिप्रदर्शनार्थमेव । निग्रहोऽकिञ्चित्कर इति प्रागुक्तम् ॥ ३४ ॥

श्लोकः ३४

**भावदीपः (रा.टि.)**– ॥ **एवंतर्हीति** ॥ निग्रहस्य कार्याक्षमत्व इत्यर्थः ॥ **व्याहतमेतदिति** ॥ **तथाऽपि** निग्रहस्याकिञ्चित्करत्वेऽपि शक्तितो निग्रहः कार्य इत्येतद्व्याहतम् । निग्रहस्याकिञ्चित्करत्वे तदकारणस्यैव युक्तत्वादिति भावः ॥ **निग्रहादित्याशयवानिति** ॥ एतेन निग्रहस्य कालान्तरे किञ्चित्करत्वोक्तेर्न व्याहतिरिति भावः ॥ **तथाऽपीति** ॥ तात्कालिकेऽकिञ्चित्-करत्वादिति भावः । द्वित्वाभावेऽपीत्यर्थः ॥ ३४ ॥

**भावरत्नकोशः (सु.टि.)**– एवं तर्हि 'प्रकृतिं यान्ति भूतानि' (३.३३) इति प्राणिमात्रस्य पूर्वसंस्कारशब्दितस्वभावानुगचेष्टकत्वे । **विधानं** संन्यासयुद्धादिस्वविहितकर्मणः । **फलकथनं** 'ये मे मतम्' (३.३१) इत्यादिना । स्वयमस्वातन्त्र्यादिति भावः । 'तथाऽपि' इति भाष्यं संयोजयति– **यद्यपीति** ॥ **व्याहतमेतदिति** ॥ शक्तितो निग्रहः कार्य इत्येतत् 'निग्रहः किं करिष्यति' इत्यनेन विप्रतिषिद्धमित्यर्थः । अकिञ्चित्करत्वेनाकर्तव्यतया सिद्धस्य कर्तव्यत्वाभिधानं कथं न व्याहतमिति भावः । अन्ये तु 'किं करिष्यति' इत्यनेन 'तयोर्न वशमागच्छेत्' इत्येतद् व्याहतमित्यर्थ इत्यप्याहुः । व्याहतिपरिहाराय भाष्यं योजयति– **निग्रहादित्याशयवानिति** ॥ **निग्रहात्** स्वसंस्कारानुगचेष्टस्य जन्तोः सद्यः प्रयोजनादर्शनेऽपि भवत्येवातिप्रयत्नान्निग्रहाभ्यासस्य संस्कारशक्तिशैथिल्यापादकत्वेन कालान्तरे प्रयोजनम् **इत्याशयवान्** ॥ 'तथाऽपि निग्रहः कर्तव्य इत्याह' इति योजने व्याहतिः परिहृता भवतीति भावः ।

॥ **अत्र** मनोनिग्रहस्यातिप्रयत्नापादितस्य प्रकृतिशक्तिविघटकत्वमतीत्यत्र । 'सदृशम्' इत्यादिश्लोकद्वयार्थे प्रमाणमाह– तथाहि' इति तु प्राचीनटीका । यद्यपि प्राणिनः प्रकृतिशब्दितसंस्कारपरतन्त्राः, तथाऽपि 'संस्कारः' इति तत्कार्यभूतौ रागद्वेषौ लक्षणया ग्राह्यौ । ब्रह्माद्याः अतद्गुणसंविज्ञानबहुव्रीहिणा रुद्राद्या देवा यद्यपि तद्वशाः कामक्रोधनियामकदैत्यदूषिताः कदाचित्, तथाऽपि स संस्कारः अतिप्रयत्नतः भगवत्प्रसादसम्पादनानुकूलान्महाप्रयत्नाद् अन्यथाकर्तुं परिभावयितुं शक्य इति प्रमाणार्थः । एतच्च योग्यजनविषयम् । अयोग्यानां दुस्स्वभावस्य कदाऽपि विपर्यासाभावादिति **विवृतिकृतः** ॥ ३४ ॥

**गीताक्षरार्थस्तु**– यद्यपि प्रकृतिं यान्ति भूतानीति निग्रहोऽकिञ्चित्करः, तथाऽपि शक्तितो निग्रहः कार्य इत्युच्यते– **इन्द्रियस्येति** ॥ इन्द्रियस्येन्द्रियस्य सर्वेन्द्रियाणाम् अर्थे शब्दादिरूपे विषये इष्टे रागः अनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषाववश्यम्भाविनौ । प्राधान्याद्

द्वयोरुक्तिः । द्वेषशब्दो मदमात्सर्याद्युपलक्षणमिति वक्ष्यति । षड्वर्गवशं तदधीनतां न गच्छेत् । कुतः ? यतः तौ श्रेयोऽर्थिनः पुंसः परिपन्थिनौ श्रेयोविघ्नकर्तारौ अत इति ॥ ३४ ॥

**भावदीपिका (श्री.टि.)**– ॥ **एवं तर्हीति** ॥ संस्कारस्य बलवत्त्व इत्यर्थः । तथा च विधानं फलकथनं च व्यर्थमेव। संस्कारस्य बलवत्त्वात् । पूर्वदुःसंस्कारवशेन त्वदुक्तस्य पराभवसम्भवादिति भावः ॥ **निग्रहोऽकिञ्चित्कर इति** । सम्पादितस्यापि मनोनिग्रहस्य पूर्वदुःसंस्कारवशेन तिरस्कारसम्भवान्मनोनिग्रहो व्यर्थ इत्यर्थः । **अतिप्रयत्नः** श्रवणादिरूपः ॥ **व्याहतमिति** ॥ निग्रह्याकिञ्चित्करत्वेऽपि निग्रहः कार्य इति व्याहतमित्यर्थः । **निग्रहादित्यादीति** ॥ **निग्रहात्** सद्यः प्रयोजनाभावेऽपि भवत्येवातिप्रसयत्नत **इत्याशयवान्** तथाऽपि शक्तितो निग्रहः कार्य इत्याहेति योजना द्रष्टव्या । रागद्वेषादिजयेन सद्यो मोक्षादिप्रयोजनाभावेऽपि श्रवणादिरूपमहाप्रयत्नेन भवत्येवेत्याशयेन प्रकृतेर्बलवत्त्वान्निग्रहो यद्यप्यकिञ्चित्करः । तथाऽपि शक्तितो निग्रहः कार्य एव। तदनन्तरं महाप्रयत्नेन पूर्वसंस्कारस्याप्यन्यथाभावोपपत्तेरिति भाष्यार्थः ।

॥ **अत्रेति** ॥ संस्कारस्य बलवत्त्वे बलवतोऽपि तस्यातिप्रयत्नेनान्यथा कर्तुं शक्यत्वे चेत्यर्थः । प्रमाणे 'तथाऽपि' इत्यादिकं ब्रह्मेतरदेवादिसर्वसज्जनविषयम् । दैवाद् देवादिसज्जनानां दुःसंस्कारवशेन ज्ञानादितिरोभावे सति महाप्रयत्नेन तस्यान्यथाकरणदर्शनात् । तथा हि । स्वर्गलोके युधिष्ठिरो रुद्रपत्न्याद्युद्रिक्तां द्रौपदीं दृष्ट्वा पूर्वसंस्कारवशात् स्प्रष्टुमियेष । तदनन्तरं शक्रेण सम्यक् स्वरूपोद्बोधनेन तथा यमधर्मालिङ्गनेन च सा वासना नाशिता । यथोक्तं महाभारततात्पर्यनिर्णये–

'स्प्रष्टुं च संस्कारवशादियेष निषिध्य तं प्राह सुराधिराजः ।' (३२-१०७)

इत्याद्युक्तम् । तथा–

'इतीरितं तं प्रतिसन्निवृत्तं विनाशयन्मानुषवासनां स्वयम् ।
समाश्लिषच्छुद्धतनुः स्तनोत्थो धर्मो हरेः सोऽभवदाशु तत्समः ॥' (३२-११३) इति ।

अयोग्यानां तु पूर्वसंस्कारो महता प्रयत्नेन नान्यथयितुं शक्यत इत्यवधेयम् ॥ ३४ ॥

श्लोकः ३४

**भावप्रकाशः (कृ.टि.)**– ॥ **मूलप्रकृतेरिति** ॥ ननु 'प्रकृतिं स्वात्मसंश्लिष्टाम्' इति प्रथमस्कन्धतात्पर्योक्तेः दुष्टप्रकृतेः प्रातिस्विकत्वावगमात् कथमेकत्वम्? इत्यतो 'मूल' इत्युक्तम्। एतेन 'न केवलमनुस्यूता किन्तु प्रातिस्विकी चास्ति' इत्युग्भाष्यटीकाविरोधोऽप्य-पास्तः । तस्या मूलप्रकृतिदुष्टप्रकृतिरूपव्यक्तिद्वयविषयत्वादिति । पूर्वसंस्कारस्यापि साक्षा-च्चेष्टकत्वासम्भवात् 'रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्' इत्युत्तरग्रन्थानुरोधाच्चाह – **तत्कार्याविति** ॥ **व्याहतमिति** ॥ 'निग्रहः किं करिष्यति' इत्यनेन 'तयोर्न वशमागच्छेत्' इत्येतद्व्याहतमित्यर्थः । अत एव 'शक्तितो निग्रहः कार्यः' इत्यस्य व्याहतिप्रदर्शनार्थमेव निग्रहोऽकिञ्चित्कर इति प्रागुक्तम् ॥ ३४ ॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

## भाष्यम्

**तथाप्युग्रं युद्धकर्मेत्यत आह– श्रेयानिति ॥**

भावप्रदीपिका (प.टी.)– ननु ममाधिकारिकत्वात् युद्धस्य ज्ञानसाधनत्वेऽपि, न तत्र मां नियोजय । तत्र रागाद्वेषसम्भवात्, अतोऽज्ञानसम्भवात् । अतो ज्ञानसाधन-समावेशत्व एव नियोजयेत्याशङ्क्य, श्लोकमवतारयति– **तथाऽपीति** ॥

भावप्रकाशिका (न.टी.)– ननु मा भूद्बहूनां भगवन्मताननुष्ठानान्यथानुपपत्त्या 'ये मे' इत्यादिवाक्ययोः तन्मतप्रशंसामात्रपरत्वम् । किन्तु तन्मतानुष्ठानाननुष्ठानादिना भाविफल-सङ्कीर्तनात्मकत्वमेव । तथाऽप्युग्रत्वाद् युद्धकर्मणः स्यातामेव रागद्वेषौ तत्कर्तुः । द्वेष-शब्दस्तु लोभादीनामप्युपलक्षकः । अतो 'युद्ध्यस्व' इत्युक्त्वा 'तयोर्न वशमागच्छेत्' इति कथमुच्यते ? इति भावेनाशङ्क्य, तत्परिहारायोत्तरं श्लोकमवतारयति– **तथाऽपीति** ॥३५॥

प्रमेयदीपिका (ज.टी.)– 'श्रेयान्' इत्यस्य सङ्गतिमाह– **तथापीति** ॥ 'ज्यायसी चेत्' (३.१) इत्यत्र द्वावाक्षेपावर्जुनेन कृतौ । तत्राद्यो 'लोकेऽस्मिन्'(३.३) इत्यादिना परिहृतः । इदानीं 'युध्यस्व विगतज्वरः' (३.३०), 'तयोर्न वशमागच्छेत्' (३.३४) इत्युक्त्या

**स्मारितं द्वितीयमाक्षेपमाशङ्क्य परिहरतीत्यर्थः । यद्यपि कर्म कर्तव्यम् । तथाऽपि उग्रम् अवर्जनीयरागद्वेषम् । 'न कुर्याम्' इति शेषः ॥ ३५ ॥**

**भावबोधः (र.टि.)– ॥ स्मारितमिति ।** यदि रागद्वेषयोर्वशं नागच्छेत्तर्हि युद्धे रागद्वेषयोरवर्जनीयत्वात्तद्युक्तत्वेन घोरे युद्धाख्ये कर्मणि किमिति मा नियोजयसीति स्मारितमित्यर्थः ॥ ३५ ॥

**भावदीपः (रा.टि.)– ॥ तथापीति ॥** तात्कालिककिञ्चित्करत्वाभावेऽपीत्यर्थः ॥ **द्वावाक्षेपाविति ॥** यत्याश्रमधर्मेषु शमदमादिषु नियोजनं विना काम्यकर्मसु किमर्थं नियोजयसीत्येकः । तत्रापि नरकहेतुकामक्रोधादिभिरुपेते घोरे युद्धाख्ये कर्मणि नियोजनमयुक्तमिति द्वितीय इति 'द्वौ'इत्युक्तम् । 'उग्रम्' इत्यनुवादः, 'अवर्जनीय' इत्यादि व्याख्या ॥ ३५ ॥

**भावरत्नकोशः (सु.टि.)– ॥ द्वाविति ।** 'कर्मणि किमिति नियोजयसि' इत्येकः । 'घोरे' इति द्वितीय इति द्वावित्यर्थः । **स्मारितमिति ।** 'युध्यस्व' इति युद्धाख्यं कर्म विदधासि । 'तयोर्न वशमागच्छेत्' (३.३४) इति निषेधसि च । विप्रतिषिद्धमेतत् । युद्धे कामक्रोधयोरवर्जनीयत्वात् । ततोऽवर्जनीयकामक्रोधत्वेन घोरे युद्धाख्ये कर्मणि मन्नियोजनमयुक्तमिति स्मारितमित्यर्थः । 'तथाऽपि' इति भाष्यं संयोजयति– **यद्यपीति ॥** 'उग्रम्' इत्यनूद्यार्थमाह– **अवर्जनीयेति ॥** 'युद्धकर्म' इत्यनन्तरं शेषमाह– **न कुर्यामिति** ॥ ३५ ॥

**गीताक्षरार्थस्तु**– यद्यपि कर्म कर्तव्यम्, तथाऽप्यवर्जनीयरागद्वेषतया घोरं युद्धाख्यं कर्म न कुर्याम् इत्यर्जुनाक्षेपः परिह्रियते– **श्रेयानिति** । स्ववर्णाश्रमोचितो धर्मः स्वधर्मः विगुणः अल्पाङ्गहीनोऽपि स्वनुष्ठितात् सर्वाङ्गसाकल्येन कृतात् परधर्मात् 'चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भव' इत्येव नियोक्तव्योऽहम् इत्यभिमताद् अन्यवर्णाश्रमोचितधर्मात् श्रेयान् प्रशस्ततरः । कुतः ? स्वधर्मे युद्धादौ प्रवर्तमानस्य निधनं मरणमपि श्रेयस्करम् । परधर्मः वर्णान्तराश्रमान्तरधर्मस्तु भयावहः निषिद्धत्वादनर्थप्रापको यत इति ॥ ३५ ॥

**भावदीपिका (श्री.टि.)– ॥ विगतज्वरः** विगतरागद्वेषः ॥ **स्मारितमिति ॥** यदि रागद्वेषयोर्वशं नाऽगच्छेत् तर्हि युद्धे रागद्वेषयोरवर्जनीयत्वाद् अवर्जनीयरागद्वेषाद्युपेततया घोरे युद्धाख्ये कर्मणि किमिति मां नियोजयसि? इति स्मारितमित्यर्थः ॥ ३५ ॥

श्लोकः ३५

भावप्रकाशः (कृ.टि.)– ॥ स्मारितमिति ॥ यदि रागद्वेषयोर्वशं नागच्छेत् तर्हि युद्धे रागद्वेषयोरवर्जनीयत्वात्तद्युक्तत्वेन घोरे युद्धाख्ये कर्मणि किमिति मां नियोजयसीति स्मारितमित्यर्थः ॥ ३५ ॥

अर्जुन उवाच–

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

## भाष्यम्

**बहवः कर्मकारणाः सन्ति । क्रोधादयः कामश्च । तत्र को बलवान्? इति पृच्छति– अथेति ॥ अथेत्यर्थान्तरम् । 'तयोर्न वशमागच्छेत्' (३.३४) इति प्रश्नप्रापकम् ॥ ३६ ॥**

भावप्रदीपिका (प.टी.)– ननु पापप्रेरकं भगवन्तं देवांश्च जानन्नर्जुनः कथं तं पृच्छति ? इत्यत आह– **बहव इति** ॥ 'क्रोधादयः' इत्यनेन पूर्वश्लोकोक्तं 'द्वेष'पदमन्योपलक्षकमित्युक्तं भवति ॥ 'अथ'शब्दस्य विवक्षितार्थमाह– **अथेति** ॥ प्रकरणान्तरस्य का सङ्गतिः ? इत्यत आह– तयोरिति ॥ ३६ ॥

भावप्रकाशिका (न.टी.)– शुभाशुभयोः प्रवर्तकमीश्वरं ब्रह्मादींश्च जानात्येवार्जुनः । केवलाशुभप्रवर्तकानपि बहून् जानाति भगवतोक्तान् क्रोधादीन् कामं च । अतस्तत्र बलवन्तमेव पृच्छतीत्याह– **बहव इति** ॥ प्रकरणविच्छेदज्ञापकः 'अथ'शब्द इत्याह– **अथेति** ॥ प्रकरणान्तरसङ्गतिबीजमाह– **तयोरिति** ॥ ३६ ॥

प्रमेयदीपिका (ज.टी.)– 'अथ केन' इत्यर्जुनप्रश्नोऽनुपपन्नः। 'तौ ह्यस्य परिपन्थिनौ' (३.३४) इति रागद्वेषयोः परिपन्थित्वस्योक्तत्वात् । नहि पापप्रयोजकत्वादन्यद्रागादेः पुरुषपरिपन्थित्वमित्यतः प्रश्नाभिप्रायमाह– **बहव इति** ॥ कारणशब्दः करोतेर्ण्यन्तात् करणे ल्युडन्तः । सच त्रिलिङ्गः । 'अयमनुमानः' इति भाष्ये प्रयोगात् । अथवा 'ण्यास-

**श्रन्थो युच्'** (पा.सू.३.३.१०७) इति **करणे युच्** । **अयं च स्त्रीलिङ्गः** । **बहवः** इत्यपि स्त्रीलिङ्ग एव। **'वोतो गुणवचनात्'** (पा.सू.४.१.४४) इति **विकल्पविधानात्** । **'कर्म'** इति पापं विवक्षितम् । द्वयोरेवोक्तत्वात् कथं 'बहवः' इत्यनुवादः? इत्यत आह– **क्रोधादय इति** ।। पूर्वं भगवता द्वेषशब्देन मदमत्सरादयोऽप्युपलक्षिताः । अरिषड्वर्ग-प्रसिद्धेः । तदेतद् विदित्वैवमनुवदतीति भावः ।

रागशब्देन कामः, द्वेषशब्देन क्रोधादयश्च त्वयोक्ता इत्यर्थः । अस्य प्रश्नस्य प्रकृते क उपयोगः? इत्यत आह– **अथेति** ।। नास्य प्रकृतेन हेतुहेतुमद्भावादिलक्षणा सङ्गतिरिति स्वयमेव सूचितमित्यर्थः ।। **'अथ'** इति शब्देनार्थान्तरमिदम् इति सूच्यते । तर्ह्यसङ्गतं न प्रष्टव्यमित्यतः सङ्गत्यन्तराभावेऽपि प्रासङ्गिकी सङ्गतिरस्तीत्याशयवान् प्रसङ्गं दर्शयति– **तयोरिति** ।। तत्रापि यो बलवांस्तं प्रति महान्तं यत्नं करिष्यामीति भावेन प्रश्नो युक्त एवेति भावः ।। ३६ ।।

**भावबोधः (र.टि.)**– ननु युच एवं ण्यन्तात् ल्युटोऽपवादकत्वात् कथं ल्युट्?इत्यत आह– **अथवेति** ।। अत्र करोतिर्ण्यन्त इति भावः ।। **विकल्पविधानादिति** ।। ङीप इत्यर्थः ।। ३६ ।।

**भावदीपः (रा.टि.)**– ननु परिपन्थित्वोक्त्या कथं पापप्रयोजकत्वलाभः? इत्यत आह– **नहीति** ।। **ण्यन्तात् करणे ल्युडिति** ।। कृधातोः स्वार्थे णिच्प्रत्यये, 'अचोऽञ्णिति' (पा.सू. ७.२.११५) इति वृद्धौ कारीति रूपे सति, ततः 'करणाधिकरणयोश्च' (पा.सू.३.३. ११७) इति करोत्यनेनेति करणे ल्युट्प्रत्यये, आद्यानुबन्धयोर्लोपे, 'युवोरनाकौ' (पा.सू. ७.१.१)इत्यनादेशे, 'रषाभ्याम्' (पा.सू.८.४.१) इति णत्वे, 'णेरनिटि' (पा.सू.६.४. ५१) इति णिलोपे, 'कारणाः' इति रूपमिति भावः ।। ल्युडन्तस्य कथं पुंलिङ्गता? इत्यत आह– **स चेति** ।। नपुंसकं पूर्वत्र प्रकृतं 'करणोधिकरणयोश्च' (पा.सू.३.३.११७) इत्यत्र 'नानुवर्तते' इति वृत्त्यादावुक्तेरिति भावः । प्रयोगं च तज्ज्ञापकमाह– **अयमिति** ।। यद्यपि 'भूवादयो धातवः' (पा.सू.१.३.१) इति सूत्रे 'कोऽसावमनुमानो नाम' इति भाष्यवाक्यम्, तथाऽपि 'अयम्' इत्यर्थानुवादः । 'कारणा' इति स्त्रीलिङ्गमिति भावेनाऽह– **अथवेति** ।। 'करोतेर्ण्यन्तात्' इत्यनुवर्तते । **ण्यास इति** ।। णान्ताद्धातोः 'आस उपवेशने' इत्यस्मात् स्त्रियां युच्प्रत्यय इति सूत्रार्थः । पूर्ववदेव प्रक्रिया ध्येया ।। **अयं च** युजन्तश्च स्त्रीलिङ्ग एवेत्यर्थः ।

श्लोकः ३६
तृतीयाध्यायतृतीयपादे 'कर्मव्यतिहारे णिच् स्त्रियाम्' (पा.सू.३.३.४३) इति प्रकृतस्त्र्यधिकारे युजो विधानादिति भावः । 'बह्वृचः' इति भाव्यमित्यत आह– **वोत इति ॥** 'उवर्णान्ताद् गुणवचनात् शब्दात् स्त्रियां ङीष् भवति' इत्युक्तेः ङीषभावपक्षे 'बहवः' इति रूपमिति भावः । ॥ **द्वयोरेवेति** ॥ प्रश्नप्रसङ्गकपूर्वश्लोके 'तयोः' इति रागद्वेषयोरेवोक्तत्वादित्यर्थः ॥ ३६ ॥

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु च कारणशब्दस्य नपुंसकलिङ्गत्वात् कथं पुल्लिङ्गप्रयोगः? इत्यत आह– **कारणशब्दश्चेति ॥** करोतेः णिचि 'अचो ञ्णिति' इति णित्त्वाद् वृद्धौ रपरतायां च कारिशब्दे निष्पन्ने कारयत्यनेनेति कारण इति करणे ल्युट्भावे 'करणाधि-करणयोश्च' इति ल्युटि तस्यानादेशे 'णेरनिटि' इति णिलोपे कारणशब्दो निष्पन्न इत्यर्थः । अस्त्वेवं कारणशब्दनिष्पत्तिः । तावताप्युक्तशङ्कापरिहारः कथम्? इत्यतो 'भावे ल्युडन्त' इति लिङ्गानुशासनीयसूत्रे भावे विहितो यो ल्युट्प्रत्ययः; तदन्तः शब्दो नपुंसकलिङ्गो भवती-त्यभिधानात् । क्षीरस्वामिनापि 'यदनान्तमकर्तरि । अकर्तरि यदनप्रत्ययान्तं तत्तृतीयम् । साध्यते अनेनेति साधनम् । अधिक्रियन्ते तस्मिन्निति अधिकरणम्' इति अकर्तरि अनान्तस्य नपुंसकत्वमुपपाद्य कथम् ? आस्थानम् आस्थानी करणं करणी । प्रमाणं प्रमाणी । अधि-करणम् अधिकरणी, राजधान्यं राजधानी' इत्यादिना अनप्रत्ययान्तस्य नपुंसकत्वनियमानु-पपत्तिमाशङ्क्य ल्युटष्टित्त्वात् 'कृत्यल्युटो बहुलम्' इति अनन्तानां त्रिलिङ्गत्वस्मरणात् च युक्तो लिङ्गत्रयेऽपि प्रयोगः । अत एव राजभोजनी क्षैरेयी राजभोजनः शालिः राजभोजनं भक्तम् । पूरणी पूरणः पूरणम् । गोदोहनं घटी । गोदोहनी घटः । गोदोहनं भाण्डमिति तत्रतत्र प्रयोग इत्यादिना करणे ल्युडन्तस्य त्रिलिङ्गत्वाध्यवसायात् न तस्य नपुंसकत्वनियम इत्याह– **स च त्रिलिङ्ग इति ॥**

उक्तार्थेऽभियुक्तप्रयोगं प्रमाणयति– **अयमनुमान इति** । अनुमीयते अनेनेति करणे ल्युडन्तानुमानशब्दस्य भाष्ये पुंलिङ्गेन निर्देशादित्यर्थः । अस्त्वन्यत्र प्रयोगदर्शनात् करणे ल्युडन्तस्यापि पुंलिङ्गत्वम् । करणे ल्युडन्तकारणशब्दस्य लिङ्गान्तरे प्रयोगादर्शनात् नपुसंकत्व-मेवेत्यत आह– **अथवेति ॥** अत्र सूत्रे स्त्रियां क्तिन् इत्यतः स्त्रियामित्यनुवर्तते । तथा च ण्यन्तेभ्यः आस– श्रन्थ इत्येताभ्यां च स्त्रियां युच्प्रत्ययो भवतीति सूत्रार्थः । तथा च 'कारयति अनेनेति कारण' इति करणे स्त्रियां युचि तस्यानादेशे कारणशब्दः स्त्रीलिङ्ग एव निष्पद्यत

इत्याह– **अयं चेति** ॥ ननु तथाऽपि बहुशब्दस्य तद्विशेषणतया बह्व्यः कर्मकारणाः सन्तीति वक्तव्यम् । 'बहवः' इति पुल्लिङ्गानुपपत्तिस्तदवस्थैवेत्यत आह– **बहव इत्यपीति** ॥ तदुपपादयति– **वोतो गुणवचनादिति विकल्पविधानादिति** । सूत्रार्थस्तु गुणमुक्तवान् गुणवचनः कृत्यल्युटो बहुलमिति भूते कर्तरि ल्युट् । स पुनः यः प्राग्गुणमभिधाय पश्चात् मतुपो लोपात् अभेदोपचाराद्वा द्रव्यमभिधत्ते स वेदितव्यः । तस्मादुकारान्तात् प्रातिपदिकात् स्त्रियां वा ङीप् भवतीति । ततश्च बहुशब्दोऽपि बहुत्वं गुणमभिधाय पश्चात् द्रव्यमभिधत्ते इति गुणवचनो भवतीति । तस्मादुवर्णान्तात् बहुशब्दात् विकल्पेन ङीष्प्राप्तौ पट्वी पटुः, मृद्वी मृदुः इत्यादिवत् बह्वी बहुः इत्युभयथापि प्रयोगोपपत्तिरिति भावः ।

ननु गुणो नाम कः? यद्वाचित्वेन बहुशब्दात् ङीष् विकल्पित इति चेत् । उच्यते ।

'सत्वे निविशतेऽपैति पृथक् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः' इति ॥

सीदन्त्यस्मिन् गुणक्रियाजातय इति सत्त्वं द्रव्यम् । तत्र यो निविशते समवैति स गुणः । एतच्च सत्त्व एव निविशते इति सावधारणं व्याख्येयम् । वाक्यस्य व्यवच्छेदफलत्वात् । तेन च सत्ता व्यवृत्तिः । सा हि न केवलं द्रव्ये वर्तते । अपि तु द्रव्यगुणकर्मसु । तर्हि द्रव्यत्वं द्रव्य एव वर्तत इति तत्रातिव्याप्तिरित्यत उक्तम् । अपैति । अपगच्छति । अर्थात् सत्त्वादेव । यथा पीततायां जातायाम् आम्लादेः नीलता । नैवं द्रव्यत्वं द्रव्यादपैति । एवं तर्हि गोत्वं स्वरितमित्यादौ वर्तते अश्वादेश्चापैतीति तत्रातिव्याप्तिरित्यत उक्तं– पृथग्जातिषु दृश्यत इति । गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते । गुणस्तु दृश्यते यथा अभ्रे दृष्टा नीलता तृणादिष्वपि दृश्यते । एतेन समुदितेन सकलजातिव्यवच्छेदः । एवं तर्हि कर्म द्रव्य एव वर्तते ततः अपैति पृथक् जातिषु दृश्यते चेति तत्रातिव्याप्तिः इत्यत उक्तम् । आधेयश्चाक्रियाजश्चेति । आधेयः उत्पाद्यः । यथा पुष्पयोगाद्गन्धो वस्त्रे । अक्रियाजो नित्यः यथा आकाशादौ महत्त्वादिः । कर्म तु न तथा उत्पाद्यानुत्पाद्यम् । किन्तु उत्पाद्यमेव । एवं तर्हि द्रव्येऽतिव्याप्तिः । तद्धि द्रव्य एवारम्भके वर्तते तद्विनाशे अपैति च । पृथक् जातिषु अवयवेषु दृश्यते । निवर्त्यानिवर्त्यरूपं च । अवयविनो निवर्त्यत्वात् । आकाशादेश्चानिर्त्यत्वादित्यत उक्तं– सो सत्वप्रकृतिरिति ॥ गुणो न द्रव्यस्वभावः द्रव्यं तु द्रव्यस्वभावमिति न तत्रातिव्याप्तिः ।

श्लोकः ३६

ननु च पूर्वार्धो व्यर्थः । उत्तरार्धेनैव सर्वजातिव्यावृत्तेः । नित्यत्वेन तासाम् उत्पाद्य-स्वभावत्वाभावात् । असति पूर्वार्धे यथा तैजसपरमाणुरूपं पाक्यद्रव्यरूपं च उत्पाद्यानुत्पाद्य-स्वभावमिति द्वयोरपि गुणत्वम् । न तथा पाक्यद्रव्यरूपं जातिश्चेति मिलितमुत्पाद्यानुत्पाद्य-स्वभावमिति जातिरपि गुणः स्यात् । अतः पूर्वार्धेन जातिव्यावृत्तिः । तथा चैतादृशबहुत्व-रूपगुणाभिधायित्वात् युक्तं तस्माद्विकल्पेन ङीप् विधानमिति सकलमकलङ्कम् ॥

**भावरत्नकोशः (सु.टि.)**– परिपन्थित्वोक्तावपि पापाचरणप्रयोजकप्रश्नः कथमनुपपन्नः? इत्यत आह– **न हीति** ॥ 'हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्' इत्यमरे कारणशब्दस्य क्लीबत्वाभिधानात् कथमत्र 'कारणाः' इति पुल्लिङ्गत्वम्? इत्यत आह– **कारणशब्द इति** ॥ **करोतेरिति** ॥ डु कृञ् करण इति धातोर्णिच्प्रत्यये, 'अतो ञ्णिति' इति वृद्धौ 'कारि' इति रूपे, ततः 'करणाधिकरणयोश्च' इति कार्यते एभिरिति करणे ल्युटि, 'युवोरनाकौ' इति युकारस्यानादेशे, 'अट्कुप्वाङ्नुम्' इति णत्वे 'णेरनिटि' इति णिलोपे च, 'कृत्तद्धित' इति प्रातिपादिकत्वेन जसि च, 'कारणाः' इति रूपम् । पापनिष्पत्तिप्रयोजका इति तदर्थ इति भावः । ततोऽपि कथं पुल्लिङ्गत्वमित्यत आह– **स चेति** ॥ 'करणाधिकरणयोर्ल्युट् च' इति करणेऽधिकरणे च विहितो यो ल्युट्प्रत्ययः तदन्तशब्दः परवल्लिङ्गो भवतीति लिङ्गानुशासने स्मरणात्, तद्वृत्तौ 'इध्मः प्रवृश्च्यतेऽनेनेतीध्मप्रव्रश्चनः परशुः । इध्मप्रव्रश्चनी छुरिका । इध्म-प्रव्रश्चनं शस्त्रमिति लिङ्गत्रयोदाहरणात् । 'भावे ल्युट्, स नपुंसके । अन्यत्र त्वभिधेयवशाद-नियतलिङ्गः' इति कैयटवचनाच्चेति भावः ।

'यदनान्तमकर्तरि' इत्यमरवचनमपि कर्तृपदं कारकमात्रोपलक्षकम् । कारकव्यतिरिक्ते भावमात्रे विहितम् अनान्तं नपुंसकलिङ्गं भवति' इति हरिदीक्षितेन व्याख्यातमिति न तेनापि नपुंसकत्वं शङ्काऽर्हम् । उदाहृतं च तेनैव 'इध्मप्रव्रश्चनः पलाशशातनः' इति ।

ननु शास्त्रसद्भावेऽपि न पुंलिङ्गत्वमभ्युपगन्तुं शक्यम् । प्रयोगाभावात् । भावे वा तस्याभियुक्तप्रयोगत्वनिर्णयायोगात् । अत एव 'वृन्दारका दैवतानि पुंसि वा' इत्यनुशासने सत्यपि न दैवतशब्दः पुंलिङ्गः स्वीक्रियते । 'प्रयोगशरणा हि वैयाकरणाः' इत्यतोऽभि-युक्तप्रयोगं दर्शयति– **अयमनुमान इति** । 'कोऽसावनुमानो नाम' इति 'भूवादयः' इति सूत्र महाभाष्ये पुंलिङ्गस्य प्रयोगादित्यर्थः । अयमिति तु 'स चायं त्रिलिङ्गः' इति पूर्वेणैवान्वितम् ।

'अयमित्येतदसावित्यस्यार्थानुवादः' इत्यपि आहुः । 'श्रुतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्' इति वैदिकप्रयोगानुदाहरणं तु 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति व्यत्ययशास्त्रेण छन्दसि लिङ्ग-व्यत्यय इति यः कोऽपि परिहर्तुमुत्सहेतापीत्यभिप्रायेण ।

नन्वस्तु यत्र प्रयोग उपलभ्यते तत्र त्रिलिङ्गत्वम् । हेतुवाचिकारणशब्दस्तु नपुंसकलिङ्ग एव । 'कारणं करणे हेतुवधयोश्च नपुंसकम्' इति विशेषोक्तेः, 'कारणं हेतुवधयोः' इति कविदर्पण-वचनात्, 'क्लीबं तु कारणं हेतौ' इति केशववचनाच्च । लिङ्गानुशासनं तु हेत्वर्थकारण-शब्दव्यतिरिक्तशब्दविषयम् । महाभाष्यप्रयोगश्च मन्यतेर्घञि निष्पादितः कैयटे । घञन्तश्च । 'घञबन्तश्च पुंसि' इति लिङ्गानुशासने पुंलिङ्गोऽनुशिष्टः । अयं च ल्युडन्तो व्याख्यात इत्यनुशयादाह– **अथवेति** ॥ ण्यन्तेभ्यो धातुभ्यः, आस उपवेशने, 'श्रन्थ विमोचनहर्षणयोः' इत्येताभ्यां च, स्त्रियां युच्प्रत्ययो भवतीति सूत्रेण करोतेर्ण्यन्तात् करणे युच्प्रत्यये, अनादेशे च कारणेति रूपमित्यर्थः । उदाहृतं च वृत्तिकृता 'कारणा हारणा आसना श्रन्थना' इति । एतावांस्तु विशेषः । उदाहृताः शब्दा भावार्थकयुच्प्रत्ययान्ताः । अयं तु करणार्थकयुजन्त इति । तदिदमुक्तम् – **करणे युजिति** ॥

एवमपि कारणशब्दस्य कथमनपुंसकत्वमित्यत आह– **अयं चेति** ॥ युच्प्रत्ययान्तश्च सर्वोऽपि शब्दः स्त्रीलिङ्गः । 'स्त्रियां क्तिन्' इत्यतः स्त्रियामित्यनुवृत्तेरित्यर्थः । तर्हि 'बह्व्यः' इति भाषणं स्यात् न तु 'बहवः' इति । तत्राह– **बहव इत्यपीति** ॥ 'शब्दः' इति शेषः । **वोत इति** ॥ गुणवचनादुकारान्तात् प्रातिपदिकात् स्त्रियां वा ङीष् भवति । पट्वी पटुः, मृद्वी मृदुरिति सूत्रार्थः ।

यत्त्वत्र 'बह्वादिभ्यः' इत्यनन्तरसूत्रे बह्वादिभ्यः स्त्रियां वा ङीष् भवति । बह्व्यः बहवः इति बहुशब्दादेव ङीषो विकल्पेन विहितत्वात्, 'बह्वादिभ्यश्चेति विकल्पविधानात्' इति वक्तव्यम्, न तु 'वोत इति' इति । तन्न । बहुशब्दो गुणवचन एव । तस्येह पाठ उत्तरार्थः' इति वृत्तिकार-वचनेन बहुशब्दस्य गुणवचनत्वादेव ङीषो वाच्यत्वात् । 'बह्वादिभ्यः' इत्यत्र बहुशब्दग्रहणं न कर्तव्यमिति मनोरमायां प्रत्याख्यानाच्च । अतो 'वोतः' इत्येव युक्तम् । ननु 'बहवः' इत्यादि-भाष्यम् अर्जुनप्रश्नस्याभिप्रायवर्णनार्थं प्रवृत्तम् । प्रश्नवाक्ये च 'केन प्रयुक्तः पापं चरति' इति पापप्रयोजकमेवावगम्यते । अतः 'पापकारणाः' इति भाषणीयमित्यत आह– **कर्मेति पापमिति** ॥

श्लोकः ३६

**द्वयोरेव** 'रागद्वेषौ व्यवस्थितौ' इति रागद्वेषयोरेव । **मदमत्सरादयः** मदमत्सरलोभमोहाः । लक्षणायां बीजमाह– **अरीति** ॥ 'षड्वर्गनिग्रहनिरस्तसमस्तदोषाः' (द्वादशस्तोत्रम् ७.४), 'यतो वसन्ते सह षट् सपत्नाः' (भाग.५.१.१७) इत्यादौ कामक्रोधादिरूपषड्वर्गस्याप्यरित्वापरपर्यायपरिपन्थित्वप्रसिद्धेः अत्र द्वयोरेवोक्तेः परिपन्थित्वान्वयोऽनुपपन्न इत्यन्वयानुपपत्त्या षड्वर्गगतत्वसम्बन्धेन च युक्तमुपलक्षणमिति भावः ।

**अनुवदति** अर्जुनः । अनुक्तस्य कथमनुवादः ? इत्यत आह– **रागशब्देनेति** ॥ **द्वेषशब्देनेति** ॥ अयं भावः रागद्वेषशब्दयोर्द्वयोरपि न लक्षकत्वम् । एकेनैव लक्षणोपपत्तेः । रागशब्दे लक्षणाऽस्त्विति न युक्तम् । प्रथमोपस्थितत्वात् । अत एकस्यैव लक्षकत्वे वाच्ये चरमश्रुतद्वेषशब्दस्यैव तद् युक्तम् । अत एव मीमांसकैः 'यजमानः प्रस्तरः' इत्यत्र प्रस्तरशब्द एव अमुख्यवृत्तिरङ्गीकृता तत्सिद्धिपेटिकायाम् । गीतायां प्रथमस्यापि रागशब्दितकामस्य भाष्ये क्रोधाद्यनन्तरमुपादानं तु पापप्रयोजकेषु सर्वेष्वपि प्राबल्याभिप्रायेण । न चैवं 'को बलवान्' इति प्रश्नानुपपत्तिः, कामप्राबल्यस्य निश्चितत्वादिति वाच्यम् । कामे प्राबल्यं ज्ञातवानस्मि । त्वं तु ब्रूषे क्रोधादयोऽपि काम इव पापप्रयोजका इति । तत्र केन प्रयुक्तः पापं चरति? इति प्राप्तलोकसन्देहव्यावर्तनाय, स्वयं ज्ञातस्यापि दार्ढ्याय च, प्रश्नकरणोपपत्तेरिति ।

॥ **प्रकृते** 'मयि संन्यस्य कर्माणि' इत्यादावुक्तसेतिकर्तव्यताकवर्णाश्रमकर्मकर्तव्यतारूपे 'श्रेयान् स्वधर्मो विगुणः परधर्मो भयावहः' इति वाक्योक्ते प्रमेये । **क** उपयोगः कथमेकवाक्यत्वम् । सङ्गतेरभावादिति शङ्कितुर्हृदयम् । 'अथ' इति भाष्ये 'अथेत्येतदर्थान्तरम्' इति कथं सामानाधिकरण्यम् ? इत्याशङ्क्य शेषमाह– **अथेति शब्देनेति** ॥ 'इति'शब्दात् परतः 'शब्देन' इति, 'अर्थान्तरम्' इत्यनन्तरं 'सूच्यते' इति शेषे नोक्तशङ्काऽवकाश इति भावः । सङ्गत्यन्तराभावेऽपि प्रासङ्गिकमात्रप्रश्नेऽतिप्रसङ्ग इत्यत आह– **तत्रापीति** ॥ 'तयोर्न वशमागच्छेत्' इत्यत्र यौ द्वौ प्रस्तुतौ तत्रापि तयोरपीत्यर्थः ॥ ३६ ॥

**गीताक्षरार्थस्तु**– 'रागद्वेषौ व्यवस्थितौ' इत्यत्र रागशब्देन कामो द्वेषशब्देन क्रोधादयश्च बहवः पापहेतवः सन्तीति त्वयोक्तम् । तत्रापि यो बलवान् पापहेतुस्तं प्रति परिभवाय महान्तं प्रयत्नं करिष्यामीति भावेन प्रसङ्गसङ्गत्या को बलवानिति पृच्छ्यते– **अथेति** ॥ अथशब्देन अर्थान्तरमेतदिति सूच्यते । अयं पुरुषः पापम् अनिच्छन्नपि इत्यास्तिककामुकविशेषणम् । राज्ञा

बलान्नियोजितो भृत्य इव पापं चरन् कामादिषु केन बलवता प्रयुक्तः प्रेरितः चरति, तं ब्रूहि । वृष्णिशब्दात् 'द्व्यचः' इति ढकि वार्ष्णेय वृष्णिकुलोद्भव इति सम्बुद्धिरिति ॥ ३६ ॥

**भावदीपिका (श्री.टि.)**– ननु तत्र रागद्वेषयोः पुरुषपरिपन्थित्वमात्रमेवोक्तम् । अत्र तु 'अथ केन प्रयुक्तोऽयं पापं चरति' इति पापप्रयोजकमर्जुनेन पृच्छ्यते । न हि पापप्रयोजकत्वमेव परिपन्थित्वम् । येन प्रश्नानुपपत्तिरित्यत आह– **न हीति** ॥ ननु 'कारणाः' इति कथम्? कृञ् करणेऽस्माण्णिचि णित्त्वाद् 'अचोऽञ्णिति' इति ऋकारस्य आकार-रूपवृद्धौ तस्य रपरत्वे 'कार्' इति जाते 'ल्युट् च' इति भावे ल्युट्प्रत्यये लकारटकारयोर्लोपे 'युवोरनाकौ' इति युकारस्यानादेशे 'णेरनिटि' इत्यनेन णेर्लोपे 'कारन' इति जाते 'रषाभ्याम्' इति रेफात् परस्य नस्य णत्वे हि 'कारण' इति रूपम् । एवं च भावे ल्युडन्तस्य नित्य-नपुंसकत्वनियमात् 'कारणानि' इत्येव स्यादिति चेत्, तत्राऽह– **कारणशब्द इति** ॥ **ण्यन्तादिति** ॥ गीतायां 'केन प्रयुक्तः' इति पापप्रयोजकस्य पृष्टत्वादिति भावः ॥ **करण इति** ॥ तथा च न भावे ल्युडन्तोऽयं कारणशब्दः येनोक्तदोषः स्यात् । किं नाम? करणे ल्युट् । 'करणाधिकरणयोश्च' इति स्मरणादित्यर्थः । ततः किम्? इत्यत आह– **स चेति** ॥ करणे ल्युडन्तः शब्द इत्यर्थः ।

तत्र ज्ञापकमाह– **अयमनुमान इति भाष्य इति** ॥ महाभाष्य इत्यर्थः । अयमाशयः । ल्युटष्टित्करणसामर्थ्यात् ल्युडन्तस्य करणेऽधिकरणे च न नियमेन नपुंसकत्वमिति ज्ञायते । तथा पुंल्लिङ्गत्वं कुतः? इति चेत् । उक्तरीत्या टित्करणेन नपुंसकत्वनियमे त्याजिते प्रयोगानुसारेण पुंलिङ्गत्वस्यापि सम्भवात् । अत एव महाभाष्ये 'अयमनुमानः' इत्युदाहृतम् । लिङ्गानुशासने च 'इध्मव्रश्चनः कुठारः' इत्युक्तम् । 'करणे ल्युडन्तस्त्रिलिङ्ग इति प्रकृतत्वादेव' इत्युक्तम् । एवं च करणे ल्युडन्तः कारणशब्दः पुंलिङ्गोऽपि भवतीति 'कारणाः' इत्युपपन्नमिति ।

सांव्यावहारिकबहुप्रयोगाभावादाह– **अथ वेति** ॥ 'ण्यासश्रन्थो युच्' ण्यन्तेभ्यो धातुभ्यः आसश्रन्थशब्दाभ्यां च युच्प्रत्ययो भवतीति सूत्रार्थः । कारणा । हारणा । आसना । श्रन्थना, इत्याद्युदाहरणम् । तथा च कृञ्धातोरुक्तरीत्या णिजन्तत्वेन तदन्ताद् धातोः करणे युच्प्रत्यये चकारलोपे योरनादेशे नस्य णत्वे च कारणेति रूपम् । ततः किं प्रकृते? इत्यत आह– **अयं चेति** ॥ करणे युच्प्रत्ययान्तोऽयं कारणशब्द इत्यर्थः ।

श्लोकः ३६

ननु तर्हि 'बह्वः' इति पुंलिङ्गम्, तस्य कथं विशेषणत्वम्? 'बह्व्यः कर्मकारणाः' इति वक्तव्यत्वादित्यत आह– **बह्व इत्यपीति** ॥ स्त्रीलिङ्गत्वे नियामकमाह– **वोतो गुणवचनादिति** ॥ वा उत इति पदच्छेदः । गुणं वक्तीति गुणवचनः । गुणवचनाद् उतः उकारान्तात् प्रातिपदिकात् स्त्रियां ङीष् वा विकल्पेन भवतीति सूत्रार्थः । पट्वी पटुः, मृद्वी मृदुरित्याद्युदाहरणम् । एवं च गुणवचनोकारान्तशब्दात् ङीषो विकल्पेन विधानाद् बहुत्वसङ्ख्यारूपगुणवचनाद् उकारान्ताद् बहुशब्दाद् यदा स्त्रियां ङीष् भवति तदा ङकारषकारयोर्लोपे 'बहु ई' इति स्थिते 'इको यणचि' इत्युकारस्य वकारे 'बह्व् ई बह्वी' इति भवति । तद्बहुवचनं 'बह्व्यः' इति भवति । यदा तु स्त्रीत्वे ङीष् न भवति तदा स्त्रीलिङ्गमपि पटुर्मृदुरितिवद् बहुरित्येव भवति । तथा चोकारान्तस्त्रीलिङ्गस्य बहुशब्दस्य प्रथमाबहुवचनं 'बह्वः' इत्येव भवति । अतः 'कारणाः' इति स्त्रीलिङ्गत्वात् कारणशब्दविशेषणत्वं युक्तमिति भावः ।

'कर्मकारणाः' इत्यत्र कर्मेति सामान्येनोक्तत्वात् कामक्रोधादीनां पुण्यरूपकर्मकारणत्वस्यापि प्रसक्तौ सत्यामाह– **कर्मेतीति** ॥ **द्वयोरेवेति** ॥ रागद्वेषयोरेवेत्यर्थः ॥ **द्वेषशब्देनेति** ॥ **'रागद्वेषौ व्यवस्थितौ'** इत्यत्र **द्वेषशब्देनेत्यर्थः** ॥ **अरिषड्वर्गेति** ॥ 'तौ ह्यस्य परिपन्थिनौ' (३-३४) इति रागद्वेषयोररित्वरूपं परिपन्थित्वमुक्तम् । तत्र विशिष्य द्वयोरेवारित्वेनात्रविवक्षितत्वे विशेषज्ञापकाभावात्–

'भयं प्रमत्तस्य वनेष्वपि स्याद् यतो वसन्ते सह षट् सपत्नाः'

इत्यादौ काम-क्रोध-मद-मत्सर-लोभ-मोहाख्यारिषड्वर्गप्रसिद्ध्या मदादयोऽप्युपलक्षणतया पूर्वं ग्राह्या इत्यर्थः । **एवमनुवदीति** ॥ 'बह्वः' इत्यनुवदतीत्यर्थः । 'अथेत्यर्थान्तरम्' इति भाष्यार्थमाह– **अथेतिशब्देनेति** ॥ **सङ्गत्यन्तरेति** ॥ हेतुहेतुमद्भावादिरूपेत्यर्थः । **प्रसङ्गं** प्रसञ्जकम् । प्रश्नप्रापकमित्यर्थः । **तत्रापीति** ॥ अरिषड्वर्गेष्वित्यर्थः ॥ **यत्नमिति** ॥ 'वधाय' इति शेषः ॥ ३६ ॥

**भावप्रकाशः (कृ.टि.)**– ननु 'हेतुर्ना कारणं बीजम्' इत्यमरेण नपुंसकनिर्देशात् कारणशब्दः क्लीबः । तत्कथं पुल्लिङ्गत्वम्? इत्याशङ्क्य पुंस्त्वं समर्थयितुमाह– **कारणशब्द इति** ॥ ननु करोतेर्ल्युटि 'सार्वधातुकार्धधातुकयोः' इति गुणे 'युवोरनाकौ' इति युशब्दस्यानादेशे णत्वे

च सति करणशब्दनिष्पत्तावपि न कारणशब्द-निष्पत्तिरित्यत आह– **ण्यन्तादिति** ।। कार्यते एभिरिति व्युत्पत्तिरत्र बोध्या । ततः किम्? इत्यत आह– **स त्रिलिङ्ग इति** ।। 'करणाधि-करणयोः ल्युट्' इति लिङ्गाङ्गानुशासनसूत्रेण त्रिलिङ्गत्वोक्तेरिति भावः । नन्वप्रयोगात् त्रिलिङ्गत्वमयुक्तम् । 'प्रयोगशरणा वैय्याकरणा' इत्युक्तेरित्याशङ्क्य दिङ्मात्रप्रदर्शनाय पुल्लिङ्ग-प्रयोगं दर्शयति– **अयमनुमान इतीति** ।।

नन्वस्तु यत्र प्रयोगस्तत्र त्रिलिङ्गत्वम् । तथाऽपि हेतुवाचिकारणशब्दस्य क्लीबत्वमेव कारणं करणे हेतुबन्धयोश्च नपुंसकम्' इति शेषोक्तेः । न च लिङ्गानुशासनविरोधः । सामान्यविषयस्य तस्योदाहृतविशेषोक्त्या बाधे सति तदन्यविषयत्वादित्यरुचेराह– **अथवेति** ।। 'करोतेर्ण्यन्तात्' इत्यनुषङ्गः । **ण्यासेतीति** ।। ण्यन्ताद्धातोः आसिश्रन्थिभ्यां च धातुभ्यां भावकर्मादौ स्त्रियां युजिति सूत्रार्थः । नन्वेवं सति 'कारणा तु यातना तीव्रवेदना' इत्यमरोक्तेः कारणशब्दस्य तीव्रवेदनावाचित्वं स्यात् । हेतुवाचित्वं तु कथम्? इत्यत उक्तम् - **करण इति** ।। अस्तु भावे युजन्तस्तीव्रदुःखार्थः । करणयुजन्तस्तु हेतुवाची सम्भवतीति भावः । ततः किम्? इत्यत आह– **अयं तु स्त्रीलिङ्ग इति** ।। 'स्त्रियाम्' इत्यधिकृत्य युज्विधानादिति भावः । नन्वेवं 'कर्मकारणा' इत्यस्य स्त्रीलिङ्गत्वाद्बहव इति पुल्लिङ्गविशेषणानुपपत्तिरित्यत आह– **बहव इत्यपीति** ।। नन्वेवं 'वोतो गुणवचनात्' इति ङीषि सति बह्व्य इति स्यादित्यत आह– **वोत इति** ।। उदन्ताद् गुणवाचिनः स्त्रियां वा ङीष् स्यादिति सूत्रार्थः । यद्यपि 'बह्वादिभ्यश्च' इति विकल्पविधाना-दिति वक्तव्यम् । बहुशब्दस्य बह्वादिषु पठितत्वात् । तथाऽपि गुणवचनत्वादेव ङीष्सिद्धेः 'बह्वादिभ्यश्च' इति सूत्रे बहुशब्दग्रहणं न कर्तव्यमिति शाब्दिकैः प्रत्याख्यानात् 'वोत' इत्येवोक्तम् ।

ननु 'बहवः' इत्यादिभाष्यम् 'अथ केन' इत्यादिप्रश्नवाक्यस्याभिप्रायप्रदर्शकम् । प्रश्नवाक्ये च 'केन प्रयुक्तः पापं चरति' इति पापप्रयोजकं पृष्टम् । अतस्तदानुगुण्याय 'पापकारणाः' इति वक्तव्ये कथं 'कर्मकारणाः' इति सामान्यमुक्तम्? इत्यत आह– **कर्मेतीति** ।। ननु मुख्यार्थ-ग्रहणे बाधकाभावादुपलक्षणमयुक्तमित्यत आह– **अरिषड्वर्गप्रसिद्धेरिति** ।।

'भयं प्रमत्तस्य वनेष्वपि स्याद् यतो वसन्ते सह षट् सपत्नाः'

इत्यादौ काम-क्रोध-मद-मत्सर-लोभ-मोहाख्यारिषड्वर्गप्रसिद्धेरित्यर्थः । अयं भावः । मुख्यार्थबाधो नाम मुख्येऽर्थे इतरान्वयस्य प्रबलप्रमाणविरुद्धत्वम् । प्रकृते च 'तौ ह्यस्य परिपन्थिनौ' इत्यत्र विशेषविधिबलात् । द्वयोरेव परिपन्थित्वान्वयो लभ्यते । स च 'षट् सपत्ना' इत्यादिनिरवकाशप्रमाणविरुद्ध इत्यस्त्येव मुख्यार्थबाधः । अतो युक्तमुपलक्षणमिति ।

॥ **अनुवदतीति** ॥ अर्जुन इति शेषः । ननु यदुक्तं द्वेषशब्देन मदमत्सरादयोऽप्युपलक्षिता इति । तदयुक्तम् । भाष्ये 'क्रोधादयः कामश्च' इति पाठक्रमाद् 'रागद्वेषौ व्यवस्थितौ' इत्यत्र रागशब्देन क्रोधादय उपलक्षिता इति प्रतीतेरनुवदतीति चायुक्तम् । अनुवादलिङ्गाभावादित्यत आह– **रागशब्देनेति** ॥ अयं भावः । यदि पाठक्रमाद्रागशब्दस्य क्रोधाद्युपलक्षकत्वं स्यात् तदा द्वेषशब्दवैय्यर्थ्यं स्यात् । अतस्तत्सार्थक्याय रागशब्देन मुख्यत एव कामोऽभिधीयते । द्वेषपदेन च कामान्यवैरित्वरूपेण क्रोधादय उपलक्ष्यन्त इत्येवाङ्गीकार्यम् । ततश्च बाधकबलात् पाठक्रममनादृत्य द्वेषशब्दस्योपलक्षकत्वोक्तिर्युक्ता । एवं 'बहवः कर्मकारणाः' इत्यादिभाष्ये 'त्वयोक्ता' इत्युपस्कर्तव्यम् । अन्यथा विशेषप्रश्नस्य सामान्यसिद्धिपूर्वकत्वात् । प्रकृते च सामान्यतः कामादीनां पापकारणत्वा-सिद्धत्वात् प्रबलपापकरणप्रश्नस्यासङ्गतिप्रसङ्गात् । ततश्च 'उक्ता' इत्यस्यैवानुवादलिङ्गस्य सत्त्वाद् 'अनुवदति' इति च युक्तमिति कथसूचितमित्यत आह– **अथेति शब्देनेति** ॥ अनेनाथशब्दस्यार्थान्तररूपत्वाभावात् कथं सामानाधिकरणम्? इत्यपि निरस्तम् ॥ ३६ ॥

**श्रीभगवानुवाच -**

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

## भाष्यम्

**यस्तु बलवान् प्रवर्तकः स एष कामः । क्रोधोऽप्येष एव । तज्जन्यत्वात् । 'कामात् क्रोधोऽभिजायते'** (२.६२) **इति ह्युक्तम् । यत्रापि गुरुनिन्दादि-निमित्तः क्रोधः, तत्रापि भक्तिनिमित्तानिन्दाकामनिमित्त एव ॥**

भावप्रदीपिका (प.टी.)– प्रश्नाभिप्रायानुसारेणाह– **यस्त्विति ॥**

भावप्रकाशिका (न.टी.)– उत्तरवाक्यमप्यशुभप्रेरकबलवत्प्रकाशकत्वेन व्याचष्टे– **यस्त्विति ॥** ननूत्तरवाक्ये कामक्रोधयोरेकत्वमुच्यते । प्रश्नवाक्यं च साधारणम् । तथा ह्यन्ये वर्णयन्ति– काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमत इति । अतः कथं प्रश्नप्रतिवचनयोः पापप्रेरकबलवत्परता ? इत्यत आह– **क्रोधोऽपीति ॥** आत्मैव पुरुष इतिवदौपचारिक इत्यर्थः । अन्यथोक्तविरोध इत्याह– **कामादिति ॥** ननु कामजत्वनियमे क्रोधस्य क्रोधोऽप्येष एव इत्युपचारोऽपि घटेत । तस्य निमित्तान्तरादप्युपपत्तेः स एव कुतः ? इत्यत आह– **यत्रापीति ॥** भक्तिनिमित्तोऽयमनिन्दाकामः, तन्निमित्त एव क्रोध इत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– बलवद्विषयश्चेद् प्रश्नस्तर्हि परिहारो न सङ्गच्छत इत्यतः परिहारं व्याचष्टे– **यस्त्विति ॥** प्रवर्तकः पापेषु पुरुषः 'त्वया पृष्टः' इति शेषः । एवं योजनायां क्रोधस्यापि कामसाम्यं स्यात् । तथाचोत्तरत्र कामस्यैवानुवृत्तिर्विरुध्येतेत्यतः 'क्रोध एषः' इत्येतदन्यथा व्याचष्टे– **क्रोधोऽपीति ॥**

किं काम एव मुख्यया वृत्त्या एवमुच्यते? नेति ब्रूमः । किन्तूपचारेणेति भावेनाऽह– **तदिति ॥** तदेव कुतः? इत्यत आह– **कामादिति ॥** नायमस्ति नियमः । यदा गुरु-निन्दादिश्रवणे निन्दकाय क्रुद्ध्यति तदा कामाभावेऽपि क्रोधोदयदर्शनादित्यत आह– **यत्रापीति ॥** भक्तिनिमित्तश्चासावनिन्दाकामश्चेति विग्रहः ।'सङ्गात् सञ्जायते कामः' (२.६२) इत्येतद् दर्शयितुं 'भक्तिनिमित्त' इत्युक्तम् ॥

भावदीपः (रा.टि.)– ॥ **त्वयेति** ॥ प्रश्नकृतेत्यर्थः ॥ **उत्तरत्रेति** ॥ उत्तरार्धादावित्यर्थः ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ **निन्दकाय क्रुध्यतीति** ॥ 'हरये क्रुध्यति गोपी स्मरात्' इत्यादाविव 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इति सम्प्रदानत्वाच्चतुर्थी ॥

**भावरत्नकोशः** (सु.टि.)– 'प्रवर्तकः' इत्यतः परं प्रकृतोपयोगाय भाष्ये शेषमाह– **प्रवर्तक इति ॥ एवमिति** । पुरुषस्य पापे बलवान् प्रवर्तको यस्तु त्वया पृष्टः स एष काम इत्येवं परिहारवाक्ययोजनायामित्यर्थः । **उत्तरत्र** 'महाशनो महापाप्मा' इत्युत्तरार्धादौ ।

श्लोकः ३७

**अनुवृत्तिः** बलवत्त्वेन । **मुख्यया वृत्त्या** क्रोधशब्दमुख्यवृत्त्या । एवं कामः क्रोध इति सामानाधिकरण्येनोच्यत इत्यर्थः । **तदेव** क्रोधस्य कामजन्यत्वमेव । **निन्दकाय क्रुध्यतीति** ॥ 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति सम्प्रदानत्वे चतुर्थी । भक्तिनिमित्ता या अनिन्दा कामनिमित्त एवेत्यनन्वितम्, असङ्गतं चेत्यतो भाष्ये प्रकृतसङ्गतये विग्रहं दर्शयति भक्तीति । **सङ्गादिति** ॥ 'सङ्गस्तु गुणसम्प्रीतिः' इत्येकादशतात्पर्ये गुणसम्प्रीतिशब्दितसङ्गात् कामः अनिन्दाकामः इत्येतद् दर्शयितुमित्यर्थः । भक्तिनिमित्तो योऽयमनिन्दाकामस्तन्निमित्तक एव क्रोध इत्यर्थ इति भावः ।

**भावदीपिका (श्री.टि.)– ॥ एवं योजनायामिति** ॥ यस्तु बलवान् पापप्रवर्तकः पृष्टः स एष काम इति योजनायां यस्तु बलवान् प्रवर्तकः पृष्टः स एष क्रोध इत्यपि योजनाप्रसङ्गेन क्रोधस्यापि कामसाम्यं स्यादित्यर्थः । अस्त्विति चेत्, तत्राऽह– **तथा चेति** ॥ **उत्तरत्रेति** ॥ 'कामरूपेण कौन्तेय' (३-३९), 'कामरूपं दुरासदम्' (३-४३) इत्युत्तरत्रेत्यर्थः । 'एष एव' इत्यस्यार्थानुवादः– **काम एवेति** ॥ **एवमुच्यत इति** ॥ क्रोधाभेदेनोच्यत इत्यर्थः । **तदितीति** ॥ कामजन्यत्वात् तदभेदोक्तिर्युज्यते । कार्यकारणयोरभेदव्यपदेशस्य 'पातालमेतस्य हि पादमूलम्' 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादौ दर्शनादित्यर्थः । **नियमः** क्रोधस्य कामजन्यत्वनयमः । **निन्दकाय क्रुध्यतीति** ॥ 'क्रुध-द्रुह-ईर्ष्या-असूयार्थानां यं प्रति कोपः' इति सूत्रेण क्रुधाद्यर्थानां धातूनां योगे यं प्रति कोपो विवक्षितस्तत्र सम्प्रदानसञ्ज्ञाया विहितत्वात्, प्रकृते च क्रुध्धातुयोगात् निन्दके कोपस्य विवक्षितत्वाच्च सम्प्रदानसञ्ज्ञायाम्, 'सम्प्रदाने चतुर्थी' इति सूत्रेण 'निन्दकाय' इति चतुर्थी युक्तेति द्रष्टव्यम् ॥ **भक्तीति** ॥ तथा च तत्रापि गुरूणाम् अनिन्दाकामनयैव निन्दके क्रोधो जायत इति न नियमभङ्ग इति भावः ॥

ननु पूर्वं कामस्य सङ्गजन्यत्वोक्तेरत्र च भक्तिनिमित्तकत्वकथनविरोध इत्यत आह– **सङ्गादिति** ॥ विषयस्नेहापरपर्यायसङ्गात् कामजननस्य पूर्वाध्याये उक्तत्वादत्रापि गुर्वनिन्दाकामस्यापि गुर्वादिविषयसङ्गजन्यत्वं दर्शयितुं 'भक्तिनिमित्त' इत्युक्तम् । भक्तेरपि गुर्वादिविषये माहात्म्यज्ञानपूर्वकस्नेहापरपर्यायसङ्गरूपत्वादिति भावः ॥

**भावप्रकाशः (कृ.टि.)– ॥ निन्दकाय क्रुद्ध्यतीति** ॥'क्रुध-द्रुह-ईर्ष्या-असूयार्थानां यं प्रति कोपः' इति सम्प्रदानत्वाच्चतुर्थी ॥ ३६ ॥

## भाष्यम्

**ये त्वन्यथा वदन्ति ते सङ्करान्न सूक्ष्मं जानन्ति । उक्तं च– 'ऋते कामं न कोपाद्या जायन्ते हि कथञ्चन' इति । महाशनः । महद्धि कामभोग्यम् । महाब्रह्महत्यादिकारणत्वात् महापाप्मा । सर्वपुरुषार्थविरोधित्वाद् वैरी ॥३७॥**

भावप्रदीपिका (प.टी.)– अपव्याख्यामपहसति– **ये त्विति** ॥ कामक्रोधयोरन्वय-व्यतिरेकप्रमाणमाह– **उक्तं चेति** ॥ महाशनादिशब्दान् कामे घटयति महाशन इति ॥३७॥

भावप्रकाशिका (न.टी.)– अतोऽत्र कामक्रोधयोः सङ्कीर्तनत्वाद् (?) अन्यथावाद इत्याह– **ये त्विति** । क्रोधादेः कामजत्वनियमे प्रमाणमाह– **उक्तं चेति** ॥ उत्तरार्धगतविशेषणानि कामे घटयति 'महाशनः' इत्यादिना ॥ ३७ ॥

प्रमेयदीपिका (ज.टी.)– 'काम एव केनचित् प्रतिहतः क्रोधत्वेन परिणमते' इति परेषां व्याख्यानं दूषयति– **ये त्विति** ॥ एकान्तःकरणोपादानत्वलक्षणादानन्तर्यलक्षणाच्च सङ्करात् सूक्ष्मं कामक्रोधयोरत्यन्तभेदम् । नहि गुणो गुणस्योपादानम् । किन्तु निमित्त-मेव ॥ प्रागन्वये प्रमाणमुक्तम् । इदानीं व्यतिरेकेऽप्याह– **उक्तं चेति** ॥ महाशनः इति कामे दुर्घटत्वाद् गौणमित्याह– **महाशन इति** ॥ **भोग्यं** विषयः । यस्मात् कामभोग्यं महत्तस्मादसौ 'महाशनः' इति हेरर्थः। 'काम एषः' इति पापकारणत्वेनोक्त्वा कथं महा-पाप्मा इत्युच्यते? इत्यतो न कर्मधारयोऽयम्, किन्तु महान् पाप्मा यस्मादिति बहुव्रीहिरिति भावेनाऽह– **महाब्रह्मेति** ॥ महच्छब्दात् परतः पाप्मशब्दोऽध्याहार्यः । वधादिकर्तृत्वा-भावात् कथं वैरित्वम्? इत्यत आह– **सर्वेति** ॥ **सर्वः** सम्पूर्णः । **पुरुषार्थः** मोक्षः ॥३७॥

भावबोधः (र.टि.)– कामस्यैहिकपुरुषार्थहेतुत्वेन सर्वपुरुषार्थविरोधित्वाभावात् सर्वशब्द-मन्यथा व्याचष्टे– **सर्वः सम्पूर्ण इति** ॥ ३७ ॥

भावदीपः (रा.टि.)– ॥ **एकान्तेति** ॥ एकं यदन्तःकरणं तदुपादानत्वलक्षणादित्यर्थः ॥ अपौनरुक्त्यायाऽह– **प्रागिति** ॥ 'इति ह्युक्तम्' इत्यत्रेत्यर्थः । महाब्रह्महत्यादिहेतुत्वे महा-पाप्मत्वं कुतः? इत्यतो वा ब्रह्महत्यादेर्महत्त्वघटनाय वा आह– **महच्छब्दात्परत इत्यादि** ॥

श्लोकः ३७
ऐहिकपुमर्थहेतुत्वानुभावात् कथं सर्वपुमर्थविरोधिता? इत्यत आह– **सर्वः सम्पूर्ण इत्यादि**
॥ ३७ ॥

**भावरत्नकोशः (सु.टि.)**– सङ्करभाष्यमेवानुवदति– **काम एव केनचिदिति** ॥ विषया-गतिविरोधिनेत्यर्थः । **सङ्करस्वरूपमाह– एकेति** ॥ 'एकमेव ह्यन्तःकरणं कामक्रोधयोरुपादानम्' इति तदुपादानकत्वलक्षणादित्यर्थः । एकान्तःकरणोपादानकयोरपि सुखदुःखयोर्भेदस्य स्फुट-प्रतिभासत्वादाह– **आनन्तर्येति** ॥ प्रतिहतकामानन्तरत्वलक्षणादित्यर्थः । अत एव भागवते 'ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत् कामानुजेन सहसा तदुपप्लुताङ्गाः' इति सनकादिक्रोधस्य प्रतिहतकामानुजत्वमुक्तम् । 'सूक्ष्मम्' इत्यतःपरं शेषमाह– **सूक्ष्मं कामेति** । एकदीपोपादान-योर्ज्वालयोरिव कामक्रोधयोरपि सूक्ष्मम् अव्यक्तं भेदं न जानन्तीत्यर्थः । अन्यथापदेन सूचितम् एकद्रव्याश्रितयोर्गुणयोर्मध्य एकस्यापरोपादानत्वम् अयुक्तम् इति दूषणं स्फुटीकरोति– **न हीति** ।

अनुपादानत्वे 'क्रोधोऽप्येष एव' इति सामानाधिकरण्येन व्यवहारायोग इत्यत उक्तम्– **किन्तु निमित्तमेवेति** । निमित्ततया तज्जन्यत्वमात्रेणोपचाराद् व्यवहार इति भावः । 'कामात् क्रोधोऽभिजायते' (२.६२) इति प्रागेव प्रमाणोदाहरणेन कामस्य क्रोधं प्रति हेतुत्वमभिहित-मिति पुनः किं तदुक्त्या ? इत्याशङ्कायामाह– **प्रागिति** ॥ 'महाशन इति' (इत्यनन्तरं) विशेषणम् (इति शेष इति भावः) । **दुर्घटत्वादिति** ॥ भोजनक्रियायाश्चेतन एव दृष्टत्वात् 'भुञ्जान इन्द्रियाविष्टः' इति तात्पर्यवचनस्याप्यभिमानिचेतनविषयत्वादिति भावः । विषयानुभवो हि भोगः । तत्कर्म भोग्यम् । तथा च तदपि दुर्घटमेवेत्यत आह– **भोग्यं विषय इति** ॥

**पापकारणत्वेनेति** ॥ केन पापं चरति? इति प्रश्नोत्तरभूते 'काम एषः' इति वाक्ये कामं पापकरणत्वेनोक्त्वा 'महापाप्मा' इति पापरूपत्वं कथमुच्यत इत्यर्थः । 'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्' (अमरकोशे) इत्यभिधानात् 'महान् पाप्मा' इति पुंलिङ्गप्रयोगः । अयं च बहुव्रीहिर्भाष्ये कारणपदाभिप्रेत इति भावेन **'यस्मात्' इत्युक्तम्** । कामस्याल्पब्रह्महत्यां प्रत्यपि कारणत्वात् कथं महत्त्वविशेषणम् ? उक्तविग्रहाभिप्राये भाष्ये पाप्मपदमपि श्रूयेतेत्यत आह– **महच्छब्दादिति** ॥ कोऽयं महान् पाप्मा कामेन भवति ? इत्यतो भाष्ये ब्रह्महत्यादिरूप इति प्रदर्शयितुं 'महाब्रह्महत्यादि' इत्युक्तमिति नोक्तदोष इति भावः ।

ननु निषिद्धकामस्यैहिकफलहेतुत्वदर्शनात् स्वर्गादिकामस्य पारत्रिकफलत्वाच्च कथं सर्व-पुरुषार्थविरोधित्वम् ? इत्यत आह– **सर्वः सम्पूर्ण इति** ॥ 'सर्वं पूर्णमिहोच्यते' इति वचनात्, 'सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च' इत्येकादशाध्याये भाष्यमाणत्वाच्चेति भावः ॥ ३७ ॥

**गीताक्षरार्थस्तु–** काममूलत्वात् सर्वेषां स एव बलवान् प्रवर्तक इति भगवानुवाच– **काम इति** ॥ यस्त्वया पुरुषस्य पापे प्रवर्तकः पृष्टः स एष काम एव । क्रोधः अप्युपचारेण एष एव । तज्जन्यत्वात् । ननु ज्ञानभक्त्यादिकामस्य मोक्षकामस्य च पापहेतुत्वं कथमुच्यते? इत्यतः कामो विशिष्यते– **रज इति** ॥ रजश्च तद्गुणश्च तस्मात् समुद्भवतीति तथा । ज्ञानादिकामस्तु नैवंविध इति भावः । महद् अशनं भोग्यं विषयो यस्य स तथा । महान् ब्रह्महत्यादिरूपः पाप्मा पापं यस्मात् स तथा । इह जगति महापुरुषार्थभूतमोक्षविरोधितया वैरिणमेनं कामं विद्धि जानीहि इति ॥ ३७ ॥

**भावदीपिका (श्री.टि.)–** प्रतिहतः सन् । **एकेति** ॥ 'कामः सङ्कल्पः' इत्याद्युक्त्वा 'एतत्सर्वं मन एव' इत्युक्तत्वादिति ध्येयम् । **आनन्तर्यलक्षणादिति** ॥ क्रोधस्य कामा-व्यवहितोत्तरकालोत्पन्नत्वरूपानन्तर्यलक्षणादित्यर्थः । **सूक्ष्ममिति** ॥ स्पष्टतयाऽविद्यमानमित्यर्थः । 'कामक्रोधयोरत्यन्तभेदम्' इति 'सूक्ष्मम्' इत्यनन्तरं शेषपूरणम् ।

ननु पुरोक्तं कामस्य क्रोधं प्रत्युपादानत्वं किं नाङ्गीक्रियते? इत्यत आह– **न हीति** ॥ कामक्रोधयोरुभयोरपि गुणत्वादिति भावः । अस्मन्मते त्वन्तःकरणस्य द्रव्यत्वाद् युक्तमुपादा-नत्वमिति द्रष्टव्यम् ॥ **अन्वय इत्यादि** ॥ कारणत्वस्यान्वयव्यतिरेकगम्यत्वात् कामे सति क्रोधो जायत इत्यन्वये 'कामात् क्रधोऽभिजायते' इति प्रमाणमुक्तम् । इदानीं कामाभावे क्रोधोत्पत्त्य-भाव इति व्यतिरेकेऽपि प्रमाणमाहेत्यर्थः । **इत्युच्यते** इत्यभेद उच्यते ॥ **बहुव्रीहिरिति** ॥ यद्यपि यस्तु पापे बलवान् प्रवर्तकः पृष्टः स एष काम इति पापकारणत्वस्योक्तत्वाद् इदं व्यर्थमेव । तथाऽपि तत्र क्षुद्रपापप्रवर्तकत्वमभिप्रेतम् । अत्र तु महापापप्रवर्तकत्वमित्यदोष इति ज्ञातव्यम् ॥ **पाप्मशब्द इति** ॥ तथा च महापापं ब्रह्महत्यादीत्यर्थः । ब्रह्महत्यादिमहापापकारणत्वादिति यावत् । कामस्यैहिकपुरुषार्थहेतुत्वेन सर्वपुरुषार्थविरोधित्वाभावात् सर्वशब्दमन्यथा व्याचष्टे– **सर्वः सम्पूर्ण इति** ॥ 'विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयते' इति वचनादिति भावः ॥३७॥

श्लोकः ३७

भावप्रकाशः (कृ.टि.)– **आनन्तर्यलक्षणादिति** ॥ कामानन्तर्यलक्षणादित्यर्थः । ननु कामस्य क्रोधहेतुत्वं पुनः किमर्थमुच्यते? इत्यत आह– **प्रागिति** ॥ कामात् क्रोधोऽभिजायते इति ह्युक्तमित्यत्रेत्यर्थः । ननु भोग्यशब्दो न भक्ष्यार्थः । कामस्य भक्ष्याभावात् । 'भोज्यं भक्ष्ये' इति सूत्रविरोधाच्चेत्यत आह– **विषय इति** ॥ 'अस्त्री पङ्कं पुमान् पाप्मा' इत्यमरोक्तेः 'महा-पाप्मा' इति पुल्लिङ्गप्रयोगः । ननु 'महाब्रह्महत्यादि' इत्यत्र विशेषणवैय्यर्थ्यम् । कामस्याल्प-ब्रह्महत्यादिकं प्रत्यपि हेतुत्वात् । किञ्चास्य बहुव्रीहिसमासार्थविग्रहप्रदर्शकत्वे पाप्मशब्दघटि-तत्वं स्यात् । अन्यथा 'महाब्रह्महत्यादि' इति समासप्रसङ्गादित्यत आह– **महच्छब्दादिति** ॥ महाब्रह्महत्येति महच्छब्दादित्यर्थः । तथा च महान् पाप्मैव कः? इत्याकाङ्क्षानिवृत्त्यै 'ब्रह्म-हत्यादि' इत्युक्तम् । अतो न दोष इति भावः ॥ ३७ ॥

**धूमेनाऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनाऽवृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

## भाष्यम्

**कथं विरोधी सः? इदमनेनावृतम् । यथा धूमेन अग्निरावृतः प्रकाशरूपोऽप्यन्येषां न सम्यग् दर्शनाय तथा परमात्मा । यथाऽऽदर्शो मलेन आवृतोऽन्यस्याभिव्यक्तिहेतुर्न भवति । तथा अन्तःकरणं परमात्मादेर्व्यक्तिहेतुर्न भवति कामेन आवृतम् । यथोल्बेन आवृत्य बद्धो भवति गर्भः तथा कामेन आवृतो जीवः ॥ ३८ ॥**

भावप्रदीपिका (प.टी.)– महाशनत्वादेः प्रत्यक्षसिद्धत्वे पुरुषार्थविरोधित्वं कामस्य कथमिति ? तत्परिहारायोत्तरश्लोकं व्याचष्टे– **इदमिति** ॥ ३८ ॥

भावप्रकाशिका (न.टी.)– कामस्य सर्वपुरुषार्थविरोधित्वप्रदर्शनायोत्तरं श्लोकद्वय-मवतार्य व्याचष्टे– **कथमित्यादिना** । यतः इदम् ईश्वरादिकम् अनेनावृतं कामेन, अतोऽयं विरोधीत्यर्थः । दृष्टान्तत्रयसाफल्यं दर्शयन्नेतदेव विवृणोति– **यथा धूमेनेत्यादिना** ॥

यथाऽग्निर्देवेन सम्यक् प्रतीयमानोऽपि तज्ज्वालादिः धूमेनावृतोऽन्येषामेव सम्यङ् न प्रतीयते, तथा परमात्मा स्वात्मानं सम्यक् पश्यन्नपि जीवकामावृतः तेषामेव सम्यङ् न दृश्यते । यथाऽऽदर्शो मलेनावृते प्रतिबिम्बानाविर्भावान्न बिम्ब एतादृश इति प्रदर्शकोऽसौ, तथा कामयुतेऽन्तःकरणे प्रतिबिम्बभूतजीवज्ञानानाविर्भावान्न बिम्बभूतपरमात्मनः तत्सर्व-कर्तृत्वादेश्च प्रदर्शकं तद्भवति । ध्यानकाले वा प्रतिबिम्बभूतस्य भगवद्वपुषः तद्वस्त्रा-भरणादेश्च ।

यथा जरायुणाऽऽवृतो बद्ध एव भवति गर्भः, न तु परमात्मैवान्येषामेव सम्यङ् न प्रकाशते, अपि तु स्वात्मानमपि सम्यङ्नानुभवति । तथैव जीवः कामेनावृतः ॥

केचिदेवं प्रतीयमानं जीवपरभेदमसहमानाः 'तेनेदम्' इत्यत्रेदंशब्देनोत्तरश्लोकोक्तं ज्ञान-मेव परामृश्यत इति वर्णयन्ति । तत्पक्षे कामेनैकमेव ज्ञानमावृतमिति दृष्टान्तत्रयमनुपयुक्त-मयुक्तं चावरणतारतम्यप्रदर्शनम् ॥ ३८ ॥

प्रमेयदीपिका (ज.टी.)– ननु प्रश्नस्योत्तरं जातं किमुत्तरेण? इत्यतः श्लोकद्वयस्य सङ्गतिमाह– **कथमिति** ॥ सः कामः कथं मोक्षस्य विरोधी इति जिज्ञासायामाह– 'धूमेन इत्यादि' इति शेषः ।

विवक्षितार्थस्यास्फुटत्वाद् व्याख्याति– **इदमिति** ॥ ईश्वर-अन्तःकरणजीवलक्षणं वस्तुत्रयम् । केन?, किमिव ? इत्याकाङ्क्षायामाद्यं पादत्रयं व्याचष्टे– **यथेति** ॥ परमात्मा कामेनावृतः । 'स्वयं सर्वज्ञोऽप्यन्यैर्न ज्ञायते' इति शेषः । **अन्यस्य** मुखादेः । **'परमात्मादेः'** इत्यादिपदेन जीवो गृह्यते । बन्धापेक्षयाऽऽवरणस्य **समानकर्तृकत्वम्** । **बद्धः** सङ्कुचितः । व्यापारक्षम इति यावत् । **उल्बः** **गर्भवेष्टनम्** । कामेनावृतो जीवः नेश्वरादिज्ञाने क्षम इत्यर्थः ॥ ३८ ॥

भावबोधः (र.टि.)– भवनस्य गर्भकर्तृकत्वादुल्बकर्तृकावरणस्य तेन समानकर्तृकत्वा-भावादाह– **बन्धापेक्षयेति** ॥ ३८ ॥

भावदीपः (रा.टि.)– 'आवृत्य बद्धः' इत्यत्र ल्यबन्तस्य साधुत्वनिर्वाहायाऽह– **बन्धापेक्षयेति** ॥ ३८ ॥

श्लोकः ३८

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु 'समानकर्तृकयोः पूर्वकाले' इति समानः कर्ता ययोः धात्वर्थयोः तत्र पूर्वकालधात्वर्थे वर्तमानात् धातोः त्त्वाप्रत्ययो भवतीति समानकर्तृकत्व एव त्त्वाप्रत्ययविधानात्, प्रकृते च भवनावरणरूपधात्वर्थरूपस्य भवनस्य गर्भकर्तृकत्वेन आवरणस्य उल्बकर्तृकत्वेन धात्वर्थद्वयस्यासमानकर्तृकत्वेन त्त्वाप्रत्ययस्यैव अप्राप्तेः कथं तदादेशभूतसमासेन ञ्पूर्वको ल्यप् इति आवृत्त्येति ल्यप् इत्यतः 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते' इत्यादौ असमानकर्तृकत्वेऽपि त्त्वाप्रत्ययस्य दर्शनेन उक्तनियमासिद्धेः नानुपपत्तिरिति सत्येव समाधाने अङ्गीकृत्योक्तनियमं भवनापेक्षया आवरणस्य समानकर्तृकत्वाभावेऽपि बन्धावरणयोरुल्ब-कर्तृकत्वेन समानकर्तृकत्वात् युक्त एवावृत्येति त्त्वाप्रत्ययादेशभूतल्यप् इत्याह– **बन्धापेक्षयेति** ॥

**भावरत्नकोशः (सु.टि.)–** 'सः' इति भाष्यपदमनूद्यार्थमाह– **स काम** इति ॥ 'विरोधी' इत्यनन्तरम् ''इति जिज्ञासायामाह– धूमेनेत्यादि' इत्यन्तं शेषः । **विवक्षितार्थस्य** कामे महापुरुषार्थविरोधित्वस्य । 'इदम्' इत्यस्य मूलस्थस्य भाष्येऽनूदितस्यार्थः– **ईश्वरेत्यादि** ॥ **वस्तुत्रयं** 'आवृतम्' इति भाष्येणान्वयः । परमात्मनः कामेन आवृतत्वे जीवस्वरूपं जीवेनेव स्वात्माऽपि स्वयं न ज्ञायेतेत्यतो भाष्ये शेषमाह– **स्वयं सर्वज्ञोऽपीति** ॥ वह्निपदोपादानमहिम्ना अग्नेः स्वप्रकाशत्वमिव भगवतोऽपि स्वप्रकाशत्वं लभ्यत इतीयमुक्तिः । 'अन्याभिव्यक्ति' इत्यत्र 'अन्यस्याभिव्यक्तिः अन्याभिव्यक्तिः' इति विग्रहाश्रयणेनान्यस्येत्यस्यार्थमाह– **अन्यस्य मुखादेरिति** ॥

ननूल्बकर्तृकावरणस्य गर्भकर्तृकभवनेन समानकर्तृकत्वाभावात् कथं भाष्ये 'आवृत्य' इति प्रयोगः? इत्यत आह– **बन्धापेक्षयेति** ॥ उल्बेन स्वात्मानं स्वयमावृत्य बद्धो भवति गर्भ इत्यावरणबन्धयोरवान्तरक्रिययोः स्वयमेव कर्तेति युज्यते 'समानकर्तृकयोः पूर्वकाले त्त्वा' इति त्त्वाप्रत्यये ल्यबिति भावः । **उल्वो गर्भवेष्टनमिति** ॥ 'गर्भाशयो जरायुश्च पुंस्युल्बं कललोऽ-स्त्रियाम्' इत्यत्र' अस्त्रियाम्'इत्यस्याऽकर्षणार्थश्चकार इति बन्दिघटीये व्याख्यानात्, 'कललो जरायुरुल्बः' इति पुंस्काण्डे रत्नकोशकारवचनात्, 'अथोल्बं क्लीबं स्याद् गर्भाशयोऽथ तत् पुंस्याहामरदत्तोऽस्मिन्नर्थे' इति केशववचनात्, प्रमाणवचनाच्च पुंलिङ्गप्रयोगो युक्तः । **गर्भवेष्टनं** गर्भवेष्टनचर्म । 'कामेन' इत्यनन्तरम् 'आवृतः' इति शेषो भाष्ये । 'तथा' इत्यस्यार्थः– **नेश्वरेत्यादि** ॥ ३८ ॥

**भावदीपिका (श्री.टि.)**– ॥ **विवक्षितार्थस्य** मोक्षविरोधित्वस्य । भाष्ये **'अनेन'** इत्यस्य 'कामेन' इत्यर्थः । भाष्ये– **प्रकाशरूपोऽपीति** ॥ प्रकाशरूपोऽप्यग्निर्धूमेनाऽवृतः सन् अन्येषां सम्यग्दर्शनाय न भवति । अन्यैः सम्यक् न ज्ञायत इति यावत् । 'अन्याभिव्यक्ति' इत्यत्र षष्ठ्यन्तान्यपदार्थमाह– **अन्यस्येति** ॥ ननु भवनस्य गर्भकर्तृकत्वाद् आवरणस्य तूल्बकर्तृ-कत्वात् कथं समानकर्तृकत्वम्? तथा च 'आवृत्य' इति क्त्वादेशभूतस्य ल्यपोऽनुपपत्तिरित्यत आह– **बन्धेति** ॥ तथा च बन्धावरणयोरुभयोरप्युल्बकर्तृकत्वाद् युक्तं समानकर्तृकत्वम् । आवृतत्वाद् भेदाय बद्धत्वं व्याख्याति– **बद्ध इति** ॥ ३८ ॥

**भावप्रकाशः (कृ.टि.)**– ननूल्बकर्तृकावरणस्य गर्भकर्तृकभवनेन समानकर्तृकत्वाभावात् कथम् 'आवृत्य' इति प्रयोगः? इत्यत आह– **बन्धापेक्षयेति** ॥ **उल्बो गर्भवेष्टनमिति** ॥ 'गर्भाशयो जरायुः स्यादुल्बश्च' इति कोशप्रसिद्धोल्बशब्दस्य नपुंसकत्वेऽपि 'गर्भस्योल्बो हि कामक' इति पुराणप्रसिद्धिः 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति महाभाष्योक्तिं चाश्रित्य पुल्लिङ्गप्रयोगः कृत इति मन्तव्यम् ॥ ३८ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

## भाष्यम्

**शास्त्रतो जातमपि ज्ञानं परमात्मापरोक्ष्याय न प्रकाशते कामेन आवृतं ज्ञानिनोऽपि । किम्वल्पज्ञानिनः?**

भावप्रदीपिका (प.टी.)– ज्ञानप्रतिबन्धकश्चेत् कामः, तर्ह्युत्पन्नापरोक्षज्ञानानां च तेन बाध इत्याशङ्क्य, उत्तरश्लोकं व्याचष्टे– **शास्त्रत इति** ॥ ज्ञानिन एव न तु मूर्खस्येति यद्व्याख्यानं तत्प्रतीतिविरुद्ध-मित्यभिप्रायेण 'ज्ञानि'पदकृत्यमाह– **ज्ञानिनोऽपीति** ॥ अल्पज्ञानी लोकप्रवादोत्पन्नज्ञानः ।

भावप्रकाशिका (न.टी.)– अतो न केवलं ज्ञानोत्पत्तिप्रतिबन्धकृत् कामः, किन्तूत्पन्नज्ञान-तिरस्कृदपीति भावेनोत्तरश्लोकं व्याचष्टे– **शास्त्रत इति** ॥ ज्ञानपदं किमर्थमिति चेत्,

श्लोकः ३९

**कैमुत्यनयप्रदर्शनार्थमिति ब्रूमः। कामनिरोधे हि द्विधा ज्ञानमुत्पद्यते। कस्यचिन्महालोकप्रवादात्, अस्ति विष्णुः सर्वेश इति श्रद्धासहितः। अन्यस्य तदपि शास्त्राद् विपुलीकृतम्। स एव ज्ञानीत्युच्यते लोके, नेतरः। तत्र कामावृतत्वे 'ज्ञानी' इत्युक्तस्य शास्त्रविपुलीकृतज्ञानमपि न ह्यपरोक्षापादकं किम्वितरस्याल्पज्ञानिनः ? लोकप्रवादमात्रजनितं ज्ञानमल्पज्ञानम्। तद्वतः।**

**अत्र कैमुत्यन्यायप्रदर्शनेन 'ज्ञानिन एव नित्यवैरिणा न मूर्खस्य' इति यदन्यथावर्णनं तदपि कैमुत्यन्यायपराहतमिति सूचयति। यः कामः कामं तिरस्कृत्य मुच्यमानस्य ज्ञानिनोऽपि नित्यवैरी इत्युच्यते, किमुतासौ स्वभावमग्नस्य मूर्खस्य नित्यवैरीति। न चायं मम वैरीति मूर्खेणादावविदिते न तस्य नित्यवैरी कामः। न हि रोगिणां ममायं वैरी इत्यविदितः चित्तस्य तात्कालिकेष्टापथ्यदो नावैरी इत्युच्यते॥**

**प्रमेयदीपिका** (ज.टी.)– एवं ज्ञेयज्ञानकारणज्ञातृप्रतिबन्धकत्वोक्त्या ज्ञानप्रतिबन्धकत्वमुक्तम्। 'आवृतं ज्ञानम्' इत्यनेन पुनः किमुच्यते? इत्यत आह– **शास्त्रत इति**॥ पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तम्। इदानीं तु कथञ्चिज्ज्ञातमपि ज्ञानं न स्वकार्याय प्रभवतीत्युच्यते। अतो न पुनरुक्तिदोष इति भावः॥

'कामकारेण चैके' (ब्र.सू.३.४.१५) इति वचनादपरोक्षज्ञानस्य मोक्षसाधने न केनापि प्रतिबन्धः? इत्यत उक्तम्– **शास्त्रत इति**॥'परमात्मापरोक्ष्याय' इति च॥ **न प्रकाशते** न प्रभवति। 'ज्ञानिनः' इति व्यर्थम्। ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारादित्यत आह– **ज्ञानिनोऽपीति**॥ शास्त्रजनितज्ञानवतोऽपि। **अल्पज्ञानिनः** गुरूपदेशमात्रजनितज्ञानवतः॥

**भावरत्नकोशः** (सु.टि.)– उत्तरश्लोकं सङ्गमयितुं वृत्तमनुवदति– **एवमिति**॥ ज्ञेयं च ज्ञानकारणं च ज्ञाता चेति विग्रहः। ज्ञेयं भगवत्स्वरूपं, ज्ञानकारणम् अन्तःकरणं ज्ञाता जीव इति विवेकः। पूर्वं 'धूमेन' इति श्लोके। **अतः** विषयभेदात्। **इति वचनादिति**॥ न असत्प्रवृत्त्या कुण्ठितत्वेन ज्ञानस्य मोक्षसाधनत्वाभावः प्रसज्यते। यतो यथेष्टाचारेणापि ज्ञानिनो मोक्षमेके शाखिनः पठन्तीति सूत्रवचनाद् अपरोक्षज्ञानस्य मोक्षनिष्पादनेऽसत्प्रवृत्त्यादिना केनापि प्रतिबन्धो नास्तीत्यावेदनेन अत्र कथं कामेन प्रतिहतस्य स्वकार्याक्षमत्वमुच्यते? इति

शङ्कार्थः । **इति चेति** ॥ उत्पन्नमपि ज्ञानं स्वकार्याक्षममित्युक्ते ज्ञानशब्देन शास्त्रजनिता-परोक्षज्ञानमेवाभिप्रेतम् । 'स्वकार्य' इत्यत्रापि कार्यशब्देन अपरोक्षज्ञानमेव विवक्षितमिति नोक्तसूत्रविरोध इति भावः ।

प्रकाशरूपं ज्ञानं प्रकाशत इत्ययुक्तमित्यतो व्याचष्टे– **न प्रभवतीति** ॥ न समर्थं भवतीत्यर्थः। **व्यर्थमिति** । 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इति वचनादिति भावः । 'ज्ञानिनः' इति 'अल्पज्ञानिनः' इति च को विवक्षित इति न ज्ञायते । अतः पदद्वय-विवक्षितार्थं दर्शयति **–शास्त्रेति** । शास्त्रश्रवणमननावृत्तिजनितज्ञानसम्पन्नस्येत्यर्थः । **गुरूपदेश-मात्रेति** ॥ श्रवणमात्रजनितज्ञानवत इत्यर्थः । श्रवणादिरूपः 'विष्णुः सर्वेश्वर इति योऽयं सद्गुरूपदेशः' स उच्यते । गुरूपदेशमात्रमिति केचित् । 'लोकप्रवादमात्रजनितं ज्ञानमल्पज्ञानम् । तद्वत' इति तु प्राचीनटीका । 'अल्पज्ञानी लोकप्रवादोत्पन्नज्ञानः' इति भावप्रदीपिका च ।

**भावदीपिका (श्री.टि.)– ज्ञेयः** परमात्मा । **ज्ञानकरणम्** अन्तःकरणम् । **ज्ञाता** जीवः । **ज्ञानेति** ॥ उत्पत्स्यमानेत्यर्थः। **उक्तमिति** ॥ अर्थादित्यर्थः । ज्ञेयादिसापेक्षत्वाद् ज्ञानस्य तत्प्रतिबन्धे तत्प्रतिबन्धस्यापि लाभादिति भावः । **कामकारेण चैक इति** ॥ 'कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमतिसृज्याथ परात् परमीयुरनारम्भणम्' इति सूत्रार्थः । तथा च जातमपि विज्ञानं कामेनाऽवृतं सत् स्वकार्याय न प्रकाशते न प्रभवतीत्येताव-त्येवोक्तेऽपरोक्षज्ञानस्यापि मोक्षरूपकार्यजनने प्रतिबद्धत्वप्राप्त्या सूत्रविरोधः स्यादिति भावः । **शास्त्रत इति** ॥ तथा च ज्ञानपदेन परोक्षज्ञानम्, स्वकार्यपदेन चापरोक्षज्ञानं विवक्षितमिति न तद्विरोध इति भावः ॥ **न प्रभवतीति** ॥ न समर्थं भवतीत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– कामकारेणेति** ॥ नासत्प्रवृत्त्या कुण्ठितत्वेन ज्ञानस्य मोक्ष-साधनत्वाभावः प्रसज्यते । यतो यथेष्टाचारेणापि ज्ञानिनो मोक्षमेके शाखिनः पठन्तीति सूत्रार्थः । **गुरूपदेशमात्रजनितेति** ॥

आचार्यात्पादमादत्ते पादं शिष्यः स्वबुद्धितः ।
पादं सब्रह्मचारिभ्यः पादं व्याख्यानकौशलात् ॥

इत्युक्तेश्चतुर्भिः प्रकारैः शास्त्राज्ज्ञानं जायते । तत्र द्वितीयादिप्रकारव्यावृत्त्यै मात्रेत्युक्तम् । अनेन प्रकारचतुष्टयेनापि शास्त्रजन्यं ज्ञानं प्रागभिप्रेतिमति सूचयति । यद्वा शास्त्राभ्यास-

श्लोकः ३९
जनितज्ञानं प्रागभिप्रेतम् । शास्त्राभ्यासश्च श्रवणमननरूपः । अत्र च श्रवणमात्रजनितं ज्ञानं विवक्षितमिति मन्तव्यम् ।

## भाष्यम्

**कामरूपेण कामाख्येन । नित्यवैरिणा ॥**

भावप्रदीपिका (प.टी.)– कामितवद्रूपं यस्येति भ्रान्तिर्मा भूदित्याह– **कामेति ॥** **'वैरिणम्'** इत्युक्तवैचित्र्यमेवानूद्यते । अतो न पौनरुक्त्यमिति भावः ॥

भावप्रकाशिका (न.टी.)– कामो हि देवविशेषः एकः । जीवेच्छाऽपि द्विविधा मनोरूपाऽऽत्मरूपा च । न चैतत्त्रितयान्यतमरूपोऽयं प्रकृतः कामः । किन्तु स्वयं चान्यः कामाख्य इति भावेनाह– **कामरूपेण कामाख्येनेति** ॥ स च कालनेमिरिति सप्रमाणक-मुक्तमन्यत्र । तत्कथम् ? इत्याकाङ्क्षायामाह– नित्यवैरिणेति ॥ न ह्येते त्रयः कैवल्यादि-भाजां नित्यवैरिण इति भावः ॥

प्रमेयदीपिका (ज.टी.)– अपरे तु 'ज्ञानिनो नित्यवैरिणा । न मूर्खस्य । ज्ञानी हि विनाशयिष्यामि काममिति यतते । मूर्खस्तु तमनुवर्तते' इति वर्णयन्ति । तदनेनैव निरस्तम् । अपकारित्वं खल्वत्र वैरित्वं विवक्षितम् । तच्च ज्ञान्यपेक्षया मूर्खेऽधिकम् । न हि मूर्खस्तन्नानुसन्धत्त इत्येतावता तन्नास्ति । इच्छानुरूपं रूपं यस्यासौ 'कामरूपः' इत्युच्यते । नचैतत् कामेऽन्तःकरणधर्मे सम्भवतीत्यत आह– **कामेति ॥** रूप्यतेऽनयेति रूपमाख्याऽत्र विवक्षितेत्यर्थः । तर्हि विशेषणपदमिदं जातम् । किमस्य विशेष्यम्? इत्यत आह– **नित्येति ॥**

भावदीपः (रा.टि.)– ॥ इति वचनादिति ॥ ज्ञानपादे 'कामचारेण चैके' इत्यत्र कामचारेऽपि अपरोक्षज्ञानिनोऽस्त्येव मोक्ष इत्यर्थप्रतिपादक सूत्ररूपवचनादित्यर्थः ॥ **मूर्ख-स्येति ॥** ज्ञानहीनस्येत्यर्थः ॥ **अनेनेति ॥** 'ज्ञानिनोऽपि' इत्यादिकथनेनेत्यर्थः ॥

भावरत्नकोशः (सु.टि.)– सङ्करभाष्यमर्थतोऽनुवदति –**अपरे त्वित्यादि** ॥ न **मूर्खस्य** अज्ञानिनः । **अनेन** कैमुत्यार्थत्ववर्णनेन । **अपकारित्वं** पुरुषार्थविरोधित्वम् । **ज्ञान्यपेक्षयेति** ॥

'यैर्निश्चितं परत्वं तु विष्णोः प्रायो न वेदनाम् ।
ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ॥',

'मूर्खाः शूद्रसमा मताः', 'तेषामज्ञानजो दोषः सुमहान्'

इत्यादिवचनादिति भावः । ननु ज्ञानी 'अनेनाहमनर्थे प्रयुक्तः' इत्यनुसन्धत्ते । मूर्खस्तु कामं मित्रमिव पश्यंस्तथा नानुसन्धत्त इति कथं तं प्रत्यधिकवैरी ? इत्यत आह– **न हीति** ॥ **तत्** अपकारित्वम् । 'कामरूपेण' इत्यत्र काम इच्छा तस्य रूपमिव रूपं यस्येत्यभिप्रेत्य तत्तात्पर्यमाह– **इच्छाऽनुरूपमिति** ॥ **एतत्** उक्तविधं कामरूपत्वम् । स्वरूपकामे मुक्तिदशायां सम्भवतीत्यत उक्तम्– **अन्तःकरणधर्मे काम इति** ॥ **रूप्यत इति** ॥ करणे घञ्प्रत्यये रूपशब्देनात्र आख्या विवक्षिता । न पुनः स्वरूपमित्यर्थः ।

**भावदीपिका (श्री.टि.)**– ॥ **अपरे त्विति** ॥ स्वमते ज्ञानिनो ज्ञानमिति सम्बन्धः । एतन्मते तु 'ज्ञानिनो नित्यवैरिणा' इति सम्बन्ध इत्यवधेयम् । तदुभयमप्युपपादयति– **ज्ञानी हीति** ॥ **तमन्विति** ॥ काममन्वित्यर्थः ॥ **वर्तत इति** ॥ यद्विषये कामो भवति तद्विषय-सम्पादनायैव यतत इत्यर्थः । ननु वैरित्वानुसन्धानाभावात् कथं मूर्खेऽपकारित्वं ज्ञान्य-पेक्षयाऽधिकम्? इत्यत आह– **नास्तीति** ॥ न ह्यस्त्येवेत्यर्थः । **इच्छाऽनुरूपम्** इच्छाऽनुकूलम् रूपम् आकारः । **अन्तःकरणधर्म इति** ॥ **रूप्यते** निरूप्यते व्यवह्रियत इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ॥ **रूप्यतेऽनयेति रूपमिति** ॥ करणे घञ् ॥

## भाष्यम्

**दुष्पूरेण । दुःखेन हि कामः पूर्यते । न हीन्द्रादिपदं सुखेन लभ्यते । यद्यपीन्द्रादिपदं प्राप्तः पुनर्ब्रह्मादिपदमिच्छति इत्यलम्बुद्धिर्नास्तीत्यनलः ॥ उक्तं च–**

**'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा ।
आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः' इति ।**

श्लोकः ३९

भावप्रदीपिका (प.टी.)– यं विषयं कामयति तेन तत्पूरणं कृत्वा ज्ञानसाधनसम्भवात् कथं नित्यवैरित्वम् ? इत्यत आह– **दुष्पूरेणेति** ।। सुखेन कामपूरणं दृश्यत इत्यत आह– न हीति ।। दुःखेनापि कामं प्रपूर्य ज्ञानं सम्भवतीत्यत आह–**यद्यपीति** ।। हिरण्यकादि-विषयमेतत् । 'धूमेनाव्रियते' इत्युक्तार्थे प्रमाणमाह– **उक्तं चेति** ।। कामः ब्रह्माख्याग्नेः धूमः, बुद्धेरादर्शस्य मलम्, जीवाख्यगर्भस्योल्व इत्यर्थः ।। ३९ ।।

भावप्रकाशिका (न.टी.)– ननु वैरिणमपि कामं काम्येन पूरयित्वा मोक्षाय यतेत, को विरोधः ? इत्याशङ्कापरिहारायोत्तरपदनूद्य व्याचष्टे– **दुष्पूरेणेत्यादिना** । ननु सुखेनापि कामं पूरयन्तो दृश्यन्ते । अतः कथं दुष्पूरः ? इत्यत आह– **न हीति** ।।

नन्विन्द्रादिपदयोग्यानां (स्वस्वपदकामस्य मुक्त्यविरोधित्वात् -पां) स्वस्वपदकामो मुक्त्यविरोधीति दुःखेनापि तल्लाभे कथं कामस्य वैरित्वम् ? अयोग्यानां तु दुःखेनापि न तत् लभ्यते इति (अतः -पां) कथमिदमुदाह्रियते ? उच्यते । अयोग्यानामेव हिरण्यकादीनां बलादिन्द्रादिपदलाभः (लाभदर्शनात् -पां)पुराणादिषु श्रुत इति तद्विषयमेवेदं वाक्यम् ।।

ननु दुर्लब्धेनापीन्द्रादिपदेन कामं पूरयित्वा मुक्तये यततां (मोक्षाय यतने-पां) कामः किं करिष्यति ? इत्याशङ्कापरिहारत्वेनोत्तरं पदं व्याचष्टे– **यद्यपीति** ।। न केवलं दृष्टान्त-त्रयानुगुण्यात् दार्ष्टान्तिकेऽल्पाप्रियमाणभेदो युक्तिमात्रात्, किन्त्वागमादपीत्याह– **उक्तं चेति** ।। ज्ञानाख्याग्नेः ब्रह्माख्याग्नेश्चावरणे धूमवद्धूमः कामः । बुध्याख्यादर्शस्य मलवन्मलः कामः । जीवाख्यगर्भस्योल्वेव इति ज्ञातव्यम् । कप्रत्यः कुत्सनेन ।। ३९ ।।

प्रमेयदीपिका (ज.टी.)– यो न पूरयितुं शक्यः स दुष्पूरः । कामस्तु विषयसम्पादनेन पूरयितुं शक्यः । कथं दुष्पूरः? इत्यतोऽन्यथा व्याचष्टे– **दुष्पूरेणेति** ।। न नञर्थे दुश्शब्दः । किन्तु कृच्छ्रार्थ इत्यर्थः । तदुपपादयति– **न हीति** ।। कामविषयोपलक्षणमेतत् ।।

ननु प्रज्वलनात्मकत्वात् क्रोधोऽनलो युक्तः । कामस्तु कथमनलः? इत्यतः सोप-पत्तिकमन्यथा व्याचष्टे– **यद्यपीति** ।। इदमपि प्राप्तादाधिक्यस्योपलक्षणम् । श्लोकद्वयार्थे प्रमाणसम्मतिमाह– **उक्तं चेति** ।। कामकः कुत्सितकामो ज्ञानस्य, ब्रह्मणश्च, अग्नेर्धूमः । तथा बुद्धेः अन्तःकरणस्य । आदर्शस्य मलम् ।। अथ जीवस्य गर्भस्योल्व इति सर्वत्र

गूढोपमा ॥ एतेन 'इदम्' इत्युक्तस्य विवरणं द्वितीयश्लोके' इति व्याख्यानमपाकृतं भवति ॥ ३९ ॥

**भावबोधः (र.टि.)– ॥ ज्ञानस्य ब्रह्मणश्चेति ।** अनेन आवृतं ज्ञानमेतेनेत्यत्रापि 'धूमेनाव्रियतेवह्निर्यथा' इति दृष्टान्तत्वेन सम्बध्यते इत्युक्तं भवति ॥ ३९ ॥

भावदीपः **(रा.टि.)– कामो ज्ञानस्य ब्रह्मणश्चेति अग्नेर्धूम इति ॥** 'यथा' इति शेषः ॥ बुद्धेः इत्यनुवादः, अन्तःकरणस्य इति व्याख्या । तथापदेन 'कामः' इत्यनुषज्यते । **आदर्शस्य मलमिति ॥** 'यथा' इति, अत्रापि शेषः । 'उल्ब'इत्यनन्तरमपि 'यथा' इति ध्येयम् । अत एवाऽह– **सर्वत्र गूढोपमेति ॥ एतेनेति ॥** 'ज्ञानिनोऽपि' इत्यादिकथनेन, प्रमाणकथनेन वा इत्यर्थः ॥ ३९ ॥

**भावरत्नकोशः (सु.टि.)– न नञर्थ इति ॥** 'दुर्यवनं दुश्शकटम्' इत्यादौ नञर्थेऽभावे दुश्शब्दप्रयोगदर्शनादिति भावः । 'कृच्छ्रार्थ' इति वदन् 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खल्प्रत्यय इत्यभिप्रैति । तत् कृच्छ्रेण पूर्यमाणत्वम् । कामविषयमात्रस्य प्रस्तुतत्वादाह– **कामेति ॥** एतत् इन्द्रादिपदम् ।

नन्विन्द्रादिपदयोग्यानां स्वस्वपदकामो मुक्त्यविरोधीति दुःखेनापि तल्लाभे कथं कामस्य वैरित्वम् ? अयोग्यानां तु दुःखेनापि न तल्लभ्यत इति कथमिदमुदाह्रियते ? उच्यते– अयोग्यानामेव हिरण्यकादीनां बलाद् इन्द्रादिपदलाभः पुराणादिषु श्रुत इति तद्विषयमेवेदं वाक्यमिति नरहरितीर्थश्रीमच्चरणाः ।

**॥ इदमपि** ब्रह्मादिपदमपि । 'हिरण्यकादिविषयमेतत्' इति च भावप्रकाशिका । प्राचीनटीकायां 'यद्यपि' इति भाष्यं दुर्लभेनापीन्द्रादिपदेन कामं पूरयित्वा मोक्षाय यतने कामः किं करिष्यति ? इत्याशङ्कापरिहारत्वेनोत्तरं पदं व्याचष्टे' इत्यवतारितम् । यद्यपि दुःखेनेन्द्रादिपदं प्राप्तम् । तथाऽपि ततोऽधिकमिच्छति, न पुनरलम्बुद्धिमान् भवति कामीति न तस्य मोक्षयत्नो घटत इति तत्र भाष्यार्थो ज्ञातव्यः । 'अलम्' इति पर्याप्तिवाचि मान्तमव्ययम् । तस्मात् 'अलमस्या अस्ति' इत्यर्थेऽर्शआद्यचि 'अव्ययानां भमात्रे टिलोपः' षष्ठ्यर्थश्च विषयत्वं तेन अला=पर्याप्तिविषयबुद्धिरिति लभ्यते । ततो नञा बहुव्रीहौ 'अनलः' इति भाष्यं व्याख्येयम् । तेन 'कथमकारान्तत्वम्?' इति निरस्तम् ।

श्लोकः ३९

'कुत्सित' इति वदन् 'कुत्सिते' (पा.सू.) इति कामशब्दात् कन्प्रत्यय इत्याचष्टे। 'बुद्धेः' इत्यनुवादः, 'अन्तःकरणस्य' इति व्याख्या। तथाऽन्तःकरणमिति भाषणादिति भावः। **सर्वत्रेति ॥** अग्नेर्धूमो यथा, आदर्शस्य मलं यथा, गर्भस्योल्बो यथा, तथा ज्ञानस्य, ब्रह्मणः, अन्तःकरणस्य, जीवस्य च, काम आवरणमिति यथातथाशब्दाभावेऽपि तदर्थस्य गूढाभिप्राय-गोचरत्वाद् गूढोपमा वाचकादिलुप्तोपमेत्यर्थः।

॥ **एतेन** प्रमाणोदाहरणेन। **'इदम्' इत्युक्तस्य** 'तथा तेनेदमावृतम्' इत्यत्रेदंशब्देनोक्तस्य। **अपाकृतमिति**। 'कामेन ज्ञानमावृतम्' इत्युक्त्यैव विवक्षितार्थलाभेन दृष्टान्तत्रयानुपयोगात्, आवरणतारतम्यकथनायोगात्, प्रमाणे ब्रह्मादेरावृतत्ववर्णनायोगाच्चेति भावः ॥ ३९ ॥

**गीताश्लोकद्वयाक्षरार्थस्तु–** कामः कथं मोक्षविरोधी? इति जिज्ञासायामुच्यते– **धूमेनेति ॥ तेन** कामेन। **इदं** ईश्वरअन्तःकरणजीवलक्षणवस्तुत्रयम् ॥ ३८ ॥

पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तं कामस्य। इदानीं तु कथञ्चित् शास्त्रश्रवणमननजनितमपि ज्ञानं कामोपहतं चेत्, नापरोक्षज्ञानरूपस्वकार्याय प्रभवतीत्युच्यते– **आवृतमिति ॥** ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारेऽपि 'ज्ञानिनः' इति वचनं शास्त्रजनितज्ञानवतोऽपि ज्ञानं कामावृतं चेत्, न स्वकार्यक्षमं, किमु वक्तव्यं गुरूपदेशमात्रजनितज्ञानवतः कार्यं प्रतिवध्नातीति कैमुत्य-द्योतनार्थम्। एतच्छब्दार्थविवरणम् **–कामरूपेण वैरिणेति**। कामाख्येन वैरिणा। दुष्पूरेण दुःखेन पूरणीयेन। नास्त्यलम्बुद्धिरनेन इति अनलस्तेन इति ॥ ३९ ॥

**भावदीपिका (श्री.टि.)–** 'शक्य' इत्यनन्तरम् **इतिशब्दः पूरणीयः। नञर्थ इति ॥** 'पूरयितुं न शक्यः' इत्येवंरूपे ॥ **किन्तु कृच्छ्रार्थ इति ॥** 'दुर्दुःखमिति सम्प्रोक्तम्' इति गीतातात्पर्योदाहृतप्रमाणबलेन दुःशब्दो दुःखापरपर्यायकृच्छ्रवाचीत्यर्थः। वस्तुतस्तु 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति सूत्रे दुरः कृच्छ्रार्थे खल्प्रत्ययविधानात्, दुष्करं वनं कृच्छ्रेण कर्तुं शक्यमित्यर्थः' इत्युदाहृतत्वाच्चात्रापि कृच्छ्रार्थे दुःशब्द इत्यर्थः। एतत्सूत्रमनुसन्धायैव 'कृच्छ्रार्थः' इत्याह। अन्यथा भाष्यानुसारेण 'दुःखार्थः' इत्यवक्ष्यदिति। ननु कामविषयः पूरयितुं शक्यत इति शङ्कायां कामविषयस्यैव सुखासाध्यत्वं वक्तव्यम्, किमिन्द्रादिपदग्रहणेन? इत्यत आह– **कामविषयेति ॥** नन्विन्द्रादिदेवानां स्वपदातिरिक्तपदस्ययोग्यत्वेन तत्राऽकाङ्क्षाया

अभावात् कथं यद्यपीत्याद्युच्यते? इत्यत आह– **इदमपीति** ॥ यत् प्राप्तं तदपेक्षयाऽप्यधिकं पुनरिच्छतीत्यत्रैव तात्पर्यम्, न यथास्थित इत्यर्थः ॥

॥ **ज्ञानस्य ब्रह्मणश्चेति** ॥ 'ज्ञानस्य' इत्युक्त्या 'आवृतं ज्ञानमेतेन' इत्यत्रापि 'धूमेनाऽव्रियते वह्निः' इति दृष्टान्तः सम्बद्ध्यत इत्युक्तं भवति । यथा धूमेन प्रकाशरूपोऽपि वह्निराव्रियते तथैतेन कामेन ज्ञानमावृतमिति 'ज्ञानस्य' इत्युक्त्योत्तरश्लोकार्थेऽपीदं प्रमाणमिति द्रष्टव्यम् । **सर्वत्र गूढोपमेति** ॥ कामकः कुत्सितकामोऽग्रेर्धूम इव ज्ञानस्य ब्रह्मणश्चाऽवरकः । कामकः आदर्शस्य मलमिव बुद्धेः अन्तःकरणस्याऽवरकः । कामकः गर्भस्योल्ब इव जीवस्याऽवरक इति ॥ **एतेनेति** ॥ 'तेनेदमावृतम्' इत्यत्र 'इदम्' इत्यस्य परमात्मअन्तःकरणजीवाख्यं वस्तुत्रयं धूमादिनाऽग्न्यादिरिवाऽवृतमिति व्याख्याय तत्र प्रमाणस्योदाहृततया तद्विरुद्धत्वेन यत् परेणोक्तम् – 'तेनेदमावृतम्' इत्यत्रोक्तेदंशब्दार्थ एव 'आवृतं ज्ञानम्' इति द्वितीयश्लोकेन विव्रियते' इति तदप्यपाकृतं भवतीत्यर्थः ॥ ३९ ॥

**भावप्रकाशः (कृ.टि.)**– भाष्ये **दुःखेन हि कामः पूर्यत इति** । 'पॄ पालनपूरणयोः' इत्यस्मात् कर्मणि 'घञर्थे कविधानम्' इति कः । ततो दुःखार्थेन दुरितिशब्देन तृतीयासमास इति भावः । नच 'स्था-स्ना‍ा गा-पा-व्यधिहनियुध्यर्थम्' इति परिगणनात् कथं कप्रत्ययः? इति वाच्यम् । पणनं पणः 'घञर्थे कविधानम्' इति शब्दकौस्तुभे उक्तत्वेन स्थास्नादेरुदाहरणमात्रत्वात् । अत्र भाष्यटीकयोः 'दुष्पूर' इत्येव पाठः । 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्गस्य षत्वविधानादिति ज्ञातव्यम् । नन्वस्त्विन्द्रादिपदकामस्य दुष्पूरत्वम्, तथाऽपि कामसामान्यस्य दुष्पूरत्वाभावात् कथं तस्य तद्विशेषणम्?इत्यत आह– **कामविषयोपलक्षणमिति** ॥ **भाष्येऽलम्बुद्धिर्नास्तीत्यनल इति** ॥ 'अलम्'इति पर्याप्तिवाचकमान्ताव्ययम् । तस्मादलमस्या अस्तीत्यर्थे अर्शआद्यच् । 'अव्ययानां भमात्रे टिलोप' इति टिलोपः । षष्ठ्यर्थश्च विषयत्वम् । तेनाला पर्याप्तिविषयिणी बुद्धिरिति पर्यवस्यति । ततो नञा सह बहुव्रीहावनल इति भवतीति भावः । तेन 'मान्ताव्ययस्य नञा बहुव्रीहावकारान्तत्वं कथम्' इत्यपास्तम् । अचेतने चेतनवदुपचाराद् बुद्धिरित्याद्युक्तम् । 'अल्पः कामः' इति व्याख्याने तस्य ब्रह्माद्यावरणत्वमसम्भावितं स्यादत आह– **कुत्सितकाम इति** ॥ अनेन 'कुत्सितः' इति सूत्रेण कप्रत्यय इत्युक्तं भवति । **ज्ञानस्य ब्रह्मणश्चेति** ॥ अनेन 'आवृतं ज्ञानमेतेन' इत्यत्रापि

श्लोकः ३९
'धूमेनाव्रियते वह्निर्यथा' इति दृष्टान्तत्वेन सम्बध्यत इत्युक्तं भवति । नन्वेवं सति कुत्सित-कामादीनां धूमादिभिर्ज्ञानादीनां चाग्न्यादिभिः तादात्म्यं च प्राप्तं तत्कथमित्यत आह– **सर्वत्र गूढोपमेति** ।। उपमानोपमेयसाधारणधर्मस्य सादृश्यवाचकेवादिशब्दस्य चाप्रयोगाल्लुप्तोपमेत्यर्थः । यथोक्तमालङ्कारिकैः – 'उपमा द्विविधा पूर्णा लुप्ता चेति । उपमानोपमेययोः तत्साधारणधर्मस्य सादृश्यस्य च प्रतिपादकानां प्रयोगे पूर्णा । एकस्य द्वयोस्त्रयाणां वा प्रयोगे लुप्ता' इति । तथा चोपमावाचीवशब्दाप्रयोगेऽपि तदर्थावगमान्नानुपपत्तिरिति भावः ।।

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ।। ४० ।।**

## भाष्यम्

**वधार्थं शत्रोरधिष्ठानमाह– इन्द्रियाणीति ।। एतैः ज्ञानमावृत्य बुद्ध्यादि-भिर्हि विषयगैः ज्ञानम् आवृतं भवति ।। ४० ।।**

भावप्रदीपिका (प.टी.)– तत्पूरणेन तद्विरोधित्वं चेन्न परिह्रियते, कथं तर्हि तद्विरोधित्वपरिहारः ? इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति– **वधार्थमिति ।।** हन्तव्य एवाधिष्ठाननियमनेनेत्यर्थः । ज्ञानमावृत्यान्येनैतैर्विमोहयतीति मा भूदित्याह– **एतैरिति ।।** कथमेतैर्ज्ञानावरणम् ? इत्यत आह– **बुद्ध्यादिभिरिति** ।। ४० ।।

भावप्रकाशिका (न.टी.)– ननु पापप्रेरक एव पृष्टो न तदधिष्ठानम् । अतः किमर्थं तदुच्यते? इत्याशङ्कां परिहरन्नुत्तरश्लोकमवतार्य व्याचष्टे– **वधार्थमिति ।।** 'एतैर्विमोहयति, अन्येन ज्ञानमावृत्य' इति प्रतीतिर्मा भूदित्याह– **एतैरिति ।।** कथमेतैर्ज्ञानावरणम्?इत्यत आह– **बुद्ध्यादिभिरिति** ।। ४० ।।

प्रमेयदीपिका (ज.टी.)– 'इन्द्रियाणि' इत्यादिकमपृष्टं किमर्थमुच्यते? इत्यत आह– **वधार्थमिति ।।** एतदर्थमेव ह्यर्जुनेन बलवान् पृष्टः । क्रियाद्वयश्रवणात् किं प्रतीन्द्रियादीनां करणत्वम्? इति न प्रतीयते। सन्निधानाद् विमोहनं प्रतीत्यन्यथा च प्रतीयते । अत आह– **एतैरिति ।।** तदुपपादयति– **बुद्ध्यादिभिरिति ।।** इन्द्रियादित्वेनोक्तानामपि बुद्ध्यादित्वेन ग्रहणं प्राधान्यक्रमज्ञापनार्थम् ।। ४० ।।

**भावरत्नकोशः (सु.टि.)– ॥ एतदर्थमेव** वधार्थमेव । **क्रियाद्वयेति** ॥ विमोहन-आवरणरूपक्रियाद्वयेत्यर्थः । अप्रतिपत्तिं व्याख्यानबीजम् अभिधाय, अन्यथाप्रतिपत्तिं च तद्बीजमाह– **सन्निधानादिति** ॥ तत् 'एतैर्ज्ञानमावृत्य' इत्युक्तम् उपपादयतीति इत्यर्थः । 'इन्द्रियाणि' इति मूल इन्द्रियाणामादित्वावगमाद् भाष्ये कथं 'बुद्ध्यादिभिः' इत्युच्यते ? इत्यतस्तात्पर्यमाह– **इन्द्रियादित्वेनेति** ॥ **प्राधान्येति** ॥ 'बुद्धिर्मन इन्द्रियाणि' इत्येवं प्राधान्यज्ञापनार्थमित्यर्थः ।

**गीताक्षरार्थस्तु–** यः कामः पापप्रवर्तकेषु बलवान् भगवतोक्तः तस्य शत्रोर्निग्रहायाधिष्ठान-मुच्यते – **इन्द्रियाणीति** ॥ बुद्धिर्मन इन्द्रियाणि च अस्य पापप्रवर्तकस्य कामस्य अधिष्ठानम् आश्रय उच्यते । एतैः हि एष कामो ज्ञानमावृत्य ज्ञानजन्म प्रतिबध्य उत्पन्नं च ज्ञानं कार्याक्षमं कृत्वा देहिनं विमोहयति इति ॥ ४० ॥

**भावदीपिका (श्री.टि.)– ॥ एतदर्थमेवेति** ॥ वधार्थमेवेत्यर्थः ॥ **क्रियाद्वयेति** ॥ 'विमोहयति' 'आवृत्य' इति विमोहनावरणरूपक्रियाद्वयेत्यर्थः । **कां** क्रियां प्रति ॥ **सन्निधानादिति** ॥ 'एतैर्विमोहयति' इति शब्दसन्निधानादित्यर्थः । **इन्द्रियादित्वेनेति** ॥ 'गीतायाम्' इति शेषः ॥ **बुद्ध्यादित्वेनेति** ॥ 'भाष्ये' इति शेषः । **प्राधान्येति** ॥ 'इन्द्रिय-मनोबुद्धीनां मध्ये बुद्धिरूपेन्द्रियस्य' प्राधान्यज्ञापनार्थम् इति शेषः ॥ ४० ॥

**तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥**

## भाष्यम्

**हृताधिष्ठानो हि शत्रुर्नश्यति ॥ ४१ ॥**

भावप्रदीपिका (प.टी.)– नन्विन्द्रियनियमनेन कथं पाप्मनोऽस्य वध उच्यते 'तस्मात्' इत्यनेन ? इत्यत आह– **हृतेति** ॥ ४१ ॥

भावप्रकाशिका (न.टी.)– 'यत इन्द्रियाण्यधिष्ठानानि तस्य, अतस्तानि नियम्य, तं

जहि' इतीन्द्रियनियमनस्य तद्वधहेतुत्वमुच्यते । तत्कथम्? इत्यत आह– **हताधिष्ठानो हीति** ।। ४१ ।।

**प्रमेयदीपिका (ज.टी.)**– तस्मात् त्वम् इतीन्द्रियाणां निग्रहः कामहननोपायतयोपदिश्यते । तदुपपादयति– **हतेति** ।। **नश्यति** नाशयितुं शक्यो भवति ।। ४१ ।।

**भावरत्नकोशः (सु.टि.)**– अधिष्ठानानाम् आहृतिमात्रेण शत्रुनाशे तन्नाशोपायतया वक्ष्यमाणज्ञानाख्यायुधोपदेशवैयर्थ्यम् इत्यतो 'नश्यति' इत्यस्य तात्पर्यमाह– **नश्यति नाशयितुं शक्यो भवतीति** ।।

**गीताक्षरार्थस्तु**– यस्मादेवं विमोहयति कामः तस्मात् पाप्मानं ब्रह्महत्यादिपापहेतुं ज्ञानं गुरूपदेशमात्रजनितं विज्ञानं शास्त्रजनितं ज्ञानं च नाशयतीति कर्तरि ल्युः ल्युड् वा । ज्ञान-विज्ञानयोर्नाशनं नाशो यस्मादिति बहुव्रीहिर्वा । तम् एनम् अन्वादेश एनादेशः । कामं प्रजहि परित्यज्य । हताधिष्ठानो हि शत्रुर्नाशयितुं शक्यो भवतीत्युपपत्तिसूचको हिशब्द इति स्वामिनः । इन्द्रियजयः कामहननोपाय इति ।। ४१ ।।

**भावदीपिका (श्री.टि.)**– दुर्गाद्यधिष्ठानग्रहणमात्रेण शत्रोर्नाशादर्शनादाह– **नाशयितुं शक्य इति** ।। अनायासेन तन्नाशः कर्तुं शक्यत इत्यर्थः ।। ४१ ।।

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ।। ४२ ।।**

## भाष्यम्

**शत्रुहनने आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह– इन्द्रियाणीति ।। 'असङ्ग-ज्ञानासिमादाय तराति पारम्'इति ह्युक्तम् । शरीराद् इन्द्रियाणि पराणि उत्कृष्टानि । न केवलं बुद्धेः परः श्रुत्युक्तप्रकारेणाव्यक्तादपि । 'अव्यक्तात् पुरुषः परः'** (काठ.१.३.११) **इति हि श्रुतिः ।।**

भावप्रदीपिका (प.टी.)– असर्वोत्तमत्वज्ञानादपि कामादिजयेन मोक्ष इति शङ्का मा भूदित्याह– **न केवलमिति ॥**

भावप्रकाशिका (न.टी.)– प्रकटमप्युत्तरश्लोकप्रतिपाद्यमपव्याख्यातिरोहितं प्रकाशयति– **शत्रुहनन इति ॥** इन्द्रियाद्यभिमानीन्द्रादितारतम्यपूर्वकपरमपुरुषहरिज्ञानं हि कामादिशत्रुनाशकम् । ज्ञानस्यायुधरूपेण कामादिशत्रुनाशकत्वे प्रमाणमाह– **असङ्गेति ॥** इन्द्रियाणि पराणि कस्मात् ? इत्याशङ्कायामाह– **शरीरादिति ।** बुद्धेः सकाशात् परत्वज्ञानस्यैव संसारनिवृत्तिहेतुत्वोक्तेः, तावदेव भगवतः परत्वम्, न तु सर्वोत्तमत्वमिति शङ्का मा भूत् । अव्यक्तादपि परत्वश्रुतेरिति भावेनाह– **न केवलमिति ।** का सा श्रुतिः ? इत्यत आह– **अव्यक्तादिति ॥**

प्रमेयदीपिका (ज.टी.)– 'इन्द्रियाणि पराणि' इत्यस्य पूर्वेण सङ्गतिर्न दृश्यते । अत आह– **शत्रुहनन इति ॥** 'एवं बुद्धेः परम् '(३.४३)इत्यनेन वक्तुम् । ज्ञानस्यात्राऽऽयुधत्वे प्रमाणमाह– **असङ्गेति ॥** असङ्गं वैराग्यसहितम् । तराति पारम् । पारमतितर । 'छन्दसि परेऽपि' (पा.सू.१.४.८.१) इति वचनात् । परत्वस्यावधिसापेक्षत्वात् कस्मादिन्द्रियाणि पराणि? इत्यत आह– **शरीरादिति ॥** सन्निधानादिति भावः । किं परत्वमन्यत्वम्? नेत्याह– **उत्कृष्टानीति ॥** 'यो बुद्धेः परतस्तु सः' इति परमात्मोच्यते । तस्य बुद्धेः परत्वे महताऽत्मना साम्यं स्यादित्यत आह– **न केवलमिति ॥** काऽसौ श्रुतिर्यद्बलादध्याहारः? इत्यत आह– **अव्यक्तादिति ॥**

भावबोधः (र.टि.)– ॥ सन्निधानादिति ॥ इन्द्रियाणां शरीरसंयुक्तत्वादित्यर्थः ॥

भावदीपः (रा.टि.)– 'वक्तुम्' इत्यस्य 'केन'? इत्याकाङ्क्षायामाह– एवं बुद्धेः परमित्यनेन **वक्तुमिति ॥ अतितरेति ॥** कश्चित् प्रत्युच्यते । अतिक्रान्तो भवेत्यर्थः ॥ ननु 'उपसर्गाः क्रियायोगे' (पा.सू.१.४.५९) इत्युक्तेः, उपसर्गस्य 'तर' इति क्रियातः 'अति' इत्युपसर्गस्य प्राक् प्रयोज्यत्वात् 'अतितर' इति पूर्वनिर्देशेन भाव्यम् । कथं तरातीति पश्चान्निर्देशः? इत्यत आह– **छन्दसि परेऽपीति ॥** छन्दोविषये उपसर्गाः परतोऽपि भवन्तीत्युक्तेर्न दोष इत्यर्थः ॥ **सन्निधानादिति ॥** 'इन्द्रियाणि' इत्युक्त्यैव तदाश्रयतया शरीरस्य बुद्धौ सन्निहितत्वादित्यर्थः ॥ **महता आत्मनेति ॥** महत्तत्त्वाभिमानिना चतुर्मुखेनेत्यर्थः ॥

श्लोकः ४२

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु 'अति' इत्यस्योपसर्गतया 'ते प्राग्धातोः' इति उपसर्गाणां धातोः प्राक् प्रयोक्तव्यत्वविधानात् अतीत्युपसर्गस्यापि धातोः प्राक् प्रयोक्तव्यत्वेन 'अतितर' इत्येव भवितव्यम् । 'तराति' इति तु कथम्? इत्यतः प्राक् प्रयोक्तव्यतया विहितानामपि उपसर्गाणां 'छन्दसि परेऽपि' इति पश्चात् प्रयोगस्याप्यभ्यनुज्ञानात् युक्तः पश्चादपि प्रयोग इत्याशयेनाह– **तराति पारमित्यादिना ॥**

**॥ इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे तृतीयोऽध्यायः ॥**

**भावरत्नकोशः (सु.टि.)**– 'वक्तुम्' इति भाष्ये केनेत्याकाङ्क्षायां शेषमाह– **'एवं बुद्धेः परम्' इत्यनेनेति ॥** अत्र कामरूपशत्रुहनने । 'असङ्गो ह्ययं पुरुषः' इति सुप्रसिद्धासङ्गत्वस्य कथं ज्ञानविशेषणत्वम् ? इत्याशङ्क्य 'असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन' इति पञ्चदशाध्यायभाष्यविवक्षितमर्थमाह– **असङ्गमिति ॥** न विद्यते सङ्गो विषयरागः, सामानाधिकरण्येन यस्य तद् असङ्गमिति भावेन तात्पर्यमाह– **वैराग्यसहितमिति ॥** मत्वर्थीयोऽच्प्रत्ययो वा । असङ्गम् असङ्गवदित्यस्य तात्पर्यतोऽनुवादः– **वैराग्यसहितमिति ॥** 'असङ्गसहितं ज्ञानम् असङ्गम्' इति मध्यमपदलोपी समास इति भावेनेयमुक्तिरिति तु मन्दम् । 'असङ्गम्' इति टीकोक्त्ययोगात् । असङ्गसहितं ज्ञानमसङ्गज्ञानमित्येव वाच्यत्वात् ।

ननु 'ते प्राग्धातोः' इति पूर्वं प्रयोक्तव्यत्वेन विहितस्यातेः कथं पश्चात् प्रयोगः? इत्यत आह– **छन्दसीति ॥** छन्दसि ते गत्युपसर्गाः पश्चादपि प्रयुक्ताः साधव इति पाणिनिवचनादित्यर्थः । भागवतवचनं च छन्दस्तुल्यमिति भावः । **सन्निधानादिति ॥** 'इन्द्रियाणि' इत्युक्त्यैव तदाश्रयतया शरीरस्य बुद्धौ सन्निधानादित्यर्थः । **महताऽत्मनेति ॥** 'तेभ्यो बुद्धिस्सरस्वती । तस्या ब्रह्मा महानात्मा' इति काठकभाष्ये बुद्धिशब्दस्य सरस्वत्यर्थकत्वेन तत उत्तमत्वोक्तौ भगवतो महत्तत्त्वमानिना चतुर्मुखेन साम्यशङ्का स्यादित्यर्थः । 'बुद्धेरात्मा महान् परः' इति श्रुत्यनुगमाय 'महताऽऽत्मना' इत्युक्तम् ॥ **अध्याहार इति ॥** 'इन्द्रियेभ्यः' इत्यनन्तरं 'परा अर्थाः, अर्थेभ्यः' इत्यध्याहारः, बुद्धेरित्यनन्तरं 'आत्मा महान् परः । महतः परमव्यक्तम् अव्यक्तात्' इति चाध्याहार इत्यर्थः ।

**भावदीपिका (श्री.टि.)– ॥ अत्रेति ॥** कामादिरूपशत्रुवध इत्यर्थः । ननु 'ते प्राग् धातोः' इत्युपसर्गाणां धातोः प्राक् प्रयोज्यत्वोक्तेः 'अतितर' इति वक्तव्यम्, कथं 'तराति' इत्युक्तम्? अत आह– **छन्दसीति ॥** 'छन्दसि परे व्यवहिताश्च' इति छन्दसि उपसर्गाः धातोः परतोऽपि भवन्तीत्युक्तत्वाददोष इति भावः ॥ **सन्निधानादिति ॥** इन्द्रियाणां शरीरसंयुक्तत्वेन सन्निहितत्वादिति भावः ॥ **महताऽऽत्मनेति ॥** महत्तत्त्वाभिमानिना चतुर्मुखेनेत्यर्थः । 'बुद्धे-रात्मा महान् परः' इति श्रुतौ महत आत्मनो बुद्धेः परत्वोक्तेरिति भावः ॥ **अध्याहार इति ॥**

'मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ।
महतः परमव्यक्तमव्यक्तात् ॥'

इति गीतायामध्याहार इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)–** ननु 'ते प्राग्धातोः' इत्यनेनोपसर्गाणां धातोः पूर्वं प्रयोग-नियमोक्तेः 'अतितर' इति प्रयोक्तव्यम् । कथं 'तराति' इति धातोः पश्चादुपसर्गप्रयोगः? इत्यत आह– **अतिपारमितीति ॥ छन्दसीति ॥** अनेन सूत्रेण च्छन्दसि उपसर्गाणां धातोः पश्चात् प्रयोगोऽपि साधुरित्युक्तत्वादित्यर्थः । **सन्निधानादिति ॥** 'इन्द्रियाणां शरीरसंयुक्तत्वादित्यर्थः' इत्युक्तं भावबोधे । अन्ये तु 'देहिनमित्यत्र प्रकृतिभागेन शरीरस्य प्रकृतत्वात्' इत्याहुः । **महतात्मनेति ॥** महत्तत्त्वाभिमानिना ब्रह्मणेत्यर्थः । बुद्धेरात्मा महानिति श्रुत्यनुगमाय– **महताऽत्मनेत्युक्तम् ॥**

## भाष्यम्

**नच तत्र तत्रोक्तैकदेशज्ञानमात्रेण भवति मुक्तिः । सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहारपादेऽभिहितः 'आनन्दादयः प्रधानस्य'** (ब्र.सू.३.३.१२) **इत्यादिना । तथा चान्यत्र–**

**'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि ।
सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायागताश्च ये ।
सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम् ।
तेषामेव भवेन्मुक्तिर्नान्यथा तु कथञ्चन' इति गारुडे ।**

श्लोकः ४२

**तस्मादव्यक्तादपि परत्वेन ज्ञेयः ॥**

**भावप्रदीपिका (प.टी.)**– ननु भगवतः सर्वोत्तमत्वेऽपि बुद्धिपरत्वज्ञानादेव केषाञ्चिन्मोक्षः किं न स्यात् ? इत्यत आह– **न चेति ॥**

**भावप्रकाशिका (न.टी.)**– ननु भवतु भगवतः सर्वोत्तमत्वम् । तथाऽपि मुक्तिरत्रोक्तपरिज्ञानमात्रेण किं न स्यात् ? इत्याशङ्का मा भूदित्येतत् सप्रमाणकमाह– **न चेति ॥** अव्यक्तात् परत्वमप्यानन्दादिचतुष्टयान्तर्भूतमेव । न ह्यात्मशब्दोक्तसर्वस्वामित्वमपि अव्यक्तादवरस्य सम्भवति । विष्णुकृता इतिहासपुराणपञ्चरात्राद्या विष्णुवेदाः । यतोऽन्यथा मुक्तिर्न, अतोऽव्यक्तादिपरत्वेन ज्ञेय इत्याह– **तस्मादिति ।**

**प्रमेयदीपिका (ज.टी.)**– अस्तु भगवानव्यक्तादपि परः । तथाऽपि कामादिजयार्थं बुद्धेः परत्वेनैव ज्ञातेनालम् । किं प्रमाणान्तरसिद्धाध्याहारेण? इत्यत आह– **न चेति ॥** कामादिजयो हि मुक्तिद्वारम् । नच मुक्तिरेकदेशज्ञानमात्रेण भवति । कुतः ? इत्यत आह– **सार्वत्रिकेति ॥ तस्यान्यथाव्याख्यानेऽपि** स्पष्टं प्रमाणमाह– **तथा चेति ॥** 'सर्वत्रैव' इति सम्बन्धः । वेदाद्यनुक्ता अपि भगवत्सम्प्रदायागताः । **तैः सह** तैः सहितम् । नच तत्र इत्युक्तमुपसंहरति– **तस्मादिति ॥**

**भावबोधः (र.टि.)**– ॥ **अन्यथा व्याख्यानेऽपीति** । तावत्तावद्गुणोपासकानां तथा तथा गुणोपसंहारः । नतु सर्वेषां सर्वगुणोपसंहार इत्यन्यथाव्याख्यानेऽपीत्यर्थः ॥ ४२ ॥

॥ इति रघूत्तमयतिकृते श्रीमद्गीताभाष्यटीकाभावबोधे तृतीयोऽध्यायः ॥

**भावदीपः (रा.टि.)**– ॥ **तस्यान्यथाव्याख्यानेऽपीति** ॥ यत्र शाखायाम् आनन्दादयः प्रधानस्य ब्रह्मणो नोक्तास्तत्र उपसंहर्तव्याः इत्यादि व्याख्यानेऽपीत्यर्थः ॥

**भावरत्नकोशः (सु.टि.)**– न कामजयमात्रं फलम् । येनैकदेशज्ञानेनापि तज्जयः स्यादिति शङ्क्येत । किन्तु तद्द्वारा मुक्तिरिति भाष्योक्तमुपपादयति– **कामादीति ॥** ननु 'आनन्दादयः' इति सूत्रेणाव्यक्तात् परत्वस्यापि भगवति ज्ञातव्यत्वं कथं प्रतीयत इति चोद्यम् अव्यक्तात् परत्वमप्यानन्दादिचतुष्टयान्तर्भूतमेव । आत्मपदोक्तसर्वस्वामित्वस्याप्यव्यक्तादवरेऽसम्भवात्' इति समाहितं प्राचीनटीकायाम् ।

नन्विदं सूत्रं 'सर्वमुमुक्षुसाधारणान् गुणान् सङ्ख्यानिर्देशाभ्यां निर्णेतुं प्रवृत्तम् । निर्दोषत्वम्, आनन्दः, ज्ञानं, स्वामित्वं चेति चत्वारो न त्वधिकाः । सर्वमुमुक्षूणां तदधिकोपासनेऽसमर्थत्वात्' इति तत्त्वप्रकाशिकोक्तेः, न पुनः सर्ववेदोक्तसर्वगुणोपसंहारमिति व्याख्यातुं शक्यत इत्यत आह– **तस्येति** ॥ 'आनन्दादयः प्रधानस्य' इति सूत्रस्येत्यर्थः । तत्तद्गुणोपासकानां तद्गुणोपसंहारः, न तु सर्वेषां सर्वगुणोपसंहार इति व्याख्यानेऽपीत्यर्थ इति केचित् । 'उपसंहारोऽर्थभेदात्' इत्यादिसूत्रं मुखतोऽनुपादायैतत्सूत्रोपादानं सर्वमुमुक्षुसाधारणगुणोपासनप्रतिपादनपरत्वात् कृतमिति वेदितव्यम् । **तस्य** गीतावचनस्य । अन्यथा व्याख्याने 'अध्याहारेण व्याख्याने' इति वाऽर्थ इत्यप्याहुः ।

'विष्णुवेदेषु' इत्यत्र 'विष्णुकृता इतिहासपुराणपञ्चरात्राद्या विष्णुवेदाः' इति प्राचीनटीका ।

'भारतं पञ्चरात्रं च मूलरामायणं तथा ।
तथा पुराणं भागवतं विष्णुवेद इतीरितः ॥' (गी.भा.२.७२)

इति द्वितीयाध्यायभाष्यरीत्या भारतादयो वा । **वेदाद्यनुक्ताः** वेदविष्णुवेदाद्यनुक्ता अपि । 'विशेषतः' इति शेषः । तेन न 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कथञ्चन' इत्युक्तिविरोध इति परिहर्तव्यम् । वेदवैदिकाद्यनुक्तानां भगवतैव यः स्वगुणानां स्वप्रत्यक्षसिद्धानां ब्रह्मादीन् प्रत्युपदेशः क्रियते स भगवत्सम्प्रदायः, तदागताः । तैस्सह विज्ञाय विमृश्य हरिं पश्यन्तीत्युक्ते गुणानामपि विज्ञातृत्वं, ज्ञातृनिष्ठत्वं वा प्रतीयते । तद्युक्तं, प्रकृतानुपयुक्तं चेत्यतो विवक्षितमर्थमाह– **तैरिति** ॥ तैर्विशिष्टमित्यर्थः । **तस्मादितीति** ॥ सार्वत्रिकगुणोपसंहारेण ज्ञातव्यत्वादित्यर्थः ।

**भावदीपिका (श्री.टि.)–** भाष्ये - **तत्र तत्रेति** ॥ गीतादावित्यर्थः । **तस्यान्यथेति** ॥ सार्वत्रिकगुणोपसंहारो नैकं प्रत्येवोच्यते । किन्तु केनचिद् आनन्दादयो ज्ञातव्याः, केनचिद् अव्यक्तात्परत्वादयः, केनचिद् बुद्धेः परत्वादय इत्यन्यथाव्याख्यानेऽपीत्यर्थः । भाष्योक्तप्रमाणेऽपौरुषेयवेदा ऋगाद्याश्चत्वारः । विष्णुवेदाश्च

'पञ्चरात्रं भारतं च मूलरामायणं तथा ।
तथा पुराणं भागवतं विष्णुवेद इतीरितः ॥'

श्लोकः ४२

इति द्वितीयाध्यायोदाहृतनारदीयवचनेन ज्ञातव्याः । इतरसमुच्चय– इतरनिषेधार्थकतया विरुद्धयोः च-एवशब्दयोरेकत्रान्वयासम्भवादाह– **सर्वत्रैवेति** ॥ **वेदाद्यनुक्ता इति** ॥ मदनुक्ता अपि गुणाः सन्तीति सामान्यतः उक्तावपि विशेषतोऽनुक्ता इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ॥ अन्यथा व्याख्यानेऽपीति** ॥ तत्तद्गुणोपासकानां तत्तद्गुणोपसंहारः । नतु सर्वेषां सर्वगुणोपसंहार इति व्याख्यानेऽपीत्यर्थः । ननु 'तैः सह' इत्यस्य 'ये पश्यन्ति' इत्युक्तकर्तृसम्बन्धे गुणानां ज्ञातृत्वप्राप्त्या बाधः । 'हरिम्' इत्युक्तकर्मसम्बन्धे तु 'पुत्रेण सहागतः पिता' इतिवद्गुणानां ज्ञातव्यत्वमात्रं लभ्यते । नतु हरिविशेषणत्वेन ज्ञातव्यत्वमित्यत आह– **तैः सहितमिति** ॥ तद्विशिष्टमित्यर्थः ॥

## भाष्यम्

**न चात्र जीव उच्यते । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तत्वात् ।**

**'अविज्ञाय परं मत्तो जयः कामस्य वै कुतः' इति च ।**

**अतः परमात्मज्ञानमेवात्र विवक्षितम् ॥ ४२ ॥**

भावप्रदीपिका (प.टी.)– बुद्धेः परत्वेन जीव उच्यते कामनिवृत्त्यर्थमित्यपव्याख्यां दूषयति– **न चेति** ॥ 'अतः परमात्मज्ञानम्' इत्यनेन न जीवो नापि कामस्थानमुच्यत इत्युक्तं भवति । कामस्थित्युक्तेरसङ्गतत्वात्, 'इन्द्रियाणि मनो बुद्धिः' इत्युक्तत्वाच्चेति ॥ ४२ ॥

भावप्रकाशिका (न.टी.)– अपव्याख्यानं दूषयति– **न चेति** ॥ तत्र तावन्मायी 'किमाश्रयः कामं जह्यादित्युच्यते' इति श्लोकमवतार्य सर्वदृश्येभ्यो बुध्यन्तेभ्योऽभ्यन्तरो यं च देहिनं कामो मोहयतीत्युक्तं स बुद्धेः पर आत्मा' इति वर्णयति । तदितरस्तु 'कस्य सन्निधौ कामस्तिष्ठतीति दर्शयितुमाह इत्यवतार्य बुद्धेः परतः स इति काममेव परामृश्यते तस्य प्रकृतत्वात्' इति । तदुभयं चानेन निरस्तं भवति । तथा हि । **नात्र** बुद्धेः परत्वेन **जीव उच्यते** । चशब्दात् कामोऽपि नोच्यते । तथा यो बुद्धेः परः परमात्मा सोऽत्र जीवो नोच्यते जीवत्वेन नोच्यत इत्यपि चशब्दात् ।

तदेतत् साधयति— **रसोऽपीति** ॥ परमात्मदर्शनादेव रसशब्दोक्तकामनिवृत्तेरुक्तत्वात् द्वितीयाध्याये, तत्पक्ष उक्तविरोध इत्यर्थः ॥ नच जीवज्ञानात् जीवेशाभेदज्ञानात् कामज्ञानाद्वा कामनिवृत्तौ प्रमाणमस्ति । प्रत्युत परमात्मज्ञानं विना नान्यत्साधनात् तन्निवृत्तिरित्यत्र प्रमाणमाह— **अविज्ञायेति** ॥ यत एवमुक्तविरोधादिदूषणं जीवादिज्ञानात् कामनिवृत्तौ, अतः परमात्मज्ञानमेवात्र कामनिवर्तकं 'परं बुद्ध्वा' इत्यत्रोक्तमित्याह— **अत इति** ॥ ४२ ॥

**प्रमेयदीपिका** (ज.टी.)— मायावादी तु 'यो बुद्धेः परतस्तु सः' इत्यनेन जीव उच्यते' इत्याह। तन्निराकरोति— नचेति ॥ कुतः? इति चेत् 'एवं बुद्धेः परम्' इत्येतज्ज्ञानस्य कामविनाशसाधनत्वोक्तेः, तस्याश्च भगवत्परिग्रहे घटनादन्यथाऽघटनादिति भावेनोभयत्र प्रमाणमाह— **रसोऽपीति** ॥ 'न चात्र' इत्युक्तमुपसंहरति— **अत इति** ॥

भास्करस्तु **'कामोऽत्रोच्यते'** इत्याह । तदतीव मन्दम् । **'कामः सङ्कल्पः'** (बृ.उ) इत्यादि श्रुतेस्तस्य मनोधर्मस्य तत्परत्वानुपपत्तेः, पक्षद्वयेऽपि **'इन्द्रियाणि पराणि'** इत्यादिना तारतम्योक्तेः न प्रयोजनमस्तीति ॥ ४२ ॥

**भावदीपः** (रा.टि.)— ॥ **कामोऽत्रोच्यत इति** ॥ 'बुद्धेः परतस्तु सः'इत्यत्रेत्यर्थः ॥ **पक्षद्वयेऽपीति** ॥ जीव इति पक्षे, काम इति पक्षे चेत्यर्थः ॥ इतिशब्दो मतद्वयदोषोक्तिसमाप्तौ ॥ ४२ ॥

**भावरत्नकोशः** (सु.टि.)— 'सः बुद्धेर्द्रष्टा परमात्मा' इति सङ्करभाष्यमर्थतोऽनुवदति— **मायावादी त्विति** ॥ इति उत्तरश्लोकेन। **एतज्ज्ञानस्य** बुद्धिपरवस्तुज्ञानस्य । 'बुद्ध्वा कामं जहि' इति श्रवणादाह— **साधनत्वोक्तेरिति** ॥ **तस्याः** उक्तेः । **उभयत्र** घटनाघटनयोः । परमात्मज्ञानादेवास्याधिकारिणः रसशब्दोक्तकामनिवृत्तेर्द्वितीये उक्तत्वात्, मत्तः परम् अन्यद् विषयजातम् अविहाय तत्रानुरक्तस्य कामजयः कुतः स्यात्? इत्यत्रापि परमात्मज्ञानं विना नान्यसाधनात् तन्निवृत्तिरित्युक्तत्वाच्च न जीवोऽत्रोच्यत इत्यर्थः । **अतः** जीवग्रहणस्योक्तरीत्याऽनुपपन्नत्वात् । अत्र गीतायाम् । परमात्मज्ञानमेव कामविनाशसाधनत्वेन विवक्षितमिति भाष्यार्थः स्फुटत्वान्नोक्तः । **कामोऽत्रोच्यत इति** ॥ कस्य सन्निधौ कामस्तिष्ठति इति दर्शयितुम्

आह इत्यवतार्य 'यो बुद्धेः परतस्तु सः' इति काम एव परामृश्यत इत्याहेत्यर्थः । व्यक्तमेतत् प्राचीनटीकायाम् । 'मनोधर्मस्य' इति हेत्वर्थगर्भं विशेषणम् । **तत्परत्वानुपपत्तेः** मनःपरबुद्धि-परत्वानुपपत्तेः । **पक्षद्वयेऽपीति** ॥ 'जीव उच्यते' इति मायावादिपक्षे, 'काम उच्यते' इति भास्करपक्षेऽपीत्यर्थः ॥ ४२ ॥

**भावदीपिका (श्री.टि.)**– ॥ **एतज्ज्ञानस्येति** ॥ बुद्धिपरत्वेनोक्तज्ञानस्येत्यर्थः ॥ **भगव-दिति** ॥ 'सोऽप्यस्य' इति परमात्मापरोक्ष्येणैव कामविनाशोक्तेरत्रापि भगवत्परत्वमेवाङ्गीकार्य-मिति भावः । **अन्यथेति** ॥ जीवस्यात्र प्रतिपाद्यत्वाङ्गीकारे तज्ज्ञानस्य कामविनाशसाधन-त्वोक्तेरघटनादित्यर्थः । भाष्ये 'मत्तः परमविज्ञाय स्थितस्य पुंसः कामजयः कुतः' इत्यनेना-घटनोक्तेरिति ज्ञेयम् ॥ **अत्रोच्यत इति** ॥ 'यो बुद्धेः परतस्तु स' इत्यत्रेत्यर्थः ॥ **तत्पर-त्वानुपपत्तेरिति** ॥ बुद्धिपरत्वानुपपत्तेरित्यर्थः ॥ **तातरम्योक्तेरति** ॥ 'यो बुद्धेः परतस्तु सः' इत्यस्य भगवत्परत्वे तस्य सर्वोत्तमत्वज्ञापनार्थम् 'इन्द्रियाणि पराणि' इत्यादितारतम्यकथनं सफलम्, जीवकामपरत्वपक्षे तु तातरम्यकथनं व्यर्थम् । तयोः सर्वोत्तमत्वाभावादिति भावः ॥

**भावप्रकाशः (कृ.टि.)**– ॥ **मनोधर्मस्येति** ॥ हेतुगर्भविशेषणमेतत् । **पक्षद्वयेऽपीति** ॥ मायावादिभास्करपक्षयोरपीत्यर्थः ॥ ४२ ॥

॥ इति श्रीमत्तिरुमलाचार्यपूज्यपादसूनुकृष्णविरचिते प्रमेयदीपिकाभावप्रकाशे तृतीयोऽध्यायः ॥

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽत्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ॥

## भाष्यम्

**आत्मानं मनः । आत्मना बुद्ध्या ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ॥

भावप्रदीपिका (प.टी.)– 'संस्तभ्यात्मानमात्मना' इति व्याचष्टे– **आत्मानमिति ॥** इन्द्रियादिजयेन कामवधसम्भवान्न तदर्थं युद्धं त्यजेतेत्यभिप्रायः ॥ ४३ ॥

॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां तृतीयोऽध्यायः ॥

भावप्रकाशिका (न.टी.)– तत्रात्मशब्दयोर्जीवब्रह्मपरत्वेऽपि भेद एवार्थः । न हि स्तम्भनं नामैकीकरणम् । अतस्तयोरत्र विवक्षितमर्थमाह– **आत्मानमिति ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां
श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां तृतीयोऽध्यायः ॥

प्रमेयदीपिका (ज.टी.)– 'संस्तभ्यात्मानमात्मना' इत्यस्य 'जीवात्मानं परमात्मनैकीकृत्य' इति व्याख्यानं शब्दबाह्यमित्याशयवान् आत्मशब्दद्वयं व्याख्याति– **आत्मानमिति ॥** ४३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां तृतीयोऽध्यायः ॥ ३ ॥

भावदीपः (रा.टि.)– ॥ **शब्दबाह्यमिति** ॥ संस्तभ्यशब्देनैकीभावार्थालाभादिति भावः ॥ ४३ ॥

॥ इति श्रीराघवेन्द्रयतिकृतगीताभाष्यभावदीपे तृतीयोऽध्यायः ॥

भावरत्नकोशः (सु.टि.)– ॥ **शब्दबाह्यमिति** ॥ संस्तम्भनमित्युक्ते एकीकरणमित्यप्रतीतेरिति भावः ॥ ४३ ॥

**गीताक्षरार्थस्तु**– शत्रुहनन आयुधरूपं ज्ञानम् 'एवं बुद्धेः' इत्युत्तरश्लोकेन वक्तुं ज्ञानविषय उच्यते– **इन्द्रियाणीति** ॥ इन्द्रियाणि इन्द्रियाभिमानिनो देवान् पराणि शरीरादुत्कृष्टान् आहुः ज्ञानिनः । इन्द्रियेभ्यः अर्थाभिमानिनः परानाहुः । अर्थेभ्यश्च मनः मनोऽभिमानिदेवान् परानाहुः । मनसस्तु बुद्धिः सरस्वती परा । बुद्धेस्तु आत्मा महान् चतुर्मुखः परः । महतः परमव्यक्तम् । अव्यक्तात् श्रीतत्त्वाद् यः परतः परः स परमात्मा ज्ञातव्य इति । तथा च काठकभाष्ये–

श्लोकः ४३

'देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः ।
सोमवित्तपसूर्याप्पाः अश्व्यग्नीन्द्रेन्द्रसूनवः ॥
यमो दक्षश्चेन्द्रियेशाः सौपर्णी वारुणी तथा ।
उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः ॥
मनोऽभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ॥
तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः ॥' इति ।

**तात्पर्ये च–**

'सर्वेभ्यः प्रवरा देवा इन्द्राद्या इन्द्रियात्मकाः ।
तेभ्यो मनोऽभिमानी तु रुद्रस्तस्मात् सरस्वती ॥

बुद्ध्यात्मिका ततो ब्रह्मा महानात्मा परः स्मृतः ।
अव्यक्तरूपा लक्ष्मीस्तु वरा चातो हरिः स्वयम् ॥

न तत्समोऽधिको वेति ह्यानुपूर्वी प्रकीर्तिता ।
यथाक्रमप्रबोधेन नाश्याः कामादिशत्रवः ॥' (गी.ता.३.४२) इति ॥ ४२ ॥

एवं तारतम्याङ्गत्वेन परमात्मनो ज्ञेयत्वमुक्त्वा तज्ज्ञानस्य कामजयोपायत्वमुच्यते– **एवमिति ॥ एवम्** 'इन्द्रियाणि' इत्युक्तदिशा । बुद्धेः, महतः अव्यक्ताच्च, पमात्मानं परम् उत्कृष्टं बुद्ध्वा आत्मना बुद्ध्या आत्मानं मनः संस्तभ्य सम्यक् स्तम्भयित्वा निश्चलं कृत्वा दुरासदं दुःखेन निष्पादनीयं कामरूपं कामाख्यं शत्रुं जहि । हे महाबाहो इति साभिप्रायं विशेषणमिति ॥ ४३ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्न-कोशाख्यायां श्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रयतिविरचितायां तृतीयोध्यायः ॥ ३ ॥**

**भावदीपिका (श्री.टि.)– ॥ शब्दवाह्यमिति ॥** 'संस्तभ्य' इति शब्दमहिम्ना न लभ्य-मित्यर्थः । गीतायाम् – **आत्मना** बुद्ध्या । **आत्मानं** मनः, **संस्तभ्य** इत्यस्य 'विषयेभ्यो नियम्य' इत्यर्थो द्रष्टव्यः ॥

इति यदुवरगीताभाष्यटीकासुयुक्ता-
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराद्धाऽत्र चीर्णा
समगमदयमध्यायोऽन्तमस्यां तृतीयः ॥ ४२-४३ ॥

॥ इति श्रीयदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावदीपिकाव्याख्यायां तृतीयोऽध्यायः समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥